तस्य लोपेः, "अतः" ॥४।३।८२॥ इत्यलोपे, "य्वोः प्वय्व्यञ्जने लुक्" ॥ ४।४।१२१ ॥ इति यलुकि, प्रथमैकवचने तस्य रत्वे रेफस्य विसर्गादेशे च टण्टीः, इति रूपं समसिधत्। अजिह्वायकद् इति। 'अयिवयि' इत्यादिकदण्डकधातुः, जिह्वाशब्दस्य प्रागवस्थानम्, अयते इति "णकतृचौ" ॥ ५।१।४८ ॥ इति णके, उपान्त्यवृद्धौ, जिह्वाया आयकः जिह्वायक इवाऽऽचरति "कर्तुः क्विप्-" ॥३।४।२५॥ इत्यादिना क्विपि तस्य लुकि, "क्रियार्थो धातुः"॥३।३।३॥ इति धातुत्वे ह्यस्तन्या दिवि, "लुगस्यादेत्यपदे" ॥ २।१।११३ ॥ इत्यलोपेऽडागमे अजिह्वायकद् इति रूपं समसैत्सीत् ॥ १ ॥

अग्निभ्यः पार्थिवेभ्यश्च प्रथमान्तं पदद्वयम् ।
एषेति नैतदाबन्तं श्वानस्येति च साधुता ॥ २ ॥

चतुर्थी-पञ्चम्योर्बहुवचने न संदेहः, प्रथमान्तं संदिग्धमिति तु साध्यते- अग्निभ्यः इति । 'भ्यसि भये' भ्यसते इति क्विपि, तस्य लोपे, "पञ्चमी भयाद्यैः" ॥३।१।७३॥ इति अग्निशब्देन सह अग्नेर्भ्यः अग्निभ्य इति तत्पुरुषे कृते, "अधातुविभक्ति-" ॥ १।१।२७ ॥ इत्यादिना नामत्वे, "नाम्नः प्रथमैकद्विबहौ" ॥ २।२। ३१ ॥ इति प्रथमैकवचने, "दीर्घङ्याब्व्यञ्जनात्सेः" ॥ १।४।४५ ॥ इति सेर्लोपे, "सो रुः" ॥ २।१।७२ ॥ इति सकारस्य रुत्वे, "रः पदान्ते विसर्गस्तयोः" ॥ १।३।५३ ॥ इति विसर्गादेशे च सति अग्निभ्य इति रूपं निरवीवृतत्, अथवा 'ञिभीक् भये' अग्नेर्बिभेति इति विग्रहे क्विपि तस्य लोपे, अग्निशब्देन "ङस्युक्तं कृता" ॥ ३।१।४९ ॥ इति तत्पुरुषे तथा प्रथमाबहुवचने, "क्विब्वृत्तेरसुधियस्तौ" ॥२।१।४ ॥ इति यत्वे, अनेनाऽपि प्रकारेण अग्निभ्य इति रूपमसिधत्। तथा पार्थिवेभ्य इति । पृथिव्या विकारः "विकारे" ॥६।२।३०॥ इत्यण्, "वृद्धिः स्वरेष्वादेः-" ॥ ७।४।१ ॥ इत्यादिना आदिस्वरस्य वृद्धिः,

---

१ सिप्रत्ययस्य ।

"अवर्णेवर्णस्य" ॥ ७।४।६८ ॥ इति इकारलोपे, तत पार्थिवस्य इभ्य इति "षष्ठयऽयत्नात् शेषे" ॥ ३।१।७६ ॥ इति षष्ठीतत्पुरुषे, प्रथमाया एकवचने तस्य रुत्वे विसर्गत्वे, "अवर्णस्येवर्णादिना-" ॥ १।२।६ ॥ एत्वे च सिद्धं पार्थिवेभ्य इति, यद्वा पृथिव्या ईशः पार्थिव., "पृथिवीसर्वभूमे.-" ॥ ६।४।१५६ ॥ इत्यादिना अञि शेष पूर्ववत् । तथा एषा इति । 'जेषृङ् णषृङ् एषृङ् ह्रेषृङ् गतौ' इत्यस्य एषणम्–एष्, "क्रुत्सपदादिभ्यः-, ॥ ५।३।११४ ॥ इति क्विपि तस्य लोपे. तृतीयैकवचनम्, एषेति समसैत्सीत् । श्वानस्येति च साधुता । नासिकायै हितम् "प्राण्यङ्गरथखलतिलयववृषब्रह्ममाषाद् य " ॥ ७।१।३७॥ इति ये, तत्र भवम् "दिगादिदेहांशाद् य."॥६।३।१२४ ॥ इति ये, "नस् नासिकाया त क्षुद्र" ॥ ३।२।९९ ॥ इत्यधिकारे "येऽवर्णे" ॥ ३।२।१०० ॥ इति नासिकाशब्दस्य नसादेशे, न नस्य विद्यते अस्य इति अनस्य, श्वा इव श्वा चासौ अनस्यश्च "उपमानं सामान्यैः ॥ ३।१।१०१ ॥ इति समासे, तत आमन्त्र्ये सौ "अदेत स्यमोर्लुक्" ॥ १।४।४४ ॥ इति च तस्य लोपे च श्वानस्य इति च सिद्धम्,

**भवेतामिति शब्दोऽयं बहुत्वे वर्तते कथम् ? ।**
**यागः षष्ठीसमासः स्यात् पञ्चमी पर्वताद् न तु ॥ ३ ॥**

भवेतामिति, "भू सत्तायाम् ' सप्तमीयातां–प्रत्ययः, " कर्तर्यनद्भ्य शव् " ॥ ३ । ४ । ७१ ॥ इति शव्–प्रत्यये, "नामिनो गुणोऽक्ङिति " ॥४।३।१॥ इति गुण., " ओदौतोऽवाव् " ॥१।२।२४॥ इति अवादेशः, "यः सप्तम्या." ॥४।२।१२२॥ इति याशब्दः इकार, " अवर्णस्येवर्णादिना-" ॥ १ ।२ । ६ ॥ इति अकारस्य इकारेण सह एकार, इत्थं द्विवचनान्त, बहुवचनान्त इति संदेह , तत्रोच्यते– भवः संसारः ' इणक् गतौ " इत्यस्य यन्ति इति " क्विप् " ॥५।१।१४८॥ इति क्विपि तस्य लोपे " ह्रस्वस्य तः पित्कृति " ॥४।४।११३॥

इति ताऽऽगमे भवस्य इतो भवेत', इति षष्ठीतत्पुरुषे कृते तेषां भवेताम्, षष्ठीबहुवचने सिद्ध भवेतामिति । अत्राऽपि कथमिति योज्यम्। **यागः षष्ठीसमासः स्याद् इति** । अ. विष्णु', अस्य अपत्यम्-इ काम., " अत इञ् " ॥६।१।३१॥ इति इञि, " वृद्धि' स्वरेषु-" ॥ ७ । ४ । १ ॥ इत्यादिना अकारस्य वृद्धौ " अवर्णेवर्णस्य" ॥७।४।६८॥ इति प्रकृत्याऽऽकारलोपे प्रत्ययमात्रं प्रकृति , ततः षष्ठ्येकवचनं तस्य आग इति विग्रहे प्रथमैकवचने " अनतो लुप् " ॥ १।४।५९ ॥ इति सिलोपे, सकारस्य रुत्वे, विसर्गादेशे च सति याग' इति पदं सिद्धम्, यद्वा ईर्लक्ष्मीस्तस्या आग. अपराध , इति द्वैतीयकेन प्रकारेण निरवर्तत, यद्वा या लक्ष्मी याया अगः पर्वत' पादपो वा, इत्थ तार्तीयिकेनाऽपि प्रकारेण याग. इति पदं निष्पेदे, शेषं पूर्ववत्। **पञ्चमी पर्वताद् न तु** इति। पञ्चम्यन्तस्तावत् सुगम. अपञ्चम्यन्ते तु संदेहस्तत्र क्रम'-'पूर्व पर्व मर्व पूरणे' 'पर्व' इति, धातुः भ्वादौ परस्मैपदी, तस्मात् पञ्चम्याः परस्मैपदप्रथमत्रिकस्य एकवचनं तुव्, "कर्तर्य-" ॥ ३।४।७१ ॥ शव्प्रत्यय', "आशिषि तुह्योस्तातङ्" ॥४।२।११९॥ इति तातङ्-आदेशे सिद्ध पर्वताद्, इति अथवा 'अद् प्साक् भक्षणे' इत्यस्य पर्वतशब्दस्य प्राग् निक्षेप , पर्वतमत्तीति वाक्ये "अदोऽनन्नात्" ॥ ५।१।१५० ॥ इति क्विपि तस्य लोपे, "अधातुविभक्ति-" ॥ १।१।२७ ॥ इत्यादिना नामत्वे, "नाम्न. प्रथमैक-" ॥२।२।३१॥ इत्यादिना प्रथमाया एकवचने "दीर्घङ्याब्-" ॥१।४।४५ ॥ इत्यादिना तस्य लोपे, "विरामे वा" ॥ १।३।५१ ॥ इति दस्य ते, अनेनाऽपे प्रकारेण सिद्धं पर्वताद् इति, अमुना प्रकारेण वृक्षात्, घटाद् इत्यादयोऽपि ऊह्या ॥ ३ ॥

पञ्चड्ढलानि साधुत्वं कथं याति च लक्षणात् ।
मुनीनामिति नो षष्ठी त्याद्यन्तं चाऽश्व-यित्यपि ?॥४॥

**पञ्चड्ढलानि इति** । पञ्चन् षष् व्यवस्थापिते पञ्च वा षड्

वा इति विग्रहे "प्रमाणीसंख्याद् डः" ॥ ७।३।१२८ ॥ इति समासान्ते "डित्यन्त्यस्वरादेः" ॥ २।१।११४ ॥ लोपे, पञ्चषान् आचष्टे इति वाक्ये "णिज् बहुल-" ॥ ३।४।४२ ॥ णिज्प्रत्यये, "त्र्यन्त्यस्वरादेः" ॥ ७।४।४३ ॥ इति अन्त्यस्वरादिलोपे पञ्चषयति इति क्विपि, "अप्रयोगीत्" ॥ १।१।३७ ॥ तस्य लोपे "णेरनिटि" ॥ ४।३।८३ ॥ इति णिजो लोपे पञ्चषां हलानि षष्ठीसमासे पञ्चषड्ढलानि इति सिद्धम् । मुनिरिनो यस्या सा तथा तां पश्य इति मुनीनाम्-इति पद सिद्धिमगात् ।स्याद्यन्तं चाश्व-यित्यपि । 'टुवोश्वि गतिवृद्ध्योः, अद्यतनीसि, " ऋदिच्छ्वि- " ॥ ३ । ४ । ६५ ॥ इत्यादिना अङि, " अड् धातोः- " ॥ ४ । ४ । २९ ॥ अडागमः, " श्वयत्यसूव- " ॥ ४ । ३ । १०३ ॥ इत्यादिना श्वादेशे, " सोरुः " ॥ २ । १ । ७२ ॥ इति सस्य रुत्वे " रः पदान्ते- " ॥ १ । ३ । ५३ ॥ इत्यादिना विसर्गादेशे च सति अश्वः इति रूपं सिद्धिमैयत ॥ ४ ॥

अष्टाविति कथं द्वित्वं राजेभ्य इति साधुता ।
तेनेत्येतत् त्याद्यन्तं स्यादत्याद्यन्तं भवेदिति ? ॥५॥

अष्टाविति कथं द्वित्वं राजेभ्य इति साधुता । अष्टौ इति अष्टनो जसि शसि वा सुबोधम्, द्विवचनान्ते तु संदेहस्तत्र उच्यते– 'अशौटि व्याप्तौ' इत्यस्य अश्यत इति वाक्ये " ज्ञानेच्छाऽर्चार्थ- " ॥ ५ । २ । ९२ ॥ क्तः, शस्य षत्वे, "तवर्गस्य चवर्ग-" ॥ १ । ३ । ६० ॥ इत्यादिना तस्य टत्वे, प्रथमा-द्वितीयाद्विवचने " ऐदौत् सन्ध्यक्षरैः " ॥ १ । २ । १२ ॥ इति अकारस्य औकारेण सह औकारे च अष्टौ इति रूपं सिद्धिमायात् । राजेभ्यः इति साधुता । राजन्-शब्दाद् भ्यसि "नाम सिदय-" ॥१।१।२१॥ इति पदत्वे, "नाम्नो नो- " ॥२।१।९१॥ नलोपे स्यादिविधौ विधातव्ये नकारस्य सत्त्वे " एद् बहुस्भोसि " ॥१।४।४॥ इत्यनेन एत्वं न भवेत्, अकारान्तत्वाऽभावाद् एत्वाऽभावे राजभ्य इत्येव भवति,

इदं तु कथमिति ? । अत्र उच्यते– राज्ञामिभ्यो राजेभ्य इति विगृह्य प्रथमाया एकवचने राजेभ्य इति सिद्धिमायासीत् । तेन इत्येतत् पद त्याद्यन्त स्यादिति । तदं[1] तृतीयैकवचने सुगममेव, त्याद्यन्त तु 'तनूयी विस्तारे' परोक्षा-अ, "अनादेशादेरेक-" ॥४।१।१४॥ इत्यादि-ना उपान्त्यस्य अकारस्य एत्वे, द्वित्वाऽभावे च तेन इति निरापाद्यते, अत्याद्यन्तं भवेदिति । भव. ससारः, तमेति 'इण्क् गतौ' इत्यस्य क्विपि "ह्रस्वस्य त. पित्कृति" ॥४।४।२१३॥ इति तागमे "अप्रयोगीत्" ॥ १।१।३७ ॥ इति तस्य लुपि "दीर्घङ्याब्-" ॥ १।४।४५ ॥ सिलोपे "अवर्णस्य-" ॥ १।२।६ ॥ इति एत्वे सिद्धं भवेदिति । वृक्ष-शब्द सप्तम्येकवचनान्तः, 'अण रण' इत्यादिधातुः, पञ्चम्या ङौ शवि "अतः प्रत्ययात्-" ॥ ४।२।८५ ॥ हेर्लुकि, "एदोत.-" ॥ १।२।२७ ॥ अणाऽकारलोपे सिद्धं वृक्षेऽण इति । अनया दिशा अन्यदपि ऊह्यम्, अन्यदपि एवजातीयं प्रस्तावाद् ब्रूमः– अस्मद्. षष्ठ्येकवचने "तव मम ङसा" ॥ २।१।१५ ॥ इति ङसा सह सुगममेव, त्याद्यन्तं तु कथम् ?, तद् दर्शयाम – 'मांक् माने' परोक्षा-अप्रत्ययः "द्विर्धातु-" ॥ ४।१।१ ॥ द्वित्वे ह्रस्वे, मूलधातोः "इडेत्पुसि-" ॥ ४।३।९४ ॥ आलोपे मम इति निर्वृते ॥ ५ ॥

यूथानि गूथानि घृतानि रात्रीः
क्षीराणि वृत्तानि दिवान्यजागाः ।
सुखानि शूराणि तृणान्यदानि
स्थूलानि सूत्राणि दृढान्यराराः ॥ ६ ॥

तथैतानि एकवचनानि एवम्–यूथानि इति 'अन श्वसक् प्राणने' इत्यस्य यूथशब्दस्य प्राग् निक्षेपः, यूथमनति इत्येवं शीलं यत् कुल-मिति वाक्ये "अजातेः शीले" ॥ ५।१।१५४ ॥ इति णिन्प्रत्यये

---

[1] तत्–शब्दस्य ।

"ञ्णिति" ॥ ४।३।५० ॥ इत्यनेन उपान्त्याऽकारस्य वृद्धौ प्रथमैकवचने "अनतो लुप्" ॥ १।४।५९ ॥ इति तस्य लुपि, "नाम्नो नोऽनह्नः" ॥ २।१।९७ ॥ इति नकारलोपे, "समानानां तेन दीर्घः" ॥ १।२।१ ॥ इति पूर्वस्याऽकारस्य अकारेण सह दीर्घत्वे च सिद्ध यूथानि इति । एवं **गूथानि, घृतानि** इति । **रात्रीरिति** रात्रिमिच्छति इति वाक्ये "अमाऽव्ययात् क्यन् च" ॥ ३।४।२३ ॥ क्यन प्रत्यय, "दीर्घश्च्वि-" ॥ ४।३।१०८ ॥ इ-दीर्घत्वे, रात्रीयति इति क्विपि, "अतः" ॥४।३।८२॥ इति अलोपे "य्वोः प्वय् व्यञ्जने-" ॥४।४।१२१॥ यलुकि सिद्ध रात्री, इति । **क्षीराणि** 'अण्रणित्यादि-अण्', क्षीरमणति इत्येवं शील यत्कुलमिति वाक्ये, शेष यूथानिवत् । तथा **वृत्तानि, दिवानि, सुखानि, शूराणि, तृणानि, स्थूलानि, मूत्राणि, दृढानि** इत्येतानि सिद्धिमगु । **अदानि** तु अत्ते पञ्चम्या आनिवि सिध्यति । **अजागाः** 'कैगै शब्दे' 'गांङ् गतौ' इत्यस्य वा अत्यर्थं गायति गाते वा यङि, तल्लुपि "सन्यङश्च" ॥ ४।१।३ ॥ इति द्वित्वे "ह्रस्वः" ॥ ११।३९ ॥ इति ह्रस्वे, "गहोर्जः" ॥ ४।१।४० ॥ जत्वे, "आगुणा-" ॥ ४।१।४८॥ आकारे, ह्यस्तन्याः सिवि, "अड् धातोः-" ॥४।४।२९॥ अडागमे, "सो रुः"॥२।१।७२॥ सस्य रुत्वे, "रः पदान्ते" ॥१।३।५३॥ इति विसर्गे अजागा इति सिद्धिमधात् । **अराराः** इति 'राक् आदाने' इत्यस्य, शेष पूर्ववत् ॥ ६ ॥

**हस्तौ द्विवचनं नेदं शोभनेष्वित्यसप्तमी ।**
**क्षीरस्येति न षष्ठीयं त्याद्यन्त्यं वायुरित्यपि ॥ ७ ॥**

हसे हसने इत्यस्य हस्यादिति वाक्ये "तिक्कृतौ नाम्नि-" ॥ ५।१।७१ ॥ इति त्तिक्प्रत्यये "ङ्डौ" ॥ १।४।२५ ॥ इति ङेर्डावादेशे डित्यन्तस्वरादिलोपे च सिद्धं **हस्ताविति । शोभनेष्वित्यसप्तमी** शोभना इषवो यस्य धनुषस्तत् शोभनेषु सशरमित्यर्थः, ततः "अनतो लुप्" ॥ १।४।५९ ॥ सिलोपे सिद्ध शोभनेष्विति ।

क्षीरस्येति न षष्ठ्यामिति क्षीरमिच्छतीति, "अमाऽव्ययात्-" ॥२।४।२३॥ क्यनि, "अश्व लौल्ये" ॥४।३।११५॥ इति क्यन्प्रत्ययस्य सकारागमे. "क्रियार्थो धातु " ॥३।२।३॥ इति धातुत्वे पञ्चम्या हौ शवि, "लुगस्या–" ॥ २।१।११३॥ अलोपे "अत. प्रत्ययाल्लुक्" ॥ ४।२।८५ ॥ हेर्लोपे च क्षीरस्य इति रूप प्रतिष्ठामाप ॥ स्याद्यन्तं वायुरित्यपि 'वांकृ गतिगन्धनयो' इत्यस्य सप्तम्या युमि. "सा रु ॥ २।१।७२ ॥ इति रुत्वे "र पदा-" ॥ १।३।५३ ॥ विसर्गादेशे च सिद्ध वायुरिति ॥ ७ ॥

दधिस्येति कथं साधु मधुस्येति तथा परम् ।
केनेत्येतदटान्तं स्यादपापा इत्यमुनयो[1] ॥ ८ ॥

दधीच्छतीति, मध्विच्छतीति वाक्ये शेष क्षीरस्येतिवत ,"अश्व लौल्य" ॥४।३।११५॥ इति च प्रत्ययद्वन्द्व विधीयते, यदा अस् तदा "इवर्णादे" ॥ १।२।२९ ॥ इत्यादिना यत्वे च दध्यस्य, मध्वस्य इति सिद्धम, अत्रापि शेषं पूर्ववत्, अथवा 'षोच् अन्तकर्मणि' इत्यस्य दधिशब्दस्य प्राग्रूपे पञ्चम्या हौ "दिवादे श्य " ॥ ३।४।७ ॥ इति श्ये "ओतः श्ये" ॥ ४।२।१०३ ॥ इत्योकारलोपे "अत प्रत्य–" ॥ ४।२।८५ ॥ हेर्लोपे च सिद्धं दधिस्य, मधुस्य इति, यदापरमपि पूर्ववत् सिद्धम । केनेत्येतदटान्तम् कं वारि तस्य इन केन , आमन्त्र्ये सौ "अदेत स्य-" ॥ १।४।४४ ॥ सेर्लुकि च सिद्ध केनेति । अपापा इत्यमुनया इति न विद्यते पाप येषां ते अपापा इति सुगममेव, प्रकारान्तरेणोच्यते– 'पर्दि कुत्सिते शब्दे' इत्यस्य अत्यर्थं पेर्दत इति "व्यञ्जनादे–" ॥३।४।९॥ इत्यादिना यङि, "सन्यङश्च" ॥ ४।१।३ ॥ इति द्वित्वे, "व्यञ्जनस्या-नादेर्लुक्"॥४।१।४४॥ इत्यन्तव्यञ्जनलोपे "आगुणा"॥४।१।४८॥ आ-कारे ह्यस्तन्याः सिवि, "अड् धा–" ॥ ४ । ४ । २९ ॥ अडागमे, "से. स्द्धां च रुर्वा" ॥४।३।७९॥ इति सिवो लुकि दस्य रुत्वे च "रो रे

[1] अस्यादित्वेन ।

लुग् दी-" ॥१।३।४१॥ रलोपे पूर्वस्य रस्य दीर्घत्वे रस्य विसर्गादेशे सति अपापा इति प्रसिद्धिमाप॥एव गृधे , स्पर्धे', नर्देश्च यङ्लुपि द्वित्वे "रिरौ च लुपि"॥४।१।५६॥इति रागमे "आगुणा-"॥४।१।४८॥ दीर्घत्वे ह्यस्तन्या सिवि "गडदबादे-" ॥ २।१।७७ ॥ आदेश्चतुर्थत्वे "लघोरुपा-" ॥ ४।३।४ ॥ गुणः, "से. स्द्धां च रुर्वा" ॥ ४।३।७९ ॥ इति सिचो लुपि धकारस्य रुत्वेऽवशेष पूर्ववत् अजर्घाः, अनानाः, अपास्पाः, इति रूपाणि सिद्धिमस्कांत्सु', एवमन्यान्यपि रूपाणि ऊह्यानि ॥ ८ ॥

एतेषां कथमेकत्वं वनानि ब्राह्मणैरमी ।
वृक्षाः पचन्ति येषां यान् वायुभ्यः पार्थिवाः सुराः ? ॥ ९ ॥

'वन षण संभक्तौ' पञ्चम्या आनिवि शवि "समानाना-" ॥ १।२।१ ॥ दीर्घत्वे वनानीति सिद्धम् । ब्राह्मणैरिति 'इण्क् गतौ' इत्यस्य ह्यस्तन्या सिवि "स्वरादेस्तासु-" ॥ ४।४।३१ ॥ इति वृद्धौ सौ रुत्वे विसर्गादेशे सति तत आमन्त्र्याऽर्थ ब्राह्मण ! गतोऽसीत्यर्थ । अमी इति 'अमद्रम' अमनमम इति वाक्ये "भावाकर्त्रो·" ॥ ५।३।१८ ॥ इति घञि "अमोऽकम्य-" ॥ ४।२।२६ ॥ वृद्धिप्रतिषेधे अमोऽस्यास्तीति विग्रहे "अतोऽनेकस्वरात्" ॥ ७।२।६ ॥ इतीनि "नाम्न.-" ॥ ७।३।१२ ॥ इत्यादिना प्रथमैकवचने "दीर्घङ्याब्-" ॥ १।४।४५ ॥ इत्यादिना तस्य लोपे "इनहन्-" ॥ ३।४।८७ ॥ इत्यादिना उपान्त्याकारस्य दीर्घत्वे "नाम्नो नोऽनह्न." ॥ १।१।९१ ॥ इति नकारस्य लोपे अमीति सिद्धम् ॥ वृक्षाः 'इति असूच् क्षेपणे', इत्यस्य अस्यतीति वाक्ये क्विपि तस्य लोपे "अधातुविभक्ति-" ॥ १।१।२७ ॥ इत्यादिना नामत्वे "नाम्नः-" ॥ २।१।९१ ॥ इत्यादिना प्रथमैकत्वे "सो रुः" ॥ २।१।७२ ॥ सकारस्य रुत्वे विसर्गादेशे च ततो वृक्षशब्दस्य आमन्त्र्यार्थस्य तस्य अः "समानानाम्" ॥ १।२।१ ॥ इति दीर्घत्वे च वृक्षाः इति सिद्धम् । पचन्ति इति 'डुपचीष् पाके'

इत्यस्य पचतीति वाक्ये "शत्रानशावेष्यति तु सस्यौ" ॥५।२।२०॥ इति शतृप्रत्यये, शवि, "लुगस्यादेत्यपदे" ॥ २।१।११३ ॥ इत्यलोपे, "अधातुदृदित" ॥२।४।२॥ इति ङीप्रत्यये, "श्यशवः' ॥२।१।११६॥ इति नागमे, आमन्त्र्ये सौ, "नित्यदिद्द्विस्वराऽम्बर्थस्य ह्रस्व." ॥ १।४।४३ ॥ इति सिना सह ह्रस्वत्वे पचन्तीति सिद्धम् । येषाम् इति 'येषृङ् प्रयत्ने' येष्यते इति "क्टो गुरोर्व्यञ्जनात्" ॥ ५।३। १०६ ॥ इत्यप्रत्यय', "आत्" ॥ २।४।१८ ॥ इति आप्, दीर्घत्वे द्वितीयैकवचनमम्, "समानादमोऽतः" ॥ १।४।४६ ॥ इत्यमो ऽकारस्य लुक्, येषाम्, इति सिद्धम् । षष्ठ्यन्तं तु सुगममेव। यान् इति 'याक् प्रापणे' यातीति वाक्ये शतृप्रत्यय., प्रथमैकवचनम्, "ऋदुदित." ॥ १।४।७० ॥ इति नागम', "दीर्घङ्याब्–" ॥ १।४।४५ ॥ इत्यादिना सेर्लुक् "पदस्य" ॥ २।१।८९ ॥ इति तलोपः यान् इति, सिद्धम् । वायुभ्यः यथा अग्निभ्यः । पार्थिवमस्यतीति क्विपि तस्य लोपे, समानदीर्घत्वे, प्रथमैकत्वम्, "दीर्घङ्या–" ॥१।४।४५॥ इत्यादिना तस्य लोपे, "सो रु." ॥ २।१।७२ ॥ इति सकारस्य रुत्वे विसर्गादेशे च पार्थिवाः इति । सुराः इति 'षुंगट् अभिषवे' सुराशब्दस्य प्रागवस्थानम्, "ष. सोऽष्ट्यैष्ठिवष्वष्क." ॥२।३।९८॥ इति षस्य सः, सुराः सुनोति इति क्विप् तस्य लुक्, "ह्रस्वस्य तः पित्कृति" ॥४।४।११३॥ इति तागमः, सुरासुतमाचष्टे "णिज् बहुलम्"– ॥ ३।४।४२ ॥ इत्यादिना णिज्प्रत्यय, "त्र्यन्त्यस्वरादेः" ॥७।४।४३॥ अन्त्यस्वरलोपे सुरासयतीति क्विप्, "णेरनिटि" ॥४।३।८३॥ इति णेर्लोपे, क्विब्लोपे, नामत्वे, प्रथमैकवचने, "दीर्घङ्याब्-" ॥१।४।४५॥ इत्यादिना तस्य लोपे, "सो रु" ॥२।१।७२॥ इति सस्य लोपे, रुत्वे विसर्गादेशे च सुराः इति सिद्धम् ॥९॥

शेषाणि पूर्वाणि समान्यजानां
फलानि मूलानि हलान्यगूनाम् ।

अभ्राणि नीलानि दलान्यतस्यः
शूलानि कूलानि तटान्यपापाः ॥ १० ॥

पूर्वस्मिन् इह वक्ष्यमाणे च श्लोके प्रथमा-द्वितीयादिबहुवचनान्तप्रतिरूपकाणि एकवचनान्तानि कथं भवन्ति ?, वयमत्र ब्रूम - 'कष-शिषेति शिषः' पञ्चम्या आनिवि, शवि, "लघोरुपान्त्यस्य" ॥४।३।४॥ इति गुणे, समानदीर्घत्वे, "रषृवर्णा-" ॥ २।३।६३ ॥ इत्यादिना णत्वे, शेषाणि इति सिद्धम् । पूर्वाणि समानि इति 'पूर्व पर्व मर्व पूरणे' 'षम ष्टम वैक्लव्ये' भ्वादौ परस्मैपदिनौ, "षः सोऽष्ट्यै-"॥२।३।९८॥ इत्यादिना षस्य सः शेष पूर्ववत् । अजानाम् इति 'ज्ञांश् अवबोधने' ह्यस्तन्याः अम्व्, "क्र्यादेः" ॥ ३।४।७९ ॥ श्राप्रत्यय. "जा ज्ञाजनोऽत्यादौ" ॥४।२।१०४॥ इति जादेश, अडागमः, समानदीर्घत्वम्, अजानामिति सिद्धम् । फलानि, मूलानि, हलानि इति 'फल निष्पत्तौ' 'मूल प्रतिष्ठायाम्, 'हल विलेखने' शेष पूर्वाणिवत् । अगूनाम् इति नञ्पूर्वस्य गोशब्दस्य न विद्यते गौर्येषा ते अगवस्तेषामगूनाम्, "गोश्चान्ते-" ॥ २।४।९६ ॥ इत्यादिना ह्रस्वत्वे षष्ठ्या आम्, "ह्रस्वापश्च" ॥ १।४।३२ ॥ इत्यामो नामि, "दीर्घो नामि-" ॥ १।४।४७ ॥ इत्यादिना, दीर्घत्वम्, इत्थ बहुवचनान्तं सिध्यति; द्विवचनान्तस्तु 'गुत् पुरीषोत्सर्गे' गुवति स्म इति, "गत्यर्थाऽकर्मक-" ॥ ५।१।११ ॥ इत्यादिना कर्तरि क्ते "दुगोरू च ॥ ४।२।७७ ॥ इति क्तकारस्य नत्वे, धातोरूकारे च ततो नञ्समासे स्त्रियामपि, इत्थमेकवचनान्तं सिद्धम् । अभ्राणि, नीलानि, दलानि इति 'अभ्र वभ्र मभ्र गतौ', 'नील वर्णे', 'दल ञिफला विशरणे', पञ्चम्यादि शेषं पूर्ववत् ॥ अतस्यः, इति अतसीशब्दस्य प्रथमाबहुवचनान्तस्य, आशङ्का इह त्वेकवचनान्ते कार्या, 'तसू दसूच् क्षये' ह्यस्तन्याः सिव् "दिवादेः श्य." ॥३।४।७२॥ इति श्यप्रत्ययः, अडागमे, "सो रु." ॥२।१।७२॥ इति सस्य रुत्वे, विसर्गादेशे च अतस्य इति सिद्धम् ।

शूलानि, कूलानि, तटानि इति 'शूल रुजायां', 'कूल आवरणे', 'तट समुच्छ्राये', आनिवादि पूर्ववत् । अपापा इति यङ्लुबन्त पूर्ववत् ॥ १० ॥

सुखानि शीलानि नखान्यसास्नाः
खलानि पापानि बलान्यचर्चाः ।
पुराणि वर्षाणि मठान्यमीना
घनानि सर्वाणि बिलान्यपां च ॥ ११ ॥

कथमेकत्वमिति वर्तते ?, सुखानि इति सुख दु खण् तत्क्रियायाम्' इत्यस्य "चुरादिभ्यो णिच्" ॥३।४।१७॥ "अत" ॥४।३।८२॥ इत्यकारलोपे सुखयतीति वाक्ये अचि, "णेरनिटि" ॥४।३।८३॥ इति णिज्लुकि, सुखमिवाचरतीति वाक्ये, "कर्तु' क्विप्—" ॥३।४।२५॥ इति क्विप्, तस्य लोपे, "क्रियार्थो धातु " ॥३।३।३॥ इति धातुत्वे पञ्चम्या आनिवि, शवि, समानदीर्घत्वे च सुखानि इति सिद्धम्, अथवा शोभना खानयो यत्र कुले इति विग्रहे प्रथमैकवचने, "अनतो लुप्" ॥१।४।५९॥ इति तस्य लोपे, यद्वा सुखमानयति यत्कुलं क्विपि तस्य लोपे, "क्लीबे" ॥२।४।९७॥ इति ह्रस्वे इति शेष पूर्ववत्, एव प्रकारत्रयेण सुखानि इति सिद्धम्; चतुर्थस्तु सुखेन अनिति इत्येवशीलमिति पूर्वोक्तमेव । शीलानि, नखानि 'इति शील समाधौ', उख नख इत्यादिना गत्यर्थो नख-धातु , आनिवादि पूर्ववत् । असास्नाः इति न विद्यते सास्ना गलकम्बलो येषा ते तथा प्रथमा, इति बहुवचने सिद्ध्यति, इह तु प्रकृत तदुच्यते-'ष्णांक् शौचे' "ष सोऽष्ट्यै- ॥२।३।९८॥ इत्यादिना षकारस्य सकार , 'निमित्ताभावे नैमित्तिकस्याप्यभाव.', इति णकारस्य नकार , अत्यर्थ स्नाति इति "व्यञ्जनादे.-" ॥३।४।९॥ इत्यादिना यङि, तस्य लुपि, "सन्यङश्च" ॥४।१।३॥ इति द्वित्वे, "व्यञ्जनस्यानादेर्लुक्" ॥४।१।४४॥ इति लुकि,

ह्रस्व" ॥४।१।३९॥ इति पूर्वस्य ह्रस्वत्वे, "आगुणावन्यादे" ॥४।१।४८॥ इति अकारस्याकारे ह्यस्तनी सिव्, "अड् धातोरादि" ॥४।४।२९॥ इत्यडागमे सो रे, रेफस्य विसर्गे च असास्ता इति सिद्धम् ॥ **खलानि** इति 'खल सचये' पञ्चम्यन्त । 'पा पाने' 'पाक् रक्षणे' च यङ्लुबन्त', पञ्चम्या आनिवि समानदीर्घत्वे च **पापानि** इति सिद्धम् । 'बल प्राणने' आनिवि **बलानि** । **अचर्चाः** इति 'चर्चण् अध्ययने' चर्चन चर्चा "भीषिभूषि" ॥ ५।३।१०९ ॥ इत्यादिनाऽङि, "आत्" ॥ २।४।१८ ॥ इत्यापि, समानदीर्घत्वे, न विद्यते चर्चा पाठविशेषो येषा ते तथा इति प्रथमाबहुवचनान्तम्, इह त्वेकवचनान्तम्, तत् कथम्?, इत्युच्यते-चर्चा इवाचरति "कर्तु क्विप्-" ॥३।४।२५॥ इति क्विपि, तस्य लोपे, "क्रियार्थो धातु" ॥३।३।३॥ इति धातुत्वे, ह्यस्तन्या सिवि, अडागमे, शवि, समानदीर्घत्वे, सस्य रुत्वे, विसर्गादेशे च सति अचर्चा इति सिद्धम् । **पुराणि, वर्षाणि, मठानि** इति 'पुरत् अग्रगमने' पञ्चम्या आनिवि, "तुदादे श" ॥३।४।८१॥ इति शे. समानदीर्घत्वे, "रषृवर्णा-" ॥२।३।६३॥ इत्यादिना णत्वे पुराणि इति सिद्धम्। 'जिषू विषू मिषू निषू पृषू वृषू सेचने' आनिवि, शवि, "लघोरुपान्त्यस्य" ॥४।३।४॥ इति गुणे शेष पूर्ववत् **वर्षाणि** इति सिद्धम् । **मठानि** इति 'मठ मद-निवासयोश्च' इति शेष पूर्ववत् । **अमीनाः** इति न विद्यन्ते मीना येषु तडागेषु ते अमीना इति बहुवचनान्तम्, एकत्व तु प्रकृतम्, तत् कथ्यते-'मीगृश् हिसायाम्,' ह्यस्तन्या. सिवि "क्र्यादे." ॥३।४।७९॥ इति श्नाप्रत्ययेऽडागमे, सस्य रुत्वे विसर्गादेशे च सिद्धममीना इति । **घनानि** इति घन इवाचरति कर्तु क्विपि तस्य लोपे, क्रियार्थो धातुत्वे, पञ्चम्या आनिवि शवि समानदीर्घत्वे च घनानि इति सिद्धम्। **सर्वाणि** घनानिवत् । 'बिलत् भेदने' आनिवि शवि **बिलानि** इति सिद्धम् । **अपामिति** षष्ठीबहुवचने नाशङ्का, केवलमेकवचनान्तं साध्यते– नन्वेव 'पाक् रक्षणे,' ह्यस्त-

न्या अम्व्, समानदीर्घे, अडागमे, अपामिति सिद्धम्, अथवा 'पां पाने' अद्य०अम्, सिच्, "पिब-" ॥४।३।६६॥ इत्यादिना तस्य लुप्, न चेट्, शेष पूर्ववत् । चकारोऽनुक्तसमुच्चयार्थस्तेन अनुक्तमपि समुच्चीयते इति भवतीत्याद्यन्तं शतृप्रत्यये सप्तम्येकवचनान्तं ङीप्रत्ययान्तं च आमन्त्र्ये सौ, "नित्यदिद्द्विस्वराम्ब-" ॥१।४।४३॥ इत्यादिना सिना सह ह्रस्वत्वे इत्थंकारं भवतीति पदं सभवति, तथा अन्येऽप्येवंजातीयस्वरूपा बुद्ध्याऽनुसर्तव्या. ॥ ११ ॥

अधीये नोपसृष्टस्य शक्यतीत्यस्य साधुता !
जागर्तीति नं जागर्तेरुच्यतीत्यस्य साधुता ॥१२॥

अधीये इति 'इङ्क् अध्ययने' वर्तमाने ए, अध्युपसर्गोपसृष्टम्, ततो "धातोरिवर्णो-" ॥२।१।५०॥ इति इयादेशे अधीये इति सिध्यति, विपर्यये तु 'धीङ्च् अनादरे' ह्यस्तन्या इ, "दिवादेः श्यः" ॥३।४।७२॥ इति श्ये, "अवर्णस्ये-" ॥१।२।६॥ इत्यादिना अकारस्य इकारेण सह एकारेऽडागमे च अधीये इति सिद्धम् । शक्यतीत्यस्य साधुता 'शक्लंट् शक्तौ वर्तमाना-ते, क्ये शक्यते इति भाव्यम्, विपर्ययरूपं तु 'शकीच् मर्षणे, इत्यस्य वर्तमाना-तिव्, श्ये शक्यति इति । जागर्तीति न जागर्तेरिति 'जागृक् निद्राक्षये' वर्तमाना-तिव्, गुणे जागर्ति रूपम्, धात्वन्तरस्य कथमुच्यते ?– 'गॄत् निगरणे' इत्यस्य गर्हितं निगिरतीति वाक्ये "गॄलुपसद-" ॥३।४।१२॥ इत्यादिना यङि तस्य लुपि, "सन्य-ङश्च" ॥४।१।३॥ इति द्वित्वे, "ह्रस्वः" ॥४।१।३९॥ इति पूर्वस्य ह्रस्वत्वे, "ऋतोऽत्" ॥४।१।३८॥ इति अः, "गहोर्जः" ॥४।१।४०॥ इति गस्य ज., "आगुणावन्यादे." ॥४।१।४८॥ इति अकारस्याकारे, व०ति, गुणे, जागर्तीति सिद्धम् । उच्यतीत्यस्य साधुता 'वचंक् भाषणे' व०ते, "क्य. शिति" ॥३।४।७०॥ क्ये "यजादिवचेः किति" ॥४।१।७९॥ इति य्वृत्, उच्यते इति प्राप्नोति, उच्यतीति यथा संभवस्तथोच्यते– 'उचच् समवाये' व०ति, "दिवादेः श्यः" ॥३।४।७२॥ इति श्ये उच्यतीति सिद्धम् ॥ १२ ॥

अस्यन्निति न शत्रन्तं व्याघ्रा इत्यस्य चैकता ।
बहुत्वं च तथैतेषामसुर्मेषारुरेव च ॥ १३ ॥

अस्यन्निति 'असूच् क्षेपणे' इत्यस्य शतृप्रत्ययान्तस्य "दिवादेः श्यः" ॥३।४।७२॥ इति श्ये प्रथमैकवचनत्वे तु रूपम्, अपि च 'षोच् अन्तकर्मणि' इत्यस्य "षः सोऽष्ट्यै-" ॥ २।३।९८ ॥ इत्यादिना षस्य से ह्यस्तन्या अनि, "दिवादेः श्यः" ॥ ३।४।७२ ॥ इति श्ये, "ओतः श्ये" ॥ ४ । २ । १०३ ॥ इत्योकारलोपेऽडागमे च सिद्धमस्यन्निति । व्याघ्रा इत्यस्य चैकता इति व्याघ्रशब्दस्य जसि नेदम्, किन्तु 'घ्रां गन्धोपादाने' इत्यस्य वि-आङ्पूर्वकस्य अद्य०सि, सिच्, "धेट्-घ्राशासाच्छो वा" ॥ ४।३।३६ ॥ इति सिज्लुपि, अडागमे, तस्य रुत्वे विसर्गादेशे च सति व्याघ्रा इति सिद्धम् । बहुत्वं तथैतेषाम् इति असुशब्दः प्राणपर्यायः, मेषशब्दो वृष्णिवाचक आमन्त्र्यान्तः, अरुस्शब्दो व्रणवाचकः, एतान्येकवचनान्तानि, बहुवचनान्तानि कथम्?, इत्युच्यते- 'षोच् अन्तकर्मणि' इत्यस्य "षः सोऽष्ट्यै-" ॥ २।३। ९८ ॥ इत्यादिना षस्य सः, "आत्सन्ध्यक्षरस्य" ॥ ४।२।१ ॥ इत्योकारस्य आकारः, अद्य०अन्, सिच्, "सिज्विदोऽभुवः" ॥ ४।२।९२ ॥ इति पुसादेशे, "इडेत्पुसि चातो लुक्" ॥ ४।३।९४ ॥ इति आकारलोपेऽडागमे, सस्य रुत्वे, रेफस्य विसर्गे च, असुः इति सिद्धम् । कष सिष इत्यादौ मष हिंसायां, परोक्षा-अ, 'न च द्वि' इत्यधिकारे "अनादेशादेरेकव्यञ्जनमध्येऽतः" ॥ ४।१।२४ ॥ इत्युपान्त्याकारस्य एकारे च मेष इति सिद्धम् । अरुरिति 'रांक् दाने' ह्यस्तन्या अनि, "वा द्विषातोऽनः पुस्" ॥ ४।२।९१ ॥ इति पुसि, "इडेत्पुसि चातो लुक्" ॥४।३।९४ ॥ इति आकारलोपे, अडागमे, सस्य रुत्वे अरुः इति सिद्धम् । श्लोके चकारोऽनुक्तसमुच्चयार्थस्तेनेदमपि संगृहीतम्, पर्वत इति बहुवचनान्त कथमित्युच्यते- 'पूर्व पर्व मर्व पूरणे' इत्यस्य शतृप्रत्यये शवि, "लुगस्यादेत्यपदे" ॥ २।१।११३ ॥ इत्यलोपे

द्वितीयाबहुवचने शसि पर्वतः, इति सिद्धम्। आगमः, अनुजगृहे, राजसे, आगमशब्द. प्रथमैकवचनान्तः, अनुपूर्वको 'जनैचि प्रादुर्भावे' अनुजातोऽनुजः "क्वचित्" ॥५।१।१७१॥ इति डे डित्यन्तस्वरादिलोपे अनुजस्य गृहमनुजगृहं ततः सप्तम्येकवचने तदन्त, सह इना वर्तते इति से राज्ञ. से राजसे तत आमन्त्र्ये सौ "अदेतः स्यमोर्लुक्" ॥१।४।४४॥ इति सेर्लोप इति स्याद्यन्तानि, एतान्येव त्याद्यन्तानि उच्यन्ते, अमद्रम इत्ययं धातु आङ्पूर्वकः' अद्य० सि, "लृदिद्द्युतादि-"॥३।४।६४॥ इत्यादिनाऽङि अडागमे, समानदीर्घत्वे सस्य रुत्वे विसर्गे च सति आगम इति सिद्धम्। अनुपूर्वको 'ग्रहीश् उपादाने' परोक्षा ए- अनुजगृहे इति "ग्रहव्रश्च-" ॥४।१।४८४॥ इति ऋत्, सिद्धम्। 'राजृग् भ्राजि दीप्तौ' इत्यस्य व० से, शवि, राजसे इति सिद्धम्।'अट पट इति दण्डकधातुः' 'मठ मद-निवासयोश्च' 'णट नृत्तौ' 'हृग् हरणे' इत्येतेषां धातूनां पञ्चम्या हौ शवि, "अत प्रत्ययाल्लुक्" ॥४।२।८५॥ इति हेर्लोपे पट, मठ, नट, हर इत्येते शब्दास्तिवाद्यन्ताः सिद्धा., आमन्त्र्यस्यन्तास्तु सुगमाः, हरे इति आमन्त्र्यस्यन्तः, व०ए० प्रत्ययान्तस्य, तथा 'व्ययी गतौ' इत्यस्य ह्य०अमि, शवि, "लुगस्यादेत्यपदे" ॥२।१।११३॥ इत्यलोपेऽडागमे चाऽव्ययमिति सिद्धम्, अनया दिशाऽन्येऽपि अनुसर्तव्याः ॥ १३ ॥

**एतानि न स्याद्यन्तानि यस्य तस्याऽश्वमस्य च।**
**शेलुर्बिभीतको वेणुः पञ्चेते स्म ऋणानि च ॥१४॥**

'यसूच् प्रयत्ने 'तसू दसूच् उपक्षये' पञ्च०हि, "दिवादेः श्यः" ॥३।४।७२॥ इति श्ये, "अतः प्रत्ययाल्लुक्" ॥४।२।८५॥ इति हेर्लोपे यस्य, तस्य, दस्य इति सिद्धम्। 'जसूच् मोक्षणे' इत्यस्य जस्य इति सिद्धम्, शेषं पूर्ववत्। अश्वम् इति 'टुओश्वि गतिवृद्ध्योः' इत्यस्य अद्यतनी अम्, "ऋदिच्छ्वि-" ॥३।४।६५॥ इत्यादिनाऽङि "श्वयत्यसू-" ॥४।३।१०३॥ इत्यादिना श्वादेशे "लुगस्यादेत्यपदे" ॥२।

१।११३।। इत्यलोपेऽडागमे च अश्वमिति सिद्धम्। अस्य इति 'असूच् क्षेपणे' शेषं यस्येतिवत् ।। शेलुः श्लेष्माऽन्तक', बिभीतक' अक्ष , वेणु वंश , स्याद्यन्ताः सिद्धा', त्याद्यन्ताश्च कथम् ?, इत्युच्यन्ते– 'पल फल शल गतौ' प०उस् 'अनादेशादेः– ।।४।१।२४।। इत्यादिना उपान्त्याकारस्य एत्वे, सस्य रुत्वे विसर्गे च शेलुः इति सिद्धम् । बिभीतकः इति 'ञिभीक् भये' व०तस्, "ह्वः शिति" ।।४।१।१२।। इति द्वित्वम्, "ह्रस्व'" ।।४।१।३९।। इति पूर्वस्य ह्रस्वः, "द्वितीयतुर्ययोः-" ।।४।१।४२।। इत्यादिना भस्य बः, कुत्सितत्वविवक्षायां "त्यादिसर्वादेः-" ।।७।३।२८।। इत्यादिनाऽन्त्यस्वरात्पूर्वोऽक', सस्य रत्वे विसर्गे च बिभीतकः इति सिद्धम् । अण् रण इत्यादौ वण् शब्दे शेषं शेलुरितिवत्सिद्धम् । पञ्चेते इति 'पचुङ् व्यक्तीकरणे' "उदितः स्वरान्नोऽन्त'" ।।४।४।८४।। इत्यन्तस्वरात्परो नकार' व०आते शव्, आतामाते-" ।।४।२।१२१।। इत्यादिनाऽऽकारस्येकारः, "अवर्णस्य" ।।१।२।६।। इत्यादिना एकारश्च पञ्चेते इति सिद्धम् । स्म इति 'अस्‌क् भुवि' व०मस्, "श्नास्त्योर्लुक्" ।।४।२।९०।। इत्यकारलोपे सस्य रुत्वे विसर्गे च स्म इति सिद्धम् । 'ऋश् गतौ' पं०आनिवि, "क्र्यादेः" ।।३।४।७८।। इत्यादिना श्नाप्रत्यये "प्वादेर्ह्रस्वः" ।।४।२।१०५।। इति ह्रस्वेः, "रषृवर्णा-" ।।२।३।६३।। इति श्नाप्रत्ययस्य णत्वे समानदीर्घत्वे ऋणानि इति सिद्धिमधान् ।। चः समुच्चये तेन 'असूच् क्षेपणे' 'यसूच् प्रयत्ने,' 'तसू दसूच् उपक्षये,' कस् गतौ, आशीः०क्यास्, अस्याः, यस्या., तस्याः, दस्या', कस्याः इति ।। १४ ।।

एकस्य कस्य धातोः स्यात्त्यादौ रूपचतुष्टयम् ।
पर्वाणि पर्वतं पर्व पर्वतोऽपूर्वमेव च ।। १५ ।।

'पूर्व पर्व मर्व पूरणे' पं०आनिवि, शवि, समानदीर्घत्वे, णत्वे पर्वाणि इति सिद्धम् । पर्वतम् इति पर्वधातुः पञ्चमी०तम्, शवि पर्वतमिति सिद्धम् । पर्वेति पर्वधातुः पञ्चस्या हौ, शवि "अतः प्रत्ययाल्लुक्"

॥४।२।८५॥ पर्व इति सिद्धम् । तसि तु पर्वतः इति । पूर्वधातोस्तु ह्य०अम्वि, शवि "लुगस्यादेत्यपदे" ॥२।१।११३॥ इत्यलोपेऽडागमे च अपूर्वमिति सिद्धम् । त्यादौ रूपचतुष्टयं सिद्धम् । च. समुच्चये, तेन "जल घात्ये" पं० आनिवि शवि समानदीर्घत्वे च जलानि इति सिद्धम् । रूपत्रयं तु "वांक् गति-गन्धनयो" इत्यस्य क्रमेण वर्तमानायास्तसि, पञ्चम्या द्विवचने तुं, वातः, वातं, वात, इति सिद्धम् । "प्रांक् पूरणे" इत्यस्य व० तसि प्रातः इति सिद्धम् । श्याम इति "शोच् तक्षणे" व० मसि श्ये "ओत. श्ये" ॥४।२।१०३॥ इत्योकोरलोपे "मव्यस्या" ॥ ४।२।१०३ ॥ इत्यकारस्याकारे सिद्ध श्याम इति । अध्यायः, "ध्यै चिन्तायाम्", ह्य० सिवि शवि आयादेशे अडागमे च सिद्धमध्याय इति॥ "ऊतृदृंपी हिंसाऽनादरयो" ह्य० सिव् "रुधां स्वराच्छ्नो नलुक् च" ॥३।४।८२॥ इति नकारागमः, "सेः स्द्धां च रुर्वा" ॥४।३।७९॥ इति सिव्लुक्, दस्य रुत्वं, रेफविसर्गादेशः, णत्वम्, अतृण इति सिद्धम् । चन्द्र इवाचरति आदित्य इवाचरति "कर्तुः क्विप्" ॥३।४।२५॥ इति क्विप्, तस्य लोपे, "क्रियार्थो धातुः" ॥ ३।३।३ ॥ इति धातुत्वे प० हौ शवि "लुगस्यादेत्यपदे" ॥ २।१।११३ ॥ इत्यकारलोपे "अतः प्रत्ययाल्लुक्" ॥ ४।२।२५ ॥ इति हेर्लुकि चन्द्र, आदित्य इति प्रयोगद्वयं सिद्धम् । तथा "णल गन्धे" "पाठे धात्वादेर्णो नः" ॥२।३।९०॥ इति णस्य नः, ह्य० सिवि, अडागमे, सस्य रुत्वे विसर्गादेशे च अनल इति सिद्धम् । "क्षर संचलने" ह्य०अम्, शवि पूर्ववद् अक्षरम्, इति सिद्धम् ॥१५॥

**अशोकोऽनौस्तथा वातादश्रीणामरुणोऽवनम् ।**
**वनानि स्मोऽखिलं यानि शुभानि चरणानि च ॥१६॥**

अशोक इति अशोकवृक्षः, अत्र "शुक गतौ" ह्य० सिवि, "लघोरुपान्त्यस्य" ॥४।३।४॥ इति गुणेऽडागमे, सस्य रुत्वे विसर्गा-

---

१ तु-शब्दाद् बहुवचनस्यापि संग्रहः ।

देशे च अशोक इति सिद्धम् । अनौः इति न/नौ. अनौरिति प्रथमान्तम्, विपर्यये तु "णुक् स्तुतौ" इत्यस्य "पाठे धात्वादेर्णो नः" ॥ २।३। ९७ ॥ इति णस्य ने, ह्य०सिवि, "उत और्विति व्यञ्जनेऽद्वे" ॥ ४ । ३ । ५९ ॥ उकारस्य औकारेऽडागमे सस्य रुत्वे विसर्गे च अनौरिति सिद्धम् । वातात् इति ङस्यन्तं तु सुगमम्, अत्र तु "वांक् गतिगन्धनयोः" इत्यस्य पं०तुव्, "आशिषि तुह्योस्तातङ्" ॥ ४ ।२ । ३१९ ॥ इति तातङादेश वातादिति सिद्धम् । अश्रीणाम् इति न विद्यते श्रीर्येषामिति षष्ठ्यन्त तु सुगमम्, अपर तु "श्रीग्श् पाके" ह्य० अम्व् "क्र्यादे"॥३।४।७९॥इति श्रा, समानदीर्घत्वमडागमो णत्व, तत सिद्धमश्रीणामिति । अरुण इति प्रथमान्तम्, अन्यत्र तु "रुधूंपी आवरणे" इत्यस्य ह्य०सिवि "रुधां स्वराच्छ्नो नलुक् च" ॥३।४।८२॥ इति श्नप्रत्यये णत्वम्, "सेः स्द्धां च रुर्वा" ॥४।३।७९॥ इति द्स्य रुत्वं सिवो लोप, रेफविसर्गादेशोऽडागमेऽरुण इति सिद्धम् । अवनम् इति न विद्यते वनमिति, अव्धातो "रम्यादिभ्यः कर्तरि" ॥५।३।१२६॥ इत्यनटि प्रथमान्तम्, त्याद्यन्तं च "वन षण सभक्तौ" इत्यस्य ह्य० अम्त्रि शवि, "लुगस्यादेत्यपदे" ॥२।१।११३ ॥ इत्यकारलुकि अडागमे चाऽवनमिति सिद्धम् । वनानि इति अत्रापि वनधातुः, पं० आनिवि समानदीर्घत्वं वनानीति सिद्धम् । स्म इति स्यन्तम्, व० मस् "श्नास्त्योर्लुक्" ॥४।२।९०॥ इत्यकारस्य लोपः सिद्धं स्म इति । अखिलम् इति खिलमिवाचरम्, "कर्तुः क्विप्-" ॥३।४।२५॥ तस्य लुक् ह्य०अम्व्, शवि "लुगस्यादेत्यपदे" ॥२।१।११३॥ इत्यकारलोप ऽडागमेऽखिलमिति सिद्धम् । यानि इति "यांक् प्रापणे" इत्यस्य पं० आनिवि समानदीर्घत्वे च सिद्धं यानीति ॥ "शुभ शुम्भत् शोभार्थे" इत्यस्य पञ्चमी आनिवि "तुदादेः शः" ॥३।४।८१॥ इति शे, "मुचादितृफ-" ॥४।४।९९॥ इति नागमे, "नो व्यञ्जनस्यानुदितः" ॥४।२।४५॥ इति नलोपे समानदीर्घत्वे च शुभानि इति सिद्धम् । रणानि इति अणरणेति दण्डकधातुः, पञ्चम्यादि पूर्ववत् रणानि इति सिद्धम् ॥ १६ ॥

सास्नायाऽकृशः, अताता अमर्मा अवटोऽनृणाम् ।
वेष रेफ रवेऽपेपेरदोधूर्तानिलः कुतः ॥ १७ ॥

एते जसन्तसदृशाः–सास्नाया अकृशोऽताताऽमर्मा इति। सास्नाया इति अनडुहो गलकम्बलपर्याय' षष्ठ्यन्त , क्रिया तु "ष्णांक् शौचे" इत्यस्य, "षः सोऽष्ट्यै- ॥२।३।९८॥ इत्यादिना षस्य स', निमित्ताभावे नैमित्तिकस्याप्यभाव इति णस्य नत्वेऽत्यर्थे स्नातीति यङि, तस्य लोपे "सन्यङश्च" ॥४।१।३॥ इति द्वित्वेऽनादिव्यञ्जनलुकि "ह्रस्व" ॥४।१।३९॥ इति ह्रस्वत्वे "आगुणावन्यादेः" ॥४।१।४८॥ इति पूर्वस्य दीर्घत्वे, सप्तम्यो यासि सास्नाया इति सिद्धम् । अकृशः इति नञा समासे सिद्ध्यति,क्रिया तु "कृशच् तनुत्वे" अद्य०सि "लृदिद्–" ॥३।४।६४॥ इत्यादिनाऽङि अडागमे च अकृश इति सिद्धम् । अताताः इति न विद्यते तातो येषां ते अताता , क्रिया तु "तर्दि हिंसायाम्" इत्यस्य यङि तस्य लोपे, द्वित्वेऽनादिव्यञ्जनलोपे "आगुणावन्यादेः" ॥४।१।४८॥ इत्यस्य आकारे च ह्य०सिवि "से' स्द्धां च रुर्वा" ॥४।३।७९॥ इति दस्य रुत्वे सिचो लोपे "रोरे लुक्" ॥१।३।४१॥ इत्यादिना रेफस्य लोपे पूर्वस्य दीर्घत्वे चाऽडागमेऽताता इति सिद्धम् । अमर्माः इति न विद्यते मर्म यासामिति विग्रहे "ताभ्यांवाप् डित्"॥४।२।१५॥ इति डाप् प्रथमाबहुवचने रूपम्, क्रिया तु"मृद्श् संक्षोदे" इत्यस्य शेष पूर्ववत्, केवलं द्वित्वे कृते "रिरौ च लुपि"॥४।१।५६॥ इति रुरागमे, मूलधातोस्तु उपान्त्यस्य गुणे सिद्धममर्मा इति ॥ अवट इति न वटोऽवटो गर्त', क्रिया तु "वट वेष्टने" इत्यस्य ह्य०सिवि शवि । अनृणाम् इति न नरोऽनर इत्यादि, क्रिया तु "नॄश् नये" ह्य०-अम्व, श्यादे. श्नाऽडागम', प्वादेर्ह्रस्वोऽनृणामिति सिद्धम् । "विषू सेचने" ह्यौ गुणे वेष इत्यसिद्ध्यत्, वषतेर्हिंसार्थस्य वा परोक्षा-अ, उपान्त्यस्याकारस्यैकारोऽनेनापि प्रकारेण वेष इति सिद्धम्। रेफ इति वर्फ रफ इति दण्डकधातुः, शेषं पूर्ववत् । रवे इति रविशब्दादामन्त्र्ये सौ,

रवशब्दो वा सप्तम्यन्तः, क्रिया तु "रुड् रोषणे" इत्यस्य व०ए, शवि, "नामिनो गुणोऽक्ङिति" ॥४।३।१॥ इति गुणेऽवादेशे, "लुगस्यादेत्यपदे" ॥२।१।११३॥ इत्यलोपे रवे इति सिद्धम् । अपेपेः इति "पिसृ पेसृ वेसृ गतौ" इत्यस्य यङि तस्य लोपे, द्वित्वेऽनादिव्यञ्जनलोपे, गुणे, ह्य०शवि उपान्त्यगुणेऽडागमे "से: स्द्धां च रुर्वा" ॥४।३।७९॥ इति सिवो लुकि, सस्य रुत्वे रेफस्य विसर्गे च अपेपे इति सिद्धम् । अदोधूर्त इति उर्वै तुर्वै इत्यादौ "धूर्वै हिंसायाम्" यङि तस्य लोपे, द्वित्वेऽनादिव्यञ्जनलोपे, "द्वितीयतुर्ययो पूर्वौ" ॥४।१।४२॥ इति धस्य द, पूर्वस्य गुणः, ह्य०त "राल्लुक्" ॥४।१।११२॥ इति वलोपे "भ्वादेर्नामिनो-" ॥२।१।६३॥ इत्यादिना दीर्घत्वेऽडागमे सिद्धमदोधूर्त इति ॥ "णिल गहने" "पाठे धात्वादेर्णो न" ॥२।३।९७॥ ह्य०सिवि "तुदादेः शः" ॥३।४।८१॥ इति शेऽडागमे, सस्य रुत्वे विसर्गे च अनिलः इति सिद्धम् । कुतः इति किम पञ्चम्यन्तात्तसि, "इतोऽत कुतः" ॥७।२।९०॥ इति तद्धितान्तम्, क्रिया तु "टुक्षु रु कुंक् शब्दे" इत्यस्य व०तसि, तस्य रुत्वे विसर्गे च कुत इति सिद्धम् ॥ १७ ॥

**अरये नभसे पयसे वयसे लोकेऽनसे गत्रे ।**
**वृक्षेऽह्योऽकवे वयसे लेखे रेखे रजसि रेजेऽलिट् ॥१८॥**

आदौ रूपाणि चत्वारि चतुर्थ्यन्तानि सुगमानि, क्रियारूपाणि तूच्यन्ते- अयिवयीत्यादौ "रयि गतौ" इत्यस्य "णभि तुभि हिंसायां" "पाठे धात्वादेर्णो नः" ॥२।३।९७॥ अयि वयि इत्यादौ दण्डकधातुः, आद्यात् ह्य०इप्रत्यये शवि "अवर्णस्येवर्णादिनै-" ॥ १ । २ । ६ ॥ इत्यादिनाऽकारस्यैकारेऽडागमे च अरये इति सिद्धम् । त्रिभ्यस्तु व०से शवि नभसे, पयसे, वयसे, इति सिद्धम् ॥ लोके इति सप्तम्यन्तं, "लोकृङ् दर्शने" व०ए, शवि, "लुगस्यादेत्यपदे" ॥२।१।११३॥ इत्यलोपे लोके इति सिद्धम्, एवमन्येऽपि स्वबुद्धया कल्प्याः, सूत्रकृता तु

चक्रिनाम ततो वीक्ष्य शान्तकोपः स चक्रिणम् ।
एत्य नत्वोपदापाणिर्भृत्यस्तेऽस्मीत्यसान्त्वयत् ॥ १०२ ॥
नृपः सत्कारपूर्वं तं विसृज्य कृतपारणः ।
तस्याऽष्टाहमहं चक्रे नौचित्याद् भ्रश्यति प्रभुः ॥ १०३ ॥
सर्वत्राऽप्यधिदेवानामावर्जन-विसर्जने ।
एषोऽष्टमतपोमुख्यो विधिः स्याच्चक्रवर्तिनः ॥ १०४ ॥
वरदाम-प्रभासौ च दक्षिणा-ऽपरदिक्सुरौ ।
इत्थमेव वशीचक्रे तथा सिन्धुं-नृपः क्रमात् ॥ १०५ ॥
वैताढ्यमेत्य तत्रस्थो जित्वा वैताढ्यदैवतम् ।
सेनान्यं प्रेष्य सिन्धोः स परखण्डमसाधयत् ॥ १०६ ॥
कृतमालमथो जित्वा स तमिस्रागुहाऽधिपम् ।
दण्डरत्नेन सेनान्या तद्द्वारमुद्घाटयत् ॥ १०७ ॥
कुम्भे न्यस्य मणिं कुम्भ्यारूढश्चक्री विवेश तत् ।
लिखन्नुभयतो भित्त्योः काकिण्या मण्डलावलीम् ॥१०८॥
तदुद्द्योतात् ससैन्योऽसौ चलन् वर्धकिक्लृप्तया ।
पद्यया निमग्नोन्मग्ने नद्यावुदतरत् सुखम् ॥ १०९ ॥
पञ्चाशद्योजनमितां गुहामुल्लङ्घ्य तां गिरेः ।
स्वयमुद्घाटितोदीच्यद्वारेण निरगान्नृपः ॥ ११० ॥
तत्रापाताह्वयान् म्लेच्छभूपान्निर्जित्य लीलया ।
साधयामास सेनान्या सिन्धोः सोऽपरनिष्कुटम् ॥ १११ ॥
क्षुद्रहिमवत्कुमारं जित्वाऽऽलिख्य निजाभिधाम् ।
काकिण्यर्षभकूटेऽसौ पुनर्वैताढ्यमागमत् ॥ ११२ ॥
तत्र जित्वा युधा श्रेणीद्वयविद्याधरान् नृपः ।
साधयामास सेनान्या गङ्गायाः खण्डमुत्तरम् ॥ ११३ ॥
गङ्गादेवीं वशीचक्रे नाट्यमालं च दैवतम् ।
जित्वा खण्डगुहायास्तां स प्राग्वदुदघाटयत् ॥ ११४ ॥

१ तृतीयान्तम् ।

निर्गत्य च सेनान्या द्वितीयं गाङ्गनिष्कुटम् ।
जिगाय जगृहे गङ्गामुखस्थांश्च निधीन्नव ॥ ११५ ॥
जित्वैवं स्वर्णवाहुस्तद्खण्डं क्षोणिमण्डलम् ।
नीत्या चक्रानुगश्चक्री व्यावृत्यागान्निजं पुरम् ॥ ११६ ॥
चक्रेऽस्य मुदितैर्भूप-सुरैरुत्सवनिर्भरम् ।
तीर्थाम्भोभिर्महाराज्याऽभिषेको द्वादशाब्दिकः ॥ ११७ ॥
चतुःषष्टिसहस्राणि राइयोऽतिरतयोऽभवन् ।
द्वात्रिंशच्च सहस्राणि राजानस्तस्य सेवकाः ॥ ११८ ॥
लक्षाश्चतुरशीतिश्च हस्तिनो वाजिनो रथाः ।
ग्रामाः षण्णवतिः कोट्यः पूःसहस्रद्विसप्ततिः ॥ ११९ ॥
इत्थं श्रितः समग्राभिश्चक्रवर्तिविभूतिभिः ।
स चिरं पालयामास विजयी विजयावनिम् ॥ १२० ॥
निजभाग्य इवोत्तुङ्गे प्रासादे स स्थितोऽन्यदा ।
याना-ऽऽयानकृतो देवान् विस्मितोऽपश्यदम्बरे ॥ १२१ ॥
अथाऽपीक्ष्य जगन्नाथं तीर्थङ्करमुपागतम् ।
श्वेतपक्षाऽऽगमेऽम्भोधिरिवोल्लासं भृशं दधौ ॥ १२२ ॥
स देशः स जनः श्लाघ्यो वासरः स च स क्षणः ।
मतृषां यत्र नः स्वामी सुधाकुम्भ इवाययौ ॥ १२३ ॥
अदृश्यदर्शनोद्भूतं मलं मेऽद्य दृशोर्जिनम् ।
दृष्ट्वा यास्यति तस्याङ्गलावण्यजलनिर्भरैः ॥ १२४ ॥
तथाऽष्टाङ्गप्रणामेन सर्वाङ्गाऽऽरम्भसंभवम् ।
जिनेन्द्रचरणस्पृष्टभुवः स्पर्शेन नङ्क्ष्यति ॥ १२५ ॥
अश्रव्यश्रवणाज्जातं दोषं श्रवणयोर्मम ।
तदन्तःप्रविशज्जैनवाक्पूरः प्लावयिष्यति ॥ १२६ ॥
इति ध्यायन्नराधीशो जिनेन्द्रं वन्दितुं ययौ ।
शिरः पुण्यमिवाऽऽधातुं नीचैश्चक्रे जिनेक्षणात् ॥ १२७ ॥

१ रतिमतिक्रान्तवत्यः । २ मलमिति शेषः ।

उपानत्-खड्ग-मुकुट-च्छत्र चामरलक्षणम् ।
पञ्चकं राजचिह्नानां दूरे मुक्त्वा ननाम तम् ॥ १२८ ॥
निषद्य च यथास्थानं स चातक इवोच्चकैः ।
पपौ जिनघनोद्भूतदेशनाजलमुज्ज्वलम् ॥ १२९ ॥
संबोध्य भूयशो भव्यान् भगवानन्यतो ययौ ।
स्वर्णबाहुनृपोऽपि स्वं धाम धृत्वा जिनं हृदि ॥ १३० ॥
तीर्थकृद्देशनाऽऽयातान् स्मारं स्मारं सुरान्नृपः ।
क्वैते दृष्टा मयेत्यूहापोहाज्जातिस्मृतिं ययौ ? ॥ १३१ ॥
दध्यौ च प्राग्भवान् पश्यन् प्रतिमर्त्यभवं मम ।
अपि प्रयतमानस्य भवान्तो नाधुनाऽपि हि ॥ १३२ ॥
देवत्वमाप यस्तादृक् स मर्त्यत्वेऽपि तुष्यति ।
ध्वस्तचेतनचैतन्यं महामोहविजृम्भितम् ॥ १३३ ॥
भवचक्राधिरूढस्य भ्रमतोऽपि निरन्तरम् ।
स्थितिस्तत्रैव, मोक्षाय तद् यतिष्ये विशेषतः ॥ १३४ ॥
निश्चित्यैवं निजे न्यस्य स्वर्णबाहुः पदे सुतम् ।
तदायातजगन्नाथतीर्थनाथाऽन्तिके ययौ ॥ १३५ ॥
तत्याजौपाधिकीं भूषां मुक्तये गुणभूषणः ।
प्रौढा मुक्तिर्वधूर्यन्न रज्यते बाह्यभूषणैः ॥ ॥ १३६ ॥
जगन्नाथमथाऽभ्यर्च्य प्रव्रज्यां जगृहे नृपः ।
तप्यमानस्तपश्चोग्रं गीतार्थः स क्रमादभूत् ॥ १३७ ॥
हृदिस्थजिनपूर्णेन्दूल्लसच्छमसुधारसः ।
स चन्द्रमणिवत् केषां न तापं निरवापयत् ? ॥ १३८ ॥
किञ्च,
असव्य सव्यचक्राभे सदसत्कर्मचक्रक ।
भ्रमति स्थिरक्लृप्तात्मसंस्थानोऽतिजनेऽपि सन् ॥ १३९ ॥
धर्मध्यानेषुणा यन्त्रपुत्रीब्रह्मकलां पराम् ।

---

१ सप्तम्यन्तम् ।

भित्त्वा निर्वृतिकन्यां यः प्रोद्वहेत् स नरो वरः ॥ १४० ॥
(युग्मम्)
कियद्भिः सेवितैः स्थानैः स्थानविंशतिमध्यतः ।
शनैरुपार्जयामास तीर्थकृन्नाम कर्म सः ॥ १४१ ॥
अर्हत्-सिद्ध-प्रवचन-गुरु-स्थविर-सुश्रुते ।
तपस्विषु च वात्सल्यं ज्ञानाभ्यसनमष्टमम् ॥ १४२ ॥
दर्शने विनये चाऽऽवश्यके शीलव्रते तथा ।
शुद्धिः क्षणलवध्यानं तपस्-त्यागौ च सर्वदा ॥ १४३ ॥
वैयावृत्त्यं समाधिश्चाऽपूर्वज्ञानस्य संग्रहः ।
तीर्थोन्नतिः श्रुते भक्तिरित्युक्ता स्थानविंशतिः ॥ १४४ ॥
विहरन्नेकदा प्राप्य स क्षीरगिरिसन्निधौ ।
महाटवीं क्षीरवणां तस्थौ प्रतिमया मुनिः ॥ १४५ ॥
कुरङ्गकोऽपि नरकादुद्वृत्त्य तत्र पर्वते ।
सिंहो बभूव भ्राम्यंश्च दैवात् तत्र समाययौ ॥ १४६ ॥
अतीतवासरेऽप्येष भक्ष्याऽलाभेऽतिसक्षुधः ।
दूरादपि महर्षिं तमद्राक्षीद् यमभीषणः ॥ १४७ ॥
क्षुद्रो जात्या हरिः प्राच्यवैरादास्यं प्रसार्य सः ।
अभ्यधावत् सटां धुन्वन् पुच्छेनाऽऽच्छोटयन् महीम् ॥१४८॥
तदा तत्कृतपूत्कारप्रतिशब्दमिषाद् गिरिः ।
कठोरात्माऽपि पूत्कारमिवाऽऽर्त्या विदधे मुनेः ॥ १४९ ॥
रौद्रध्यानो मृगेन्द्रस्तं धर्मध्यानास्थितं मुनिम् ।
प्रतीपमिव मन्वान उत्फालोऽहन् चपेटया ॥ १५० ॥
ततो मुनिर्विशेषेण ध्यानमापूरयन् शुभम् ।
कष्टे हि महतां सत्त्वं सहायं यत् सुभृत्यवत् ॥ १५१ ॥
दध्यौ च हृदि धन्योऽद्य दिवसो यत्र मेऽजनि ।
आसन्नमृत्योराजन्मनिर्व्यूढव्रतनिश्चयः ॥ १५२ ॥
स चाऽयं कृत एतेन ततो मेऽस्मिन् मनागपि ।

न विरुद्धं हरौ कर्तुं मानसं युज्यतेऽधुना ॥ १५३ ॥
दुष्कर्मक्षपिताऽयं मेऽस्याऽहं पापप्रदः पुनः ।
इति सिंहे कृपां चक्रे स महात्मा विशेषतः ॥ १५४ ॥
स कृत्वाऽऽलोचनां सम्यक् क्षामणां चाऽखिलाऽङ्गिषु ।
चक्रे चतुर्विधाहारप्रत्याख्यानं समाहितः ॥ १५५ ॥
इक्षो रसं यथाऽऽदाय कूर्चकस्त्यज्यते जनैः ।
धर्मसारं तथाऽऽदाय देहं त्यजति पण्डितः ॥ १५६ ॥
विदीर्णो हरिणा मृत्वा स मुनिः प्राणते दिवि ।
महाप्रभविमानेऽभूद् विंशत्यब्धिस्थितिः सुरः ॥ १५७ ॥
पक्षैकरम्यं मन्दानां भाग्यं मायूरपिच्छवत् ।
पक्षद्वये तु विदुषां सुन्दरं चाषपक्षवत् ॥ १५८ ॥
मृत्वा सिंहोऽपि पापात्मा चतुर्थं नरकं गतः ।
दशार्णवस्थितिस्तीव्रवेदनाः सहति स्म सः ॥ १५९ ॥
तस्मादुद्धृत्यविविधतिर्यग्योनिषु चाऽभ्रमत् ।
सर्वत्राऽऽसादयन् दुःखं दुःश्रवं श्रवसोरपि ॥ १६० ॥
यः सर्वैरपि सेव्यते सुकृतिभिर्ध्यायन्ति यं योगिनो ।
येनाऽतारि भवोदधिर्बुधजना यस्मै नमस्कुर्वते ॥ १६१ ॥
यस्माद् ज्ञानधनागमस्त्रिभुवने यस्याऽस्त्यनन्तं सुखं ।
लीनं यत्र सतां मनः स दिशताद् वः पुण्यभावं जिनः१६२

ति श्रीकालिकाचार्यसन्तानीय-श्रीभावदेवसूरिविराचिते श्रीपार्श्व-
नाथचरित्रे महाकाव्येऽष्टसर्गे भावाङ्के श्रीपार्श्वनाथाऽष्टम-
नवमभववर्णनो नाम चतुर्थ सर्गः ॥ ४ ॥



अर्हम्

# अथ पञ्चमः सर्गः ।

सिंहजीवोऽथ दुःखानि तिर्यग्योनिभवानि सः ।
सहन् क्वापि सन्निवेशे रोरद्विजसुतोऽभवत् ॥ १ ॥
जातस्यैव मृतास्तस्य पितृ मात्रा-ऽऽदिबान्धवाः ।
ततोऽसौ जीवितो लोकै रङ्कोऽयमिति सदयैः ॥ २ ॥
कठ इत्याहिताऽऽह्वानः क्रमेण प्राप्तयौवनः ।
भोजनं कथमप्याप स भ्रमन् प्रतिमन्दिरम् ॥ ३ ॥
अतिदुःस्थतया चैष दुर्निरीक्ष्यो नृणामभूत् ।
ग्रस्तो दारिद्र्यभूतेन कस्य न स्याद् भयास्पदम् ? ॥ ४ ॥
सोऽन्येद्युरीश्वरान् रत्नस्वर्णालङ्कारभूषितान् ।
दृष्ट्वा सद्यः समुत्पन्नाद् वैराग्यादित्यचिन्तयत् ॥ ५ ॥
दृश्यन्तेऽमी सहस्राणामुदरंभरयोऽत्र यत् ।
देववद् दिव्यनेपथ्यास्तत् प्राच्यतपसः फलम् ॥ ६ ॥
अहं स्वोदरपूरेऽपि भैक्षेणाप्यक्षमस्तु यत् ।
तन्नूनं न तपोऽकार्षं तपस्याम्यधुनाऽपि तत् ॥ ७ ॥
इति ध्यात्वा कठः खेदाज्जगृहे तापसव्रतम् ।
तपस्तेपे च पञ्चाग्न्यादिकं कन्दफलाशनः ॥ ८ ॥
इतश्च जम्बूद्वीपेऽस्मिन् क्षेत्रेऽस्मिन् भरताऽभिधे ।
उपकण्ठस्थगङ्गौघहारा वाराणसी पुरी ॥ ९ ॥
परिखाजलमध्यस्थप्राकारकपिशीर्षकैः ।
दलैरिव विराजन्ती चैत्यकिञ्जल्कशालिनी ॥ १० ॥
इक्ष्वाकुकुलभूपालप्रतापरवितेजसा ।
या विकाशवती धत्ते पद्मिनीव श्रियं सदा ॥ ११ ॥
( युग्मम् )

यत्र स्फटिकहर्म्याणि प्रसृताऽगुरुधूम्यया ।
कैलासा इव राजन्ते तटसञ्चारिवारिदाः ॥१२॥
यत्रोज्ज्वलवृषा बाढमभीष्टधनदाः सदा ।
ईश्वराः सार्थनामानः कामविग्रहधारिणः ॥१३॥
यत्राऽन्यसम्पदा हृष्टाः सन्तोऽप्युपचिकीर्षवः ।
स्युर्गुणे च परेणात्ते गुणाढ्या अप्यधोमुखाः ॥ १४ ॥
लावण्यसज्जलाः स्मेरमुखाब्जाः कलहंसकैः ।
रम्यक्रमतटा यत्र भान्ति नद्य इव स्त्रियः ॥ १५ ॥
स्वर्गखण्डश्रियं वीक्ष्य यस्यां पद्मसरश्छलात् ।
सतारकनभःखण्डानीव सख्यादवातरन् ॥ १६ ॥
निलीनाऽनेकसंमत्तपक्षिकूजितगर्जितः ।
स्फुरत्पल्लवविद्युत्वान् मयूराऽऽरावबन्धुरः ॥ १७ ॥
तुषारकणिकां वर्षन् घनछायान्धकारतः ।
करोति कस्य न तुष्टिं यत्रारामघनागमः ॥ १८ ॥
( युग्मम् )
तस्यामिक्ष्वाकुवंश्योऽभूद् भुवनत्रयविश्रुतः ।
अश्वसेनातरङ्गाब्धिरश्वसेनो नरेश्वरः ॥ १९ ॥
प्रेयस्याऽप्यनुयाता नामुत्र कीर्त्या तदादिजाः ।
तथापि सा सती कीर्तिस्ते परं सुभगाः श्रुताः ॥ २० ॥
त्याग-शौर्यगुणोऽनेकोऽनेकधारुह्य सङ्गरम् ।
स मार्गणगणं वीरो लक्षलाभे न्ययोजयत् ॥ २१ ॥
भ्रूचापोत्थैः परस्त्रीणां तीक्ष्णैः कर्णान्तगामिभिः ।
कटाक्षविशिखैर्भिन्नं न तस्य हृदयं कलौ ॥ २२ ॥
गृहे श्रीर्भारती वक्त्रे भूर्भुजे हृदि धर्मधीः ।
स्थितेतीव रुषा तस्य कीर्तिर्दूरतरं गता ॥२३॥
प्रतापः पीत उष्णश्च यशः शुभ्रं च शीतलम् ।

१ न एकोऽद्वितीयो यस्मात् ।

तथाऽपि शुद्धमेवात्र यशोऽभूत् तत्प्रतापजम् ॥२४॥
सूरो युधि नते सोमो दुष्टे वक्रो बुधः श्रुते ।
गुरुर्वाचि कविर्नीतौ मन्दे मन्दश्च सोऽभवत् ॥२५॥
तस्याऽभून्महिषी वामा वामाजनशिरोमणिः ।
पापकर्मरिपौ वामा वामादेव्यभिधानतः ॥२६॥
पवित्रेण चरित्रेण बभौ गङ्गेव साऽपरा ।
किन्तु सा विदुषी बाढमपरा तु जडात्मिका ॥२७॥
यद्यपि स्वगुणैर्जज्ञे राज्ञः साऽत्यन्तवल्लभा ।
तथाऽपि न मदं चक्रे रेवा क्वापि किमुच्छलेत् ? ॥२८॥
इतश्च प्राणते कल्पे भुक्त्वा देवर्द्धिमुत्तमाम् ।
सुवर्णबाहुजीवः स्वं दिव्यमायुरपूरयत् ॥ २९ ॥
चैत्रकृष्णचतुर्थ्यां स विशाखायां ततश्च्युतः ।
निशीथेऽवातरद् वामाकुक्षौ भाग्यैर्भुवोऽद्भुतैः ॥३०॥
वामादेव्या तदा दृष्टा प्रविशन्त इमे मुखे ।
चतुर्दश महास्वप्नास्तीर्थकृज्जन्मसूचकाः ॥ ३१ ॥
गजेन्द्रो वृषभः सिंहो लक्ष्मीर्माल्यं शशी रविः ।
ध्वजः कुम्भः सरो वार्धिर्विमानं वसवोऽनलः ॥३२॥
अथेन्द्रास्तुष्टुवुर्देवीं तत्रैत्य चलितासनाः ।
हृष्टाश्च कथयामासुरित्थं स्वप्नविचारणाम् ॥३३॥
गजेन विश्वशौण्डीरो धर्मधुर्यो वृषेण तु ।
सिंहेन निर्भयः शूरः श्रिया विश्वश्रियाऽञ्चितः ॥३४॥
स्रजा मूर्ध्नोपरि सतां शशिना नयनामृतम् ।
सूर्येण तमसां हर्ता कुलोत्तंसो ध्वजेन तु ॥३५॥
कुम्भेन गुणसंपूर्णः सरसा विश्वतापहृत् ।
वार्धिना गुरुगम्भीरो विमानेनाऽमराश्रयः ॥३६॥

---

१ स्त्री । २ रत्नानि ।

महार्घ्यो रत्नपुञ्जेन दीप्तो निर्धूमवह्निना ।
इमैः स्वप्नैर्जिनः पुत्रो भावी ते स्वामिनीदृशः ॥ ३७ ॥
तथैव कथिते प्रातः पत्या तज्ज्ञैश्च साऽधिकम् ।
हृष्टा गर्भं दधौ कल्पद्रुमं नन्दनभूरिव ॥ ३८ ॥
प्रवर्धमानगर्भाऽनुभावाद् दाक्ष्यादयो गुणाः ।
देव्या वव्रधिरे छन्नो घनान्तरपि किं रविः ? ॥ ३९ ॥
क्षेमयोगवती जज्ञे राज्ञः श्रीर्व्ययतोऽपि यत् ।
न क्षीणा धनदादिष्टसुरैश्च परिवर्धिता ॥ ४० ॥
आशया भाविभद्राणां किंकर्य इव देवताः ।
पूरयन्ति स्म सर्वं श्रीवामादेव्याः समीहितम् ॥ ४१ ॥
इत्थं गर्भसुखेनैव देवी स्थितवती क्रमात् ।
पौषकृष्णदशम्यां सा विशाखायां शुभे क्षणे ॥ ४२ ॥
विश्वत्रयोद्द्योतकरं निशार्धे सर्पलाञ्छनम् ।
नीलाभं सुषुवे पुत्रं रत्नं वैडूर्यभूरिव ॥ ४३ ॥
( युग्मम् )
दुन्दुभिर्दिवि दध्वान प्रसन्नास्या दिशोऽभवन् ।
तदा सुखासिका जज्ञे नारकाणामपि क्षणम् ॥ ४४ ॥
सोच्छ्वासा भूः पयः स्वच्छं दक्षिणार्चिरभूच्छिखी ।
वाति स्म त्रिगुणो वातः पुष्पाढ्यास्तरवोऽभवन् ॥ ४५ ॥
तदेवं मुदिताः सर्वे क्ष्माद्या एकेन्द्रिया अपि ।
जिनपूजोपयोगित्वाद् भाविभद्राशया किल ॥ ४६ ॥
प्रभोर्हि चरणस्पर्शैः स्नात्रा-ऽऽरात्रिक-चामरैः ।
पुष्पौघैश्च प्रयुक्तैस्ते भविष्यन्त्युपयोगिनः ॥ ४७ ॥
अपि त्रिभुवनं जज्ञे प्रशान्तडमरं तदा ।
स्वामी शिवनिधिर्दर्शयतीव शिववर्णिकाम् ॥ ४८ ॥
सहसा दिक्कुमारीणां चलितान्यासनान्यथ ।
ता जैनजन्मकृत्यायोत्थापयन्तीव सत्वरम् ॥ ४९ ॥

ज्ञात्वा चाऽवधिना जैनं जन्म ता नन्नृतुर्मुदा ।
स्वस्वस्थानादथाऽऽजग्मुस्ताः सूतिभवनं क्रमात् ॥ ५० ॥
भोगंकरा भोगवती सुभोगा भोगमालिनी ।
सुवत्सा वत्समित्रा च पुष्पमालात्वनिन्दिता ॥ ५१ ॥
एता मेरुरुचकाऽधोलोकस्था दिक्कुमारिकाः ।
आगत्याऽष्टौ जिनं नत्वा जिनाम्बां चैवमूचिरे ॥ ५२ ॥
नमस्तुभ्यं जगन्मातर्जगद्दीपप्रदायिके ! ।
अष्टौ वयमधोलोकवासिन्यो दिक्कुमारिकाः ॥ ५३ ॥
जिनजन्मोत्सवं कर्तुमागताः स्मो वयं हि तत् ।
मा भैषीरित्युदित्वा व्यकुर्वन् संवर्तमारुतम् ॥ ५४ ॥
तेन शुद्धिं भुवः कृत्वा योजनं परितो गृहम् ।
जिनासन्ननिषण्णास्तास्तं गायन्त्योऽवतस्थिरे ॥ ५५ ॥
मेघंकरा मेघवती सुमेघा मेघमालिनी ।
तोयधारा विचित्रा च वारिषेणा बलाहिका ॥ ५६ ॥
इत्यूर्ध्वलोकवासिन्योऽप्येत्याऽष्टौ दिक्कुमारिकाः ।
मेघं विकृत्य सिक्त्वोर्वीं पुष्पवृष्टिं वितेनिरे ॥ ५७ ॥
जिनस्य जिनमातुश्च नतिः कृत्यनिवेदनम् ।
गुणगानं स्वदिक्स्थानं दिक्कन्यानामयं विधिः ॥ ५८ ॥
तथाऽष्टौ कन्यकाः पूर्वरुचकाद्रिस्थिता अपि ।
एत्य कृत्वा विधिं तस्थुः प्राक्पक्षे दर्पणान्विताः ॥ ५९ ॥
ताश्च नन्दो-त्तरानन्दे आनन्दा-नन्दिवर्धने ।
विजया वैजयन्ती च जयन्ती चाऽपराजिता ॥ ६० ॥
समाहारादयोऽष्टैत्य दक्षिणाद् रुचकादथ ।
भृङ्गारपाणयः कन्या दक्षिणेन जिनं स्थिताः ॥ ६१ ॥
समाहारा सुप्रदत्ता सुप्रबुद्धा यशोधरा ।
लक्ष्मीवती शेषवती चित्रगुप्ता वसुन्धरा ॥ ६२ ॥
प्रत्यग्रुचकतोऽभ्येयुः कुमार्योऽष्टाविलादयः ।

तालवृन्तकरास्तस्थुः स्वदिक्पक्षे यथाविधि ॥ ६३ ॥
इलादेवी सुरादेवी पृथिवी पद्मवत्यपि ।
एकनासा नवमिका सीता भद्रेति नामतः ॥ ६४ ॥
अथोत्तराद् रुचकतोऽप्येत्याऽष्टौ कन्यका जिनम् ।
जिनाम्बां च प्रणम्याऽस्थुरुत्तरेण सचामराः ॥ ६५ ॥
अलंबुसा मिश्रकेशी पुण्डरीका च वारुणी ।
हासा सर्वप्रभा चैव श्रीर्ह्रीरित्याह्वयाश्च ताः ॥ ६६ ॥
एयुर्विदिग्रुचकाद्रेश्चतस्रोऽमूः सदीपिकाः ।
चित्रा चित्रकनका शतेरा सौदामिनी तथा ॥ ६७ ॥
रुचकद्वीपतोऽप्येयुश्चतस्रो दिक्कुमारिकाः ।
रूपा रूपासिका चाऽपि सुरूपा रूपकावती ॥ ६८ ॥
चतुरङ्गुलवर्जं ता नाभिनालं जिनेशितुः ।
छित्त्वा खनित्वा विवरं तत्र तच्च निचिक्षिपुः ॥६९॥
विवरं पूरयित्वाऽऽशु रत्नमाणिक्यमौक्तिकैः ।
दूर्वायाः पीठिकाबन्ध तस्योपरि च चक्रिरे ॥ ७० ॥
अथ सूतिगृहात् पूर्वदक्षिणोत्तरदिक्षु ताः ।
त्रीन् मध्यस्थचतुःशालान् विचक्रुः कदलीगृहान् ॥ ७१ ॥
अथो जिनं जिनाम्बां च ता नीत्वा दक्षिणौकसि ।
चतुःशालस्थिते रत्नमये सिंहासने न्यधुः ॥ ७२ ॥
तैलैरभ्यज्य तौ दिव्यैरुद्वर्त्योद्वर्तनैश्च ताः ।
नीत्वा पूर्वचतुःशाले मणिपीठे न्यवेशयन् ॥ ७३ ॥
जलैश्च स्नपयित्वाऽच्छैर्दिव्यनेपथ्यमण्डनौ ।
कृत्वा नीत्वोत्तरे चतुःशाले रत्नासने न्यधुः ॥ ७४ ॥
तयोः क्षुद्रहिमाद्रेस्ता द्रागानाय्याऽभियोगिकैः ।
गोशीर्षचन्दनं दग्ध्वा रक्षापोट्टलिकां न्यधुः ॥ ७५ ॥
पर्वतायुर्भवेत्युच्चैरुक्त्वा कर्णान्तिके विभोः ।
ताः समास्फालयामासुर्मिथः पाषाणगोलकौ ॥ ७६ ॥

सूतिकाभवने भूयो वामादेवी विभुं च ताः ।
शय्यागतौ विधायाऽस्थुर्गायन्त्यो मङ्गलान्यथ ॥७७॥
तदाऽभून्नित्यघण्टानां स्वर्गेषु युगपद् ध्वनिः ।
सुरेन्द्राणां च नृत्यन्तीवासनानि चकम्पिरे ॥७८॥
ज्ञात्वाऽथाऽवधिना शक्रो जिनजन्मोज्झितासनः ।
कियच्च जिनमभ्येत्य प्रणम्य विधिनाऽस्तवीत् ॥७९॥
नैगमेषिणमादिश्य सुघोषाघण्टया ततः ।
ज्ञापयामास शक्रोऽर्हज्जन्मकृत्यं च नाकिनः ॥८०॥
स सद्यो मिलिताऽशेषसौधर्मसुरशोभितः ।
क्षणात् तत्राऽऽरदाऽऽरुह्य विमानं पालकाभिधम् ॥८१॥
मुदा प्रदक्षिणीकृत्य विभोर्जन्मगृहं ततः ।
मुक्त्वा विमानमैशान्यां वामा नत्वेति चाऽस्तवीत् ॥८२॥
कुक्षौ रत्नधरे ! देवि ! जगन्मातः ! सुलक्षणे ! ।
नमस्तुभ्यं त्वमेवाऽसि स्त्रीणां गुरुमहत्त्वभृत् ॥८३॥
यया त्रिभुवनस्याऽपि धर्ममार्गप्रकाशकः ।
दिव्यरत्नप्रदीपोऽयं सुषुवे भगवान् जिनः ॥८४॥
जिनजन्मोत्सवं कर्तुमागां शक्रोऽस्मि तन्न भीः ।
कार्येत्युक्त्वा हरिर्देव्या अवस्वापनिकां ददौ ॥८५॥
प्रतिरूपं प्रभोर्न्यस्य तत्राऽसौ पञ्चरूपभृत् ।
भूत्वैकेनाऽञ्जलौ रूपेणाऽनुज्ञाप्याऽऽददे जिनम् ॥८६॥
उभाभ्यां चामरे छत्रं दधेऽन्येन प्रभूपरि ।
एकेनोल्लालयन् वज्रं वल्गन् शक्रः पुरोऽभवत् ॥८७॥
जयध्वनिमुखैर्देवैः सर्वतोऽपि वृतो हरिः ।
उत्पत्य गगनेनाऽगात् क्षणान्मेरुमहीधरम् ॥८८॥
तत्राऽन्तःपाण्डुकवनं चूलिकादक्षिणेन तु ।
अतिपाण्डुकम्बलायां शिलायां शीतगुत्विषि ॥ ८९ ॥
सिंहासने जिनस्नात्रयोग्येऽङ्कस्थापितप्रभुः ।

न्यषीदद् वासवः पूर्वाऽभिमुखो हर्षनिर्भरः ॥९०॥
प्रयुक्ताऽवधयोऽन्येऽपि त्रिषष्टिस्तत्र वासवाः ।
महर्द्ध्या द्रुतमाजग्मुश्चतुःषष्टिरभूदिति ॥ ९१ ॥
दश वैमानिका इन्द्रा विंशतिर्भवनाधिपाः ।
ज्योतिष्कौ द्वौ च सोमार्कौ द्वात्रिंशद् व्यन्तरेश्वराः ॥ ९२ ॥
अथाऽभियोगिका इन्द्रादेशात् सिन्धुहृदादितः ।
आनीय जलपुष्पाद्यं सर्वं वेगाददौकयन् ॥ ९३ ॥
हैमै रौप्यैरथो रत्नमयैः काञ्चन-राजतैः ।
स्वर्ण-रत्नमयैः स्वर्ण-रौप्य-रत्नमयैरपि ॥ ९४ ॥
रौप्य-रत्नमयैर्भौमैरष्टभेदैरिति क्रमात् ।
कुम्भैः प्रत्येकमष्टाग्रसहस्रेणाऽम्बुपूरितैः ॥ ९५ ॥
अच्युतादिसुराधीशा विधिनाऽस्नपयन् जिनम् ।
पारिजातकपुष्पाद्यैरानर्चुस्तुष्टुवुश्च ते ॥ ९६ ॥
(विशेषकम्)
तदा केऽपि सुरा हृष्टा ननृतुस्तालसुन्दरम् ।
नानारूपैरभिनयं केऽप्याक्षेपकरं व्यधुः ॥ ९७ ॥
समश्रुतिगतं रागस्वरग्राममनोरमम् ।
शुद्धसूरोद्भवं गीतं गायन्ति स्माऽपरे सुराः ॥ ९८ ॥
ततेन विततेनाऽपि घनेन शुषिरेण च ।
चतुर्विधेन वाद्येन कौतुकं केऽप्यपूरयन् ॥ ९९ ॥
ववल्गुरुल्ललन्ति स्म केऽपि केऽपि चुक्रुर्दिरे ।
केचिद् घनवृषाऽश्वेभसिंहनादान् वितेनिरे ॥ १०० ॥
अथ न्यस्य प्रभुं शक्र ईशानाऽङ्के चतुर्वृषीम् ।
विकुर्व्य तद्विषाणोत्थैः स्नपयामास वारिभिः ॥ १०१ ॥
उन्मृज्य गन्धकाषाय्या दिव्ययाऽङ्गं हरिर्विभोः ।
विलिप्य चन्दनैर्दिव्यैः पुष्पाद्यैस्तमपूजयत् ॥ १०२ ॥
दर्पणो वर्धमानश्च कलशो मीनयोर्युगम् ।

श्रीवत्सः स्वस्तिको नन्द्यावर्त्त-भद्रासने इति ॥ १०३ ॥
शक्रः स्वामिपुरो रत्नपट्टे रजततण्डुलैः ।
आलिख्य मङ्गलान्यष्टाविति स्तोतुं प्रचक्रमे ॥ १०४ ॥
जय श्रेयोनिधे ! स्वामिन्नश्वसेननृपाङ्गज ! ।
नम्रामरशिरोभृङ्गसङ्गचङ्गपदाम्बुज ! ॥ १०५ ॥
तत्त्वप्रकाशिनी चित्तलोचने भुवनश्रियः ।
सारः कनीनिकाकान्त ! श्रीवामेय ! त्वमेव हि ॥ १०६ ॥
बहुभ्रान्तिभवग्लानिध्यामलाया मनोदृशः ।
तमालदलनीलाङ्ग ! त्वयि दृष्टे प्रतिष्ठता ॥ १०७ ॥
पाताल-विधु-वार्धीनां सुधासारं प्रगृह्य ते ।
वपुश्चक्रे विधिर्नूनं त्रिलोक्या तेन सेव्यते ॥ १०८ ॥
घनच्छवितनूकान्तिनीरवर्षेण तन्वता ।
शस्यानि त्रिजगद् देव ! त्वयाऽभूद् देवमातृकम् ॥ १०९ ॥
करकल्पद्रुमं पादनखचिन्तामणीवरम् ।
देव ! दिव्यगवीधाम ! वपुर्देवपुरं तव ॥ ११० ॥
पातालं मज्जनाऽम्भोभिर्द्यौः पूजाऽगुरुधूम्यया ।
शरीरकान्तिभिः पृथ्वीं पुनासीति जगत्त्रयम् ॥ १११ ॥
तत्र स्तवन-निध्यान-ध्यानैरजनि निर्मलम् ।
वचश्चक्षुर्मनो मेऽद्य भावान्नाथ! नमोऽस्तु ते ॥ ११२ ॥
स्तुत्वेत्यर्हन्तमादाय नीत्वा वामाऽन्तिकेऽमुचत् ।
जह्रेऽवस्वापिनीं तस्यास्तच्चाऽर्हत्प्रतिरूपकम् ॥ ११३ ।
प्रभोर्दृष्टिविनोदायोपरि श्रीदामगण्डकम् ।
इन्द्रोऽमुञ्चत्तथोच्छीर्षे दिव्यरूपे स कुण्डले ॥ ११४ ॥
इन्द्रादेशाद्विभोर्भोगयोग्यवस्तून्यनेकशः ।
सौधे श्रीदो न्यधाच्छान्तिरुद्घुष्टा चाऽऽभियोगिकैः ॥११५॥
संक्रमय्याऽमृतं स्तन्याऽर्थायाऽङ्गुष्ठे हरिः प्रभोः ।

१ देवदूष्ये इत्यपि ।

धात्रीरप्सरसः पञ्चाऽऽदिश्य नन्दीश्वरं ययौ ॥ ११६ ॥
मेरोस्तत्रैयुरन्ये तु वासवाः शाश्वताऽर्हताम् ।
ते सर्वेऽष्टाहिकां कृत्वा हृष्टाः स्वस्वाऽऽस्पदं ययुः ॥ ११७ ॥
वामाऽपि स्वामिनी बुद्धा विबुद्धवदनाऽम्बुजा ।
दिव्याङ्गरागनेपथ्यं वीक्ष्य पुत्रममोदत ॥ ११८ ॥
देव्याः परिच्छदः पुत्रजन्मोदन्तान्नृपं तदा ।
वर्धयित्वाऽथ दिक्कन्यागमाऽऽद्यं सर्वमाख्यत ॥ ११९ ॥
नृपस्तुष्टो भृशं दत्त्वा स तस्मै पारितोषिकम् ।
मोक्षहेतुसुतप्रीत्या कारामोक्षमकारयत् ॥ १२० ॥
उच्छ्रिता युगमन्थाद्याः सौधद्वारे सहस्रशः ।
उच्चैर्घोषोऽभवत् सूतमातृकायाः समन्ततः ॥ १२१ ॥
नृत्यद्दिव्याङ्गनागीतैस्तूर्यनादैर्जयाऽऽरवैः ।
उलूलुशङ्खध्वनिभिः सुशब्दैक्यं तदाऽभवत् ॥१२२
गच्छन्त्या दानसन्मानैरायान्त्या वर्धनैः श्रियाः ।
तद्व्यूढमपि संकीर्णं तदाऽभूद् राजमन्दिरम् ॥ १२३ ॥
कुलाचारे कृते कृत्स्ने निवृत्ते सूतके नृपः ।
आरेभे विश्वसत्कारपूर्वं नामक्षणं प्रभोः ॥ १२४ ॥
तस्मिन् गर्भस्थिते वामा निशि ध्वान्तेऽपि पार्श्वतः ।
सर्पं सर्पन्तमद्राक्षीत् पत्युः सद्यः शशंस च ॥ १२५ ॥
स्मृत्वा तदेष गर्भस्य प्रभाव इति निर्णयन् ।
पार्श्व इत्यभिधां सूनोरश्वसेननृपोऽकरोत् ॥ १२६ ॥
रत्नाद्रिवत् सुरत्नेन बालार्केणोदयाद्रिवत् ।
मेरुवत् कल्पवृक्षेण रेजेऽङ्कस्थेन तेन राट् ॥ १२७ ॥
लाल्यमानः स धात्रीभिरिन्द्रादिष्टाभिरादरात् ।
क्षुधोदये निजाऽङ्गुष्ठाद् रसं शक्राऽऽहितं पपौ ॥ १२८ ॥
स्वामिनं रमयामासुः प्रीत्या सुरकुमारकाः ।
हंस-केकि-शुका भूत्वा कलभा वृषभास्तथा ॥ १२९ ॥

समं विश्वत्रयप्रीत्या वर्धमानः शनैः प्रभुः ।
सुसंहननसंस्थानोऽपि बाल्यमुदलङ्घयत् ॥ १३० ॥
गम्भीर उन्नतः सूक्ष्मः सरलः पृथुलोऽसितः ।
अदीर्घस्त्रिषु त्रिष्वेवं द्विशुभ्रो नवपाटलः ॥ १३१ ॥
नाभौ सत्त्वे स्वरेऽगाधस्तुङ्गोंऽश-पद-मूर्द्धसु ।
सूक्ष्मः केशे नखे दन्ते सरलोऽह्रौ भुजेऽङ्गुलौ ॥ १३२ ॥
पृथुर्नाभिमुखोरस्सु तारा-वृन्त-कचेऽसितः ।
कण्ठे पृष्ठे च पुंश्चिह्ने तुच्छः शुभ्रो रदाऽक्षिषु ॥ १३३ ॥
पाणौ पादे गुदे तालु-जिह्वयोरधरोष्ठयोः ।
नखेषु दन्त-मांसे च ताम्रो नवसु शस्यते ॥ १३४ ॥
द्वात्रिंशल्लक्षणान्येवं दृश्यन्तेऽस्म तनाविति ।
मत्वैवं सुभगं वव्रुस्तं स्वयं सकलाः कलाः ॥ १३५ ॥
स्वाम्यथोऽनुपमाष्टाग्रसहस्रनरलक्षणः ।
नवहस्ततनुर्भूत्वाऽऽरुरोह नवयौवनम् ॥ १३६ ॥
सद्गन्धममलस्वेदमदमांसाऽसृगुज्ज्वलम् ।
अदृश्याहारनीहारविकृतत्वं वपुः प्रभोः ॥ १३७ ॥
सहजाऽतिशयैरेवं जन्मैवाऽऽरभ्य सुन्दरम् ।
विशेषतरुणिम्ना तु शरदेवाऽम्बु मानसम् ॥ १३८ ॥
( युग्मम् )
पादयोः कमलैः कण्ठे शङ्खकैरिन्द्रगोपकैः ।
नखेषु, भ्रमरैः केशेष्वथ भेकैः पिकैर्गजैः ॥ १३९ ॥
तुन्दे स्वरे गते श्रीः स्वा क्रमादेकेन्द्रियादिभिः ।
विभोर्दत्तेव सर्वैर्यत् स्वाम्यसौ सर्वजन्तुषु ॥ १४० ॥
( युग्मम् )
विभुः कूर्मोपमौ पादौ मध्यं सिंहसहोदरम् ।
मुखं चन्द्रनिभं बिभ्रत् तदा त्रिभुवनायितः ॥ १४१ ॥

तस्याऽतिशायिरूपस्य मौलावुष्णीषकैतवात् ।
स्वकीयसुकृतस्येवाऽऽरोपयत् कलसं विधिः ॥ १४२ ॥
लावण्यजलसंपूर्णे तस्याङ्गसरसि स्थिते ।
सन्नेत्रपत्रे वक्त्राब्जे स्त्रीदृग्भृङ्गा न केऽपतन् ? ॥ १४३ ॥
नव्यो रविरिव श्रीमानारोहन् यौवनं नभः ।
कतमानां पद्मिनीनां विततान मुदं न सः ? ॥१४४॥
अन्यदा नृपमास्थानास्थितं वेत्रिनिवेदितः ।
कश्चिदेत्य नरो नत्वा निविश्यैवं व्यजिज्ञपत् ॥१४५॥
देव ! जित्वा श्रियाऽनेकपुराणीवाऽर्जितध्वजम् ।
सत्प्रासादपताकाढ्यं पुरमस्ति कुशस्थलम् ॥ १४६ ॥
तत्राऽऽसीन्नरवर्माख्यो नृपतिः सुकृतैकधीः ।
आश्रमाणां गुरुः सत्यः सोऽभूद् धर्मप्रवर्तनात् ॥१४७॥
तेजसा भूभृतः क्रान्त्वा जनानां मस्तके स्थितः ।
स मध्याह्नाऽर्कवज्जज्ञे विश्वसाधारणः कृती ॥१४८॥
जिनधर्मरतो नित्यं साधुशुश्रूषणोद्यतः ।
नीत्या चक्रे चिरं राज्यं परिव्रज्योन्मुखः परम् ॥१४९॥
संवेगाऽतिशयादन्यदिनेऽसौ रेणुवच्छ्रियम् ।
त्यक्त्वा व्रतमुपादत्त सुसाधुगुरुसन्निधौ ॥१५०॥
इत्यर्धकथिते तेन राजा धार्मिकवत्सलः ।
शिरो धुन्वन्नुवाचैवं सदस्यानपि मोदयन् ॥१५१॥
अहो ! सत्त्वाधिकः कीदृङ् नरवर्मा यदर्च्यते ? ।
स्वीकृत्य नरकं राज्यं तत्याज तदसौ क्षणात् ॥१५२॥
भवोद्दामप्रवाहेण वाह्यन्ते सर्वजन्तवः ।
प्रति स्रोतो गमी कोऽपि कृष्णचित्रकमूलवत् ॥१५३॥
किं वा विवेकसाहाय्याद् दुष्करं किं मनस्विनाम् ? ।
साधु कृत्यं कृतं राज्ञा तदूर्ध्वं भद्र ! कथ्यताम् ? ॥१५४॥

---

कामशास्त्रोक्तस्त्रीविशेषाणाम् । २ राज्ञ. पक्षे पर्वतान् । ३ सर्वजनसमदृष्टिः ।

सोऽपि भूयः पुमानूचे राज्येऽभून्नरवर्मणः ।
सूनुः प्रसेनजिन्नाम कामधेनुसमोऽर्थिनाम् ॥१५५॥
तस्य प्रभावती नाम संप्रति प्राप्तयौवना ।
कन्याऽस्ति सुरकन्येव दिवः शापादिहागता ॥१५६॥
तद्वाक्य-मुख-रूपाऽ-क्षिजिता इव ययुर्ध्रुवम् ।
सुधा पाताल इन्दुः खे दिवि रम्भा जलेऽम्बुजम् ॥१५७॥
पाद-पाणि-मुखाऽ क्षीणि यस्याः स्मेरारऽविन्दवत् ।
वीक्ष्य लक्ष्मीस्तदीयाङ्गं पद्माकरमिवाऽऽश्रयत् ॥१५८॥
तामेवं वीक्ष्य चिन्तावाननुरूपं वरं भुवि ।
स नृपोऽन्वेषयामास किन्तु तादृङ् न कोऽप्यभूत् ॥१५९॥
सखीभिः सहिताऽन्येद्युर्गतोद्यानं प्रभावती ।
किन्नरीभिर्गीयमानं पद्यगीतमदोऽशृणोत् ॥१६०॥
जयी वाराणसीभर्तुरश्वसेनस्य नन्दनः ।
श्रीपार्श्वनाथोऽनौपम्या यद्रूपगुणसम्पदः ॥१६१॥
रामाऽपि जयिनी साऽत्र यामसौ परिणेष्यति ।
किन्त्वेतावन्ति भाग्यानि कस्याः सन्ति जगत्त्रये? ॥१६२॥
इत्थं श्रीपार्श्वनाथस्य शृण्वती गुणकीर्त्तनम् ।
तद्रागविवशा जज्ञे तन्मयीव प्रभावती ॥१६३॥
त्यक्त्वाऽथ क्रीडां व्रीडां च तद्गीतं हरिणीव सा ।
तल्लीना शृण्वती पार्श्वरक्ताऽलक्षि सखीजनैः ॥१६४॥
यथा यथाऽसौ तद्गीतामृतं कर्णपुटैः पपौ ।
तस्यास्तथा तथा तृष्णा तल्लावण्यादवर्धत ॥१६५॥
व्यक्तसात्त्विकभावाऽपि हता पुष्पमयैः शरैः ।
कामेन गतचित्तेव निश्चेष्टा साऽभवत्तदा ॥१६६॥
किन्नर्योऽथ समुत्पेतुः सा तूत्पश्या चिरं स्थिता ।
प्रभावती स्मरावेशाच्छून्यीभूतमना भृशम् ॥१६७॥
स्वं सुता राजहंसस्य कुमारः कमलाकरः ।

अथ स्थानेऽनुरागस्ते संमतोऽयं विधेरपि ॥१६८॥
किन्तु धैर्यं प्रपद्यस्वेति संबोध्य सखीजनः ।
निन्ये वेश्मनि तां पार्श्वं ध्यायन्तीं सर्वदिग्गतम् ॥१६९॥
( युग्मम् )
काऽसौ त्रिभुवनस्वामी क्व सामान्याऽस्मि मानवी ? ।
दुर्लभोऽयं पतिर्नूनमित्यार्त्या साऽऽनशेऽभितः ॥ १७० ॥
वामकामवशात्तस्या जगन्निर्वापकादपि ।
पार्श्वात्तापज्वरः सोऽभूद्यत्पुरश्चन्दनं शिखी ॥ १७१ ॥
तत्स्वरूपमथो सख्यस्तस्याः पित्रोर्व्यजिज्ञपन् ।
जातहर्षौ च तौ पुत्र्याश्वासनायेत्यवोचताम् ॥ १७२ ॥
साधु पार्श्वकुमारोऽयं जगत्त्रयशिरोमणिः ।
आत्मानुरूपः पुत्र्या मे वरो वव्रे सचेतसा ॥ १७३ ॥
मनोरथोऽपि नो मन्दभाग्यानां जायते महान् ।
पिक्या एव न वायस्या वाञ्छाऽप्याम्रद्रुमे भवेत् ॥ १७४ ॥
पार्श्वेनैव तदुद्वाहः कार्यः पुत्र्या ध्रुवं मया ।
विद्या कन्या च सत्पात्रे नियोज्या दीर्घदर्शिभिः ॥१७५॥
इत्थं पितृवचः श्रुत्वा सखीभ्यः साऽतुषत्तराम् ।
आशायष्ट्याऽनया चित्तमवाष्टभ्नाच्च किञ्चन ॥ १७६ ॥
तथापि तस्थौ सा मुक्ताहारभूषा सखीष्वपि ।
निर्ममा मौनिनी किञ्चिद् ध्यायन्ती योगिनीव हि ॥१७७॥
एवं तां विधुरां वीक्ष्य निश्चिक्येऽदः प्रसेनजित् ।
प्रेषयिष्याम्यमुं पुत्रीमधिपार्श्वं स्वयंवराम् ॥ १७८ ॥
तच्चाज्ञासीत् कलिङ्गादिदेशेन्द्रो यवनाभिधः ।
उद्धतः परिषद्येवं जगौ च भ्रकुटीमुखः ॥ १७९ ॥
मयि सत्यत्र कः पार्श्वः स यो वोढा प्रभावतीम् ।
तावत्प्रसेनजित् कोऽयं योऽन्यस्मै तां प्रदास्यति ? ॥१८०॥
किं वाऽस्त्वेष ग्रहीष्ये तां स्वेन वाऽहं यतः परम् ।

याचका एव याचन्ते वीराणां स्वं जगत्त्रयम् ॥१८१॥
स्वयमाच्छिद्य गृह्णानो मृगेन्द्रो विश्रुतो हरिः ।
अन्यदत्तं तु गौरिच्छन् वराकः पशुरुच्यते ॥ १८२ ॥
इत्युक्त्वा भूरिभिः सैन्यैरनन्यसमविक्रमः ।
कुशस्थलपुरं वेगादेत्याऽरौत्सीदनेकधा ॥ १८३ ॥
जनस्य पवनस्येव निरुद्धाऽऽगमनिर्गमम् ।
तत्पुरं कुम्भकापूर्णं योगीन्द्रपुरवद्बभौ ॥ १८४ ॥
अहं न प्रेषितो राज्ञा निशीथे निरगां पुरात् ।
पुरुषोत्तमनामाऽस्मि मन्त्रिसागरदत्तसूः ॥ १८५ ॥
इमं वृत्तान्तमाख्यातुमिहागममतः परम् ।
देवः करोतु यत् कृत्यं स्वजनेऽरिजनेऽपि वा ॥ १८६ ॥
इत्याकर्ण्य रुषा स्फूर्जन्नश्वसेननृपोऽब्रवीत् ।
कोऽयं वराको यवनः का भीर्वो मयि सत्यपि ? ॥१८७॥
एषोऽहमागतस्त्रातुं सज्जसैन्यः कुशस्थलम् ।
कार्योऽसतां सतां वाऽपि पक्षपातो मयाऽधुना ॥ १८८ ॥
इत्युक्त्वाऽवादयद्भम्भां मिलितं चाऽखिलं बलम् ।
तज्ज्ञात्वाऽगाद् द्रुतं क्रीडागृहात् पार्श्वो नृपान्तिके ॥१८९॥
जगौ च तात ! संरम्भ एष कस्योपरि क्षणात् ।
समं वाऽप्यधिकं वाऽपि न ते पश्यामि कञ्चन ॥ १९० ॥
अश्वसेननृपोऽङ्गुल्या दर्शयन् पुरुषोत्तमम् ।
तदुक्तं सर्वमाचख्यौ पुनः पार्श्वोऽभ्यधादिदम् ॥ १९१ ॥
तिष्ठेत् सुरोऽसुरो वाऽपि न तातस्य पुरो युधि ।
नृमात्रं जवनस्त्वेष सिंहस्येव मृगः कियान् ॥१९२॥
यात्रायै कोऽयमायासः पितुर्वर्मक्षमे सुते ।
पूज्यास्तिष्ठन्त्विहैवाऽहं करिष्ये तस्य शिक्षणम् ॥ १९३ ॥

---

१ कुम्भकेन प्राणायामविशेषेण आपूर्णं तत्तथोक्तम् । २ शरीरवत् ।
३ कवचक्षमे कार्यसमर्थे सतीति यावत् ।

भक्तिशक्तिक्षमं वाक्यमिति श्रुत्वाऽश्वसेनराट् ।
हृष्टः स्तुत्वा कुलं प्रैषीत् पार्श्वं तद्दोर्बलं विदन् ॥ १९४ ॥
श्रीपार्श्वोऽथ द्विपारूढः पुरुषोत्तमसंयुतः ।
प्रतस्थेऽनेकभूपालैरुत्सवेन शुभे क्षणे ॥ १९५ ॥
पुरतः स्वामिनश्चेलुर्गजाश्चलनगा इव ।
नदीरया इव हया रथाः क्रीडागृहा इव ॥ १९६ ॥
पत्तयः कपिवद्वल्गु वल्गन्ति स्म समन्ततः ।
क्रीडयैव प्रास्थितैवं प्रभुर्यवनखेलने ॥ १९७ ॥
तदा चलबलोद्धूतरजश्छन्ने नभस्यभूत् ।
बलाकाभपताकाढ्यं दुर्दिनं किन्तु तत्परे ॥ १९८ ॥
बन्दिघोषैश्च शङ्खादिशब्दैर्निस्वाननिस्वनैः ।
उत्सर्पद्भिरभूत् सार्था शब्देऽम्बरगुणप्रथा ॥ १९९ ॥
आद्य एव प्रयाणेऽथ मातलिः सरथः प्रभुम् ।
उपेत्य नत्वा प्रोवाच नाथाऽहं शक्रसारथिः ॥ २०० ॥
शक्रो जानाति ते शक्तिमतुलां किन्तु सेवकैः ।
भक्तिः कार्येति सरथं स प्रैषीन्मां त्वदन्तिके ॥ २०१ ॥
मान्या भक्तिमतो भक्तिरिति कृत्वा रथं प्रभुः ।
आरुरोह हरिर्मेघमिव दिव्यास्त्रभासुरम् ॥ २०२ ॥
खेचरैः स्तूयमानोऽगाद्रथस्थः खेऽर्कवद्विभुः ।
अन्वियाय च भूमिष्ठमुत्पश्यं तद्बलं पुनः ॥ २०३ ॥
कियद्भिः स दिनैः प्राप कुशस्थलमथाऽवसत् ।
उद्यानान्तः सुरकृते प्रासादे सप्तभूमिके ॥ २०४ ॥
क्षत्रियाणां स्थितिं पातुं दयया च प्रभुः पुरैः ।
प्रैषीद्दूतं महादक्षं सुशिक्ष्य यवनाऽन्तिके ॥ २०५ ॥
स गत्वा यवनं स्माऽऽह स्वामिभक्त्या ससौष्ठवम् ।

---

१ पार्श्वभुजबलम् । २ पार्श्वशत्रौ ।
३ आकाशस्य गुणः शब्द इति प्रसिद्धिः ४ प्रथमम् ।

श्रीमत्पार्श्वकुमारस्त्वां मन्मुखेनादिशत्यदः ॥ २०६ ॥
अयं प्रसेनजिद्राजा तातं शरणमाश्रितः ।
ततो रोधाद्विरोधाच्च मोच्योऽयं सर्वथा त्वया ॥ २०७ ॥
स्वयं प्रचलितं तातं निवार्याहमिहाऽऽगमम् ।
द्रुतं गच्छ निजं स्थानं नाऽपराधस्तवेयता ॥ २०८ ॥
ललाटे च भ्रुवं कृत्वा यवनोऽवददुद्भटम् ।
अरे ! दूत ! कथं नो मां वेत्सि यत् प्रलपस्यदः ? ॥२०९॥
कोऽयं पार्श्वोऽश्वसेनो वा योऽभिषेणयतीति माम् ।
अहो ! नात्मज्ञता किं वा क ज्ञानं बालवृद्धयोः ? ॥२१०॥
निष्ठुरं भाषमाणोऽपि दूतत्वान्नाऽसि धर्षितः ।
गत्वा स्वस्वामिनः सर्वं वदेति स यथा द्रुतम् ॥ २११ ॥
दूतोऽप्याह स्म भोः ! मुह्यन्ननात्मज्ञस्त्वमेव हि ।
मनुष्यमात्रस्त्वं योऽवजानीषे जगतां पतिम् ॥ २१२ ॥
प्रभुस्त्वां बोधयत्येवं कृपया नह्यशक्तितः ।
बुध्यस्वाऽद्याऽपि मा पार्श्वतेजोऽग्नौ शलभो भव ॥ २१३ ॥
ब्रुवन्तमिति तं दूतं यवनस्य भटा रुषा ।
उत्थायोदायुधा एवं जजल्पुः प्रजिहीर्षवः ॥ २१४ ॥
अरे ! स्वस्वामिना सार्द्धं वैरं किमपि तेऽस्ति यत् ? ।
तद्द्रोहाय वदस्येवमित्युक्त्वा हन्तुमुद्यताः ॥ २१५ ॥
वृद्धाऽमात्योऽथ तानेवं साक्षेपमिदमूचिवान् ।
भो मूर्खाः ! कोऽयमारेभे राज्यस्याकस्मिकः क्षयः ? ॥२१६॥
नाऽयं स्वस्वामिनो वैरी यूयमेव हि वैरिणः ।
क्षिपथाऽनर्थकान्तारे ये नाथं दुष्टवाहवत् ॥ २१७ ॥
सेन्द्रा देवा नता सेवां यस्य कुर्वन्ति तस्य भोः ! ।
दूतं श्रीपार्श्वनाथस्य घ्नतां वो हन्त ! का गतिः ? ॥२१८॥
इति श्रुत्वा भयभ्रान्ताः सर्वे शान्तिं ययुर्भटाः ।
तं च दूतं करे कृत्वा मन्त्री साम्नेत्यवोचत ॥ २१९ ॥

अज्ञानादेवमुक्तं यच्छस्त्रमात्रोपजीविभिः ।
सोढव्यं तत् त्वया विद्वन् ! सेवकोऽसि क्षमानिधे: ॥२२०॥
श्रीपार्श्व नन्तुमेष्यामस्तवाऽनुपदमेव हि ।
इति संबोध्य सत्कृत्य तं दूतं विससर्ज सः ॥ २२१ ॥
स्वमीशं चाऽवदन्नाथ ! त्वयाऽऽसीत् किमिदं कृतम् ? ।
अधुनाऽप्याश्रय क्षिप्रं श्रीपार्श्वं विश्ववत्सलम् ॥ २२२ ॥
यस्य जन्ममहं चक्रुः सेन्द्राः किल सुराऽसुराः ।
दधन्ते पतिभावश्च कस्तेन सह ते कलिः ? ॥ २२३ ॥
गर्जन्तं मेघमुद्वीक्ष्य प्रोच्छलन् शरभो यथा ।
विनश्यति तथा मा भूस्त्वं पार्श्वे दर्पमुद्वहन् ॥ २२४ ॥
सूर्य-खद्योतयोः सिंह-शशयोस्ताक्ष्र्यकाकयोः ।
हस्तिकुन्थ्वोरिवाऽत्यन्तं भेदः पार्श्वभवादृशोः ॥ २२५ ॥
किञ्चेदं मे चरैः शिष्टं पार्श्वस्यारोहणाय यत् ।
इन्द्रः प्रैषीद्रथं सास्त्रं समातलिमभूस्पृशम् ॥ २२६ ॥
कण्ठे तदधुना न्यस्य कुठारं पार्श्वमाश्रय ।
आज्ञां मन्यस्व येन स्या अभीरिह परत्र च ॥ २२७ ॥
विमृश्य यवनः प्रोचे साध्वहं बोधितस्त्वया ।
अनर्थाज्जडधीरस्माद्रक्षितोऽन्ध इवाऽवटात् ॥ २२८ ॥
इत्युक्त्वा सर्वसामन्तमण्डलेश्वरसंयुतः ।
कण्ठे परश्वधं बध्वा यवनः पार्श्वमभ्यगात् ॥ २२९ ॥
निवासोद्यानमासाद्य प्रभोः सैन्यं समुद्रवत् ।
निरीक्ष्य मृगवत् त्रस्यन् प्रासादद्वारि सोऽगमत् ॥ २३०॥
वेत्रिणा विज्ञपय्याथ सभायां स प्रवेशितः ।
प्रभुणा मोचितस्कन्धपरशुस्तं दूरतोऽनमत् ॥ २३१ ॥
ऊर्ध्वस्थः प्राञ्जलिश्चैवमुवाच जगतां पतिम् ।

---

१ कथितम् ।  २ क्रियापदमेतत् ।  ३ कूपाद्गर्ताद्वा ।

यस्याऽऽज्ञाकारिणो देवा नृकीटः कोऽस्मि तस्य ते ? ॥२३२
प्रहित्य कृपया दूतः शिक्षितोऽहं त्वया प्रभो ! ।
किमुत्फालः कदापि स्यान् मृगेन्द्रो मृगशावके ? ॥२३३॥
गुणायाऽविनयोऽप्यासीन्मम त्वद्दर्शनाद्विभो ! ।
मया तु प्रसभं तस्य मूलोच्छेदः कृताऽधुना ॥ २३४ ॥
कृतघ्नत्वादिति व्यक्तमालिन्योऽप्यभवं शुचिः ।
प्रभोऽद्य त्वत्पदोद्द्योतसत्तीर्थजलमज्जनात् ॥ २३५ ॥
सर्वदैव प्रसन्नोऽसि स्वयं श्रीग्रहणक्षमः ।
इन्द्रैः संसेव्यमानोऽसि स्वयमेवाऽभयप्रदः ॥ २३६ ॥
तदेवं सति किं वच्मि तथाऽप्यर्थ्योऽनुगैः प्रभुः ? ।
प्रसीदाऽऽदत्स्व मे लक्ष्मीं सेवकस्तेऽस्मि रक्ष माम् ॥ २३७॥
श्रीपार्श्वोऽपि जगौ भद्र ! भद्रं तेऽस्तु मतो भवान् ।
स्वां श्रियं भुङ्क्ष्व मा भैषीर्नेदृक् कार्यं पुनस्त्वया ॥२३८॥
तथेति प्रतिपेदानः सत्कृतः प्रभुणाऽपि सः ।
पुरमुद्वेष्टयामास यवनो द्राक् कुशस्थलम् ॥ २४९ ॥
ज्ञात्वा प्रसेनजित् सर्वं तन्मन्त्रिपुरुषोत्तमात् ।
मुदा परिग्रहोन्मुक्तचन्द्राभं पुरमप्यभूत् ॥ २४० ॥
अथ प्रसेनजित् तूर्णमुपादाय प्रभावतीम् ।
गत्वा नत्वा च वामेयं हृष्टः प्रोचे कृताञ्जलिः ॥ २४१ ॥
दृष्टहृष्टाऽद्य मे दृष्टिरभून्नाथ ! त्वदीक्षणात् ।
त्वदागमनहेतुत्वात् सज्जनो यवनोऽप्यभूत् ॥ २४२ ॥
भानुनेव त्वया यद्वत् सप्रकाशः कृतो जनः ।
तथोद्वाहादिमां कन्यां सश्रीकां कुरु पद्मिनीम् ॥ २४३ ॥
प्रभावती तदा दध्यौ किन्नरीभ्यः श्रुतः पुरा ।
यादृशस्तादृगेवाऽयं संवदन्त्यक्षराण्यहो ! ॥ २४४ ॥
स्वभाग्याऽप्रत्ययाच्चित्तं शङ्कते तु ममैष यत् ।
त्रिलोकीदुर्लभस्तातोपरोधं मन्यते न वा ॥ २४५ ॥

अथ पार्श्वोऽवदद् राजंस्तताज्ञा मे तवाऽवने[1] ।
न कन्योद्वहने तस्मान्मा कार्षीराग्रहं वृथा ॥ २४६ ॥
तच्च प्रभावती श्रुत्वा दध्यौ दीना विषादतः ।
अधुनाऽहं भविष्यामि मन्दभाग्या हहा ! कथम् ? ॥२४७॥
सर्वत्र सदयोऽप्येष कुतोऽभून्मयि निर्घृणः ? ।
मत्कृते प्रार्थना व्यर्था मत्तातस्याऽपि हाऽभवत् ॥२४८॥
दध्यौ प्रसेनजिच्चैवं स्वयं सर्वत्र निस्पृहः ।
अश्वसेनोपरोधात् तु कर्ताऽसौ मन्मनोरथम् ॥ २४९ ॥
सुतामप्येवमाश्वास्य स जगाद विभुं विभो ! ।
सहैष्यामि त्वया काशिं द्रष्टव्यो ह्यश्वसेनराट् ॥ २५० ॥
एवमस्त्विति भाषित्वा स प्रसेनजिता सह ।
सौहार्दं कारयित्वा च व्यसृजद् यवनं विभुः ॥ २५१ ॥
स्वयं च कृतकार्यत्वात् स कुशस्थलभूभुजा ।
सकन्येनाऽन्वीयमानो ययौ वाराणसीं पुरीम् ॥ २५२ ॥
काशीन्द्रस्तस्य पार्श्वस्य महर्द्ध्या नृसुराऽसुरैः ।
स्तूयमानस्य संतुष्टः प्रवेशोत्सवमातनोत् ॥ २५३ ॥

मोहध्वान्तहृतिप्रदीपकलिकाऽऽविर्भावतुल्याः सुधा-
कुल्या धर्मतरोः शिवोच्चभवने निःश्रेणिदण्डोपमाः ।
श्रेयःकल्पलताङ्कुरा भवमहाम्भोराशिसेतुश्रियः
श्रीपार्श्वस्य पदद्वयीनखमणिश्रेणिप्रभाः पान्तु वः ॥२५४॥

इति श्रीकालिकाचार्यसन्तानीय श्रीभावदेवसूरिविरचिते श्रीपार्श्वनाथ-
चरिते महाकाव्येऽष्टसर्गे भावाङ्के श्रीपार्श्वनाथच्यवन-जन्म-
जन्माभिषेक कौमारविजययात्रादिवर्णनो
नाम पञ्चम सर्ग ॥ ५ ॥

---

१ रक्षणे ।

अर्हम् ।

# अथ षष्ठः सर्गः ।

---

अथाऽश्वसेनभूपालस्तेजोविजयशालिनम् ।
पार्श्वे पार्श्वागतं दृष्ट्वा हर्षाङ्कच्छत्रतामगात् ॥ १ ॥
स्वसौधं च गते पार्श्वे प्रभावत्या सहागतम् ।
पुरो नमन्तमुत्थाप्य प्रसेनजितमब्रवीत् ॥ २ ॥
कच्चित् कुशस्थलाधीश ! सर्वत्र कुशलं तव ।
हेतोश्चात्रागमः कस्मात् सोऽप्येवमवदत् तदा ? ॥ ३ ॥
कुशलं मे सदा यस्य त्राताऽसि गुरुविक्रमः ।
हेतुश्चागमने तावद्दर्शनेच्छा तवाऽनघ ! ॥ ४ ॥
अन्यच्च मम पुत्रीयं भृशं पार्श्वानुरागिणी ।
प्रसद्य तद् गृहाणेमां कुमारार्थे प्रभावतीम् ॥ ५ ॥
अश्वसेनोऽवदद् भद्र ! साधूचेऽस्माकमप्यसौ ।
मनोरथः सदैवाऽस्ति कुमारोद्वाहगोचरः ॥ ६ ॥
विरक्तः किन्तु संसारादपि राज्यश्रियं चिरात् ।
मुमुक्षुरेषोऽत्रार्थे तन्न जाने किं करिष्यति ? ॥ ७ ॥
परं त्वदुपरोधेनाऽधुना पार्श्वं बलादपि ।
उद्वाहं कारयिष्यामि तन्मा त्वमधृतिं कृथाः ॥ ८ ॥
इत्युक्त्वा सह तेनैव ययौ पार्श्वान्तिकं नृपः ।
इमां प्रसेनजित्पुत्रीमुद्वहेति जगाद च ॥ ९ ॥
श्रीपार्श्वोऽप्यवदत् तातो मयीदं वक्ति वत्सलात् ।
वस्तुनः किन्तु नित्यस्य ममेच्छा क्षणिकस्य न ॥ १०
परिग्रहेणान्येनाऽपि भवाब्धिः खलु दुस्तरः ।
परिग्रहेण तु स्त्रीणामियं वार्ताऽपि दूरतः ॥ ११ ॥
उन्मूलयितुमिच्छामि भववृक्षस्य तस्य तत् ।

रोपयामि कथं मूलं स्त्रीपरिग्रहलक्षणम् ? ॥ १२ ॥
घनवद् भारितो जीवो नीचैर्याति मलीमसः।
यात्यूर्ध्वं प्रोज्ज्वलः सोऽपि मुक्ततोयपरिग्रहः ॥ १३ ॥
अश्वसेननृपोऽप्यूचे वत्सेदृग्मनसा त्वया ।
शीर्ण एव भवः किन्तु पूरयाऽस्मन्मनोरथम् ॥ १४ ॥
भूत्वा कलत्रिणः प्राक् किं जिनाः सिद्धा न तद्भवे ? ।
उदूढस्तत् त्वमप्येवं समये स्वार्थमाचरेः ॥ १५ ॥
मत्वा तातमनुल्लङ्घ्यं भोगकर्मात्मनश्च तत् ।
वचो मेने विभुर्येन प्रभवो न जडग्रहाः ॥ १६ ॥
द्वाभ्यामप्यथ भूपाभ्यां चक्रे वर्धापनं महत् ।
पूर्वापरपयोदाभ्यामिवागार्जि जगन्मुदे ॥ १७ ॥
दानं च घोषणापूर्वं दापितं सर्वतोमुखम् ।
निर्णीतं गणकैर्लग्नं सर्वग्रहमनोहरम् ॥ १८ ॥
लसच्चन्द्रोदयं मुक्तातारं स्तम्भोर्ध्वदिग्गजम् ।
स्वर्णरौप्यप्रभाविद्युद् धूपधूम्याऽभ्रडम्बरम् ॥ १९ ॥
व्योमेव विपुलं हर्षान्निजावासभुवोऽङ्गणे ।
विवाहमण्डपं सद्यः प्रसेनजिदकारयत् ॥ २० ॥

( युग्मम् )

विवाहदिवसे प्राप्ते सुमुहूर्ते प्रभावती ।
रङ्गावलीचतुष्कान्तरासन्द्यां दिव्यवासासि ॥ २१ ॥
न्यवेशि पूर्वाभिमुखी मणिपट्टाहितक्रमा ।
कारितं नखकर्माऽस्याः प्रम्रक्षणपुरस्सरम् ॥ २२ ॥

( युग्मम् )

रक्तांशुकपरीधाना विकस्वरमुखाम्बुजा ।
प्राची दिगिव साऽराजदासन्नार्कसमागमा ॥ २३ ॥
चन्दनाक्षतदूर्वाद्यहस्ताभिर्मङ्गलारवैः ।

---

१ भारवान् । २ विवाहित. । ३ ज्योतिर्विद्भि । ४ आसन्दी आसनम् ।

विदधे तत्कुलस्त्रीभिर्वर्णकोद्वर्णकक्रमः ॥ २४ ॥
स्नपयित्वा स्वर्णकुम्भैः फलपुष्पपयोभृतैः ।
गुरुदत्ताऽक्षतां मूर्धन्यथ तास्तामम‌ण्डयन् ॥ २५ ॥
तस्या देहा-क्षि-पादेषु कुङ्कुमा-ऽञ्जन-यावकाः ।
कस्तूरिका कपोले च प्रत्युतापुः परां श्रियम् ॥ २६ ॥
नूपुरे पादयोर्मध्ये मेखलाङ्गुलिषूर्मिकाः ।
सरिका बाहुयुग्मे च तारहारस्तु वक्षसि ॥ २७ ॥
मुक्तानां कण्ठिकाः कण्ठे कर्णयो रत्नचक्रिके ।
भाले रत्नमयी चन्द्रलेखा मूर्ध्नि शिरोमणिः ॥ २८ ॥
सुस्थानलाभसंतोषादिवाऽस्या दिव्यवाससः ।
लग्नानीत्युल्लसन्ति स्म भूषणानि तनौ भृशम् ॥ २९ ॥
( विशेषकम् )
इत्थं श्रीपार्श्वनाथोऽपि दक्षस्त्रीभिः प्रसाधितः ।
राज्ञो मौहूर्तिकैर्लग्नप्रत्यासत्तिर्निवेदिता ॥ ३० ॥
ततो राजसमादिष्टः परिवारभृतोऽभितः ।
धवलद्विरदारूढः कुमारः कृतमङ्गलः ॥ ३१ ॥
सचामरगजारूढवाररामोपशोभितः ।
वसन्तश्रीशरल्लक्ष्मीयुतः काम इवाङ्गवान् ॥ ३२ ॥
विचित्रवाहनारूढैर्वेष्टितोऽनेकपार्थिवैः ।
तूर्यनादे खमुत्सर्पत्यारुयातुं त्रिदशानिव ॥ ३३ ॥
वीक्ष्यमाणः पुरस्त्रीभिः साभिलाषं सकौतुकम् ।
सच्छायो लीलया गच्छन् प्रापदुद्वाहमण्डपम् ॥ ३४ ॥
( चतुर्भिः कलापकम् )
तत्र चाऽऽचमनं दत्त्वाऽवतीर्णस्य करीश्वरात् ।
दत्तः श्वश्रूजनेनाऽर्घो दधि दूर्वा-क्षतादिभिः ॥ ३५ ॥
मुशलेनाऽलिके स्पृष्टः कृतमन्थयुगक्रमः ।

---

१ ऽस्या वरस्त्रीभि-, एवमपि । २ कटौ । ३ मुद्रिका : ४ भूषित ।

पदाक्रान्तपुटश्चैष निन्ये मातृगृहे वरः ॥ ३६ ॥
यत्रास्ते सितदुकूलप्रच्छादितमुखी वधूः ।
छन्नेन्दुः शरदभ्रेण पौर्णमासीव शर्वरी ॥ ३७ ॥
नीरङ्गीस्फेटनायाऽस्याः सखीभिः प्रार्थितो वरः ।
ददावाऽऽचारिकं स्मित्वा ताभिरुद्घाटितं मुखम् ॥ ३८ ॥
दृष्टा चाऽनेन सा किञ्चिद्विकस्वरमुखाम्बुजा ।
सहर्षसाध्वसा[1] चेतोभुवोऽपि स्वान्तहारिणी ॥ ३९ ॥
मङ्गलाचारपूर्वं च जज्ञे पाणिग्रहस्तयोः ।
बद्धाञ्जली च तौ तस्माद् गतौ चतुरिकाऽन्तरे ॥ ४० ॥
तत्र मुक्तावचूलाढ्ये प्रवरस्तम्भतोरणे ।
सूर्यवत् सदिनश्रीकः कुमारः शुशुभेतराम् ॥ ४१ ॥
अथोपचारः प्रारेभे स्वजनाना समन्ततः ।
श्रीखण्डपुष्पताम्बूलैर्नेपथ्याश्वगजादिभिः ॥ ४२ ॥
ततस्तत्राज्यलाजाद्यैर्विप्रेणोद्दीपितेऽनले ।
भ्रमितुं विधिनाऽऽरेभे मङ्गलानि[2] वधूवरम् ॥ ४३ ॥
प्रथमे मङ्गले राज्ञा स्वर्णभाराः सहस्रशः ।
दत्ताः, कुण्डलहाराद्यं द्वितीये सारभूषणम् ॥ ४४ ॥
तृतीये स्थाल-सिप्राद्यं चतुर्थे दिव्यचीवरम् ।
अन्यान्यपि हि कृत्यानि कृतानि निखिलान्यपि ॥ ४५ ॥
बहिरङ्गविवाहेनाऽप्येवं प्रीणितविष्टपः ।
आजगाम कुमारेन्द्रः स्वगृहं मङ्गलोत्सवैः ॥ ४६ ॥
अश्वसेननृपेणाऽपि बहु सत्कारितो जनः ।
अनर्घ्यमणिमुक्ताभिर्वध्वाश्चाभरणं ददौ ॥ ४७ ॥
जातोद्वाह इति स्वामी नीलरत्ननिभस्तया ।
गौराङ्ग्या शुशुभेऽत्यन्तं विद्युतेव नवाम्बुदः ॥ ४८ ॥
प्रभुः क्रीडाचलोद्यानादिषु क्रीडंस्तयाऽन्वितः ।

१ सानन्दा सभया च ।  २ मण्डलानि, इत्यपि ।

जनानां जनयन् प्रीतिं वासरानत्यवाहयत् ॥ ४९ ॥
सौधेऽन्यदा गवाक्षस्थः प्रभुः काशीं विलोकयन् ।
सपूजोपस्करान् पौरानपश्यद् गच्छतो बहिः ॥ ५० ॥
जगाद च निजान् कोऽयमद्याहो ! बहिरुत्सवः ।
येनेत्येष जनो याति पुरीतो हर्षसत्वरम् ॥ ५१ ॥
कोऽप्यूचे देव ! पञ्चाग्नितपः कुर्वन् कठाह्वयः ।
आगतोऽस्ति तपस्व्येको जनो याति तमर्चितुम् ॥ ५२ ॥
तं द्रष्टुं कौतुकात् तत्र सानुगः प्रभुरभ्यगात् ।
अपश्यच्च कठं तीव्रे पञ्चाग्नितपसि स्थितम् ॥ ५३ ॥
ज्ञानत्रयधरः स्वामी दह्यमानं महोरगम् ।
अपश्यद् वह्निकुण्डान्तः क्षिप्तकाष्ठान्तरास्थितम् ॥ ५४ ॥
तं दृष्ट्वा सहसाऽवोचत् कृपाम्भोधिरिदं विभुः ।
अहो ! अज्ञानमज्ञाना यत् तपस्यपि नो दया ॥ ५५ ॥
बालगोपालकादीनामप्येवं सर्वतः सदा ।
प्रसिद्धं यद् दयाहीनो धर्मो न स्यात् कथञ्चन ॥ ५६ ॥
यथा नाथं विना सैन्यं यथात्मानं विना वपुः ।
शेषकष्टक्रिया शून्या दयाधर्मं विना तथा ॥ ५७ ॥
स्वस्य चेत् कष्टमारेभे तदन्येषां करोषि किम् ? ।
जीवघातात् कथं पुण्यं न विषादमृतोद्भवः ॥ ५८ ॥
इति श्रुत्वा कठः प्रोचे हस्त्यश्वाद्येव केवलम् ।
राजपुत्रा विजानन्ति धर्मं तु मुनिपुङ्गवाः ॥ ५९ ॥
ततस्तत्प्रत्ययार्थं स्वैर्नरैराकृष्य कुण्डतः
तत् काष्ठं स्फोटयामास यत्नेन जगतां पतिः ६० ॥
सहसा निरगात् तस्मादहिर्दाहाकुलः स्फुरन् ।
तस्य चाशु नमस्कारं नृभिः प्रभुरदापयत् ॥ ६१ ॥
विभोर्दग्वाक्यपीयूषैः सोऽस्ततापः समाधिना ।
नमस्कारामृतं पीत्वा मृत्वा नागाधिपोऽभवत् ॥ ६२ ॥

महर्द्धिर्धरणो नाम रेजे नागसुरेषु सः ।
जयी विश्वे नमस्कारः स्याद् मृतोऽप्यमरो यतः ॥ ६३ ॥
अहो ! मूर्त्तिः कट ! ज्ञानं दया काऽप्यस्य साधुवाक् ।
स्तूयमानो जनैरेवं ययौ स्वभवनं विभुः ॥ ६४ ॥
अथ कष्टतरं बालस्तपस्तेपे कठो हठात् ।
कष्टं हि सुकरं पुंसां विवेकोऽतिसुदुर्लभः ॥ ६५ ॥
विवेको ज्ञानरूपस्तत् तत्प्रभावाच्छुभं कृतम् ।
तन्वपि प्राज्यपुण्याय तं विना नतु बह्वपि ॥ ६६ ॥
लभतेऽल्पं धनं स्थूलग्रावोद्धारेऽपि कर्मकृत् ।
तद् बहु स्वल्पभारेणाऽप्यर्जयेद् रत्नकोविदः ॥ ६७ ॥
मृत्वा मेघकुमारेषु कठो भवनवासिषु ।
असुरो मेघमालीति नामतः समजायत ॥ ६८ ॥
श्रीपार्श्वो भोगसौख्यानि भुञ्जानोऽन्येद्युरागते ।
मधौ जनोपराधेन ययावुद्यानमीक्षितुम् ॥ ६९ ॥
स तत्रोद्यानपालेन दर्श्यमानलताद्रुमः ।
निध्यायन्[1] पुष्पावचयजलक्रीडादिकुञ्जनम् ॥ ७० ॥
क्रमेणोद्यानमध्यस्थं प्रासादं प्राविशद् विभुः ।
तद्भित्तौ नेमिचरितचित्रं चैक्षत नीलरुक् ॥ ७१ ॥
राज्य-राजीमतीत्यागं विधायाश्रितसंयमम् ।
दृष्ट्वा नेमिं विरक्तोऽसौ सुतरामित्यचिन्तयत् ॥ ७२ ॥
विवेकः कोऽप्यहो ! श्रीमन्नेमेरनुपमः खलु ।
नवे वयसि निःसङ्गो य एवं व्रतमग्रहीत् ॥ ७३ ॥
सर्वथा त्याज्य एवाऽयं संसार इति चिन्तयन् ।
बभूव भगवान् भुक्तभोगकर्मा व्रतोन्मुखः ॥ ७४ ॥
तदा च तं सपद्येव सुराः सारस्वतादयः ।
लोकान्तिका ब्रह्मलोकादेत्य नत्वा व्यजिज्ञपन् ॥ ७५ ॥

---

१ पश्यन् ।

जगद्द्रोहकमोहस्य त्वमेव शमने क्षमः ।
तत् त्रैलोक्योपकाराय प्रभो ! तीर्थं प्रवर्तय ॥ ७६ ॥
आ गर्भवासात् त्रिज्ञानः स्वयं विश्वपते ! वयम् ।
इदं ब्रूमोऽधिकारित्वादित्युक्त्वा ते ययुर्दिवम् ॥ ७७ ॥
ततः सायं गतः सौधं विसृज्य सुहृदः प्रभुः ।
पल्यङ्कस्थो निशां निन्ये भावयन्निति भावनाम् ॥ ७८ ।
किं न भुक्तं च मुक्तं च भवे सौख्यं शरीरिणाम् ।
तदपूर्वस्य कस्यार्थे भूयोऽप्यायासमेत्यसौ ॥ ७९ ॥
किं कस्यापि कृते किञ्चिद् भुवने वस्तु विद्यते ? ।
स्वेनैवोत्पद्यते काले स्वयमेव विपद्यते ॥ ८० ॥
तदेवं सति को मोहो देहिनां यदिद मम ।
गते च तत्र कः खेदो यदिदं मे गतं मृतम् ? ॥८१॥
ममतामालया बद्धः कोऽरघट्टघटीव न ? ।
करोति भवकूपेऽस्मिन्नेहिरेयाहिरां[1] क्रियाम् ॥ ८२ ॥
हा ! मुक्त्वा ध्रुवमज्ञानादध्रुवेऽप्यलगज्जनः ।
तदात्मानं स्थिरज्ञानं कृत्वा लोकं प्रबोधये ॥ ८३ ॥
इत्यादि ध्यायतो मोह इव पर्यगलन्निशा ।
प्रबोध इव चादित्यो विश्वोद्द्योतार्थमुद्गतः ॥ ८४ ॥
कृत्वा प्रभातकृत्यानि गत्वा पित्रोश्च सन्निधौ ।
तौ संबोध्य स्वदीक्षायै दानमारभत प्रभुः ॥ ८५ ॥
यथेच्छं गृह्णतामित्याघोष्याऽऽवर्षं प्रयच्छतः ।
दानं विभोरभूदिन्द्रादिष्टः श्रीदः[2] स्वपूरकः ॥ ८६ ॥
स्वर्णविद्युद्युते पार्श्वपद्मे वित्ताम्बु वर्षति ।
वृद्धा कीर्त्यापगा विष्वक् पूर्णान्यर्थिसरांसि च ॥ ८७
दारिद्र्यमयदावाग्निः शशाम जगतोऽखिलः ।
परमानन्दकन्दाश्च सद्यः कन्दलिता भुवि ॥ ॥ ८८ ॥

१ एहि रे ! याहि रे ! यस्यां क्रियायां सा एहिरेयाहिरा, ताम् । २ धन॰

सरोऽल्पदं प्रधिर्दुर्गोऽपेयोऽम्भोधिर्नदीत्वरी ।
घनस्तु घनदस्तेन विश्वोपरि जिनस्तथा ॥ ८९ ॥
तद्दानेनाऽर्थिनः पुष्टा रणद्भिः स्वर्णभूषणैः ।
कुर्वन्तीव गृहे दौस्थ्यनिर्वासपटहध्वनिम् ॥ ९० ॥
एका कोटी हिरण्यस्य लक्षाण्यष्टौ च स प्रभुः ।
ददौ प्रतिदिनं सूर्योदयादाभोजनक्षणम् ॥ ९१ ॥
त्रीणि कोटिशतान्यष्टाशीतिश्च स्वर्णकोटयः ।
अष्टाशीतिश्च वर्षेण सर्वदाने विभोरभूत् ॥ ९२ ॥
अथेयुर्वासवाः सर्वे ज्ञातदीक्षाक्षणा विभोः ।
ते चाऽश्वसेनशेषाश्च पार्थिवा एकतोऽमिलन् ॥ ९३
सर्वेऽनुज्ञाप्य ते दीक्षाभिषेकाय नता विभुम् ।
तीर्थाम्भःसंभृतैः कुम्भैरुत्सवात् तमसिष्णपन् ॥ ९४ ॥
हरिचन्दनकर्पूरलिप्ताङ्गो दिव्यचीरभृत् ।
पारिजातादिपुष्पौघस्फारधम्मिलबन्धुरः ॥ ९५ ॥
हार-कुण्डल-कोटीर-कङ्कणा-ऽङ्गदभूषणैः ।
शक्रेण भूषितो भक्त्या रेजे कल्पद्रुवद् विभुः ॥ ९६ ॥
(युग्मम्)
अथाऽऽरोहन्नरा-ऽमर्त्यैरुद्वाह्यां शक्रसूत्रिताम् ।
विशालां शिबिकां स्वामी चित्तवृत्तिं सतामिव ॥ ९७ ॥
तत्रासनमलंचक्रे स पूर्वाद्रिमिवाऽर्यमा ।
अभातां चामरे तस्य पक्षयोर्यशसी इव ॥ ९८ ॥
रेजे तस्योपरि च्छत्रं सुवृत्तोज्ज्वलमुल्लसत् ।
स्वस्वरूपमिव ब्रह्मद्वारोपरि परिस्फुरत् ॥ ९९ ॥
वाद्यमानेषु वाद्येषु पठत्सु पटु बन्दिषु ।
जयारवे प्रसृमरे सङ्गीते विविधे सति ॥ १०० ॥
काशिमध्येन सोत्कण्ठं वीक्ष्यमाणः पुरीजनैः ।

---

१ कूप । २ इत्वरी गमनशीला । ३ प्रसरणशीले ।

नम्यमानोऽञ्जलिप्रह्वं स्तूयमानः सहाशिषा ॥ १०१ ॥
तद्भक्तिं श्रीवरः स्वामी प्रतीच्छन् सनराऽमरः ।
मुदाऽगादाश्रमपदमुद्वोढुं संयमश्रियम् ॥ १०२ ॥
( विशेषकम् )
यत्र स्वाम्यागमात् तुष्टा इवाऽशोका-ऽऽम्र-जम्बवः ।
एला-लवङ्ग-कक्कोल-पूगाद्या विलसन्त्यगाः ॥ १०३ ॥
कदली-लवली-द्राक्षा-नागवल्ली-प्रियङ्गवः ।
वासन्त्याद्या लताः कम्पैर्नृत्यन्तीवाऽग्रपल्लवैः ॥ १०४ ॥
मालती-यूथिका-मल्ली-केतकी-शतपत्रिकाः ।
चम्पकाद्या हसन्तीव विकाशिकुसुमच्छलात् ॥ १०५ ॥
शिबिकातः समुत्तीर्य तत्राऽशोकतरोस्तले ।
स्वाम्यमुञ्चत् क्षमैश्वर्य-स्वर्ण-रत्नपरिग्रहम् ॥ १०६ ॥
क्षमां सहिष्णुतामेव सुवर्णं समतां पुनः ।
ज्ञानादीन्येव रत्नान्यन्तरङ्गत्वेन सोऽग्रहीत् ॥ १०७ ॥
त्रिंशद्वर्षः प्रभुः स्वांशे दूष्यं शक्राहितं दधत् ।
पौषस्य कृष्णैकादश्यां विशाखाभे कृताष्टमः ॥ १०८ ॥
केशानुन्मूल्य सिद्धांश्च नत्वा चारित्रमग्रहीत् ।
द्राग् मनःपर्ययज्ञानं चापद् दीक्षासहोद्भवम् ॥ १०९ ॥
( युग्मम् )
पञ्चमुष्ट्युद्धृतान् केशान् विभोरिन्द्रः स्ववाससा ।
प्रतीष्य गत्वा चिक्षेपाक्षेपेण क्षीरसागरे ॥ ११० ॥
तदा च राजपुत्राणां प्रभोर्मैत्र्यमुपेयुषाम् ।
शतैस्त्रिभिरुपादत्त संवेगातिशयाद् व्रतम् ॥ १११ ॥
इति श्रीपार्श्वनाथस्य शुभभावकृतस्तवाः ।
स्वस्वस्थानं ययुः सर्वे सुरा-ऽसुर-नरेश्वराः ॥ ११२ ॥
तदा तत्रैव भगवाल्लँम्बमानभुजद्वयः ।
कायोत्सर्गेण कर्माऽम्भोभ्रंशनायेव तस्थिवान् ॥ ११३ ॥

द्वितीयेऽह्नि गतः कोपकटाख्ये सन्निवेशने ।
पारणायाऽविशन्नाथो धनस्य गृहिणो गृहे ॥ ११४ ॥
तदा सार्थाभिधंमन्यो धन्यो गेहाङ्गणस्थितम् ।
कल्पद्रुमिव तं वीक्ष्य सहसाऽभून्मदोत्सुकः ॥ ११५ ॥
सद्यो जातविवेकश्च तं नत्वा पायसेन सः ।
शुद्धेन शुद्धधीर्नाथं कारयामास पारणम् ॥ ११६ ॥
अहो ! दानमहो ! दानमित्युद्घोषपरैर्दिवि ।
ताडितो दुन्दुभिर्देवैः स्वर्णवृष्टिः कृता ततः ॥ ११७ ॥
नानापुष्पैः प्रकीर्णा भूः सिक्ता गन्धाम्बुवृष्टिभिः ।
चेलोत्क्षेपश्च तैश्चक्रे धन्यस्याऽहो ! सुधन्यता ॥ ११८ ॥
धन्यः पुण्येन गेहं च सुवर्णेन जनो मुदा ।
गगनं दुन्दुभिध्वानैः पूर्णं नाथस्य पारणे ॥ ११९ ॥
धन्यो बहुमतो राज्ञा लोकैरेत्याऽभिनन्दितः ।
स प्रभोः पारणस्थाने पादपीठं मुदा व्यधात् ॥ १२० ॥
विचचार ततः स्वामी ग्रामा-ऽऽकर-पुरादिषु ।
मोहेनैव सवैरत्वाद् मौनी नैकत्र च स्थितः ॥ १२१ ॥
सर्वसहो धरित्रीव शारदाऽम्भ इवामलः ।
वह्निवत् तेजसा दीप्रोऽप्रतिबद्धश्च वायुवत् ॥ १२२ ॥
आकाशवन्निरालम्बः पृथ्व्याद्यैरपि पञ्चभिः ।
दत्तात्मगुणसारत्वादिव सोऽभूज्जगन्मतः ॥ १२३ ॥
मेदिनीं पावयन्नाथो द्विधाऽपि चरणक्रमात् ।
निर्लेपः पद्मवत् कस्य हृदि वासं न स व्यधात् ? ॥१२४॥
अटव्यामन्यदा कादम्बर्यां कलिगिरेरधः ।
कुण्डाख्यसरसस्तीरे स्थितः प्रतिमया विभुः ॥ १२५ ॥
तस्मिन् महीधरो नाम जलपानाऽऽगतः करी ।
ईहापन्नः प्रभुं दृष्ट्वा जातिस्मरणमासदत् ॥ १२६ ॥
स दध्यौ च यथा प्राच्यभवेऽहं हेमलाभिधः ।

वामनाङ्गो जने हास्यभूरासं कुलपुत्रकः ॥ १२७ ॥
पितुः परिभवेऽन्येद्युर्गृहान्निर्गत्य बम्भ्रमत् ।
सुप्रतिष्ठाख्यमित्रेण नीतोऽह गुरुसान्निधौ ॥ १२८ ॥
गुरुणा च यतित्वस्याऽयोग्यत्वात् श्रावकव्रतम् ।
ग्राहितोऽहं परं लोकैर्हास्यमानोऽतिखिन्नवान् ॥ १२९ ॥
तल्लघुं स्वां तनुं निन्दन्नभिनन्दन् महातनुम् ।
मृत्वाऽऽर्त्तध्यानतोऽभूवमेष शैलोपमः करी ॥ १३० ॥
तदिदानीं पशुः कुर्वे किं किं वाऽऽराधयाम्यहम् ।
अथवा किं वितर्केणाऽमुमेव प्रभुमर्चये ? ॥ १३१ ॥
इति ध्यात्वा प्रविश्यान्तःसरः स्नात्वा च दन्तिराट् ।
आदाय चारु पद्मानि पार्श्वे पार्श्वप्रभोर्ययौ ॥ १३२ ॥
स त्रिःप्रदक्षिणीकृत्य प्रभुं पद्मैः पदद्वयम् ।
पूजयित्वा च नत्वा च यथास्थानं गतः करी ॥ १३३ ॥
अथागत्य यथासन्ना देवाः सद्गन्धवस्तुभिः ।
पूजयित्वा विभुं नाट्यविधिं विदधिरे मुदा ॥ १३४ ॥
सर्वं गत्वा च चम्पायां तत्प्रदेशवनेचराः ।
करकण्डुनरेन्द्रस्य तत् स्वरूपं न्यवेदयन् ॥ १३५ ॥
विस्मितश्च नरेन्द्रोऽसौ सद्यः सबलवाहनः ।
वन्दितुं प्रभुमभ्यागात् प्रभुस्तत्रग्रेऽन्यतो ययौ ॥ १३६ ॥
तत्र च प्रतिमा भर्तुर्नवहस्ता विनिर्मिता ।
सुरैर्दिव्या, महाभक्त्या सा नरेन्द्रेण पूजिता ॥ १३७ ॥
कारयित्वा च तत्रोरु चैत्यं तस्मिन्निवेशिता ।
साऽधिष्ठायकभावेन सप्रभावाऽभवद् भृशम् ॥ १३८ ॥
दूरदेशान्तरादागाज्जनस्तां मूर्त्तिमर्चितुम् ।
साऽपि दत्ते मनोऽभीष्टमनिष्टं हरते नृणाम् ॥ १३९ ॥
कलेः कुण्डस्य चासन्नभावित्वादगमज्जने ।
कलिकुण्ड इति ख्यातं तत् तीर्थं विश्वपावनम् ॥ १४० ॥

सोऽपि काले करी मृत्वा तीर्थे तत्रैव भक्तिमान् ।
महर्द्धिर्व्यन्तरो जातः प्रातिहार्यकरः परः ॥ १४१ ॥
प्रभुः श्रीपार्श्वनाथोऽपि शिवापुर्यां ययौ क्रमात् ।
कौशाम्बाख्ये वने तत्र कायोत्सर्गेण तस्थिवान् ॥ १४२ ॥
स्मृत्वा पूर्वोपकारं च तदागाद् धरणोरगः ।
महर्द्ध्या स्वामिनं नत्वा पुरो नाट्यविधिं व्यधात् ॥१४३॥
हहाऽस्यार्ककरस्पर्शो मयि सत्यपि सेवके ।
ध्यात्वेति स त्र्यहं भर्तुः शीर्षे छत्रमहिर्दधौ ॥ १४४ ॥
ततोऽन्यत्र गते नाथे स्वस्थानं धरणोऽप्यगात् ।
तदारभ्य जने सा पूरहिच्छत्रेति कथ्यते ॥ १४५ ॥
अथ राजपुरे स्वामी गत्वा प्रतिमया स्थितः ।
ईश्वराख्यो नृपस्तत्र राजपाट्यां विनिर्ययौ ॥ १४६ ॥
व्रतस्थं देव ! पश्यैनमश्वसेननृपाङ्गजम् ।
इत्युक्तो बन्दिना हृष्टो नृपः पार्श्वान्तिकं ययौ ॥ १४७ ॥
नृपो दृष्ट्वा विभुं क्वापि दृष्टोऽयमिति चिन्तयन् ।
मूर्छितो लब्धसंज्ञश्च जातजातिस्मृतिर्जगौ ॥ १४८ ॥
अहो ! चित्रं यदस्मारि निजप्राच्यभवो मम ।
मन्त्र्यूचे स विभो ! कीदृग् नृपः प्राह निशम्यताम् ? ॥१४९॥
श्रीवसन्तपुरे जज्ञे दत्तनामा द्विजः पुरा ।
निमित्तोद्वाहलग्नादिकथनाज्जनसम्मतः ॥ १५० ॥
अथाऽभूत् कुष्ठरोगोऽस्य विनष्टवपुरित्यसौ ।
कुटुम्बेनाऽप्यवज्ञातो गङ्गायां मृत्यवे गतः ॥ १५१ ॥
तज्जले निपतन्नेष दृष्टो विद्याधरर्षिणा ।
उदितश्च महाभाग ! ब्रुडस्येवं जले कथम् ? ॥ १५२ ॥
महारसायनं जैनं सर्वरोगहरं कुरु ।
शाखाच्छेदेन किं कर्ममूलं छिन्द्धि विपत्तरोः ॥ ? १५३ ॥
किं तद् रसायनं तेनेति पृष्टो मुनिराख्यत ? ।

पञ्चव्रतीं ससम्यक्त्वां कषाया ऽक्षजयं तथा ॥ १५४ ॥
ततोऽसौ शुद्धभावेन गृहिधर्म प्रपन्नवान् ।
अचित्ताहार-पञ्चेष्ठनमस्कारपरोऽभवत् ॥ १५५ ॥
अन्यदाऽसौ गतश्चैत्ये जिनं नत्वा तथा मुनिम् ।
उपविष्टस्ततोऽपृच्छत् पुष्कलिश्रावको मुनिम् ॥ १५६ ॥
स्वामिन्नेवंविधव्याधिशीर्णाङ्गस्य जिनौकसि ।
आगत्य युज्यते देववन्दनं किमु वा न हि ? ॥ १५७ ॥
यत्यूचे वन्दने देवावग्रहाशातनोज्झनात् ।
को दोषो यद् मलक्लिन्नदेहाः स्युर्यतयोऽपि हि ? ॥१५८॥
क गतावेष गन्तेति तेनोक्तः स पुनर्जगौ ।
बद्धायुर्भाव्यसौ राजपुरे तिर्यक्षु कुक्कुटः ॥१५९
स कुष्ठी भावि दुःखं तत् श्रुत्वा स्वस्याऽरुदत्तराम् ।
संबोधितश्च मुनिना यद् मा खिद्यस्व कोविद ! १६० ॥
प्रचण्डपवनोद्धूततरङ्गस्याऽम्बुधेरपि ।
प्रसरः शक्यते रोद्धुं न तु प्राकृकृतकर्मणः ॥ १६१ ॥
बुद्ध्वा दत्तोऽवदन्नाथ ! लप्स्ये बोधिं पुनः कदा ? ।
मुनिराख्यदितस्तावत् कुक्कुटस्त्वं भविष्यसि ॥ १६२ ॥
ततो राजपुरे दृष्ट्वा मुनिं जातिस्मृतिं गतः ।
विहितानशनो मृत्वा नृपस्तत्रैव भाव्यसि ॥ १६३ ॥
राजपाट्यां गतस्तत्र दृष्ट्वा पार्श्वजिनं भवान् ।
लब्धा बोधिमिति श्रुत्वा दत्तः प्रमुदितोऽभवत् ॥ १६४ ॥
स्मृत्वाऽसौ कुक्कुटो भूत्वा ततोऽभूदीश्वरो नृपः ।
स चैषोऽहं प्रभुं नत्वा मन्त्रिन् ! जातिस्मृतिं गतः ॥१६५॥
ततो नत्वा प्रभोः कायोत्सर्गस्थाने विधाप्य राट् ।
चैत्यं तत्र विभोर्बिम्बमुत्सवेन न्यवीविशत् ॥१६६॥
कुक्कुटेश्वर इत्याख्या तस्य चैत्यस्य विस्तृता ।

१ मुनि. ।

कुक्कुटेश्वरसंज्ञं तत्संबन्धात् पुरमप्यभूत् ॥१६७॥
सुखे दुःखे भवे मोक्षे शत्रौ मित्रे च तत्समः ।
ज्ञान-दर्शन-चारित्रैः क्षान्त्यादिभिरनुत्तरः ॥ १६८ ॥
विहरन्नेकदा नाथो नगरासन्नवर्त्तिनम् ।
तापसाश्रममागाच्च ययौ चाऽस्तमहर्पतिः ॥ १६९ ॥
(युग्मम्)
मोहदस्योः पदमिव द्रष्टुं भूमिं विलोकयन् ।
प्रभुश्चरति तेनाऽर्कदीपाऽस्ते न पुरोऽचलत् ॥ १७० ॥
तत्रोपकुपं न्यग्रोधमूले प्रतिमया विभुः ।
तस्थिवान्निशि निष्कम्पः कायेन मनसेव सः ॥१७१॥
इतश्च मेघमाली प्राग्भवव्यतिकरं निजम् ।
विवेदाऽवधिना पार्श्वे पूर्ववैरं च सोऽस्मरत् ॥ १७२ ॥
ततः क्रुधा ज्वलन्नुच्चैर्दवेनेव महीधरः ।
श्रीवामेयमुपद्रोतुमुपागादसुराधमः ॥ १७३ ॥
स विचक्रे पुरो व्याघ्रान् दंष्ट्राक्रकचभीषणान् ।
सुतीक्ष्णनखकुद्दालानग्निदीप्रदृशो बहून् ॥ १७४ ॥
पाताल इव ते क्षेप्तुं पुच्छैराछोटयन् महीम् ।
चक्रुः पुत्कारशब्दं चाऽऽह्वातुं मृत्युमिवोच्चकैः ॥ १७५ ॥
तथाऽपि प्रभुमक्षोभ्यं विदित्वा क्वाऽपि ते ययुः ।
स्फुरद्ध्यानप्रदीपेन स्वामिना भीषिता इव ॥ १७६ ॥
गर्जन्तोऽथ गजास्तेन विकृता विकृतात्मना ।
दूरादेत्य प्रभौ पेतुस्ते शैला इव जङ्गमाः ॥ १७७ ॥
भीष्मैस्तैरपि नाऽक्षोभि प्रभुस्तत् तेऽप्यदृश्यताम् ।
वृथा स्थूलत्वमस्माकमिति ह्रीता[1] इवाऽगमन् ॥ १७८ ॥
तेनाऽथ विकृता नाथोपसर्गाय क्रमादिमे ।
भल्लूकाश्चित्रका दृष्टिविषसर्पाश्च वृश्चिकाः ॥ १७९ ॥

---

१ लज्जिता ।

तैरप्यक्षोभि न तिलतुषमात्रमपि प्रभुः ।
बह्वीभिरपि वात्याभिः कथं चलति मन्दरः ? ॥ १८० ॥
तथा—
काष्ठमङ्गारतां याति भस्मतां गोमयादिकम् ।
वह्नौ कीर्णं सुवर्णं तु सुवर्णोत्कर्षतां व्रजेत् ॥ १८१ ॥
जातामर्षस्ततो बाढं भवे स्वमिव तं प्रभुम् ।
नीरे मज्जयितुं पापो विचक्रे घनमम्बरे ॥ १८२ ॥
कालरात्रिनिभः क्लृप्ततर्जितैरिव गर्जितैः ।
सोऽपूरयद्दिशः कालजिह्वाभा विद्युदद्युतत् ॥ १८३ ॥
निरुद्धचक्षुःप्रसरमसञ्चारं तमोभरैः ।
तदाऽभूदाकुलं विश्वं गर्भवास इव स्थितम् ॥ १८४ ॥
मुशलाकारधाराभिः प्रवृत्ते वर्षितुं घने ।
रोदस्येकजला जज्ञे प्लाविता जन्तवो जलैः ॥ १८५ ॥
क्रन्दन्तीव दिशो गर्जिनादैर्धाराश्रुभिर्नभः ।
रोदितीव भुवोऽप्यास्यं नीरैश्चीरैरिवावृतम् ॥ १८६ ॥
केषां दुःखं न पार्श्वस्योपसर्गेऽभून्निशाऽपि यत् ।
चक्रेऽभ्रच्छन्ननक्षत्रव्याजान्नेत्रनिमीलनम् ॥ १८७ ॥
प्रभोर्जानुकटीकण्ठदघ्नं नीरं भवत् क्रमात् ।
नासाग्रमाययौ नेत्रेऽस्याऽशोभेतां तदाऽब्जवत् ॥ १८८ ॥
नासाग्रन्यस्तदृग्युग्मः सदाऽयं तत् तदेव हि ।
पश्यामीति धियेवाऽम्भः प्रभोर्नासाग्रमाययौ ॥ १८९ ॥
तथाऽपि स निजान्नाथः स्थानाद् ध्यानाच्च नाऽचलत् ।
भवाम्भोधिपतद्विश्वाधारस्तम्भ इव स्थितः ॥ १९० ॥
अथो विवेद धरणोरगेन्द्रोऽवधिना विभोः ।
कठोपसर्गं सद्यश्च स्वदेवीभिः सहाययौ ॥ १९१ ॥
प्रभुं नत्वाऽथ सोऽम्भोजं न्यधात् तत्पादयोरधः ।
स्वभोगेन पुनः पृष्ठं पार्श्वौ च पिदधे विभोः ॥ १९२ ॥

चक्रेऽस्य शिरसि च्छत्रं धरणः सप्तभिः फणैः ।
अधस्तात् तिर्यगूर्ध्वं च स्वयशः ख्यापयन्निव ॥ १९३ ॥
तदा च भगवानम्भोमाननालेऽम्बुजे स्थितः ।
समाधिसुखलीनात्मा राजहंस इवाबभौ ॥ १९४ ॥
वर्षान्तोद्भूतभोगीन्द्रशिरोरत्नाङ्कुरैः प्रभुः ।
दीपोत्सवमिवातन्वन् न कस्याऽऽसीत् शिवंकरः ? ॥१९५॥
चक्रुर्धरणदेव्योऽथ सङ्गीतं भक्तिनिर्भराः ।
वेणु-वीणा-मृदङ्गादिवाद्यपूर्वं पुरः प्रभोः ॥ १९६ ॥
धरणो भक्तिमानेवं कमठश्चोपसर्गकृत् ।
द्वयोरपि तयोस्तुल्यमनोवृत्तिरभूद् विभुः ॥ १९७ ॥
येन व्याप्रियमाणेन सुखं दुःखं च वेद्यते ।
धर्मध्यानलये लीनं तन्मनो हि दृढं विभोः ॥ १९८ ॥
एवं सत्यप्यमर्षेण वर्षन्तं मेघमालिनम् ।
निरीक्ष्य धरणः कोपात् साक्षेपमिदमब्रवीत् ॥ १९९ ॥
अरे ! किमेतदारेभे स्वस्याऽनर्थाय दुर्मते ! ।
सहिष्णोरपि भृत्योऽहं सहिष्येऽतः परं नहि ॥ २०० ॥
काष्ठान्तर्दह्यमानाहिं प्रदर्श्य प्रभुणाऽसि चेत् ।
निषिद्धोऽनेन पापात् तत् कोऽपराधः कृतस्तव ? ॥२०१॥
लवणायोषरावन्यां मेघवारि यथा भवेत् ।
तथा सदुपदेशोऽपि वैरायाऽजायत त्वयि ॥ २०२ ॥
निष्कारणारिस्त्वं नाथेऽस्मिन्निष्कारणबान्धवे ।
रे ! यदेवमपाकार्षीस्तदद्य न भविष्यसि ॥ २०३ ॥
निमज्ज्यते जलैर्नाऽयं त्रिजगत्तारणक्षमः ।
त्वं त्वगाधे भवाम्भोधौ पापाद् नूनं ब्रुडिष्यसि ॥ २०४ ॥
निशम्येदं वचो मेघमाली दृशमधो न्यधात् ।
तथास्थितमपश्यच्च पार्श्वं नागेन्द्रसेवितम् ॥ २०५ ॥
दध्यौ चैवं स भीतः सन् मम शक्तिरियत्यपि ।

वृथाऽत्राऽभूत् पिनष्ट्येष मुष्टिना हि गिरीनपि ॥ २०६ ॥
मूढेन हा ! मयाऽऽत्मैव पातितो भवसागरे ।
क्षिप्तः कल्पद्रुमे वह्निर्यद्देष स्वाम्युपद्रुतः ॥ २०७ ॥
दयालुर्नैष मे हन्ता धरणेन्द्रात् तथाऽपि भीः ।
अनन्यशरणः पार्श्वं तद् विश्वशरणं श्रये ॥ २०८ ॥
इति ध्यात्वाऽऽशु संहृत्य घनं स्वमिव कश्मलम् ।
उपेत्य नत्वा श्रीपार्श्वं सदैन्यं स व्यजिज्ञपत् ॥ २०९ ॥
कोपो यद्यपि नास्त्येवाऽपकारिण्यपि ते प्रभो ! ।
तथाऽपि निजदुष्कर्मदोषादस्ति महाभयम् ॥ २१० ॥
रक्ष रक्ष जगन्नाथ ! ततो मां पापशङ्कितम् ।
रक्षाक्षमः कृपालुश्च यत् त्रिलोक्यां त्वमेव हि ॥ २११ ॥
इत्युक्त्वा क्षमयित्वा च प्रभुं भक्त्या प्रणम्य च ।
पश्चात्तापपरः स्थानं मेघमाली निजं ययौ ॥ २१२ ॥
उपसर्गहरस्याऽपि निवार्योपद्रवं विभोः ।
स्तुत्वा नत्वा च चरणौ स्वं धाम धरणोऽप्यगात् ॥२१३॥
अथ रात्रिः प्रभोर्दुःखेनैव सार्धं ययौ क्षयम् ।
मुखोद्घाटः कृतश्चैन्द्र्या मुदेवोद्यद्रविच्छलात् ॥ २१४ ॥
कठेन सह कर्माणोर्मुक्तः स्वामी ततः पुनः ।
काशिं गत्वाऽऽश्रमपदोद्यानेऽस्थाद् धातकी तले ॥२१५॥
अपूर्ववीर्योल्लासाच्च घातिकर्मतरूंस्तदा ।
आद्यभेदद्वयीधारशुक्लध्यानासिनाऽच्छिदत् ॥ २१६ ॥
दिनेषु चतुरशीतौ गतेषु व्रतवासरात् ।
चैत्रकृष्णचतुर्थ्यह्नि विशाखास्थे निशाकरे ॥ २१७ ॥
तत्राष्टमतपस्स्थस्य श्रीपार्श्वस्य जगत्पतेः ।
पूर्वाह्णे केवलज्ञानमुत्पेदेऽनन्तवैभवम् ॥ २१८ ॥
तदालोकमलोकं च ज्ञानाद्वैतमयः प्रभुः ।

त्रिकालविषयं सर्वं जानीते स्म ददर्श च ॥ २१९ ॥
ततो विष्वक् सुरेन्द्राणामासनानि चकम्पिरे ।
ज्ञात्वाऽवधेश्च ते ज्ञानं विभोस्तत्रैयुरञ्जसा ॥ २२० ॥
पुण्यं क्वाऽविरतानां नः स्यादेतं सत्क्षणं विना ।
इति हृष्टाः सुराः सर्वे स्वस्वकृत्यानि चक्रिरे ॥ २२१ ॥
वायुकुमाराः समवसृतिक्ष्मामेकयोजनाम् ।
अमार्जन् मेघदेवाश्चासिञ्चन् गन्धाम्बुवृष्टिभिः ॥ २२२ ॥
व्यन्तराः स्वर्णरत्नैस्तद् बबन्धुर्भूतलं पुनः ।
तस्मिन् विचित्रपुष्पाण्यधोवृन्तान्यकिरंश्च ते ॥ २२३ ॥
चतुर्दिशं विचक्रुस्ते रत्नमाणिक्यकाञ्चनैः ।
तोरणानि च तद्भूमिशोभायै कण्ठिका इव ॥ २२४ ॥
तस्मिन् मणी-रत्न-हेमकपिशीर्षकशोभिताम् ।
त्रिवप्रीं रत्न-रै[1]-रूप्यैरन्तर्मध्ये बहिः क्रमात् ॥ २२५ ॥
वैमानिका ज्योतिषिका भवनेशा व्यधुः सुराः ।
ऊर्ध्वाधस्त्रिजगत् त्रातुं प्रवृत्तस्य विभोः कृते ॥ २२६ ॥
(युग्मम्)

प्रतिवप्रं चतुर्द्वारे सन्नीलमणितोरणे ।
धूपघट्याञ्चिते वाप्यः स्वर्णाब्जा व्यन्तरैः कृताः ॥२२७॥
प्राकारस्य द्वितीयस्यान्तरा चोत्तरपूर्वतः ।
देवच्छन्दं विचक्रुस्ते स्वामिविश्रामहेतवे ॥ २२८ ॥
मध्येसमवसरणं चैत्यद्रुर्व्यन्तरैः कृतः ।
सप्तविंशतिधन्वोच्चः स्वाम्यागममिवेक्षितुम् ॥ २२९ ॥
तस्याधो विविधै रत्नैः पीठं विदधिरे च ते ।
तस्योपरिच्छन्दकं चाऽप्रतिच्छन्दं[2] मणीमयम् ॥ २३० ॥
तन्मध्ये पूर्वदिग्भागे रत्नसिंहासनं व्यधुः ।
छत्रत्रयं मूर्ध्नि दध्रे यक्षाभ्यां चामरद्वयी ॥ २३१ ॥

१ राः सुवर्णम् । २ अनुपमम् ।

धर्मचक्रं पुरो द्वारे चक्रुः स्वर्णाम्बुजस्थितम् ।
तत्राऽन्यदपि यत् कृत्यं तत् सर्वं व्यन्तरा व्यधुः ॥२३२॥
सुरसञ्चारितस्वर्णपद्मन्यस्तपदः क्रमात् ।
प्रभुः समवसरणं सुरकोटीवृतो ययौ ॥ २३३ ॥
तत्र प्रविश्य चैत्यद्रोः प्रभुश्चक्रे प्रदक्षिणाम् ।
तीर्थं नत्वा प्राङ्मुखोऽथ सिंहासनमशिश्रियत् ॥ २३४ ॥
द्राक् प्रभोः प्रतिरूपाणि दिक्ष्वन्यासु तिसृष्वपि ।
व्यन्तरास्तादृशान्येव चक्रुः स्वामिप्रभावतः ॥ २३५ ॥
पश्चाद् भामण्डलं रेजे पुरो रत्नमयध्वजः ।
प्रभोर्जलदगम्भीरो दिवि दध्वान दुन्दुभिः ॥ २३६ ॥
साधु-वैमानिकी-साध्व्यः स्युराग्नेय्यां विभोः क्रमात् ।
नैरृत्यां भुवनपति-ज्योति-र्व्यन्तरयोषितः ॥ २३७ ॥
वायव्यां दिशि भवन ज्योति र्व्यन्तरनाकिनः ।
वैमानिका नरा नार्यः स्युरैशान्यामनुक्रमात् ॥ २३८ ॥
पर्षत्त्रयचतुष्कस्य द्वारैः प्राच्यादिभिः क्रमात् ।
प्रवेशो नतिपूर्वं च तत्र स्थानं यथास्थिति ॥ २३९ ॥
वप्रस्यान्तर्द्वितीयस्य तिर्यञ्चस्त्यक्तविग्रहाः ।
बाह्यस्य वाहनान्येषा स्यात् समवसृतिस्थितिः ॥ २४० ॥
तदादौ तत्र साध्वीनामभावादेवमेव हि ।
अस्थात् तत् स्थानकं शेषं सर्वमासीद् यथोचितम् ॥२४१॥
तिर्यग्-नरा-ऽमरा रीत्या स्वस्वस्थाननिवेशिनः ।
प्रभुप्रभावाद् मान्ति स्माऽनाबाधं तत्र कोटिशः ॥ २४२ ॥
वैभवं पार्श्वनाथस्य तत् श्रुत्वोद्यानपालकात् ।
सद्योऽश्वसेनो रोमाञ्चैर्जज्ञेऽद्धाक्षितनीपवत् ॥ २४३ ॥
शकुनायाऽर्थवत् तस्मै दत्त्वेष्टं पारितोषिकम् ।
वामादेव्यै निवेद्यैतत् प्रभावत्यै च तोषतः ॥ २४४ ॥

---

१ मेघासिक्तकदम्बवत् ।

हस्त्यश्वरथसंवाहं कारयित्वाऽथ भूपतिः ।
देव्यादिसहितः पार्श्वं महर्द्ध्या वन्दितुं ययौ ॥ २४५ ॥
ज्ञानैकजलधौ नद्य इवाऽमरनरश्रियः ।
श्रीपार्श्वनाथे का नैयुः स्पर्धयेव मिथोऽभितः ? ॥ २४६ ॥
नृपः प्रविश्य समवसरणं त्रिःप्रदक्षिणम् ।
कृत्वा नत्वा च विधिना प्रभुं भक्त्यैवमस्तवीत् ॥ २४७ ॥
एकः पुरुषसिंहस्त्वं मोहमत्तेभनिग्रहात् ।
इतीव विदधे नाथ ! सिंहासनमिदं सुरैः ॥ २४८ ॥
राग-द्वेषमहाशत्रुजयोत्थयशसी इव ।
चकास्तश्चामरे शुभ्रे पक्षयोरुभयोस्तव ॥ २४९ ॥
ज्ञान-दर्शन-चारित्रराज्यं त्वय्येकतां गतम् ।
अतस्तेषामिवैषा ते मूर्ध्नि च्छत्रत्रयी स्थिता ॥ २५० ॥
चतुर्धा दिशतो धर्मं चतुर्मुख ! तव ध्वनिः ।
दिव्यश्चतुर्दिशं याति कषायानिव धर्षितुम् ॥ २५१ ॥
मन्दरादीनि पुष्पाणि पञ्चधा देशनाभुवि ।
किरन्ति तव पञ्चाक्षजयतोषादिवामराः ॥ २५२ ॥
शाखाशिखरमूलैः षड्दिग्गतैः शंसतीव ते ।
षण्णां जीवनिकायानां रक्षां ङ्किकिल्लिरुल्लसन् ॥ २५३ ॥
दग्धसप्तभयैधस्त्वात् सप्तार्चिःसममप्यदः ।
धत्ते भामण्डलं नाथ ! त्वत्सङ्गादिव शैत्यताम् ॥ २५४ ॥
भूत्वा दुन्दुभिरप्युच्चैर्ध्वनन्नष्टासु दिक्ष्वसौ ।
अष्टकर्मरिपुव्रातविजयं शंसतीव ते ॥ २५५ ॥
प्रातिहार्यश्रियं मूर्तामन्तरङ्गां गुणश्रियम् ।
इत्थं दृष्ट्वा मनो नाथ ! कस्य न स्यात् त्वयि स्थिरम् ? ॥२५६॥
इति स्तुत्वा जगन्नाथं पार्श्वनाथमुदारधीः ।
अश्वसेनो यथास्थानं निविष्टः सपरिच्छदः ॥ २५७ ॥

---

१ एधस्त्वात् काष्ठत्वात् ।

अथ दन्तप्रभोन्मिश्रस्वतनूकान्तिभिः प्रभुः ।
गङ्गा-यमुनयोश्चङ्गसङ्गमश्रियमुद्वहन् ॥ २५८ ॥
गिरा योजनगामिन्या सर्वभाषागुणस्पृशा ।
त्रिलोक्याह्लादिमाधुर्यजुषैनां देशनां व्यधात् ॥ २५९ ॥
( युग्मम् )
अहो ! भव्याः ! श्रयित्वाऽन्तर्मुखीभावं मनोदृशा ।
निरीक्ष्याऽसारमुज्झित्वा कुरुध्वं सारसंग्रहम् ॥ २६० ॥
यतः—
क्रोधवाडवदुर्दर्शे मानपर्वतदुर्गमे ।
मायाप्रपञ्चनक्राढ्ये लोभावर्त्तभयङ्करे ॥ २६१ ॥
जन्म-मृत्यु-जरा-रोग-शोक-दुःखजलैर्भृते ।
इन्द्रियेच्छामहावातोद्भूतचिन्तोर्मिसङ्कुले ॥ २६२ ॥
अस्मिन्नपारे संसारपारावारे शरीरिणाम् ।
महारत्नमिवाऽनर्घ्यं मानुष्यमतिदुर्लभम् ॥ २६३ ॥
तत्राऽपि विजयानां स्यात् शतं षष्ट्याऽधिकं तथा ।
भरतैरवतक्षेत्रदशकं सर्वसङ्ख्यया ॥ २६४ ॥
इत्येवं कर्मक्षेत्राणां स्यात् सप्तत्यधिकं शतम् ।
प्रतिक्षेत्रं च तत्राऽप्यनार्याणां खण्डपञ्चकम् ॥ २६५ ॥
षष्ठं खण्डं भवत्यार्यं प्रायो म्लेच्छाद्यधिष्ठितम् ।
तत्राऽप्यनार्यका देशा धर्मसामग्र्यभावतः ॥ २६६ ॥
तदेवं सुकुलोत्पत्तिर्दीर्घमायुररोगिता ।
धर्मेच्छा सुगुरोर्योगः सामग्रीयं सुदुर्लभा ॥ २६७ ॥
प्रमादपञ्चक-स्तम्भ-मोह-शोकादिकारणैः ।
लब्ध्वाऽप्यधन्या मानुष्यं न लभन्ते हितं श्रुतम् ॥२६८॥
हितं श्रुत्वाऽपि कस्याऽपि मतिर्धर्मे प्रजायते ।
नहि शुक्तिषु सर्वासु मेघाम्भो मौक्तिकीभवेत् ॥ २६९ ॥
धर्मः शर्मलताकर्ता हर्ता भवनवाऽऽपदाम् ।

मनोरथसरोभर्ता धर्ताऽम्बुदवदङ्गिनाम् ॥ २७० ॥
भोगीन्द्रस्थितिमूलाढ्यः साम्राज्यस्कन्धबन्धुरः ।
देवर्द्धिविटपो धत्ते धर्मवृक्षः शिवं फलम् ॥ २७१ ॥
अतो धर्मः सदा सेव्यो हेतुरूपः फलार्थिभिः ।
दान-शील-तपो-भावभेदात् त्वेष चतुर्विधः ॥ २७२ ॥
तत्र तावत् त्रिधा तज्ज्ञैर्दानधर्मः प्रकीर्तितः ।
ज्ञानदाना-ऽभयदान-धर्मोपष्टम्भदानतः ॥ २७३ ॥
यथा लघ्वपि सच्चक्षुर्जने गौरवभाजनम् ।
तथाऽल्पमपि संज्ञानं तद्दानं श्रेष्ठमेषु तत् ॥ २७४ ॥
सम्यग् ज्ञानेन वेत्त्यात्मा पुण्य-पापे ततस्तयोः ।
प्रवृत्तिं च निवृत्तिं च कृत्वा मोक्षसुखं व्रजेत् ॥ २७५ ॥
विनाशः शेषदानानां कुतोऽपि क्वाऽपि दृश्यते ।
ज्ञानदानं पुनर्वृद्धिसिध्यै स्वस्य परस्य च ॥ २७६ ॥
दत्तानि विश्वसौख्यानि तस्मै तेनाऽखिलान्यपि ।
यो दत्ते दुर्लभं यस्मै ज्ञानं सर्वज्ञभाषितम् ॥ २७७ ॥
याति रागगणो ज्ञानादर्कात् तम इव ध्रुवम् ।
तेनाऽन्यो नोपकारोऽस्ति ज्ञानदानसमो भुवि ॥ २७८ ॥
किं वाऽथ बहुना ज्ञानदानात् त्रैलोक्यपूजितः ? ।
सर्वज्ञो भवतीत्यत्र धनमित्रो निदर्शनम् ॥ २७९ ॥
तथाहि—
अस्त्यत्र मगधाऽभिख्ये देशे राजपुरं पुरम् ।
तत्रासीत् त्रासरहितो जयन्तो नाम पार्थिवः ॥ २८० ॥
तत्पुत्रौ कमलावत्याः सत्याः कुक्षिभवावुभौ ।
विजयश्चन्द्रसेनश्च कुमारगुणशालिनौ ॥ २८१ ॥
किन्तु प्राक्कर्मदोषेण कृताऽमर्षौ परस्परम् ।
असहिष्णू परं तेजस्तौ निर्गमयतो दिनान् ॥ २८२ ॥
नृपमन्येद्युरास्थानस्थितं वेत्री व्यजिज्ञपत् ।

उभौ द्वारे नरौ देव ! तिष्ठतो दर्शनोत्सुकौ ॥ २८३ ॥
आदेशादेत्य तौ तत्र लेखं मुमुचतुः पुरः ।
स्वयं राजा तमुद्वेष्ट्य वाचयामास तद्यथा ॥ २८४ ॥
स्वस्ति मागधभूमीन्द्र श्रीजयन्तं महानृपम् ।
गङ्गोपान्तभुवः स्वाम्ये नियुक्तः सन्निदेशकृत् ॥ २८५ ॥
कुरुदेवः सपञ्चाङ्गं नत्वा विज्ञपयत्यदः ।
देवपादाम्बुजद्वन्द्वं स्मृत्वा नः कुशलं सदा ॥ २८६ ॥
किन्तु सीमालभूपालः सेवालो देशविप्लवम् ।
करोत्युपहतग्रामः प्रमाणं देव एव तत् ॥ २८७ ॥
वाचयित्वेति भूपालः स्फुरत्कोपारुणेक्षणः ।
उवाच भटसामन्ताः ! सन्नद्धा भवत द्रुतम् ॥ २८८ ॥
अरे ! पश्यत सुप्तस्य शिरःकण्डूयनं हरेः ।
सेवालो बालवद् मूढः कथं कर्तुमुपस्थितः ? ॥ २८९ ॥
विज्ञप्तोऽथ कुमाराभ्यां नृपो यद्देव ! कीदृशः ।
संरम्भो राजहंसस्य तव सेवालमात्रके ॥ २९० ॥
आदेशं देहि तद्दर्पमनल्पमपि तत्क्षणात् ।
यथा हन्मः प्रयासो हि सेवके सति कः प्रभोः ? ॥२९१॥
तन्निशम्य दृशं राजाऽमात्ये चिक्षेप सोऽवदत् ।
साधूक्तं राजपुत्राभ्यां कोऽन्यो वेत्तीति जल्पितुम् ॥२९२॥
ततो ज्येष्ठसुतो राज्ञाऽऽदिष्टः प्रत्यर्थिनिग्रहे ।
अमर्षाच्चन्द्रसेनस्तु सभातो गन्तुमुद्यतः ॥ २९३ ॥
सञ्जातेऽथ सभाक्षोभे नृपेण कथमप्यसौ ।
निवर्त्य भणितो वत्स ! किमेवं कुपितो भवान् ? ॥२९४॥
ज्येष्ठे सति कनिष्ठस्योत्थापनं नैव युज्यते ।
सन्मानमपि नेच्छन्ति विगतक्रममुत्तमाः ॥ २९५ ॥
कियदेतत् पितुस्तुल्यरूपे ज्येष्ठसहोदरे ।
सति राज्यमपीच्छन्ति दीयमानं न वंशजाः ॥ २९६ ॥

इत्थं प्रज्ञापितो राज्ञा यदाऽसौ नोपशाम्यति ।
मन्त्रिभिर्भणितश्चन्द्रसेनः सामगिरा तदा ॥ २९७ ॥
किं राजपुत्र ! दक्षोऽपि मन्यसे न पितुर्वचः ? ।
मैवं दुर्विनयीत्युक्तिपङ्किलं कुरु जीवितम् ॥ २९८ ॥
इत्यादिवचनैर्मार्गं चन्द्रसेनः प्रपन्नवान् ।
विजयोऽप्यभिसेवालं प्रतस्थे सैन्यदुर्धरः ॥ २९९ ॥
सीमासन्धिं स्वदेशस्य गत्वा तद्देशवर्तिनः ।
स सामन्तान् समाहूय दूतात् सेवालमुक्तवान् ॥ ३०० ॥
अयथाबलमारम्भो निदानं क्षयसम्पदः ।
परिभाव्य तदात्मानं यद् युक्तं तत् कुरुष्व भोः ! ॥३०१॥
सेवालोऽप्यवदद् युद्धभीरवो नीतिमाश्रिताः ।
मत्तेभकुम्भनिर्भेदे हरेः को दर्शयेन्नयम् ? ॥ ३०२ ॥
युद्धसज्जो भव क्षिप्रं यथा बलविनिर्णयम् ।
वक्ष्यतो मे भुजावेव किं वाचां फल्गुवल्गितैः ?॥ ३०३॥
इत्यमर्षवशात् सैन्यद्वयेऽपि मिलिते तयोः ।
सङ्ग्रामोऽजनि निःस्वानध्वानाहूतसुरासुरः ॥ ३०४ ॥
भवितव्यवशाद् भग्नं कुमारस्याऽखिलं बलम् ।
कथञ्चिन्मन्त्रिभिर्युद्धात् कुमारोऽपि निवर्तितः ॥३०५॥
तत् श्रुत्वा विजयं राजाऽऽनाय्य गन्तुमनाः स्वयम् ।
विज्ञप्तश्चन्द्रसेनेन तात ! मां प्रेषयाऽधुना ॥ ३०६ ॥
मन्त्रिभिः कथितं देव ! प्रागप्येष महाहठात् ।
प्रतिषिद्धस्ततः सम्प्रत्यत्रादेशः खलूचितः ॥ ३०७ ॥
तत् प्रपद्य नृपेणाऽसौ स विशेषबलान्वितः ।
प्रहितश्चन्द्रसेनोऽपि ययौ नित्यप्रयाणकैः ॥ ३०८ ॥
स्थित्वा सेवालभूपस्य सीमभूमिं कुमारराट् ।
सामाद्युपायैः संसेव्य युद्धं कृत्वा तमग्रहीत् ॥ ३०९ ॥
सेवालं सह सप्ताङ्गश्रियाऽऽदाय नृपाङ्गजः ।

ययौ स्वनगरं, राज्ञा महर्द्ध्या च प्रवेशितः ॥ ३१० ॥
सन्मान्य त रिपुं पूर्वस्थितावस्थापयन्नृपः ।
सन्तो गृहागतं दीनं शत्रुमप्यनुगृह्णते ॥ ३११ ॥
चन्द्रसेनं गुणज्येष्ठं मत्वा बुद्धिपराक्रमैः ।
युवराजपदे राजा प्रसन्नः सन् न्ययोजयत् ॥ ३१२ ॥
अतोऽत्यन्तपराभूतिलज्जितो विनयो निशि ।
निर्गत्य चलितो देशान्तरं क्रान्त्वा बहुं महीम् ॥ ३१३ ॥
अथैकत्र पुरं शून्यं संप्राप्य तद्बहिर्निशि ।
श्रमात् सुष्वाप शून्यात्मा प्रातस्तन्मध्यमैक्षत ॥३१४॥
जीर्णदेवकुलं भ्रस्तमन्दिरं शीर्णपादपम् ।
दृष्ट्वा स्वमिव निःश्रीकं तद्विषण्णस्ततोऽचलत् ॥ ३१५ ॥
आस्तामन्येन निस्तेजाः स्वेनाऽपि परिभूयते ।
दुर्दर्शस्तु महातेजाः प्रतिबिम्बेऽपि सूर्यवत् ॥ ३१६ ॥
उड्डियाणभुवं प्राप्तः कुमारो विजयः क्रमात् ।
मुनिं कीर्तिधरं तत्राऽनभ्रवृष्टिमिवैक्षत ॥ ३१७ ॥
तं दृष्ट्वोल्लसितानन्दकन्दलः सहसा हृदि ।
स दध्यौ यदहो ! निष्ठा काऽप्यस्य भुवनातिगा ॥३१८ ॥
किञ्च—
सन्तः सन्तोऽपि संसारे न मुञ्चन्ति निजां स्थितिम् ।
स्पष्ट एव समुद्रोऽपि महीरावणवाहकः ॥ ३१९ ॥
तदेनं प्रणिपत्याऽऽत्मशुद्धिं कुर्वे यतः पुमान् ।
वारिवद् गुरुपादानां स्पर्शेनाऽपि शुचिर्भवेत् ॥ ३२० ॥
इति शुद्धधिया साधुं कुमारः प्रणनाम तम् ।
धर्मलाभाशिषं दत्त्वा मुनिनाऽप्येष तोषितः ॥ ३२१ ॥
यतः—
देवस्य दर्शनात् तुष्टिराशीर्वादाद् गुरोः पुनः ।
प्रभोश्च दानसन्मानात् कस्याऽपि किमपीष्यते ॥ ३२२ ॥

तस्मिन् यथासनाऽऽसीने मुनिः सद्धर्ममादिशत् ।
पूर्वभाष्यं हि साधूनामिदमेव जनं प्रति ॥ ३२३ ॥
सर्वावस्थास्वपि नरैः सर्वथा हितमिच्छुभिः ।
जीवरक्षामयः कार्यो धर्मः सर्वज्ञभाषितः ॥ ३२४ ॥
यतः—
धर्मो मोहमहारात्रिव्याकुलानां दिनोदयः ।
शुष्यतः सौख्यवृक्षस्य धर्म एव घनाघनः[1] ॥ ३२५ ॥
धर्म एव परो बन्धुर्धर्म एवोत्तमः प्रभुः ।
सहायो धर्म एवैको भवारण्ये शरीरिणाम् ३२६
किञ्चान्यत् क्षणिकं कष्टसाध्यं पापकरं परम् ।
षट्कर्ममर्म यत् किञ्चित् शुभं तद् धर्म एव हि ॥ ३२७ ॥
तथाहि—
भव्यैराराधिता सम्यगाकृष्टिं सुखसम्पदाम् ।
उच्चाटं विपदां स्तम्भं दुर्गतौ पतदङ्गिनाम् ॥ ३२८ ॥
मोहनं मोहराजस्य विद्वेषं पुनरेनसाम्[2] ।
वश्यतां कुरुते मुक्तेर्ध्रुवं सद्धर्मदेवता ॥ ३२९ ॥
( युग्मम् )
अहो ! नामाऽपि धर्मस्य सिद्धमन्त्र इवानघः ।
सम्यक् पुनरसौ ज्ञात्वा सेवितः कस्य नेष्टकृत् ? ॥३३०॥
सम्यग् धर्मस्तु सर्वज्ञादिष्टो जीवदयामयः ।
गृहस्थ-यतिभेदेन यथाशक्ति तमाश्रयेः ॥ ३३१ ॥
सकृद् दृष्टोऽपि सौख्याय धर्मः कलिमलावृतः ।
छन्नोऽभ्रपटलेनेव सूर्यः सूर्यव्रतस्य हि ॥ ३३२ ॥
इत्यादिदेशनामन्त्रैर्ध्वस्तमोहमहाविषः ।
सद्धर्मचेतनां प्राप्य विजयो व्रतमग्रहीत् ॥ ३३३ ॥
दत्त्वा दीक्षां गुरुर्धर्मशिक्षामेवं प्रदत्तवान् ।

---
१ मेघ । २ पापानाम् ।

अहो ! विजयराजर्षे ! हितमेकमनाः शृणु ॥ ३३४ ॥
सर्वत्रौचित्यवर्तित्वमुपेक्षा परदूषणे ।
परेणात्ते गुणे दोषे क्षमायां धर्मसंग्रहः ॥ ३३५ ॥
औचित्याच्चक्षुषि न्यस्तं श्रिये कज्जलमप्यहो ! ।
अनौचित्येन पादस्थं न कुण्डलमपीष्यते ॥ ३३६ ॥
विमृश्याय-व्ययं धर्मकार्यं कुर्यात् तथा बुधः ।
निश्चय-व्यवहाराभ्यां यथा बहुगुणं भवेत् ॥ ३३७ ॥
केवलं व्यवहारोऽन्तं नैति नद्योघगामिवत् ।
सदोत्सर्गोऽग्रगच्छेदाद् ऋजुगामीव नो मतः ॥ ३३८ ॥
यथैवाऽछिन्दता वृक्षं गृह्यते तस्य तत् फलम् ।
व्यवहारमनुल्लङ्घ्य ध्यातव्यो निश्चयस्तथा ॥ ३३९ ॥
निश्चयस्तत्त्वसारोऽपि व्यवहारेण निर्वहेत् ।
सकलस्याऽपि देवस्य रक्षा प्राहरिकैर्भवेत् ॥ ३४० ॥
निम्नोन्नतादिवैषम्यं विदित्वा सर्ववस्तुषु ।
मध्याङ्कव्यवहारेण सूत्रधारः प्रवर्तते ॥ ३४१ ॥
आत्मोत्कर्ष-परद्वेषपरे प्रायः कलौ जने ।
प्राप्य तत्त्वामृतं धीरः कलिं कृत्वा न हारयेत् ॥३४२॥
जिनेन निगृहीता ये रागद्वेषादयो हठात् ।
तान् ये पुष्णन्त्यसौ तेषां कथं नाथः प्रसीदति ? ॥३४३॥
अज्ञानाद् दृष्टिबन्धेन पदबन्धेन गेहिनः ।
रुध्यन्ते ते पुनः शोच्या ये रुद्धा बन्धनं विना ॥३४४॥
दूरेऽस्तु परदोषस्याऽऽदानं स्वपरतापकम् ।
धत्ते तत्स्पर्शमात्रेऽपि हृद् वाग् मालिन्यमुल्बणम् ॥३४५॥
सन्तो गुणप्रियास्तेन परणात्ते गुणे भृशम् ।
हृष्टाः, नीचास्तु दूयन्ते येन ते दोषवत्सलाः ॥ ३४६ ॥
कृतप्रतिकृता वृद्धिः स्यात् सम्बन्ध-विरोधयोः ।
परोक्तं तेन नो धत्ते योगी लाभनकोपमम् ॥ ३४७ ॥

महतां दूषणोद्धारादुपकारी खलः खलु ।
मुधा निदायकं सस्यक्षेत्रे को नाऽभिनन्दति ? ॥ ३४८ ॥
अर्थमिच्छन्ति सन्तोऽपि किन्त्वनौपाधिकत्वतः ।
स्वगुणख्यापनान्मध्याः नीचास्तु परदूषणात् ॥ ३४९ ॥
आस्तां स्वात्ताऽऽतपत्राभं स्वगुणोच्चारणं स्वयम् ।
अन्येनाऽपि गुणे ह्याते साधुर्नम्रो ह्रिया भवेत् ॥३५०॥
दूषयित्वाऽन्यवस्तूनि गुणारोपं स्ववस्तुनः ।
वणिग्धर्मेऽपि शौचात्मा न कुर्यात् किं पुनर्यतिः ? ॥३५१॥
उद्धर्तुं नैव शक्यन्ते सर्वतो भुवि कण्टकाः ।
स्वय तु शक्यते मोक्तु पादो निष्कण्टकक्षितौ ॥ ३५२ ॥
रक्ता देह-यशो-धर्मे पत्र-पुष्प-फलप्रभे ।
तदा त्वचिरनित्यस्थे स्वल्पधी-मध्यमो-त्तमाः ॥ ३५३ ॥
चक्षुः-श्रवणवैकल्यात् पापानां मोहनिद्रया ।
दिवाऽपि रजनी, साऽपि धर्मिणां दिवसायते ॥ ३५४ ॥
कलिकालकुवातेऽत्र वाति यस्य विनश्यति ।
न सस्यं, शस्यते लोके स एव पृथुभाग्यभूः ॥ ३५५ ॥
रजःक्रीडापरे लोके धूलिपर्वसमे कलौ ।
तद्वाक्यतिलकं मत्वा रक्षत्यात्मानमात्मवित् ॥ ३५६ ॥
सुषमत्वात् सुखोत्तारास्तता अपि कृतादयः ।
दुस्तरो विषमावर्तः स्वल्पोऽपि हि कलिः पुनः ॥३५७॥
पुरुषार्थद्विषं ज्ञात्वा प्रकृतिं स्वार्थतत्पराम् ।
धूर्तमैत्र्या ततः स्वार्थं यः करोति स चेतनः ॥३५८॥
अजीर्णं तपसः क्रोधो ज्ञानाजीर्णमहंकृतिः ।
परतप्तिः क्रियाजीर्णं जित्वा त्रीन् निर्वृतो भव ॥३५९॥
सद्यः प्रीतिकरं लोके वचो वाच्यं हितं मतम् ।
मूर्खः स्वमुखलालाभिरेव लूतेव बध्यते ॥ ३६० ॥

१ उच्छेदकम् । २ कृतयुगादय ।

सामकः कायिको दोषः प्रायोऽस्त्यर्थस्तु वाचिकः ।
यतः पश्चादवस्थापि व्यापकं च वचो जने ॥ ३६१ ॥
परार्थं व्यापयन् जीवो रवं कान्दविकायते ।
न तु स्थूलोपयोगोऽपि यस्य कः स्यात् ततोऽधमः ? ॥३६२॥
तुच्छा देहस्य सौन्दर्याद् रज्यन्ते मध्यमा गिराम् ।
चित्तस्य तूत्तमा जीवे सुदुर्लभं पुनस्त्रयम् ॥ ३६३ ॥
वीक्ष्य बाह्यान्नसंहर्षात् खेदितव्यं जनार्जने ।
रज्येत् त्वन्तर्मुखीभूय लक्ष्यं भित्त्वात्मपार्थिवः ॥ ३६४ ॥
शमसर्वस्वमादाय जितो मोहमहारिणा ।
धत्ते यस्तज्जयेऽमर्षं स योग्यो मुक्तिसम्पदः ॥ ३६५ ॥
यदि शत्रुजये वाञ्छा तदात्मानं विनिर्जय ।
अयमात्मा यतो येन तेन सर्वे द्विषो जिताः ॥ ३६६ ॥
बहिर्मुक्तोऽप्यमुक्तोऽन्तर्बद्धपक्षीव वल्गितः ।
निस्तुषोऽपि तिलस्तापकरोऽन्तःस्नेहधारणात् ॥३६७॥
एकत्र वसतां यस्य वाक्-काय-मनसां भवेत् ।
परस्परं पृथग्भावः कुतः तस्याऽऽत्मनः शिवम् ? ॥३६८॥
एकान्ते मुखरोधेन निर्लम्पटमतेः सतः ।
क्षणाद् मोहज्वरे क्षीणे भोगो भूरितरो भवेत् ॥ ३६९ ॥
यदाऽरिष्टकुलादन्यं स्वं विदित्वा तदुज्झति ।
तदा व्यक्तगुणो जीवः श्लाघ्यः स्यात् परपुष्टवत् ॥३७०॥
मध्येछाद्यगृहं बद्धभूमिकस्याऽतिभीर्यथा ।
प्रदीपेन तथा लोकमध्ये साधोरपि स्फुटम् ॥ ३७१ ॥
सदोषः पादधानीव प्रमादीवाऽङ्गरक्षकः ।
धर्मेऽशस्यमुनिर्बाढं न ग्राह्यस्तेन तं त्यजेत् ॥ ३७२ ॥
यतित्वं यः समादाय विरुद्धं चेष्टते कुधीः ।
आमपात्रमिव न्यायध्वस्तं कस्तं न निन्दति ? ॥३७३॥
पण्डितेन मनो लक्ष्ये शिक्षणीयं मुहुर्मुहुः ।

शैक्षवद् वञ्चयित्वैनं भवक्रीडारसं व्रजत् ॥ ३७४ ॥
घटी निरवधानस्य गणकस्येव मज्जति ।
युञ्ज्यात् तेन मनो लक्ष्ये धन्वीवाऽभ्यासतः शरम् ॥३७५॥
धीरः सचेतनो मौनी यो मार्गे यात्यसङ्गतः ।
बलिष्ठैरपि मोहाद्यैः स शिवं यात्यगञ्जितः ॥ ३७६ ॥
अज्ञानाज्जायते दुःखं सज्ञानाच्च सुखं पुनः ।
अभ्यस्यं तत् तथा तेन स्वात्मा ज्ञानमयो भवेत् ॥३७७॥
अल्पज्ञानेन नो शान्तिं याति दृप्तात्मनां मनः ।
स्तोकवृष्ट्या यतस्तप्तभूमिरूष्मायतेतराम् ॥ ३७८ ॥
बह्वासङ्गेन जीवस्याऽत्यासन्ना अपि पापिनः ।
ज्ञातास्तेन स्वयं यान्ति दोषा ह्रीता इव ध्रुवम् ॥ ३७९ ॥
विज्ञातभवतत्त्वस्य दुःखं शोकेऽपि नो भवेत् ।
ताम्रं स्वर्ण विदित्वा यो गृह्णीते तस्य कः क्रमः ? ॥३८०॥
पङ्गुरूपं नृणां भाग्यं व्यवसायोऽन्धसन्निभः ।
यथा सिद्धिस्तयोर्योगे तथा ज्ञान-चरित्रयोः ॥ ३८१ ॥
मैत्री-प्रमोद-कारुण्य-माध्यस्थ्याख्या महागुणाः ।
युक्तस्तैर्लभते मुक्तिं जीवोऽनन्तचतुष्टयम् ॥ ३८२ ॥
मैत्री परहिते चिन्ता परार्तिच्छेदधीः कृपा ।
मुदिता सद्गुणे तुष्टिर्माध्यस्थ्यं पाप्युपेक्षणम् ॥ ३८३ ॥
क्षिप्तोऽपि लघुकर्माधः स्यादुच्चैस्तुम्बवज्जले ।
अश्मवद् गुरुकर्मा तु नीतोऽप्यूर्ध्वमधो व्रजेत् ३८४ ॥
निर्माय स्वभवं चैत्यं आदिमध्यान्तसुन्दरम् ।
निर्वाहकलशं कोऽप्यारोप्य कीर्तिध्वजां नयेत् ॥ ३८५ ॥
इति तत्त्वोपदेशाख्यं मयाऽन्नं परिवेषितम् ।
तव दीक्षामये पात्रे तद् भुक्त्वा त्वं सुखी भव ॥ ३८६॥
किञ्चैतद् भवतो भद्र ! सन्महाव्रतपञ्चकम् ।

---

1 अभीत. ।

तथा तन्यं यथा तेने रोहिण्या व्रीहिपञ्चकम् ॥ ३८७ ॥
अथ तत्त्वामृतास्वादनिर्वृतो विजयो जगौ ।
प्रभो ! का रोहिणी नाम गुरुरप्येवमब्रवीत् ? ॥ ३८८ ॥
श्रेष्ठी दत्ताभिधः स्वीयचतुष्पुत्रवधूः पुरा ।
गृहकर्मनियोगाय समारेभे परीक्षितुम् ॥ ३८९ ॥
पितृवर्गं वधूनां स संमील्य स्वजनानपि ।
कृत्वा भक्तादिसत्कारं यथौचित्यं न्यवीविशत् ॥ ३९० ॥
तत्समक्षं समाकार्य ज्येष्ठानुक्रमतो वधूः ।
स व्रीहिपञ्चकं दत्त्वा प्रत्येकमिदमादिशत् ॥ ३९१ ॥
तथाऽमी व्रीहयो धार्या यथा मे यच्छतः पुनः ।
हे ! वध्वोऽर्पयतेत्युक्त्वा विससर्जाऽखिलं जनम् ॥३९२॥
ज्येष्ठया चिन्तितं वध्वा वृद्धोऽयं ग्रहिलोऽभवत् ।
इत्थं द्रव्यव्ययं कृत्वा यश्चकार विडम्बनाम् ॥ ३९३ ॥
ते तयेति बहिस्त्यक्ताः, शेषां मत्वा द्वितीयया ।
भक्षिताः, गोपितास्ते तु प्रयत्नेन तृतीयया ॥ ३९४ ॥
चतुर्थ्या तु स्वबन्धूनां समर्प्य व्रीहिपञ्चकम् ।
प्रतिवर्षं वापयित्वा निन्ये तच्च धिया ततिम् ॥ ३९५ ॥
अथेभ्यः पञ्चमे वर्षे संमील्य स्वजनान् पुनः ।
तानेव शपथं दत्त्वा वधूर्व्रीहीनयाचत ॥ ३९६ ॥
वध्वोऽपि कथयामासुः कुलीनत्वाद् यथास्थितम् ।
इभ्येनाऽभाणि युष्माभी रोष्यं भोः ! स्वजना न हि ॥३९७॥
तदेतासामभूदेवं बुद्धिः कर्मानुसारिणी ।
इत्युक्त्वा ता यथौचित्यं गृहकार्ये नियोजिताः ॥ ३९८ ॥
उज्झिका भस्म-पुञ्जादौ रसवत्यां च भक्षिका ।
भाण्डागारे रक्षिता तु गृहस्वाम्ये च रोहिणी ॥ ३९९ ॥

---

१ निर्माल्यदानम् । २ स्वामिनी ।

ततो यथा कनिष्ठाऽपि वधूर्गुर्वाज्ञया कणान् ।
वृद्धिमारोप्य सर्वासु सुमहत्त्वं समार्जयत् ॥ ४०० ॥
त्वयाऽपि हि महाभाग ! तथैव व्रतपञ्चकम् ।
सम्यग् नीत्वा परां वृद्धिमात्मा कार्यो महोदयः ॥ ४०१॥
तथेति प्रतिपद्यैतद् विजयो गुरुणा समम् ।
विहरत्युद्यतो धर्मे श्रुताऽध्ययनतत्परः ॥ ४०२ ॥
कालेन योग्यतां ज्ञात्वा न्यस्य तं स्वपदे गुरुः ।
बभाण वत्स ! सर्वेषु पदेष्वग्रमिदं पदम् ॥ ४०३ ॥
तत् सदैवाऽप्रमत्तेन शिष्याणां वाचनादिना ।
ऋणमोक्षस्त्वया कार्यो वृद्धिश्च जिनशासने ॥ ४०४ ॥
इति तं शिक्षयित्वाऽसौ चिन्ताभारच्युतो द्रुतम् ।
सम्मेतगिरिमारुह्य निर्वाणमगमद् गुरुः ॥ ४०५ ॥
विजयोऽप्यथ शिष्याणां वाचना-ऽध्यापनादिना ।
उद्युक्तो विहरन्नुच्चैर्महतीं महिमामगात् ॥ ४०६ ॥
बहुकाले गते शास्त्रश्रमेण विविधोत्तरैः ।
परे च स तथा भग्नो यथा वक्तुमपि स्थितः ॥ ४०७ ॥
चित्ते च चिन्तयत्येवं ध्रुमयोऽमी वरं जडाः ।
ये परप्रश्नशास्त्रार्तिविमुखाः सुखमासते ॥ ४०८ ॥
स्थविरैः[1] प्रेरितो ब्रूते कण्ठशोषेण किं नु भोः ! ? ।
तपस्येवादरः कार्यो यः क्रियावान् स पण्डितः ॥ ४०९ ॥
विनैवाऽध्ययनं सिद्धिर्लेभे माष-तुषादिभिः ।
ब्रुवन्नित्यादिदृष्टान्तं स्थविरैः स उपेक्षितः ॥४१०॥
दृताविव पयो विद्या किं करोति निराकृतौ ? ।
नरो नाऽतिमृदुर्नाऽतितीक्ष्णोऽन्नमिव शस्यते ॥ ४११ ॥
परबोधक्षमेणाऽपि केनाऽपि स्वं न बोध्यते ।
धवलीकृतविश्वोऽपि चन्द्रः स्वाङ्कं न शुभ्रयेत् ॥ ४१२ ॥

१ मुनिविशेषै ।

स कालेनाऽप्रतिक्रान्तो मृत्वा सौधर्ममासदत् ।
ततश्च्युत्वा पद्मपुरे धनश्रेष्ठिसुतोऽभवत् ४१३ ॥
धनशर्माऽभिधः सोऽथाऽऽरेभेऽध्यापयितुं क्षणे ।
किमपि प्राक्कृतज्ञानावज्ञादोषेण नैति तु ॥ ४१४ ॥
एवं पञ्चशतीसङ्ख्योपाध्यायैर्वीक्षितः परम् ।
नैकमप्यक्षरं हृद्याधातुं शेकेऽस्य वज्रवत् ॥ ४१५ ॥
ततो बहुधनस्तस्य तदेकतनयः पिता ।
दध्यौ विषादाद् हा ! कष्टं किमु कार्यं मयाऽधुना?॥४१६॥
यत उच्यते-
अजात-मृत-मूर्खेभ्यो मृता-ऽजातौ सुतौ वरम् ।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जडो भवेत् ॥ ४१७ ॥
देवानां भाषते पूजां करोति विविधौषधान् ।
मान्त्रिकानाह्वयत्यार्तो निमित्तज्ञांश्च पृच्छति ॥ ४१८ ॥
व्यर्थीभूतेषु सर्वेष्वप्युपायेषु धनोऽन्यदा ।
बहिः श्रुत्वाऽऽगतं साधुं तत्र पुत्रयुतो ययौ ॥ ४१९ ॥
नीचैर्नत्वा मुनेः पादौ पप्रच्छ कथय प्रभो ! ।
प्राक् कर्म किं कृतं येन मत्पुत्रः प्रस्तरोऽजनि ॥४२०॥
मुनिः पूर्वकृतज्ञानावज्ञाव्यतिकरं जगौ ।
तन्निशम्याऽभवज्जातिस्मरणं धनशर्मणः ॥ ४२१ ॥
मुनिं नत्वाऽवदच्चैवं प्रभो ! सत्यं तवोदितम् ।
भीतोऽहं संप्रति ज्ञानावरणं गलिता कथम् ? ॥ ४२२ ॥
मुनिराह महाभाग ! ज्ञानावरणकर्मणः ।
नाशः स्याज् ज्ञानदानेन तत् साक्षाद् घटते न ते ॥४२३॥
त्वज् ज्ञान-ज्ञानिनां बाढं बहुमानं कुरुष्व भोः ! ।
श्रुतं च पठतां भक्त-पुस्तकाद्यैरुपग्रहम् ॥४२४॥
तन्निशम्य महात्माऽसौ पश्चात्तापं परं दधत् ।

१ शक्लृट् शक्तौ । २ पाषाण., जड इति यावत् ।

स ज्ञानोपग्रहे सर्वप्रयत्नेन प्रवृत्तवान् ॥ ४२५ ॥
परिपूर्णमनुष्यायुः स सौधर्मे सुरोऽभवत् ।
तच्च्युतः सुकुले जातो धनमित्राऽभिधो नरः ॥ ४२६ ॥
तत्राऽपि सावशेषत्वाज् ज्ञानावरणकर्मणः ।
पठतोऽपि भृशं किञ्चिन्नैति तस्य कथञ्चन ॥ ४२७ ॥
ईहापोहं स वैराग्यात् कुर्वाणो जातिमस्मरत् ।
ततः प्राग्वत् श्रुतज्ञानोपष्टम्भं कर्तुमुद्यतः ॥ ४२८ ॥
दुष्कृतं गर्हतस्तस्य संवेगादतिदुस्तरम् ।
ज्ञानावरणमुच्छिन्नं प्रव्रज्यां च प्रपन्नवान् ॥ ४२९ ॥
साङ्गोपाङ्गे श्रुतेऽधीती स्मारं स्मारं पुरा कृतम् ।
ज्ञानदाने सदोद्युक्तः केवलज्ञानमासदत् ॥ ४३० ॥
तत्रासन्नसुरैश्चक्रे दुन्दुभिध्वानपूर्वकम् ।
स्वर्णपद्मं तदाऽऽसीनः केवली धर्ममादिशत् ॥ ४३१ ॥
इह सर्वः सुखस्यार्थी सुखं सच्चरणाद् भवेत् ।
सदाचारः पुनर्ज्ञानाज् ज्ञानं ज्ञानप्रदानतः ॥ ४३२ ॥
ज्ञानदानं च सच्छास्त्रव्याख्या-ऽध्यापन-वाचनैः ।
अधीयानेषु साहाय्याज् ज्ञानोपकरणार्पणैः ॥ ४३३ ॥
तदत्र प्रयतैर्भाव्यं न कार्या ज्ञानहीलना ।
ज्ञानावज्ञानतो दुःखं मयाऽप्यासादितं पुरा ॥४३४॥
तत् श्रुत्वा तं नमस्कर्तुमागतैर्देव-मानवैः ।
स पृष्टो निजवृत्तान्तमाचचक्षे प्रमादजम् ॥ ४३५ ॥
इत्थं तस्योपदेशेन बहवो भव्यजन्तवः ।
प्रबुद्धा ज्ञानमाराध्य क्रमादापुः परं पदम् ॥ ४३६ ॥
इत्यसौ ज्ञानदानेन स्वमुद्दध्रे परानपि ।
पश्चादपि चिरस्थायि तज् ज्येष्ठं तेन कथ्यते ॥४३७॥
ज्ञानं तु तदुपादेयं यत् स्यात् स्वस्य परस्य च ।
निर्व्याघातप्रकाशार्थमभ्रदीपालयोपमम् ॥ ४३८ ॥

ज्ञानदानस्य माहात्म्यमित्थं स्व-परयोर्हितम् ।
वर्णितं साम्प्रतं जीवाऽभयदानं प्रपञ्च्यते ॥ ४३९ ॥
सर्वे जीवितुमिच्छन्ति जीवास्तद्भयं ततः ।
ध्रुवं त्रिभुवनैश्वर्यदानादप्यतिरिच्यते ॥ ४४० ॥
ग्रन्थान्तरेऽप्युच्यते—
नातो भूयस्तरो धर्मः पृथिव्यामस्ति कश्चन ।
प्राणिनां भयभीतानामभयं यत् प्रदीयते ॥ ४४१ ॥
एकतः क्रतवः सर्वे समाप्तवरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥ ४४२ ॥
जीवितव्याभयं प्राप्य हीनदीनोऽपि सम्मदात् ।
मन्यते स्वं त्रिलोकीशं दृष्टान्तोऽत्र वसन्तकः ॥ ४४३ ॥
तथाहि-
श्रीवसन्तपुरे भूमिमण्डलाखण्डलः पुरा ।
द्रुमोऽभून्नृपतिस्तेजोवज्रक्षपितभूमिभृत् ॥ ४४४ ॥
तस्य प्रियङ्करा नाम राज्ञी पञ्चशताग्रणीः ।
दयिता निजरूपेण निर्जितामरसुन्दरी ॥ ४४५ ॥
तेन राज्ञा भुवं नीत्या रक्षता सुखितात्मनाम् ।
दिवो वार्ताऽपि लोकानां विसस्मार कुतोऽर्थिता ? ॥४४६॥
अन्यदा तत्र यामिन्यां कोऽपि चौरः सलोप्त्रकः[1] ।
दृष्टो बद्धस्तलारक्षैर्निन्ये च नृपतेः पुरः ॥ ४४७ ॥
तं निरीक्ष्य सभासीनो नृपः क्रौर्यस्पृशा दृशा ।
पुनः प्रसन्नया किञ्चित् तदङ्गे चाङ्गिमेक्षणात् ॥ ४४८ ॥
विधाप्य शिथिलं बन्धं प्रोचे विस्मितमानसः ।
वद रे ! तव को देशः का जातिः किमु नाम च ? ॥४४९॥
वयस्येवंविधे नव्ये वपुराकारलक्षणम्[2] ।
विरुद्धमिदमारेभे चौरकर्म च किं त्वया ? ॥ ४५० ॥

---

१ चौर्यधनसहित । २ शरीराकृतिकलङ्कम् ।

भयभ्रान्तेक्षणः किञ्चित् किञ्चिदाश्वस्तमानसः ।
पदे पदे स्खलद्वाक्यः स जगाद तदादितः ॥ ४५१ ॥
देव ! विन्ध्यपुरे विन्ध्यभूपतेः प्रीतिसद्मनः ।
श्रेष्ठिनो वसुदत्तस्य वसन्ताख्योऽहमङ्गजः ॥ ४५२ ॥
लालितः पालितोऽत्यन्तं पाठितः परिणायितः ।
तन्न यन्न सुखं प्रापमहं तातप्रसादतः ॥ ४५३ ॥
दुर्दैववशतः किन्तु द्यूतव्यसनवानहम् ।
अभवं तेन दुःखार्तपितृभिः स्वजनैर्जनैः ॥ ४५४ ॥
नितान्तं शिक्ष्यमाणोऽपि प्रत्यासन्नतयाऽऽपदः ।
न द्यूतममुचं नीरे मिमज्जिषुरिवोपलम् ॥ ४५५ ॥
सर्वदोषनिवासेन सर्वाऽनर्थविधायिना ।
तेन सर्वविरोधेन व्यसनेन प्रणोदितः ॥ ४५६ ॥
वञ्चयित्वा दृशं गेहाद् बहिर्द्रव्यं शनैः शनैः ।
नेतुमारब्धवानस्मि प्रस्थानकमिवात्मनः ॥ ४५७ ॥
ततो राजकुले गत्वा कृष्णाक्षरविधिक्रमात् ।
तत् तादृग् वल्लभोऽप्येष पित्रा निष्कासितो गृहात् ॥४५८॥
तेजसेवाऽथ तेनाऽहं पित्रा मुक्तो गतद्युतिः ।
निरङ्कुशतया स्वैरं भ्रमामि जगतीतले ॥ ४५९ ॥
भिक्षां प्रतिगृहं याचे शून्यदेवकुले शये ।
पापकृत्याच्च नो शङ्के द्यूतेन च पुना रमे ॥ ४६० ॥
एवं हतमतिर्यावन्नगरेऽत्र समागमम् ।
दृष्ट्वा च मुदितं लोकं ममापीच्छा सुखेऽभवत् ॥४६१॥
तच्च द्रव्यं विना न स्यान्नष्टोपायान्तरो निशि ।
तत् प्रवृत्तोऽत्र चौर्याय धृतश्च तव पूरुषैः ॥ ४६२ ॥
इत्थमात्मीयवृत्तान्तो यथावत् कथितो मया ।
त्वमेवाऽतः परं दैवं कुरु नाथ ! यथोचितम् ॥ ४६३ ॥
ईषदार्द्रमनस्कोऽपि तत्स्वरूपनिरूपणात् ।

परं चौरो न मोक्तव्य इत्यभिग्रहतो नृपः ॥ ४६४ ॥
आदिदेश तलारक्षं शूलारोपाय तस्य सः ।
यावच्च सहसा तेन चालितस्तावदन्तरे ॥ ४६५ ॥
वामपक्षासनासीना पट्टराज्ञी प्रियङ्करा ।
शरण्यरहितं वीक्ष्य तं दीनवचनाननम् ॥ ४६६ ॥
हा ! निराशो वराकोऽस्तं मा गादिति दयावशात् ।
नृपं विज्ञपयामास देवाऽद्यायं ममाऽर्प्यताम् ॥४६७॥
येनाऽस्य तनयस्येव संसारसुखकौतुकम् ।
दिनैकं दर्शयित्वाऽस्य पूरयामि मनोरथम् ॥ ४६८ ॥
अथाऽनुल्लङ्घ्यवाक्यत्वादनुज्ञाता नृपेण सा ।
बन्धमुच्छिद्य तं निन्ये निजावासे वसन्तकम् ॥ ४६९ ॥
तदाऽऽदिष्टाः परीवारजनाः स्नानादिहेतवे ।
तत्र तं शतपाकाद्यैस्तैलैरभ्यज्य सादरम् ॥ ४७० ॥
अङ्गं सुगन्धचूर्णेनोद्वर्त्य लालित्यकोविदाः ।
स्नानपीठे च विन्यस्य सुवर्णकलशाऽऽहितैः ॥ ४७१ ॥
उष्णैः कदुष्णैः पुष्पाढ्यैः स्वच्छैश्च सलिलैः क्रमात् ।
स्नपयामासुरुद्भूतशङ्खनिर्घोषपूर्वकम् ॥ ४७२ ॥
अङ्गं काषायवस्त्रेण रूक्षयित्वाऽच्छवाससी ।
कदलीगर्भसङ्काशे परिधाप्य सवेणिकें ॥ ४७३ ॥
असितागुरुधूमेन धूपयित्वा शिरोरुहान् ।
धम्मिलं विदधुर्मौलौ पुष्पप्राग्भारभासुरम् ४७४
सचन्दनरसेनाङ्गं विलिप्याभरणोत्करम् ।
दिव्यं निवेशयामासुर्यथास्थानमनाकुलाः ॥ ४७५ ॥
स्वर्णशृङ्खलके मुक्तासरिके पाणि पादयोः ।
बाह्वोः सवीरवलये केयूरेऽङ्गुलिषूर्मिकाः ॥ ४७६ ॥
सद्रत्नकण्ठकं कण्ठे हारांत्रिसरकादि च ।
कर्णयोः कुण्डलं मूर्ध्नि मुकुटं चाऽलिके घटीम् ॥ ४७७ ॥

इत्याद्यशेषं निर्माप्योपवेश्य विशदासने ।
स्वर्णधारस्थसुस्थालकच्चोलाद्यममण्डयत् ॥ ४७८ ॥
शुष्कार्द्रफलभक्ष्याणि पक्वान्नं बहुवर्णकम् ।
शालि-सूपाद्यमाधुर्यघृतपूरादिकं क्रमात् ॥ ४७९ ॥
दध्योदनं चेत्यखिलं परिवेष्य सगौरवम् ।
स्वयं पार्श्वस्थिता राज्ञी भोजनं तमकारयत् ॥ ४८० ॥
स्वच्छशीतलसद्गन्धैराचम्य मधुरैर्जलैः ।
पिष्टिका-हस्तचीराभ्यां रूक्षीकृत्य करद्वयम् ॥ ४८१ ॥
पुष्पद्रवरसस्वच्छश्रीखण्डेनोपलिप्य च ।
कर्पूरमिश्रताम्बूलसमाननपुरस्सरम् ॥ ४८२ ॥
निषण्णस्याऽस्य पल्यङ्के चेटीजनपरावृते ।
पुरश्चित्रकथाकाव्यविनोदान् देव्यचीकरत् ॥ ४८३ ॥
(विशेषकम्)

अथाऽपराह्णसमये राज्ञ्यादेशेन किङ्करैः ।
वरं तुरङ्गमारोप्य स्वर्णपर्याणभूषणम् ॥ ४८४ ॥
पट्टसूत्रमयीं वल्गां दधानः करपल्लवे ।
उपरिष्टाद् धृतोल्लासिमायूरातपवारणः ॥ ४८५ ॥
विष्वक् परिवृतो यत्नात् शतसङ्ख्यामितैर्भटैः ।
पुरः प्रारब्धसङ्गीतः कुतूहलकरैर्नरैः ॥ ४८६ ॥
सपञ्चशब्दनिर्घोषः पठन्मङ्गलपाठकः ।
उत्फुल्लनयनैर्लोकैर्वीक्ष्यमाणः सकौतुकम् ॥ ४८७ ॥
विपणिश्रेणिमार्गेण मन्दं मन्दं च सञ्चरन् ।
दर्शितानेकद्रष्टव्यः स नीत्वा राजमन्दिरम् ॥ ४८८ ॥
उच्चैर्वातायनस्थाय नृपाय विहितानतिः ।
आसन्नं बहिरावासमानिन्ये दिवसात्यये ॥ ४८९ ॥
( षड्भिः कुलकम् )

तत्र मातङ्गगीतेन दास-दासीकुतूहलैः ।

निर्मापितबहुप्रीतिः शर्वरीं समवाहयत् ॥ ४९० ॥
प्रातरुत्सारितोपाधिः कारितः प्राग्गवेषभृत् ।
इन्द्रकेतुरिव भ्रष्टो नीत्वा राज्ञः समर्पितः ॥ ४९१ ॥
तं दण्डपाशिकस्याऽथ यावदर्पयते नृपः ।
तावद् द्वितीयया राज्ञ्या तथैवाऽयं प्रयाचितः ॥ ४९२ ॥
अन्याभिरपि राज्ञीभिरेकैकदिवसं क्रमात् ।
नृपं विज्ञप्य याचित्वा तं प्रसादे महाग्रहात् ॥ ४९३ ॥
सापत्न्यभावसंजातस्पर्धावर्धिष्णुसंमदात् ।
कृतभूरितरद्रव्यव्ययभावाऽधिकाधिकैः ॥ ४९४ ॥
दोगुन्दुगसुराभासं विधाप्य विविधोत्सवैः ।
पूरितं कौतुकं स्वस्य मनसस्तस्य नो पुनः ॥ ४९५ ॥
अथ तस्य नृपस्याऽस्ति राज्ञी पञ्चशताऽन्तिमा ।
पत्नी शीलमती नाम पालयन्ती कुलव्रतम् ॥ ४९६ ॥
साऽल्पस्थितिपरीवारा निजावासं गता सदा ।
स्वस्यैव कर्मणो दोषं मन्यते न तु भूपतेः ॥ ४९७ ॥
आस्तामन्यदलङ्कार-वसनाद्यं प्रसादजम् ।
विवाहानन्तरं राज्ञा दृष्टा दृष्ट्याऽपि नैव सा ॥ ४९८ ॥
न हि मे मन्दभाग्यायाः काऽपि स्पर्धाऽत्र विद्यते ।
अन्याभिः सह राज्ञीभिः किन्तु पङ्क्तिक्रमागतम् ॥४९९॥
यद्येतदपि नाऽऽधास्ये न लप्स्ये गणनामपि ।
हृदये संप्रधार्यैवं साऽपि भूपं व्यजिज्ञपत् ॥ ५०० ॥
( युग्मम् )
देव ! नाऽऽबोधितः स्वामी क्वापि कार्ये पुरा मया ।
चौरस्य पुनरस्याऽर्थे कर्तव्यं कथयामि यत् ॥ ५०१ ॥
तदाकर्ण्याऽथ तां स्मृत्वा तज् ज्ञात्वा गुणगौरवम् ।
उद्भिन्नपुलकः प्रीत्या मेने सर्वं धराधवः ॥ ५०२ ॥

साऽपि तं स्वगृहे नीत्वा संक्षेपात् स्नान-भोजनम् ।
कारयित्वाऽल्पवस्त्राणि परिधाप्याऽभयं ददौ ॥ ५०३ ॥
स तु त्रिभुवनैश्वर्यलाभादप्यधिकं तदा ।
जीवितव्याऽभयं प्राप्य न माति स्म मुदा हृदि ॥ ५०४ ॥
गते तस्मिन्नहोरात्रे प्रातः शीलमती स्वयम् ।
तं धर्मतनयं कृत्वा पुरो राजकुलं ययौ ॥ ५०५ ॥
सोऽपि तत्र पुरो राज्ञो मृगेन्द्रासनवर्तिनः ।
समग्रेऽपि सभालोके कौतुकोदञ्चिताननेे ॥ ५०६ ॥
एषा याचिष्यतेऽस्मत्तोऽप्यधिकं किमितीर्ष्यया ।
यथास्थानं निविष्टासु राज्ञीषु निखिलास्वपि ॥ ५०७ ॥
वल्गनोल्लुलने[1] नृत्तं सिंहनादमथोच्चकैः ।
हर्षेण कुर्वन् नो केषामाचिक्षेप मनो-दृशः ? ॥ ५०८ ॥
अन्यादृशमिवाऽथैनं वीक्ष्य राजाऽपि विस्मितः ।
पप्रच्छ वद रे ! सत्यं किं कारणमिदं यतः ॥ ५०९ ॥
एतावद्दिवसान् यावद् मण्डितोऽपि महर्द्धिभिः ।
विषण्णवदनच्छायो मषीलिप्त इवाऽभवः ? ॥ ५१० ॥
अद्य तु स्वल्पवेषोऽपि पादचार्यपि हर्षितः ।
कुर्वाणो विविधां चेष्टामुन्मत्त इवेक्ष्यसे ॥ ५११ ॥
सोऽप्याह श्रूयतां देव ! शूलारोपाक्षरैस्तव ।
कर्णप्रविष्टैर्विषवत् सर्वं शून्यं ममाऽभवत् ॥ ५१२ ॥
ततोऽहं भ्रान्तचित्तत्वान्मेनेऽन्नं क्षात्रसंन्निभम् ।
जलं च विषसंवादि सौधं यमगृहोपमम् ॥ ५१३ ॥
पल्यङ्कं शल्यसङ्काशं चन्दनं चूर्णसोदरम् ।
तुरङ्गं रासभाकारं श्रीकरीं[2] जीर्णसूर्पवत् ॥ ५१४ ॥
शृङ्खलानिगडप्रायं पाणिपादविभूषणम् ।
हारं शरावमालाभं मुकुटं बिल्वबन्धनम् ॥ ५१५ ॥

---
१ क्षेत्रक्षेप्यो मल्ल । २ सुखासनविशेष. ।

डिम्भकल्पं परीवारं तलारक्षसमान् भटान् ।
पञ्चशब्दनिनादं च विषमानकदारुणम् ॥ ५१६ ॥
अन्यायघोषणाकारि तुल्यं वन्दिजनं पुनः ।
भ्रमयित्वा वधस्थाननयनाभमिहागतम् ॥ ५१७ ॥
भविष्यन्मरणाशङ्काशङ्कुकीलितचेतसः ।
एकां मे ध्यायतः शूलां तत् सर्वं तन्मयायितम् ॥५१८॥
अद्य देव ! पुनर्विश्वपावन्या मूर्तिगङ्गया ।
धर्ममात्रा मम स्त्रीषु सुगृहीताभिधानया ॥ ५१९ ॥
श्रीशीलमत्या दुर्देयं जीवितव्याऽभयं ददे ।
तेन सर्वं जगत् पूर्णं पश्याम्यधिवसामि च ॥ ५२० ॥
तत् श्रुत्वा भूभुजा चैक्षि तस्या वदनपङ्कजम् ।
साऽप्यूचे श्रीमुखेनाऽस्मै दीयतामभयं विभो ! ॥ ५२१ ॥
देवि ! प्रदत्तमेवेदं किमप्यन्यन्निवेद्यताम् ।
साऽवोचत् त्वत्प्रसादेन न्यूनं किमपि नो मम ॥ ५२२ ॥
अहो ! गाम्भीर्यमेतस्या अहो ! निर्लोभतागुणः ।
अहो ! सत्याः परं दाक्ष्यमहो ! जीवदयालुता ॥ ५२३ ॥
अहो ! वचनमाधुर्यमहो ! काऽपि प्रसन्नता ।
ध्रुवमस्याः प्रभावेन मम राज्यं प्रवर्धते ॥ ५२४ ॥
इति तोषान्निवेश्यात्मवामाङ्के तां नृपालसाम् ।
पट्टराज्ञीपदे सद्यः स्थापयामास भूपतिः ॥ ५२५ ॥
पश्चिमद्वारगामिन्यो नद्यः सर्वा नदीपतेः ।
प्रवेशं लभते पूर्वद्वारि गङ्गा शुचिः पुनः ॥ ५२६ ॥
पत्युः प्रसादमासाद्य सच्चारित्रजलेन सा ।
कश्मलं क्षालयामास सपत्नीमनसामपि ॥ ५२७ ॥
एवं विख्यातवृत्तान्ता विश्वस्याऽपि महार्घ्यताम् ।
गता सुगतिसौख्यं च जीवरक्षाप्रभावतः ॥ ५२८ ॥

---

१ तन्मयमिवाचरितम् ।

वसन्तकोऽपि विख्यातो देव्या धर्मसुतत्त्वतः ।
राजप्रसादसंजातः समृद्धिभरभासुरः ॥५२९॥
विविधां च विचिन्त्यैवं सुख-दुःखविडम्बनाम् ।
सदाचाररतो नित्यं वासरानत्यवाहयत् ॥५३०॥
( युग्मम् )
अन्यदा सुगुरोः पार्श्वे श्रुत्वा पूर्वभवे कृतम् ।
व्रतस्य ग्रहणं भङ्गं संधानं च तथात्मनि ॥५३१॥
जातशुद्धपरीणामो गृहिधर्मं यथाविधि ।
प्रपन्नाणुव्रतः सम्यक् पालयित्वा दिवं ययौ ॥५३२॥
अन्नो-पाश्रय-भैषज्य-वस्त्र-पात्रादिदानतः ।
उपष्टम्भोऽनेकधाऽत्र चाऽन्नदानं विशिष्यते ॥५३३॥
अन्नदातुरधस्तीर्थकरोऽपि कुरुते करम् ।
तच्च दानं भवेत् पात्रे दत्तं बहुफलं नृणाम् ॥ ५३४ ॥
यतः–
पात्रं क्षेत्रं दादि[1]र्वप्ता धनं बीजं शमो जलम् ।
वाक्यं वातो यशः पुष्पं फलं पुण्यं सुखं रसाः ॥ ५३५ ॥
खलोऽपि गवि दुग्धं स्याद् दुग्धमप्युरगे विषम् ।
पात्राऽपात्रविशेषेण तत् पात्रे दानमुत्तमम् ॥ ५३६ ॥
पात्रं च त्रिविधं तत्र समताश्रीविभूषिताः ।
ज्ञान-दर्शन-चारित्ररूपरत्नत्रयान्विताः ॥ ५३७ ॥
प्रशान्ततनु-वाक्-चित्ता भैक्ष्यमात्रोपजीविनः ।
रताः परहिते नित्यं यतयः पात्रमुत्तमम् ॥ ५३८ ॥
सम्यग् दर्शनवन्तस्तु देशचारित्रयोगिनः ।
यतिधर्मेच्छवः पात्रं मध्यमं गृहमेधिनः ॥ ५३९ ॥
सम्यक्त्वमात्रसंतुष्टा व्रतशीलेषु निःस्पृहाः ।
तीर्थप्रभावनोद्युक्तास्तृतीयं पात्रमुच्यते ॥ ५४० ॥

---

१ दाता ।

इयं मोक्षफले दाने पात्राऽपात्रविचारणा ।
दयादानं च सर्वज्ञैः कुत्राऽपि न निषिध्यते ॥ ५४१ ॥
यतः-
वर्षन् क्षारार्णवेऽप्यब्दो मुक्तात्मा[1] क्काऽपि जायते ।
सततं ददतो दातुः पात्रयोगोऽपि संभवेत् ॥ ५४२ ॥
तच्च न्यायार्जितं क्षेत्रकालभावैरदूषितम् ।
देयं धर्मार्थिना दानं विना कीर्त्यादिकारणम् ॥ ५४३ ॥
ग्रन्थान्तरेऽप्युक्तम्-
दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
क्षेत्रे काले च भावे च तद्दानं सात्त्विकं स्मृतम् ॥ ५४४ ॥
यत्तु प्रत्युपकाराय फलमुद्दिश्य वा पुनः ।
दीयते हि परिक्लिष्टं तद् दानं राजसं स्मृतम् ॥ ५४५ ॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तद् दानं तामसं स्मृतम् ॥ ५४६ ॥
मुग्धत्वेनाऽपि सिद्ध्यै स्याद् दानं दत्तं महात्मने ।
इत्यर्थे चन्द्रभान्वाद्याः सुन्दरश्च निदर्शनम् ॥ ५४७ ॥
तथाहि-
पुरे जयपुराह्वाने राज्ये जयनरेशितुः ।
महेभ्यतनयाः सन्ति चत्वारो मित्रतां गताः ॥ ५४८ ॥
आद्यश्चन्द्रस्तथा भानुर्भीमः कृष्णश्च ते मिथः ।
एकीभूता इव स्नेहात् पूर्वर्द्ध्या विलसन्त्यलम् ॥ ५४९॥
अन्यदाऽचिन्तयच्चन्द्रो वयं न खलु सत्तमाः ।
बाल्ये हि युज्यते भोक्तुं मातुः स्तन्यं पितुर्धनम् ॥५५०॥
नीत्या यः स्वभुजोपात्तं वित्तं भुङ्क्ते ददाति च ।
उदारः स हि विख्यातोऽधमो मूलहरः पुनः ॥ ५५१ ॥

---

१ मौक्तिकस्वरूपः ।

तद् धनोपार्जनोपायः कार्य एवाधुना यतः ।
आयाऽभावे व्ययं कुर्वन् मेरुरप्यपचीयते ॥ ५५२ ॥
उक्तं च–
अनायः व्ययकर्ता च अनाथः कलहप्रियः ।
आतुरः सर्वभक्षी च नरः शीघ्रं विनश्यति ॥ ५५३ ॥
इत्यादि चिन्तयित्वाऽसौ संकल्पं सुहृदां निजम् ।
आचख्यौ तच्च सर्वेषामभवत् सम्मतं वचः ॥ ५५४ ॥
निर्णीतं च यथाऽम्भोधिसुता श्रीस्तेन वारिधेः ।
विना सेवामियं न स्यादतः सेव्यः स एव हि ॥५५५॥
इति तैः स्वस्वपितॄणां कथितं पितृभिश्च ते ।
प्रतिषिद्धा यथा वत्साः ! न माति विभवो गृहे ॥५५६॥
यूयं मुग्धा जनो धूर्त्तः संदिग्धः कुशलागमः ।
विषमाः परदेशाश्चाऽब्धिवाणिज्यं विशेषतः ॥ ५५७ ॥
इत्यादियुक्तिभिर्बाढं वारिता अपि ते सुताः ।
सर्वे संवोढुमारब्धाः समुद्रगमनोत्सुकाः ॥ ५५८ ॥
भृतं प्रवहणं भाण्डैः प्रयाणदिनमागतम् ।
अथाऽपशकुनश्रेणी प्रावर्तिष्ट समन्ततः ॥ ५५९ ॥
अदृष्टव्यानि पश्यन्ति शृण्वन्त्यपरवान् बहून् ।
उद्दण्डो मरुदुद्धूतश्छादितं रजसा नभः ॥ ५६० ॥
ततः समुदितीभूय स्वजनैर्वारितोऽखिलैः ।
चन्द्रस्तानाह किं यूयं कुरुतेत्थमधीरताम् ? ॥ ५६१ ॥
सकाशाद् यस्य यद् येन प्राप्तव्यं जायते यदा ।
प्राप्यते खलु तत् तेन शकुनाऽशकुनः किमु ? ॥ ५६२ ॥
इत्येकाग्रमनाश्चन्द्रः समित्रः प्रस्थितोऽम्बुधौ ।
मार्गेऽस्य गच्छतोऽन्येद्युरुत्पाताः सहसाऽभवन् ॥ ५६३ ॥
छादितं गगनं मेघैर्गर्जद्भिः सह वार्धिना ।
मिथश्चास्फाल्य दुर्वाताश्चक्रुर्यानानि खण्डशः ॥ ५६४ ॥

छिन्नसूत्रस्य हारस्य मुक्ता इव दिशोदिशम् ।
ययुः सर्वेऽपि ते लोकाः केऽपि तत्रैव संस्थिताः ॥५६५॥
चन्द्रस्तु फलकाधारादासाद्य जलधेस्तटम् ।
चिन्तयामास हा ! कष्टे क्षिप्तः सर्वो जनो मया ॥५६६॥
पितृस्वजनलोकनां तदा वारयतां हठात् ।
यदिदं कार्यमारेभे दृष्टं सपदि तत्फलम् ॥ ५६७ ॥
स्फुरत्संतापपापेनाऽधुना मे जीवितेन किम् ? ।
ध्यात्वेति वस्त्रपाशेन बद्धात्मा लम्बितस्तरौ ॥ ५६८ ॥
अथ कोऽपि द्विजः पाशं छित्वा क्षुरिकयाऽब्रवीत् ।
आत्मघातस्त्वयाऽऽरेभे किमहो ! शास्त्रदूषितः ? ॥ ५६९ ॥
मर्तव्यमेव किंवा चेत् तदासन्नगिराविह ।
कामुकं विद्यते तीर्थं तत्र गत्वोज्झ[1] जीवितम् ॥ ५७० ॥
तच्च कृत्वा ततश्चन्द्रो यावदुल्लम्बते गिरौ ।
मा साहसमिति प्रोचे तावत् कोऽपि स्फुटाक्षरम् ५७१ ॥
ततश्चन्द्रो दिशालोकं कृत्वाऽपश्यन्न किञ्चन ।
पुनरुल्लम्बितुं लग्नः पुरस्तदशृणोद् वचः ॥ ५७२ ॥
एवं तृतीयवेलायां निषिद्धेन प्रयत्नतः ।
दृष्टो निरीक्षमाणेन पादपान्तरितो मुनिः ॥ ५७३ ॥
नत्वा पृष्टश्च किं नाथ ! मन्दभाग्यस्य मेऽधुना ।
नैव संपद्यते मृत्युरपि साधुरथाऽब्रवीत् ॥ ५७४ ॥
अनीतिमृत्युना तेन स्त्रीजनस्योचितेन किम् ? ।
जीवन्नेवेक्षते भद्रं दृष्टान्तोऽत्राहमेव भोः ! ॥ ५७५ ॥
तथाहि-
श्रीमङ्गलपुरे राज्ञश्चन्द्रसेनस्य नीतिवित् ।
भानुनामाऽभवद् मन्त्री तद्भार्या च सरस्वती ॥५७६॥
रथाङ्गयोरिव तयोस्तथा प्रीतिर्मिथोऽभवत् ।

---
1 त्यज ।

यथा निष्क्रत्रिमस्नेहविधौ जज्ञे निदर्शनम् ॥ ५७७ ॥
पल्यङ्कादुत्थिताऽन्येद्यू रुदती भर्तृभानुना ।
पृष्टा प्रिये ! किमेतत् साऽवदन्नाथ ! न किञ्चन ? ॥५७८॥
आग्रहेण पुनः पृष्टाऽऽचख्यौ स्वप्नेऽद्य यद् मया ।
प्रिय ! दृष्टोऽसि संभाषं कुर्वाणोऽन्यस्त्रिया सह ॥ ५७९ ॥
तत् श्रुत्वा सचित्रो दध्यौ सपत्नीं वीक्ष्य याऽजनि ।
इत्थं स्वप्नेऽपि सा साक्षाद् दृष्टा कीदृग् भविष्यति ॥५८०॥
पत्नी तदियमेकैव यावज्जीवं न मेऽपरा ।
तयोः स्नेहप्रकर्षोऽयं प्रसिद्धिमगमत्तराम् ॥ ५८१ ॥
अन्यदा सचिवे राज्यभारमारोप्य भूपतिः ।
दूरं कटकयात्रायां गतस्तत्राऽस्ति सुस्थितः ॥ ५८२ ॥
दम्पतीविषये वार्ता प्रस्तावे यावदेकदा ।
कोऽपि राज्ञः पुरोऽशंसत् स्वरूपं भानुमन्त्रिणः ॥ ५८३॥
परीक्षार्थं ततो राज्ञा कार्यमुद्दिश्य मन्त्रिणम् ।
आकार्य स्वान्तिके प्रैषीन्नरं जयपुरे द्रुतम् ॥ ५८४ ॥
तेन तत्र नृपादेशादलीका भानुमन्त्रिणः ।
विपत्तिविषया वार्ता सदुःखेनेव निर्मिता ॥ ५८५ ॥
वज्रघातसमं वाक्यं तन्निशम्य सरस्वती ।
सञ्जातहृदयस्फोटा सहसा पञ्चतां गता ५८६ ॥
तद् नरः कटके गत्वा नरेन्द्राय न्यवेदयत् ।
नृपोऽप्यत्याकुलश्चित्ते दध्यौ धिक् किं कृतं मया ? ॥५८७॥
स्त्रीघातपातकादस्माद् मोक्ष्ये कथमहं हहा ! ? ।
हास्येनाऽपि न कर्तव्यमकार्यं हितमिच्छता ॥ ५८८ ॥
अन्यच्च सचिवस्तस्या मृतिं यावत् शृणोति न ।
तत्प्राणान् रक्षितुं तावदुपायः कोऽपि चिन्त्यते ॥ ५८९॥
इति राजा गतोऽमात्यपार्श्वेऽमात्योऽपि संभ्रमात् ।
उवाच किमयं देव ! भृत्यान्ते स्वयमागमः ॥ ५९० ॥

नृपोऽवोचदहं किञ्चिद् याचितुं त्वामिहागमम् ।
मन्त्री प्राह किमत्राऽर्थे कथ्यं यत् कृत्यमादिश ॥ ५९१॥
ततश्चरणयोर्भानोर्लगित्वा नृपतिर्जगौ ।
वृत्तान्तेनामुनाऽमात्य ! विपन्ना सा तव प्रिया ॥ ५९२ ॥
तदभ्यर्थनयाऽस्माकं न कार्याऽनुमृतिस्त्वया ।
हा ! किमेतदिति क्षुब्धचित्तेनाऽभाणि मन्त्रिणा ॥ ५९३ ॥
त्वदुक्तं सिद्धमेवेदं सत्त्वहीनस्य मे विभोः ।
दुःश्रव्यमप्यदः श्रुत्वा हृदयं न द्विधाऽभवत् ॥ ५९४ ॥
किन्तु देवेन नो किञ्चिद् वाच्यं दारपरिग्रहे ।
अन्यच्च करवै तस्यास्तत्र गत्वौर्ध्वदेहिकम् ॥ ५९५ ॥
इति मुक्तो नृपेणाऽसौ गत्वा स्वनगरं गृहे ।
स्वजनैः संगृहीतानि प्रियास्थीनि सदार्चति ॥ ५९६ ॥
स्मारं स्मारं गुणांस्तस्या रोदिति प्रलपत्यपि ।
नृपवाक्यनिबद्धत्वाद् मुमूर्षुरपि जीवति ५९७
अन्यदाऽचिन्तयद् यावज्जीवन्नास्मि विधेर्वशात् ।
तावद् गत्वैतदङ्गानि क्वाऽपि तीर्थे क्षिपाम्यहम् ॥ ५९८ ॥
इत्यनाख्याय भूपस्य मन्त्री गङ्गातटं गतः ।
तत्र दत्त्वाऽर्थिनां दानमिति प्रलपति स्म सः ॥५९९॥
प्रियास्थिभिरपीदानीं भाव्यहो ! विरहो मम ।
विराधित इव स्तोकमपि नो सुखकृद् विधिः ॥६००॥
अथ क्रीडागता वाराणसीश्वरनृपाङ्गजा ।
नाम्ना सरस्वती तत्र प्रलपन्तं तमाशृणोत् ॥६०१॥
पृष्टश्च स तया दुःखकारणं सर्वमाख्यत ।
तत् श्रुत्वा प्राग्भवं स्मृत्वा मूर्छिता साऽपतद् भुवि ॥६०२॥
ततो भीताभिरारब्धाः सखीभिर्विविधाः क्रियाः ।
ज्ञात्वा राजाऽपि संभ्रान्तस्तत्रागात् सपरिच्छदः ॥६०३॥

पप्रच्छ लब्धचैतन्यां कन्यां किं पुत्रि ! तेऽभवत् ।
कथितं च तया मेऽसौ भर्ताऽऽसीत् पूर्वजन्मनि ॥६०३॥
इत्यादिबहुभिस्तस्याः प्रत्ययैः सहितां गिरम् ।
श्रुत्वा तोषं गतो मन्त्री राज्ञा कन्यां विवाहितः ॥६०४॥
लब्धाऽऽवासस्थितिस्तत्र स भानुसचिवः सुखम् ।
भुञ्जानोऽगमयत् काल नरेन्द्रसुतया सह ॥६०५॥
साऽप्यहो ! मत्कृते सोढं कियद् दुःखं महात्मना ।
इति बुद्ध्या परं तत्र प्रतिबन्धपराऽभवत् ॥६०६॥
अन्यदा नृपतिर्भानौ राज्यं न्यस्य विरागतः ।
प्रव्रज्यां जगृहे भानू राजा पालयति प्रजाम् ॥६०७॥
अथ दाहज्वरस्तीव्रो देव्या आकस्मिकोऽजनि ।
चिकित्सा विविधाऽऽरेभे परं व्यर्थाऽखिलाऽभवत् ॥६०८॥
मुक्तबाणेषु वैद्येषु दध्यौ विध्यातधीर्नृपः ।
यावन्नैषा विपद्येत तावत् प्राणांस्त्यजाम्यहम् ॥६०९॥
मा भूद् विडम्बना प्राग्वदिति निश्चित्य सप्तमम् ।
प्रासादतलमारुह्य स्वमुल्लम्बितुमुद्यतः ॥६१०॥
तदा व्योम्नि व्रजन् दृष्ट्वा तं चारणमुनिर्जगौ ।
किं करोषि महाभाग ! स्ववधं बालिशोचितम् ? ॥६११॥
मृतस्याऽविधिना दुःखं पुरोऽधिकतरं भवेत् ।
दुष्कर्माण्येव वध्यानि वृथा देहवधेन किम् ? ॥६१२॥
ऊचे भानुनृपः स्वामिन् ! किं कर्तव्यं मयाऽधुना ? ।
मुनिराह परं धर्मं सर्वदुःखापहं कुरु ॥६१३॥
जिनं देवं प्रपद्यस्व महाव्रतधरं गुरुम् ।
सर्वज्ञाऽभिहितं तत्त्वं सम्यक्त्वमिदमाश्रय ॥ ६१४ ॥
कल्पवृक्षस्तथा कामधेनुश्चिन्तामणिस्तथा ।
त्रिपदीयं समस्या हि पूर्णा स्याज्जिनधर्मतः ॥६१५॥
विरम प्राणिघातादिपापादित्यादिदेशनाम् ।

निशम्य स्वीकृतो धर्मो धन्यंमन्येन भानुना ॥६१६॥
नीतश्च स मुनिर्देव्याः पार्श्वे साऽपि तमार्जवात् ।
वन्दित्वा देशनां श्रुत्वा गृहिधर्मं समाश्रयत् ॥६१७॥
गतपापा च सज्जा च सा जज्ञे मुनिदर्शनात् ।
मणि मन्त्र-महौषध्यो यथा तुर्यस्तथा मुनिः॥ ॥ ६१८॥
चिरं राज्यसुखं भुक्त्वा वयःपरिणतावुभौ ।
राज्ये निजाङ्गजं न्यस्य पार्श्वे प्राव्रजतां गुरोः ॥६१९॥
सरस्वती स्थिता साध्वी समीपे विशदव्रता ।
भानुस्तु विहरत्येकः स चाऽहं नन्विहागतः ॥६२०॥
अतो यदि तदा स्वस्याऽकरिष्यं हननं ततः ।
ऐहिकाऽऽमुष्मिकश्रेयोऽभविष्यदिति मे कुतः ? ॥६२१॥
सत्यमेतद् वचो जज्ञे जीवन् भद्राणि पश्यति ।
तद् भद्र ! कुरु सद्धर्मं विरमाऽज्ञानमृत्युतः ॥६२२॥
तन्निशम्याऽवदच्चन्द्रः सत्यमेतद् मुने ! परम् ।
वित्त-मित्रवियोगार्त्या बाढमस्म्यनवस्थितः ॥ ६२३ ॥
प्रसीद तत् तथा नाथ ! यथा स्यां स्वच्छमानसः ।
पश्चाच्च भवदादिष्टे यतिष्ये धर्मकर्मणि ॥ ६२४ ॥
प्राह भानुमुनिस्तर्हि शिक्षयस्व तदेकधीः ।
परमेष्ठिनमस्कारं यः सद्यः सर्वकामदः ॥ ६२५ ॥
लघिष्ठोऽपि यथा हन्ति द्रुतं पञ्चाननो गजान् ।
तथा पञ्चनमस्कारो ह्रस्वोऽपि दुरितापहः ॥ ६२६ ॥
प्राप्य पञ्चनमस्कारं चिन्तामणिसमं जडाः ।
उपलावज्ञया पश्यन्त्यन्ये ध्यायन्ति यत्नतः ॥ ६२७ ॥
तथाहि-
देशकालानुमानेन वर्तनं कालिवर्जनम् ।
यथालब्धे च सन्तोषो महासुखमिदं नृणाम् ॥ ६२८ ॥
अतिलौल्यात् पुनर्लब्धमप्यर्थं हारयेत् कुधीः ।

मयूरग्राहको यद्वद् यथा च किल वानरः ॥ ६२९ ॥
तथाहि–
केनाऽप्याराधितो यक्षो भक्तितो धनवाञ्छया ।
अनिर्विण्णतया तस्मै सुरस्तुष्टो ददौ वरम् ॥ ६३० ॥
अहो ! यो नृत्यति स्वर्णमयूरः पुरतो मम ।
तस्यैकं गलितं पिच्छं त्वया ग्राह्यं दिने दिने ॥ ६३१ ॥
इति यक्षसमादिष्टं कुर्वन् दध्यौ नरोऽन्यदा ।
किमु कालविलम्बेनाऽखिलं गृह्णामि बर्हिणम् ॥ ६३२ ॥
इति ध्यात्वा गृहीत्वा च तं यावद् वीक्षते कुधीः ।
तावदन्यशिखिप्रख्यं दृष्ट्वा सोऽप्याकुलोऽभवत् ॥६३३॥
प्रागात्तान्यपि गत्वाऽसौ गृहे सामान्यपिच्छवत् ।
पिच्छानि वीक्ष्य वक्षः स्वं ताडयन् बह्वशोचत ॥ ६३४ ॥
तथैकत्र वने प्रीत्या युग्मं वानरयोरभूत् ।
प्रपाताख्यं ययौ तीर्थमन्यदा तत् परिभ्रमत् ॥ ६३५ ॥
तच्च तीर्थतरौ तत्राऽऽरोहच्चापल्यतस्ततः ।
पपात सद्यो जज्ञे च मर्त्ययुग्मं मनोहरम् ॥ ६३६ ॥
तादृक् तीर्थस्य माहात्म्यं दृष्ट्वा तअतिविस्मितम् ।
सुखमास्तेऽतिलुब्धत्वादथो स्त्रीं पुरुषोऽवदत् ॥ ६३७ ॥
वानरत्वं प्रिये ! तावत् त्यक्त्वाऽवानरतां गतौ ।
एतावः पुनरप्यत्रारुह्य देवत्वहेतवे ॥ ६३८ ॥
अथो जगाद सा दक्षाऽतिलोभो न शुभः प्रिय ! ।
वारितोऽपीत्यमर्षेण वृक्षमारुह्य सोऽपतत् ॥ ६३९ ॥
भूयोऽपि वानरः सोऽभूद् दुःखितश्चारटद् भृशम् ।
तत्रायातेन साऽपि स्त्री खेचरेण समं ययौ ॥ ६४० ॥
इति ज्ञात्वा सुसंतोषं हृदि धारय तं विना ।
आरुह्योच्चैरपीच्छा यत् तथैवाकाशवद् नृणाम् ॥ ६४१ ॥
अथाऽसौ तं मुनिं नत्वा प्रीतः पुष्पपुरं ययौ ।

वाणिज्यं किञ्चिदारेभे तत्र जातो महर्द्धिकः ॥ ६४२ ॥
चन्द्रः पञ्चनमस्कारशुद्धपक्षानुभावतः ।
वर्धमानकलो जज्ञे सुवृत्तकलितः क्रमात् ॥ ६४३ ॥
अथो विधिवशात् तस्य त्रयोऽपि सुहृदोऽचिरात् ।
भानुर्भीमश्च कृष्णश्च तत्राऽऽजग्मुः पृथक् पृथक् ॥ ६४४ ॥
चन्द्रस्य मिलिताः सर्वे स्वस्वोदन्तं न्यवेदयन् ।
चन्द्रोऽपि निजवृत्तान्तं पुरस्तेषां शशंसिवान् ॥ ६४५ ॥
नमस्कारस्य माहात्म्यं श्रुत्वा ते तं शिशिक्षिरे ।
ततस्तेऽपि शनैर्जाता महर्द्धिभरभासुराः ॥ ६४६ ॥
चन्द्र-भानू स्वभावेन प्राञ्जलौ सर्ववत्सलौ ।
किञ्चिद् मायाविनौ त्वन्यौ भेदः साम्येऽपि दृश्यते ॥६४७॥
चत्वारोऽप्यन्यदैकत्र निविश्यालोचयन्त्यदः ।
ऋद्धिर्जाता बहुः किन्तु किं तया स्वजनैर्विना ? ॥ ६४८ ॥
सैव लक्ष्मीः प्रशस्येत चमत्कारं करोति या ।
सज्जनैर्भुज्यतेऽप्याशामाशङ्का च प्रतन्वती ॥ ६४९ ॥
अतः स्वं नगरं याम इति निश्चित्य ते ततः ।
क्षेमेणाऽम्भोधिमुल्लङ्घ्य प्रस्थिताः पदवर्त्मना ॥ ६५० ॥
ऋद्धिसंभारसंपूर्णस्तेषां सार्थः पथि व्रजन् ।
एकत्राऽऽवासितो ग्रामे प्रारेभे भोजनास्थितिम् ॥ ६५१ ॥
तदाऽधोन्यस्तदृक् साधुरेको नेत्रप्रभाऽमृतैः ।
सिञ्चन्निव भुवं तत्राऽऽययौ मासोपवासिकः ॥ ६५२ ॥
स मुनिस्तपसा शुष्काङ्गोऽपि चन्दनदारुवत् ।
उज्ज्वलः शीतलश्चासीत् कस्य नाह्लादको जने ? ॥६५३॥
तेषां भद्रकभावत्वात् स दृष्टो विमले हृदि ।
मुनिः संक्रान्तबिम्बोऽभूज्जातास्ते तेन तन्मयाः ॥ ६५४ ॥
स्वयं भोक्तुं निविष्टत्वात् तस्मै चन्द्रादिभिः समम् ।
आदिष्टो भक्तदानाय सुन्दरो नाम कर्मकृत् ॥ ६५५ ॥

स तुष्टो हृदये दध्यावहो ! मे सुकृतोदयः ।
क्काऽहं क्काऽयं मुनिः क्कैतद्देयं क्कैते च दापकाः ? ॥ ६५६ ॥
यदि वस्तु निजं न स्यात् तदित्थमपि यच्छतः ।
पात्राय स्यान्महालाभो नृत्य नृत्य ततो मनः ! ॥६५७॥
इति हर्षोल्लसच्चित्तः सुन्दरो भाविसुन्दरः ।
अदत्त मुनये दानं निदानं मोक्षसंपदः ॥ ६५८ ॥
द्विचत्वारिंशता दोषैरदुष्टं मुनिरप्यदः ।
प्रतिजग्राह भक्ताद्यं प्राणाधाराय धार्मिकः ॥ ६५९ ॥
चतुर्भिरपि तैर्भोगफलं कर्मार्जितं ततः ।
सुन्दरेणाऽधिकं तत्तु परिणामविशेषतः ॥ ६६० ॥
क्रमाज्जयपुरं प्राप्तं मिलिता बन्धवोऽखिलाः ।
चतुर्णामपि गेहेऽभून् महान् वर्धापनोत्सवः ॥ ६६१ ॥
चिरमृद्धिसुखं भुक्त्वा प्रान्ते सुन्दरसंयुताः ।
जाता ज्योतिष्कुमारेषु ते चत्वारोऽपि देवताः ॥ ६६२ ॥
चन्द्र-भानू ततश्च्युत्वा महेभ्यतनयावुभौ ।
अभूतां विश्रुतौ नाम्ना श्रीवर्धन-मनोरमौ ॥ ६६३ ॥
भीम-कृष्णौ पुनश्च्युत्वा पुत्रीत्वेन धनेशितुः ।
सुन्दरी रुक्मिणी नाम्ना बभूवतुरनुक्रमात् ॥ ६६४ ॥
परिणीते च ते ताभ्यामुभाभ्यामपि कन्यके ।
मिथः प्राच्यभवाऽभ्यासात् प्रतिबन्धो महानभूत् ॥ ६६५॥
च्युत्वा सुन्दरजीवस्तु जज्ञे विश्वपुरे नृपः ।
विश्वसेनाऽभिधः श्रीभिः स्वयमागत्य यो वृतः ॥ ६६६ ॥
पुरे तत्रान्यदाऽऽयातौ श्रीवर्धन-मनोरमौ ।
वाणिज्यार्थमथो तत्र राजानमुपतस्थतुः ॥ ६६७ ॥
तौ दृष्ट्वा मुदितो राजा दानमुक्तिमकारयत् ।
प्राच्यस्नेहाच्च तत्रैवाऽस्थापयत् सकुटुम्बकौ ॥ ६६८ ॥
अन्यदा सहितस्ताभ्यां बहिरुद्यानमागतम् ।

ययौ राजा मुनिं नन्तुं ध्यानस्थं च तमैक्षत ॥ ६६९ ॥
नृपस्तद्दर्शनोद्भूतप्रभूतानन्दकन्दलः ।
ध्यानैकरङ्गितात्मानं भक्त्या नत्वेदमब्रवीत् ॥ ६७० ॥
निस्तन्द्रां योगमुद्रां ते दृष्ट्वा मे मुदित मनः ।
ततस्तस्या विधिं श्रोतुमिच्छामि शिवदं मुने ! ॥ ६७१ ॥
अथ तस्योपरोधेन योग्यं ज्ञात्वा च तं मुनिः ।
पारयित्वा क्षणं ध्यानं मधुरध्वनिराख्यत ॥ ६७२ ॥
साधु पृष्टं महाभाग ! श्रूयतां किञ्चिदुच्यते ।
नृणां येन श्रुतेनाऽपि निष्प्रकम्पं मनो भवेत् ॥ ६७३ ॥
यमो नियमाऽऽसने च प्राणायामश्चतुर्थकः ।
प्रत्याहारो धारणा च ध्यानं समाधिरष्टमः ॥ ६७४ ॥
अहिंसा सत्यमस्तेयं ब्रह्माऽकिञ्चनता यमाः ।
नियमाः शौच-सन्तोषौ स्वाध्याय-तपसी अपि ॥ ६७५ ॥
देवताराधनं चैव करणं पुनरासनम् ।
प्राणायामो गतिच्छेदः श्वास-प्रश्वासयोर्मतः ॥ ६७६ ॥
प्रत्याहारस्त्विन्द्रियाणां विषयेभ्यः समाहृतिः ।
धारणा तु क्वचिद् ध्येये चित्तस्य स्थिरबन्धनम् ॥६७७॥
ध्यानं च विषये तस्मिन्नेकप्रत्ययसन्ततिः ।
समाधिस्तु तदेवैकमात्राऽभ्यसनरूपकः ॥ ॥ ६७८ ॥
अष्टाङ्गो योग इत्येवं तज्ज्ञैराख्यायि यः सदा ।
अष्टकर्मबलं जेतुं जागर्ति हृदि योगिनाम् ॥ ६७९ ॥
पद्म-वज्रासनादीनामभ्यासेनाऽऽसनं जयेत् ।
रेचकादिक्रमेणाऽथ करणीयो मरुज्जयः ॥ ६८० ॥
तज्जये स्याद् वपुःसौस्थ्यं देहसौख्यं मनः स्थिरम् ।
मनःस्थैर्ये लगेद् ध्यानं ध्याने च समतासुखम् ॥ ६८१ ॥
तत् सौख्यमपि दुःखाय रागद्वेषाच्च यद् भवेत् ।
तद् भो विहाय तन्मध्यं समताख्यं समाश्रय ॥६८२॥

राग: शीतसमो द्वेषो ग्रीष्मतुल्यस्तदन्तरे ।
स्थितश्चैत्र इवानन्दोत्सवं कस्य करोति न ? ॥ ६८३ ॥
सूक्ष्ममार्गे हि धर्मस्य समताख्ये शिवोपरि ।
एक एव ततो मा गा विकल्पगहनं वनम् ॥ ६८४ ॥
शर्म धर्मश्च तत् ते स्यान्निर्विकल्पं मनो यदि ।
विकल्पो याति साम्येन तदभ्यासं ततः कुरु ॥ ६८५ ॥
भवे पर्यटतो जन्तोः को निजः कोऽथवाऽपरः ?।
ग्रामस्याऽर्वाक् प्रदेशो यः स एव व्रजतः परः ॥ ६८६ ॥
विकल्पैरब्धिकल्लोलाऽवगाहनसमैः किमु ? ।
साम्यं फलकमादाय तीरं श्रय भवाम्बुधेः ॥ ६८७ ॥
विद्यया तपसा तीर्थयात्रया वा न निर्वृतिः ।
विना तद् मर्मसाम्येन साम्यात् सौस्थ्येऽपि सा भवेत्॥६८८॥
उक्तं च-
हूयते न तप्यते न दीयते वा न किञ्चन ।
अहो ! अमूल्यक्रीतीयं साम्यमात्रेण निर्वृतिः ॥ ६८९ ॥
कन्या किल यथा विद्या-तीर्थ-कष्टकृतामपि ।
नासीदासीत् स्थितस्याऽपि तन्मर्माहारदायिनः॥ ६९० ॥
तथाहि-
श्रीपुरे चन्दनश्रेष्ठिपुत्री नन्दा गुणैकभूः ।
प्रदीपकलिकेवाऽसीत् बालाऽपि कुलमण्डनम् ॥ ६९१ ॥
पाणिग्रहणयोग्याया ग्रामान्तरगतैः समम् ।
तस्याः पित्रादिभिश्चक्रे संप्रदानं पृथक् पृथक् ॥ ६९२ ॥
पित्रैकत्र पुरे दत्ता महेभ्यतनुजन्मने ।
पितृव्येण पुनर्मित्रपुत्रस्याऽन्यत्र पत्तने ॥ ६९३ ॥
स्वपितृनगरे मात्राऽभीष्टसख्याः सुतस्य तु ।
ददे भ्रात्रा पुरेऽन्यत्र महागुणवते तु सा ॥ ६९४ ॥
सर्वेऽपि स्वपुरं प्राप्ताः कन्यादानं निजं निजम् ।

निर्मितं कथयामासुरन्योऽन्यं हर्षनिर्भराः ॥ ६९५ ॥
विसंवादेऽथ सर्वेषां स्पर्धाबन्धो महानभूत् ।
यदस्माभिः कृतं कार्यं प्रलयेऽपि किमन्यथा ? ॥ ६९६ ॥
यथावृतवराणां च लग्नमेकं प्रहित्य तैः ।
संवाहः कर्तुमारेभे विवाहाय सविस्तरम् ॥ ६९७ ॥
अथो लग्नदिने प्राप्ते चत्वारोऽपि वराः समम् ।
तत्राऽऽगत्य बहिस्तस्थुर्महायानपरिग्रहाः ॥ ६९८ ॥
परिणेतुं च तां सर्वे सममाजग्मुरुद्धताः ।
विवदमाना युद्धाय सन्नद्धाश्च रुपाऽभवन् ॥ ६९९ ॥
सा तेषां युद्धसंरम्भं पुरुषक्षयकारणम् ।
पित्रादीनां विरोधं च वीक्ष्य नन्दा व्यचिन्तयत् ॥७००॥
धिग् मा यस्याः कृतेऽमीषां महाऽनर्थोऽयमुत्थितः ।
मृतायां मयि सर्वेषां श्रेयो भवति नान्यथा ॥ ७०१ ॥
निश्चित्यैवं चितां बाह्ये रचयित्वैकमानसा ।
सा वह्निं साधयामास सदुःखं वीक्षिता जनैः ॥ ७०२ ॥
तेषामेको वरो वह्निं प्रविवेश तया सह ।
द्वितीयस्तु विरागेण दूरदेशान्तरं ययौ ॥ ७०३ ॥
तृतीयोऽपि तदङ्गान्यादाय तीर्थं प्रतस्थिवान् ।
तुर्यस्तु तस्याः शेषाङ्गोपरि स्थण्डिलकं व्यधात् ॥ ७०४ ॥
याचित्वा च पुरे भिक्षां मुक्त्वा तत्राऽन्नपिण्डकम् ।
स्वयं भुङ्क्ते प्रियामोहात् तत्रास्ते च दिवानिशम् ॥ ७०५॥
कियत्यपि गते काले देशान्तरगतो वरः ।
क्वाऽपि संजीवनीं विद्यां प्राप्य तत्राऽययौ मुदा ॥ ७०६॥
आकृष्य स्थण्डिलाच्छेषाऽस्थीनि विद्याऽनुभावतः ।
चक्रे पुनर्नवां कन्यां नव्यः सहमृतोऽप्यभूत् ॥ ७०७ ॥
तीर्थान्तरगतोऽप्यागात् तदानीं तत्र दैवतः ।
कन्यार्थं विवदन्ते स्म चत्वारोऽपि तथैव ते ॥ ७०८ ॥

मिलिताः स्वजनाः सर्वे सपौरा राजपुरुषाः ।
कन्याविवादः किन्त्वेषां न केनाऽपि निवर्तितः ॥ ७०९॥
अथैकः प्रवर्या[1] ज्ञाततत्स्वरूपो महामतिः ।
तेषां वचनमादाय स्फुटं निर्णीतवानिदम् ॥ ७१० ॥
तीर्थेऽस्थिन्यासकः पुत्रः पुनर्जन्मप्रदः पिता ।
सहोत्पन्नः पुनर्भ्राता स भर्ता यस्तु भक्तदः ॥ ७११
तदस्यैव प्रियाऽस्त्वेषा यः सदा भोजनं ददौ ।
लोकेऽपि श्रूयते भर्ता भार्याभरणपोषणात् ॥ ७१२ ॥
इत्युक्ते मुक्तवैरास्ते सर्वे स्वस्वास्पदं ययुः ।
परिणीता तु सा तुर्यवरेण जनसम्मतम् ॥ ७१३ ॥
यथासौ नाभवद् विद्या-तीर्थ-कष्टकृतामपि ।
भक्तदानं विना तद्वद् विना साम्यं न निर्वृतिः ॥ ७१४ ॥
तत्त्वज्ञानं विना विद्या तपस्या शमवर्जिता ।
तीर्थयात्रा मनःस्थैर्यवन्ध्या वन्ध्येव कामिनी ॥ ७१५ ॥
अतोऽत्यायासमुक्तोऽपि तल्लीनो निर्वृतेर्नरः ।
यः साम्यभोजनं दत्ते पोषणं स भवेद् वरः ॥ ७१६ ॥
तत्त्वज्ञानं शमः स्थैर्यं साम्ये हि युगपत् त्रयम् ।
विद्यादीनां फलं साक्षाद् दृश्यते तेन तत् कुरु ॥ ७१७ ॥
यदाहुर्महात्मानः—
प्रणिहन्ति क्षणार्धेन साम्यमालम्ब्य कर्म तत् ।
यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥ ७१८ ॥
वीतरागं हृदि ध्यायन् वीतरागो यथा भवेत् ।
मुक्त्वाऽखिलमपध्यानं भ्रामरं ध्यानमाश्रय ॥ ७१९ ॥
स्थाने याने जनेऽरण्ये सुखे दुःखे तथा मनः ।
अभ्यस्य[2] वीतरागत्वे लयलीनं यथा भवेत् ॥ ७२० ॥
बद्धमाबाध्यते मुक्तमग्रहं स्यात् ततो बुधैः ।

१ वृद्ध । २ अभ्यास कुरु ।

वारणीयं धृतोन्मुक्तं रज्जुबद्धोक्षवद् मनः ॥ ७२१ ॥
अभ्यासमनया युक्त्या कुर्वतो योगिनः क्रमात् ।
अङ्गुल्यग्रस्थितो दण्ड इव स्थैर्यं मनः श्रयेत् ॥ ७२२ ॥
घनात् स्तोके मनो योगी स्थूलात् सूक्ष्मे नियोजयेत् ।
परमाणौ ततो दध्याद् दंशे मान्त्रिकवद् विषम् ॥ ७२३ ॥
स्थैर्यस्थे सति चित्ते च वारीवात्मा स्वमीक्षते ।
चिन्मयः स्यात् ततो नालोद्भेदात् कूप इवाऽम्मयः[1] ॥७२४॥
द्युतिः पुष्पे घृतं दुग्धे तेजः काष्ठे यथा स्थितम् ।
ज्ञानं जीवे तथा किन्तु व्यक्तीस्यात्[2] परिकर्मणा[3] ॥७२५॥
इति सारोपदेशं तं सम्यग् ध्यात्वा नृपो हृदि ।
ज्ञानातिशयसंपन्नं पप्रच्छेदं पुनर्मुनिम् ॥ ७२६ ॥
अनयोरुपरि स्वामिन् ! मम ब्रूहि कुतोऽभवत् ।
भिन्नजातिक्रमस्थानस्याऽपि स्नेहोऽयमीदृशः ? ॥ ७२७ ॥
ततश्चन्द्रादिमित्राणि सुन्दरश्चाऽपि कर्मकृत् ।
यथाऽऽसीत् तत् तथा सर्वं कथयामास केवली ॥ ७२८ ॥
तत् श्रुत्वा नृपतिर्जातजातिस्मृतिरतीव सः ।
मुनिदानप्रभावेन प्रतनूकृतकर्मकः ॥ ७२९ ॥
प्रवर्धमानसंवेगात् संस्थाप्य स्वपदे सुतम् ।
पर्यव्राजीत् सभार्यौ च श्रीवर्धन-मनोरमौ ॥ ७३० ॥
(युग्मम्)
स्नेहान्ते शालिवद्दीक्षामवाप्य शमगोरसम् ।
चारुवैराग्यकर्पूरवासं भुञ्जीत भाग्यवान् ॥ ७३१ ॥
निरवद्यं तपः कृत्वा ययुः सर्वे सुरालयम् ।
पुनर्मर्त्यादिसामग्रीमाप्य सेत्स्यन्ति तेऽचिरात् ॥ ७३२ ॥
त्रिविधस्याऽपि दानस्य माहात्म्यमिति वर्णितम् ।
शीलनाम्नो द्वितीयस्य धर्माङ्गस्य प्रचक्ष्यते ॥ ७३३ ॥

---

१ जलमय. । २ अव्यक्त व्यक्तं स्यात् । ३ मार्जनेन ।

शौचानां परमं शौचं गुणानां परमो गुणः ।
प्रभावमहिमाधाम शीलमेकं जगत्त्रये ।। ७३४ ।।

तथाहि–

दाक्ष्यं भूषणमैश्वर्ये शौर्ये वाक्यस्य संयमः ।
ज्ञानस्योपशमः स्फीतः श्रुतस्य विनयः पुनः ।। ७३५ ।।
अक्रोधस्तपसो भूषा सामर्थ्यस्य सहिष्णुता ।
पात्रव्ययश्च वित्तस्य दानस्य प्रियभाषणम् ।। ७३६ ।।
निर्व्याजता च धर्मस्य सर्वेषां पुनरुज्ज्वलम् ।
भूष्यभूषणभावानां शीलं परमभूषणम् ।। ७३७ ।।
तच्च चारित्ररूपं च ब्रह्मरूपं च कथ्यते ।
चारित्रं च द्विधा सर्व-देशचारित्रभेदतः ।। ७३८ ।।
यतिधर्मो दशविधः सर्वचारित्रमुच्यते ।
यः सम्यक् सेवितः शीघ्रं भवेद् मुक्तिपदप्रदः ।। ७४९ ।।
संयमः सूनृतं शौचं ब्रह्माऽकिञ्चनता तपः ।
क्षान्तिर्मार्दवमृजुता मुक्तिश्च दशधा स तु ।। ७४० ।।

तत्र—

पञ्चाश्रवपरीहारः कषायेन्द्रियनिग्रहः ।
त्रिदण्डविरतिः सप्तदशधा संयमो भवेत् ।। ७४१ ।।
सूनृतं च भय-क्रोध-लोभ-हास्यैर्मृषोज्झनम् ।
शौचं शुद्धिर्बहिश्चान्तरयुक्तोपधिवर्जनात् ।। ७४२ ।।
दिव्यौ-दारिक-कामानां निषेधो ब्रह्म कथ्यते ।
आकिञ्चन्यं त्वमूर्च्छा या सत्स्वथाऽसत्सु वस्तुषु ।।७४३।।
तपो द्वादशधा ज्ञेयं बाह्या-ऽभ्यन्तरभेदतः ।
स्वशरीरगतं बाह्यमन्यद् योगक्रियागतम् ।। ७४४ ।।

तथाच–

अनशनमौनोदर्यं वृत्तिसंक्षेपणं तथा ।
रसत्यागस्तनुक्लेशो लीनतेति बहिस्तपः ।। ७४५ ।।

प्रायश्चित्तं वैयावृत्यं स्वाध्यायो विनयोऽपि च ।
व्युत्सर्गोऽथ शुभध्यानं षोढेत्याभ्यन्तरं तपः ॥ ७४६ ॥
क्षान्तिः सहिष्णुतारूपा मार्दवं मानवर्जनम् ।
आर्जवं प्राञ्जलत्वं यद् मुक्तिर्निर्लोभता पुनः ॥ ७४७ ॥
इत्येवं यतिधर्मस्य स्पष्टं भेदा दशाऽप्यमी ।
विवृताः, सर्वचारित्रमियता परिकीर्तितम् ॥ ॥ ७४८ ॥
तत् पुनर्देशचारित्रं यो द्वादशव्रतात्मकः ।
गृहिधर्मः क्रमात् त्वेष सिद्धिसौख्यविधायकः ॥ ७४९ ॥
अहिंसा सूनृता-ऽस्तेय-ब्रह्मचर्या-ऽपरिग्रहान् ।
स्थूलत्वात् पालितान् पञ्चाऽणुव्रतानि जगुर्जिनाः ॥७५०॥
दिग्विरतिव्रतं भोगोपभोगपरिमाणकम् ।
अनर्थदण्डविरतिश्चैतद् गुणव्रतत्रयम् ॥ ७५१ ॥
सामायिकं च देशावकाशिकं पौषधं तथा ।
अतिथिसंविभागाख्यं शिक्षाव्रतचतुष्टयी ॥ ७५२ ॥
नामतः कीर्तितान्येवं व्रतानि द्वादशाऽपि हि ।
अथो विवरणं तेषां क्रमेणैव प्रचक्ष्यते ॥ ७५३ ॥
त्रसान् जीवान् प्रयत्नेन प्रायेण स्थावरानपि ।
आत्मवद् रक्षति गृही यत्राऽहिंसाव्रतं हि तत् ॥ ७५४ ॥
सर्वलोकविरुद्धं यत् कूटसाक्ष्यादिवर्जनम् ।
विमृश्य प्रोच्यते तथ्यं तद् भवेत् सूनृतव्रतम् ॥ ७५५ ॥
आहितं स्थापितं नष्टं पतितं विस्मृतं स्थितम् ।
अगृह्णतः परद्रव्यं तृतीयाणुव्रतं भवेत् ॥ ७५६ ॥
विश्वप्रशस्यं सुधियां परब्रह्मैककारणम् ।
परकान्तानभिगमश्चतुर्थव्रतमुच्यते ॥ ७५७ ॥
क्षेत्रस्य वास्तुनः कुप्याऽकुप्ययोर्धन-धान्ययोः ।
चतुष्पद-द्विपदयोर्या सङ्ख्या सोऽपरिग्रहः ॥ ७५८ ॥
जीवोपमर्दनाभीतैः कृता दिक्षु दशस्वपि ।

सीमा न लङ्घ्यते यत्र प्रथमं तद् गुणव्रतम् ॥ ७५९ ॥
निषिद्धाऽनन्तकायाद्यैः क्रियते यासु कर्मभिः ।
भोगो-पभोगयोः सङ्ख्या तद् द्वितीयं गुणव्रतम् ॥७६०॥
पापोपदेशोऽपध्यानं हिंस्रोपकरणार्पणम् ।
प्रमादाचरणं चाऽपि त्यज्यतेऽन्त्यगुणव्रते ॥ ७६१ ॥
मनो-वाक्-कायसावद्यवर्जितैर्यो विधीयते ।
मुहूर्त्तं समताभावस्तत् स्यात् सामायिकव्रतम् ॥७६२॥
दिग्व्रते या कृता मार्गसङ्ख्या सा सर्वदा पुनः ।
दिने रात्रौ च संक्षेप्या व्रते देशावकाशिके ॥ ७६३ ॥
चतुर्थाद्यं चतुष्पर्व्यामस्नानं ब्रह्मचारिता ।
कुव्यापारनिषेधश्च यत्र तत् पौषधव्रतम् ॥ ७६४ ॥
भावाच्चतुर्विधाहारो वस्त्रं पात्रमुपाश्रयः ।
अतिथिभ्यो दीयते यत् तुर्यं शिक्षाव्रतं हि तत् ॥ ७६५ ॥
एवं व्रतस्थः सद्भक्त्या सप्तक्षेत्र्यां धनं वपन् ।
दीनादौ च दयापूर्वं महाश्रावकतां व्रजेत् ॥ ७६६ ॥
इमैर्निरतिचारैः सत्सम्यक्त्वालङ्कृतैर्व्रतैः ।
गृहिधर्मोऽपि मोक्षाय भवेदन्तर्भवाष्टकम् ॥ ७६७ ॥
इत्थं द्विधाऽपि चारित्ररूपं शीलमुदाहृतम् ।
अधुना लोकविख्यातं ब्रह्मरूपं निगद्यते ॥ ७६८ ॥
नारीणां च नराणां चाऽन्यकान्तासक्तिवर्जनम् ।
गृहिणां शीलमाख्यातं देवानामपि दुर्लभम् ॥ ७६९ ॥
विषयव्याकुलैः शीलं खण्डितं मनसाऽपि यैः ।
ते यान्ति नरकं घोरं यथा मणिरथो नृपः ॥ ७७० ॥
सती मदनरेखेव पालयत्यमलं तु तत् ।
यः स धन्येषु रेखाप्तो भवेत् सुगतिभाजनम् ॥ ७७१ ॥
एतयोश्चरितं चारु चारित्रप्रतिपत्तये ।
ज्ञानवैचित्र्यतः किञ्चिद्द् भविष्यदपि कथ्यते ॥ ७७२ ॥

अस्त्यत्र भरतेऽवन्त्यां पुरं नाम्ना सुदर्शनम् ।
राजा मणिरथस्तत्र निवासः सततं श्रियः ॥ ७७३ ॥
तद्भ्राता युवराजस्तु युगबाहुर्महामनाः ।
प्रिया मदनरेखाह्वा तस्य सद्गुणशालिनी ॥ ७७४ ॥
यस्या रूपश्रियं दृष्ट्वा समुद्भूतस्मराग्निना ।
दग्धः कामोऽपि तेनाऽसौ प्राप नूनमनङ्गताम् ॥ ७७५ ॥
सती रूपवती साऽपि जैनधर्मे रताऽभवत् ।
तत्सुवर्णस्य सौरभ्यं सौभाग्योपरि मञ्जरी ॥ ७७६ ॥
अथ तां काऽपि विश्रब्धां पश्यन् मणिरथो हृदि ।
ईर्ष्ययेव हतो बाणैर्मदनेनेत्यचिन्तयत् ॥ ७७७ ॥
ध्रुवं ग्राह्या मया तावदेषा तस्मात् प्रलोभये ।
यल्लोभान्तरितः कृत्याकृत्यं न गणयेज्जनः ॥ ७७८ ॥
ततोऽसौ पुष्प-ताम्बूल-वस्त्रा-लङ्करणादिकम् ।
प्रहिणोति न तस्यास्तु कोऽपि दुष्टाशयो हृदि ॥ ७७९ ॥
ज्येष्ठस्याऽयं प्रसादो मे संकल्प्येत्याददाति तत् ।
अन्यदा प्रहिता राज्ञा दूती तामित्यवोचत ॥ ७८० ॥
भद्रे ! तव गुणग्रामे रक्तो राजा वदत्यदः ।
मां प्रतिपद्य भर्तारं राज्यस्य स्वामिनी भव ॥ ७८१ ॥
ज्ञाताकूता ततो राज्ञी जगादैवं सतां मनः ।
अन्यास्वपि परस्त्रीषु नैति दूरे वधूजनः ॥ ७८२ ॥
शीलमाद्यगुणः स्त्रीणां यदि सोऽपि न मे भवेत् ।
ततः केऽन्ये गुणा येषु रज्यते नरपुङ्गवः ? ॥ ७८३ ॥
स्वामित्वं यत् तु राज्यस्य तत् त्वदीयानुजन्मनः ।
गृहिणीत्वं दधत्या मे युवराजस्य को हरेत् ? ॥ ७८४ ॥
किञ्च सत्पुरुषा मृत्युमप्यङ्गीकुर्वतेतराम् ।
लोकद्वयविरुद्धं तु नाचरन्ति कथञ्चन ॥ ७८५ ॥

यतः–
जीवघातादलीकोक्तात् परद्रव्यापहारतः ।
परस्त्रीकामनेनाऽपि व्रजन्ति नरकं नराः ॥ ७८६ ॥
तद् महाराज ! संतोषं कुरु मुञ्च कदाग्रहम् ।
भोगतृष्णा हि भोगाद् न याति प्रत्युत वर्धते ॥ ७८७ ॥
इत्यादि गदितं तस्या दूती राज्ञे न्यवेदयत् ।
अनिवृत्तस्तथाप्येष विशेषोपप्लुतोऽभवत् ॥ ७८८ ॥
नोपदेशजलैः शाम्यत्यग्नितैलकृशानुवत् ।
विवेककाञ्जिकेनैव शाम्यति स्मरपावकः ॥ ७८९ ॥
स दध्यौ निस्त्रपो नैषा युगबाहौ हि जीवति ।
अन्यमिच्छति तद् हत्वा तं गृह्णामि बलादिमाम् ॥७९०॥
इति निश्चित्य स भ्रातुर्लघोश्छिद्राणि वीक्षते ।
विवेकबन्धुमुक्तानां काममोहविडम्बना ॥ ७९१ ॥
अन्यदा चन्द्रमाः स्वप्ने दृष्टो मदनरेखया ।
भर्त्रे शिष्टश्च सोऽप्याख्यच्चन्द्राभसुतसम्भवम् ॥ ७९२ ॥
तस्या गर्भानुभावेन तृतीये मासि दोहदः ।
जज्ञे यदि जिनेन्द्राणां करोमि विविधार्चनम् ॥ ७९३ ॥
अर्हतां च कथां नित्यं शृणोमीति यथेप्सितम् ।
संपूर्णदोहदा गर्भं सुखेनैवोद्वहत्यसौ ॥ ७९४ ॥
अथ मल्लीरदश्चूतमञ्जरीकेसरो वने ।
पलाशपुष्पनखरो वसन्तहरिरागतः ॥ ७९५ ॥
पुष्प्यन्ति तरुणीश्लिष्टा यस्मिन् कुरुवकद्रुमाः ।
विकाशं यान्त्यशोकास्तु वधूपादप्रहारतः ॥ ७९६ ॥
मृगाक्षीसीधुगण्डूषैः पुष्यान्ति बकुला अपि ।
चम्पकास्तु प्रफुल्लन्ति सुगन्धजलदोहदैः ॥ ७९७ ॥
सुभ्रूकटाक्षिताः सद्यस्तिलका विकसन्त्यलम् ।
श्रुत्वा च पञ्चमोद्गारं पुष्यन्ति विरहद्रुमाः ॥ ७९८ ॥

स्पर्शादिविषयैरेवं क्रमादेकेन्द्रिया अपि ।
क्रियन्ते तत्र का वार्ता पञ्चेन्द्रियविमोहने ? ॥ ७९९ ॥
वर्णोज्ज्वलेऽप्यगन्धत्वात् कर्णिकारे न रेमिरे ।
भृङ्गा रूपेण किं छेका रज्यन्ते ह्यान्तरैर्गुणैः ? ॥ ८०० ॥
भृशं कुसुमिता यत्र पुन्नागमिव मल्लिका ।
पाटला-काञ्चनाराश्च मुचकुन्दोऽपि नार्हति ॥ ८०१ ॥
एला-लवङ्ग-कक्कोल-द्राक्षा-खर्जूरिकादयः ।
कदली-लवलीमुख्या वृक्षा यत्राऽधिकश्रियः ॥ ८०२ ॥
यश्च स्वयमपि स्मेरस्मरोन्मत्त इव ध्रुवम् ।
हसतीवोज्ज्वलैः पुष्पैः कूजतीव पिकस्वरैः ॥ ८०३ ॥
गायतीवाऽलिझङ्कारैर्नृत्यतीवाऽग्रपल्लवैः ।
नमतीव द्रुशाखाभिः पठतीव शुकारवैः ॥ ८०४ ॥
तस्मिन् वसन्ते सत्येवं युगबाहुः प्रियायुतः ।
ययौ क्रीडार्थमुद्यानं पश्यन् नागरचर्चरीः[1] ॥ ८०५ ॥
जलक्रीडान्दोलनाद्यैः खाद्यपानाऽशनादिभिः ।
व्यग्रस्य युवराजस्य दिनं क्षण इवाऽभवत् ॥ ८०६ ॥
रात्रौ तत्रैव कदलीगृहे सुष्वाप निर्वृतः ।
परिवारस्तु कुत्राऽपि कोऽप्यगात् प्रतनुः स्थितः ॥८०७॥
अथो मणिरथो दध्यौ यदिष्टस्य क्षणोऽधुना ।
युगबाहुर्यतः स्वल्पपरिवारो वनं निशा ॥ ८०८ ॥
ततः खड्गकरो गत्वा वनं पप्रच्छ यामिकान् ।
कुत्रास्ते युगबाहुर्भोः ! तैरुक्तं कदलीगृहे ? ॥८०९॥
वने मद्भ्रातरं कोऽपि शत्रुः परिभाविष्यति ।
इत्यधृत्याऽहमायात इत्यूचानोऽत्र सोऽविशत् ॥ ८१० ॥
ससंभ्रमं समुत्तस्थौ युगबाहुः कृतानतिः ।
राज्ञाऽभाणि पुरं याम एहि वासोऽत्र नोचितः ॥ ८११

1 चर्चरी हर्षक्रीडा ।

ततः प्रस्थातुमारेभे युगबाहुः, पिता गुरुः ।
ज्येष्ठो भ्राता प्रभुश्चानुल्लङ्घ्याज्ञा इति चिन्तयन् ॥८१२॥
ततः पापधिया राज्ञाऽवगणय्याऽयशोभयम् ।
हतः स्कन्धेऽसिना भ्राता मूर्छन् भुवि पपात च ॥८१३ ॥
अहो ! अक्षत्रमक्षत्रमित्थं मदनरेखया ।
कूजितं धाविताश्चाशु खड्गोद्यतकरा नराः ॥ ८१४ ॥
किमेतदिति जल्पन्तः प्रोक्ता मणिरथेन भोः ! ।
मा बिभीत प्रमादेन करात् खड्गो ममाऽपतत् ॥ ८१५ ॥
ततो यथास्थितं ज्ञात्वा नरैर्मणिरथो बलात् ।
पुरं नीतो द्रुतं चन्द्रयशसस्तन्निवेदितम् ॥ ८१६ ॥
सोऽपि हाहारवं कुर्वन् वैद्यानादाय जग्मिवान् ।
उद्यानं स्वपितुर्यत्नाद् व्रणकर्माद्यकारयत् ॥ ८१७ ॥
क्षणेनाऽस्य स्थिता वाचा नेत्रयुग्मं निमीलितम् ।
अङ्गं बभूव निश्चेष्टं पाण्डुरं रक्तनिर्गमात् ॥ ८१८ ॥
ज्ञात्वा मदनरेखाऽथ भर्तुः प्राणान्तिकां दशाम् ।
तस्य कर्णान्तिके स्थित्वा जगादेति मृदुस्वरम् ॥ ८१९ ॥
अहो ! महानुभाव ! त्वमधुनाऽवहितो भव।
इयं सा धीर ! वेला ते सुभटत्वस्य सम्प्रति ॥ ८२० ॥
खेदं मनसि मा कार्षीर्मनागपि तवैव यत् ।
निजकर्मपरीणामोऽपराध्यति न चाऽपरः ॥ ८२१ ॥
यत उच्यते–
यद् येन विहितं कर्म भवेऽन्यस्मिन्निहाऽपि वा ।
वेदितव्यं हि तत्तेन निमित्तं हि परो भवेत् ॥ ८२२ ॥
अतोऽधिसह तत् सम्यग् यदि द्वेक्ष्यधुना परम् ।
अथाऽपि तस्य नो किञ्चित् परलोकस्तु हार्यते ॥ ८२३ ॥
गृहाण धर्मपाथेयं कायेन मनसा गिरा ।
यत् कृतं दुष्कृतं किञ्चित् तत् सर्वं गर्ह सम्प्रति ८२४ ॥

यश्च मित्रममित्रो वा स्वजनोऽरिजनोऽपि वा ।
तं क्षमयस्व तस्मै च क्षमस्व त्वमपि स्फुटम् ॥ ८२५ ॥
तिर्यक्त्वे सति तिर्यञ्चो नारकत्वे च नारकाः ।
अमरा अमरत्वे च मानुषत्वे च मानुषाः ॥ ॥ ८२६ ॥
ये त्वया स्थापिता दुःखे सर्वांस्तान् क्षमयाऽधुना ।
क्षाम्यस्व त्वमपि तेषां मैत्रीभावमुपागतः ॥ ८२७ ॥
जीवितं यौवनं लक्ष्मी रूपं प्रियसमागमः ।
चलं सर्वमिदं वात्यानर्तिताऽब्धितरङ्गवत् ॥ ८२८ ॥
व्याधि-जन्म-जरा-मृत्युग्रस्तानां प्राणिनामिह ।
विना जिनोदितं धर्मं शरणं कोऽपि नाऽपरः ॥ ८२९ ॥
सर्वेऽपि जीवाः स्वजना जाताः परजनाश्च ते ।
विदधीत प्रतिबन्धं तेषु को हि मनागपि ? ॥ ८३० ॥
एक उत्पद्यते जन्तुरेक एव विपद्यते ।
सुखान्यनुभवत्येको दुःखान्यपि स एव हि ॥ ८३१ ॥
अन्यद् वपुरिदं यावदन्यद् धान्य-धनादिकम् ।
बन्धवोऽन्ये च जीवोऽन्यो वृथा मुह्यति बालिशः ॥८३२॥
वसा-रुधिर-मांसा-ऽस्थि-यकृद्-विण् मूत्रपूरिते ।
वपुष्यशुचिनिलये मूर्छां कुर्वीत कः सुधीः ? ॥ ८३३ ॥
अवक्रयाऽऽत्तवेश्मेव मोक्तव्यमचिरादपि ।
लालितं पालितं वाऽपि विनश्वरमिदं वपुः ॥ ८३४ ॥
धीरेण कातरेणाऽपि मर्तव्यं खलु देहिना ।
तन् म्रियेत तथा धीमान्न म्रियेत यथा पुनः ॥ ८३५ ॥
अर्हतः शरणं सिद्धान् शरणं शरणं मुनीन् ।
उदीरितं केवलिभिर्धर्मं शरणमाश्रय ॥ ८३६ ॥
जिनधर्मो मम माता गुरुस्तातोऽथ सोदराः ।
साधवः साधर्मिकाश्च बन्धवास्त्विति चिन्तय ॥ ८३७ ॥

१० भाटकगृहीतगृहवत् ।

जीवघाता-ऽनृता-ऽदत्त-मैथुना रम्भवर्जनम् ।
त्रिविधं त्रिविधेनाऽपि प्रतिपद्यस्व भावतः ॥ ८३८ ॥
अष्टादशानां त्वं पापस्थानकानां प्रतिक्रमम् ।
कुरुष्वाऽनुसर स्वान्ते[1] परमेष्ठिनमस्क्रियाम् ॥ ८३९ ॥
ऋषभादींस्तीर्थकरान्नमस्य[2] निखिलानपि ।
भरतै-रावत-विदेहाऽर्हतोऽपि नमस्कुरु ॥ ८४० ॥
तीर्थकृद्भ्यो नमस्कारो देहभाजां भवच्छिदे ।
भवति क्रियमाणः सन् बोधिलाभाय चोच्चकैः ॥ ८४१ ॥
सिद्धेभ्यश्च नमस्कारो भगवद्भ्यो विधीयताम् ।
कर्मैधोऽदाहि यैर्ध्यानाग्निना भवसहस्रजम् ॥ ८४२ ॥
आचार्येभ्यः पञ्चविधाचारेभ्यश्च नमस्कुरु ।
यैर्धार्यते प्रवचनं भवच्छेदसदोद्यतैः ॥ ८४३ ॥
श्रुतं बिभ्रति ये सर्वं शिष्येभ्यो व्याहरन्ति च ।
तेभ्यो नम महात्मभ्य उपाध्यायेभ्य उच्चकैः ८४४
शीलव्रतसनाथेभ्यः साधुभ्यश्च नमस्कुरु ।
क्षमामण्डलगाः[3] सिद्धिविद्यां संसाधयन्ति ये ॥ ८४५ ॥
इत्थं पञ्चनमस्कारसमं यज्जीवितं व्रजेत् ।
न याति यद्यसौ मोक्षं ध्रुवं वैमानिको भवेत् ॥ ८४६ ॥
सावद्यं योगमुपधिं बाह्यं चाऽभ्यन्तरं तथा ।
यावज्जीवं त्रिविधेन त्रिविधं व्युत्सृजाऽधुना ॥ ८४७ ॥
चतुर्विधाहारमपि यावज्जीवं परित्यज ।
उच्छ्वासे चरमे देहमपि व्युत्सृज सत्तम ! ॥ ८४८ ॥
धन-स्वजन-गेहादौ ममत्वं मुञ्च कोविद ! ।
सर्वं विघटते प्रान्ते धर्म एकस्तु निश्चलः ॥ ८४९ ॥
दुष्कर्मगर्हणां जन्तुक्षामणां भावनामथ ।
चतुःशरणं च नमस्कारश्चाऽनशनं तथा ॥ ८५० ॥

---

१ चित्ते । २ प्रणम । ३ क्षमा क्षान्तिरेव मण्डलं तद्गच्छन्तीति ।

इत्थमाराधनां षोढा विधाप्य दयितं निजम् ।
पुनर्मदनरेखैवं धीरयामास धीरधीः ॥ ८५१ ॥
विभाव्यैतद् महाभाग ! विचिन्त्य नरकव्यथाम् ।
सर्वत्राऽप्रतिबद्धः सन्नेतद् दुःखं सह क्षणम् ॥ ८५२ ॥
नरत्वं जिनधर्मादिसामग्री दुर्लभा पुनः ।
समचित्तैः क्षणं भूत्वा तदस्या गृह्यतां फलम् ॥ ८५३ ॥
इति वाक्यामृतैस्तस्या विध्यातः क्रोधपावकः ।
हृष्टो बद्ध्वाऽञ्जलिं शीर्षे स सर्वं प्रतिपन्नवान् ॥ ८५४॥
शुभध्यानो विपद्याऽथ ब्रह्मलोके सुरोऽभवत् ।
ततः क्रन्दितुमारेभे दुःखी चन्द्रयशा भृशम् ॥ ८५५ ॥
दध्यौ मदनरेखाऽपि मन्दभाग्या हताऽस्मि हा ! ।
ईदृक्पुरुषरत्नस्याऽनर्थमूलं बभूव या ॥ ८५६ ॥
धिङ् मे रूपमिदं दीपकलिकेव परन्तपम् ।
यत्र यान्ति पतङ्गत्वं गुरूणामपि दृष्टयः ॥ ८५७ ॥
मन्निमित्तं हतो येन निजभ्राता स पापकृत् ।
ग्रहीष्यत्येव मां तस्मात् स्थातुमत्र न युज्यते ॥ ८५८ ॥
तद् गत्वा क्वचिदन्यत्र पारत्र्यं[1] कार्यमाश्रये ।
अन्यथा पुत्रमप्येष मम पापो हनिष्यति ॥ ८५९ ॥
मन्त्रयित्वेति सा पुत्रे शोकार्त्ते निरगात् ततः ।
निशीथे दिशि पूर्वस्यां गच्छन्त्याप महाटवीम् ॥ ८६० ॥
गता रात्रिर्द्वितीयेऽह्नि प्राप्य मध्यन्दिने सरः ।
चक्रे वनफलैस्तत्र प्राणवृत्तिं जलं पपौ ॥ ८६१ ॥
प्रत्याख्यायाऽथ साकारं भक्तमध्वश्रमार्दिता ।
खेदच्छेदार्थमेकस्मिन् सुष्वाप कदलीगृहे ॥ ८६२ ॥
आगता रजनी तस्यां व्याघ्र सिंह-शिवारवैः ।
उत्त्रस्ता सा नमस्कारं भूयो भूयोऽप्यचिन्तयत् ॥८६३॥

१ पारलौकिकम् ।

अर्धरात्रेऽथ तत्रैवाऽतीवजातोदरव्यथा ।
कृच्छ्रेण सुषुवे पुत्रं सर्वलक्षणसंयुतम् ॥ ८६४ ॥
प्रातः कम्बलरत्नेन वेष्टयित्वा शिशुं करे ।
श्रीयुगबाहुनामाऽङ्कां तस्य प्रक्षिप्य मुद्रिकाम् ॥ ८६५ ॥
ययौ सरसि चीराणि प्रक्षाल्य स्नातुमग्रतः ।
प्रविष्टाऽऽद्राय सा नीरहस्तिनोल्लालिताऽम्बरे ॥८६६॥
( युग्मम् )
अथ नन्दीश्वरद्वीपप्रस्थितः खेचरो युवा ।
पतन्तीमम्बराद् राज्ञीं जगृहे रूपमोहितः ॥ ८६७ ॥
रुदती करुणं नीता वैताढ्यं तेन साऽवदत् ।
भो महासत्त्व ! यामिन्यां प्रसूताऽहं सुतं वने ॥ ८६८ ॥
तं कदलीगृहे मुक्त्वा प्रविष्टाऽहं सरोवरे ।
तत्रोत्क्षिप्ता जलेभेन पतन्ती जगृहे त्वया ॥ ८६९ ॥
ततो बालः स केनाऽपि श्वापदेन हनिष्यते ।
आहाररहितः किं वा स्वयमेव विपत्स्यते ॥ ८७० ॥
तद् ममापत्यदानेन प्रसादं कुरु सदय !।
स इहाऽऽनीयतां किं वा तत्र मां नय सत्वरम् ॥८७१॥
प्राह विद्याधरो भद्रे ! भर्तारं प्रतिपद्यसे ।
यदि मां तत् सदादेशकारी तव भवाम्यहम् ॥ ८७२ ॥
अन्यच्च—
वैताढ्यखेचरश्रेणिस्वामी रत्नावहे पुरे ।
मणिचूडाऽभिधो राजा तत्पुत्रोऽहं मणिप्रभः ॥ ८७३ ॥
निर्विण्णः कामभोगानां राज्ये संस्थाप्य मत्पिता ।
मणिचूडोऽग्रहीद् दीक्षां चारणश्रमणान्तिके ॥ ८७४ ॥
क्रमेण विहरन्नागात् तत्राऽसौ गतवासरे ।
गतश्च साम्प्रतं नन्दीश्वरे चैत्यानि वन्दितुम् ॥ ८७५ ॥
तमद्य वीक्षितुं भद्रे ! व्रजता त्वं मयेक्षिता ।

१ जलहस्तिना ।

तद् भव स्वामिनी सर्वखेचरीणां प्रपद्य माम् ॥ ८७६ ॥
अन्यच्च स तनूजस्ते तुरङ्गापहृतेन हि ।
मिथिलापतिना पद्मरथेन ददृशे वने ॥ ८७७ ॥
आदाय पुष्पमालायाः स्वप्रियायाः समर्पितः ।
पाल्यमानः सुतत्वेन तथा तिष्ठत्यसौ सुखी ८७८ ॥
प्रज्ञप्तिविद्यया ज्ञातं मयैतन्नाऽन्यथा भवेत् ।
तत् प्रसन्नमना भूत्वा मम राज्यमलङ्कुरु ॥ ८७९ ॥
तच्छ्रुत्वा चिन्तितं राज्ञ्या ममाऽहो ! कर्म कीदृशम् ? ।
अन्याऽन्यव्यसनश्रेणी यद् ममैषा पुरः स्थिता ॥ ८८० ॥
तावच्छीलस्य रक्षार्थमियद् दूरं समागमम् ।
तस्य भङ्गस्तथैवाऽयमिहाऽपि समुपस्थितः ॥ ८८१ ॥
तन्मया नियतं तावद् रक्षितव्यं सतीव्रतम् ।
अयं च प्रसृतानङ्गमषीलिप्ताक्षरक्रमः ॥ ८८२ ॥
ततो न गणयेत् पापं न चाऽपि वंचनीयताम्[1] ।
न लज्जां न कुलावद्यं विचारविकलो नरः ॥ ८८३ ॥
व्याक्षेपः कोऽपि तद् युक्तो नोपायोऽस्त्यपरः पुनः ।
अशुभस्योच्यते कालहरणं कोविदैर्यतः ॥ ८८४ ॥
इति संकल्प्य साऽजल्पदहो ! नन्दीश्वरे जिनान् ।
तावद् दर्शय मे पश्चात् करिष्ये खलु ते प्रियम् ॥८८५॥
ततस्तुष्टेन तेनाऽसौ नीता नन्दीश्वरे क्षणात् ।
तत्र शाश्वतचैत्यानि सन्ति तेषां त्वियं स्थितिः ॥८८६॥
चत्वारोऽञ्जनशैलेषु दधिमुख्येषु षोडश ।
द्वात्रिंशच्च रतिकराऽभिधानेषु जिनालयाः ॥ ८८७ ॥
योजनानां शतं दीर्घाः पञ्चाशद् विस्तृताश्च ते ।
द्विसप्तत्युच्छ्रिताः सर्वे द्विपञ्चाशद् भवन्त्यमी ॥ ८८८ ॥
विमानादवतीर्याऽथ तत्र ताभ्यां यथाविधि ।

---

१ निन्दनीयताम् ।

प्रपूज्य वन्दिता भक्त्या प्रतिमाः शाश्वतार्हताम् ॥ ८८९ ॥
ऋषभश्चन्द्राननश्च वारिषेणाभिधस्तथा ।
वर्धमानश्च चत्वारः शाश्वता जिनपुङ्गवाः ॥ ८९० ॥
तद्वन्दनावसाने च मणिचूडं मुनीश्वरम् ।
नमस्कृत्य यथौचित्यमुभावपि निषीदतः ॥ ८९१ ॥
ज्ञात्वा मदनरेखाया ज्ञानी व्यतिकरं मुनिः ।
सद्धर्मदेशनापूर्वं मणिप्रभमबोधयत् ॥ ८९२ ॥
क्षमयित्वा ततो राज्ञी भणिता खेचरेण मे ।
अद्यप्रभृति यामिस्त्वमधुना किं करोमि ते ? ॥ ८९३ ॥
राज्याऽभाणि कृतं सर्वं त्वयैतत्तीर्थदर्शनात् ।
पृष्टश्च स मुनिः पुत्रप्रवृत्तिमिति शंसति ॥ ८९४ ॥
प्रागास्तां राजपुत्रौ द्वौ देवौ राजसुतौ सुरौ ।
तयोरेकः पद्मरथो द्वितीयस्ते सुतोऽभवत् ॥ ८९५ ॥
तेन पद्मरथेनाऽश्वापहृतेन तवात्मजः ।
गृहीत्वा पुष्पमालायाः स्वप्रियायाः समर्पितः ॥ ८९६ ॥
तुष्टः पूर्वभवस्नेहाद् मिथिलायां महोत्सवम् ।
राजा पद्मरथोऽकार्षीत्, पुत्रस्तत्राऽस्ति ते सुखी ॥ ८९७॥
एवंवाचि मुनौ व्योम्नि जितसूर-शशिप्रभम् ।
रत्नौघनिर्मितं मुक्तादामशोभिलसद्ध्वजम् ॥ ८९८ ॥
किङ्किणीध्वानमुखरमुच्छलत्तूर्यनिःस्वनम् ।
विमानमाययावेकं देवैः कृतजयारवम् ॥ ८९९ ॥
( युग्मम् )
ततो विनिर्ययौ देवस्तेजःप्रसरभासुरः ।
गीयमानगुणो देवस्त्रीभिः प्रवरभूषणः ॥ ९०० ॥
दत्त्वा मदनरेखायाः स च तिस्रः प्रदक्षिणाः ।
निपत्य पादयोः पश्चाद् मुनिं नत्वा निषण्णवान् ॥९०१॥

---

१ भगिनी । २ एवमित्थं वाग् वाणी यस्य तस्मिन् ।

असंबद्धमिदं दृष्ट्वा तमुवाच मणिप्रभः ।
देवानामपि यद्येषा नीतिस्तद् ब्रूमहेऽत्र किम् ? ॥१०२॥
चतुर्ज्ञानधरं चारुचारित्रं मुनिपुङ्गवम् ।
हित्वा त्वया प्रणामः प्राक् स्त्रीमात्रस्य कथं कृतः ? ॥१०३
अथ यावत् सुरः किञ्चिद् वक्ति तावद् मुनिर्जगौ ।
मा मैवं ब्रूहि नैवाऽयमुपालम्भं सुरोऽर्हति ॥ १०४ ॥
यतो मणिरथो राजा युगबाहुं सहोदरम् ।
लुब्धो मदनरेखायास्तत्प्रियाया जघान तम् ॥ १०५ ॥
मृत्युकाले ततो भर्ता वाक्यैर्निपुणकोमलैः ।
तथाऽनुशिष्टो जैनेन्द्रं धर्मं च ग्राहितस्तया ॥ १०६ ॥
यथाऽभूत् पञ्चमे कल्पे इन्द्रसामानिकः सुरः ।
स चायमागतः पूर्वं ववन्दे प्रमदामिमाम् ॥१०७॥
धर्माचार्या ध्रुवं धर्मदानादियममुष्य हि ।
प्रणामैः कोटिशोऽप्यस्यास्तत् स्यादेषोऽनृणः कथम् ?॥१०८॥
यो येन स्थाप्यते धर्मे यतिना गृहिणाऽपि वा ।
स एव तस्य सद्धर्मदानाद् धर्मगुरुर्भवेत् ॥ १०९॥
किञ्च-
सम्यक्त्वं ददता दत्तं शिवसौख्यं सनातनम् ।
एतद्दानोपकारस्योपकारः कोऽपि नो समः ॥११०॥
इत्यादौ मुनिनाऽऽख्याते जिनधर्मस्य भावयन् ।
सामर्थ्यमद्भुतं विद्याधरः क्षमयतेऽमरम् ॥ १११ ॥
राज्ञीं प्राह सुरो भद्रे ! किं तवेष्टं करोम्यहम् ।
साऽप्याह तत्त्वतो यूयं नेष्टं कर्तुं मम क्षमाः ॥११२॥
यतो जन्म-जरा-मृत्यु-रोग-शोकादिवर्जितम् ।
निरुपाधि ध्रुवं मोक्षसौख्यमेव मम प्रियम् ॥११३॥
तथापि नय मां शीघ्रं मिथिलायां सुरोत्तम ! ।
तत्र पुत्रमुखं वीक्ष्य यतिष्ये धर्मकर्मणि ॥११४॥

ततः सा तत् क्षणाद् निन्ये सुरेण मिथिलापुरिम् ।
यत्राऽभूद् मल्लिनाथस्य जन्म दीक्षा च केवलम् ॥९१५॥
अतः सत्तीर्थबुद्ध्याऽर्हच्चैत्येषु प्रथमं गतौ ।
दृष्ट्वा साध्वीरथासन्नोपाश्रये तौ प्रणेमतुः ॥ ९१६ ॥
ताभिश्च कथितो धर्मो यल्लब्ध्वा मानुषं भवम् ।
धर्मा-ऽधर्मफलं ज्ञात्वा धर्मे कार्यः सदोद्यमः ९१७ ॥
इत्यादिदेशनाप्रान्ते सुरः प्रोवाच सुन्दरि ! ।
एहि राजकुलं यामो दर्शये तनयं तव ९१८
साऽब्रवीदधुनाऽलं मे स्नेहेन भवहेतुना ? ।
संसारे भ्रमतां जातः को नु बन्धुः परोऽपि वा ?॥९१९॥
एतासामेव साध्वीनां चरणाः शरणं मम ।
इत्युक्ते त्रिदशः साध्वीस्तां च नत्वा गतो दिवम् ॥९२०॥
दीक्षां मदनरेखाऽपि साध्वीनामन्तिकेऽग्रहीत् ।
संजातसुव्रताह्वाना कुरुते दुष्करं तपः ॥ ९२१ ॥
प्रभावात् तस्य बालस्य नताः सर्वेऽपि पार्थिवाः ।
राजा पद्मरथस्तेन नमिनामाऽस्य निर्ममे ॥ ९२२ ॥
धात्रीणां लालनाद् वृद्धिं गतोऽसौ समये कलाम् ।
गृह्णानो यौवनस्थोऽभूत् श्वेतपक्षशशाङ्कवत् ॥ ९२३ ॥
पित्रा सुकुलजातानां रूपेणाऽतिसुरीश्रियाम्[1] ।
अष्टोत्तरसहस्रस्य कन्यानां ग्राहितः करम् ॥ ९२४ ॥
अथो पद्मरथो योग्यं ज्ञात्वा राज्ये नमिं नृपः ।
न्यस्य स्वं शमसाम्राज्ये क्षीणकर्मा गतः शिवम् ॥ ९२५ ॥
नमिर्नमितभूपालमौलिमालायित[2]क्रमः ।
उन्नतिं स तथा प्राप यथा शक्रसमोऽभवत् ॥ ९२६ ॥
इतश्च यस्यां सोदर्यं[3] रात्रौ मणिरथोऽवधीत् ।

---

१ सुरीश्रिय देवीशोभामतिक्रान्तवतीनाम् । २ मालायितौ मालेवाचरितौ ।
३ भ्रातरम् ।

४४

तस्यामेवाऽहिना दष्टो मृत्वा तुर्यावनौ गतः ॥ ९२७ ॥
स्थापितो मन्त्रिसामन्तैर्युगबाहुसुतस्ततः ।
राज्ये चन्द्रयशाश्चन्द्रयशाः पालयते महीम् ॥ ९२८ ॥
नमे राज्ञोऽन्यदा राज्यप्रधानो धवलः करी ।
आलानस्तम्भमुन्मूल्याऽचालीद् विन्ध्याटवीमभि ॥९२९॥
सुदर्शनपुरस्याऽसौ समीपे च व्रजन्निभः ।
मानुषैश्चन्द्रयशसो दृष्ट्वा राज्ञो निवेदितः ॥ ९३० ॥
राजाऽप्यैरावताभं तमानयत् स्वपुरं बलात् ।
तज् ज्ञात्वा चारपुरुषैः कथितं नमिभूभुजः ॥ ९३१ ॥
नमिना प्रहितो दूतः स गत्वोवाच यद् नमिः ।
याचते हस्तिनं स्वीयमथ चन्द्रयशा जगौ ॥ ९३२ ॥
यदेवं याचते दूत ! तव स्वामी निजं गजम् ।
तत् कथं नाऽशृणोन्नीतिं यत् तस्यामिदमुच्यते ? ॥ ९३३॥
न श्रीः कुलक्रमायाता शासने लिखिताऽपि वा ।
खड्गनाऽऽक्रम्य भुञ्जीत वीरभोग्या वसुन्धरा ॥ ९३४ ॥
इत्याद्युक्त्वा नृपो दूतमपमान्य व्यसर्जयत् ।
सोऽपि गत्वा नमेः सर्वं सविशेषं व्यजिज्ञपत् ॥ ९३५ ॥
कुपितोऽथ नमिः सर्वबलेन चलितो द्रुतम् ।
भेरीभाङ्कारनादेन सुदर्शनपुरोपरि ॥ ९३६ ॥
सोत्साहं तं नृपश्चन्द्रयशा अप्यभिषेणयन्[1] ।
शकुनैर्वारितः किन्तु विज्ञप्त इति मन्त्रिभिः ॥ ९३७ ॥
गोपुराणि पिधायाऽत्र पुरे तिष्ठ यथोचितम् ।
पश्चाज् ज्ञात्वा करिष्यामः सोऽपि राजा तथाऽकरोत् ॥९३८॥
नमिरेत्य ततो विष्वग् नगरं तदवेष्टयत् ।
एष व्यतिकरो ज्ञातः कथञ्चित् सुव्रतार्यया ॥ ९३९ ॥
चिन्तितं चाऽपरिज्ञातपरमार्थावुभाविमौ ।

१ सेनया अभिक्रामन् ।

विधाय जनसम्मर्दं मा प्रयातामधोगतिम् ॥ ९४०॥
इति साऽऽपृच्छय गणनीं सुसाध्वीपरिवारिता ।
सुदर्शनपुरेऽगच्छदार्या नमिनृपान्तिके ॥ ९४१ ॥
अभ्युत्थानं विधायाऽथ निवेश्य परमासने ।
भक्त्या मदनरेखार्या वन्दिता नमिभूभुजा ॥ ९४२ ॥
राज्ञि भूमौ निविष्टेऽस्मिन्नशेषसुखकारिणीम् ।
विधाय देशनां साध्वी रहस्यमिदमब्रवीत् ॥ ९४३ ॥
राजन्नसारा राज्यश्रीर्भोगा निर्वाहदारुणाः[1] ।
जीवघातेन दुःखाढ्ये निवासो नरके ध्रुवम् ॥ ९४४ ॥
तदेवं सति सङ्ग्रामान्निवर्तस्व दूरं ततः ।
अन्यच्च कीदृशो ज्येष्ठभ्रात्रा हि सह विग्रहः ? ॥ ९४५ ॥
विस्मयान्नमिराजेन पृष्ट कथमसौ मम ।
ज्येष्ठभ्राता ततः साध्व्याख्यातं सर्वं यथास्थितम् ? ॥९४६॥
प्रत्ययार्थं च कथिते ते मुद्रा-रत्नकम्बले ।
दर्शिते च नमेस्ते तु पृष्टया पुष्पमालया ॥ ९४७ ॥
तथाऽपि विरमेन्नैष यदा मानेन सा तदा ।
गता चन्द्रयशःपार्श्वेऽभिज्ञाता तेन सत्वरम् ॥ ९४८ ॥
अभ्युत्थायाऽऽसनं दत्त्वा नत्वा च स निविष्टवान् ।
अन्तःपुरपरीवारजनोऽप्येत्य ननाम ताम् ॥ ९४९ ॥
आर्ये ! किमेतदित्युग्रं व्रतं ते इति भूभुजा ।
पृष्टाऽसौ निजवृत्तान्तं यथावस्थितमाख्यत ? ॥ ९५० ॥
राज्ञाऽभाणि पुनः कुत्र सोऽधुना मे सहोदरः ।
आर्यया गदितं बाह्ये येन त्वं रोधितो नृपः ! ॥ ९५१ ॥
ततो हर्षाकुलश्चन्द्रयशा द्राग् निर्गतो बहिः ।
हृष्टो नमिरपि ज्ञात्वा तस्य संमुखमाययौ ॥ ९५२ ॥
पतंश्च पादयोर्ज्येष्ठबन्धुनोत्थाप्य सस्वजे ।

१ परिणामभयावहा ।

तथा यथैक्यं सौदर्यव्यञ्जनाय तयोरभूत् ॥ ९५३ ॥
यतो लक्षणशास्त्रेऽपि रूपे रूपप्रवेशतः ।
एकशेषः सरूपाणां भवत्येकत्वासिद्धये ॥ ९५४ ॥
महोत्सवेन नगरं प्रवेश्य नमिमग्रजः ।
उल्लसन्निर्मलस्नेहादश्रुपूर्णेक्षणोऽवदत् ॥ ९५५ ॥
पितुरेवं मृतिं दृष्ट्वा वत्स ! राज्ये रतिर्न मे ।
परं राज्यधराभावादियत्कालमहं स्थितः ॥ ९५६ ॥
निजबन्धुं विनाऽभीष्टसिद्धिर्भवति नो भुवि ।
इत्यादिवाक्यैः संबोध्य नमिं राज्येऽभ्यषिञ्चत ॥ ९५७॥
चन्द्रवत् परलोकस्योद्द्योताय प्राव्रजत् स्वयम् ।
प्रतापाक्रान्तभूभृत् तु नमिः सूर्य इवोदितः ॥ ९५८ ॥
तस्य राज्यद्वयं शत्रौ शक्त्या भक्त्या गुरौ जने ।
द्विधाधर्मप्रवीणस्याऽवतः कालो बहुर्ययौ ॥ ९५९ ॥
षाण्मासिकोऽन्यदा जज्ञे महादाहो नमेस्तनौ ।
तस्योपशान्तये राज्यः स्वयं घर्षन्ति चन्दनम् ॥ ९६० ॥
तद्बाहुवलयश्रेणिजणत्काररवैर्नमेः ।
कर्णाघातेन जायेत दाहार्तस्याऽरतिर्भृशम् ॥ ९६१ ॥
तदादेशात् ततो राज्यः कङ्कणान्युदतारयन् ।
क्रमेण यावदेकैकं मङ्गलाय करे दधुः ॥ ९६२ ॥
अथाऽपृच्छन् नृपो देव्यः किं न घर्षन्ति चन्दनम् ? ।
यन्नैष श्रूयते शब्दस्ततो मन्त्रिजनोऽब्रवीत् ॥ ९६३ ॥
देव्यः सर्वा अपि स्वामिन् ! घर्षन्त्यः सन्ति चन्दनम् ।
करे त्वेकैकवलयत्वेन न ज्ञायते ध्वनिः ॥ ९६४ ॥
तत् श्रुत्वा जातसंबोधश्छिन्नमोहो नृपो हृदि ।
दध्यौ सर्वेऽप्यहो ! भूरिसंयोगा दुःखदायकाः ॥९६५॥
कङ्कणैर्भूरिभिर्दुःखं स्वल्पैः स्वल्पतरैः सुखम् ।

---
१ रक्षतः ।

यावदस्यैव दृष्टान्तादेकाकित्वे महासुखम् ॥ ९६६ ॥
उच्यते च-
यथा यथा महत् तन्त्रं विस्तरश्च यथा यथा ।
तथा तथा महद् दुःखं सुखं तु न तथा तथा ॥ ९६७ ॥
क्लेशाय विस्तराः सर्वे संक्षेपास्तु सुखावहाः ।
परार्थं विस्तराः सर्वे त्यागमात्महितं विदुः ॥ ९६८ ॥
ततोऽसौ यदि मे दाहः प्रशाम्यति कथञ्चन ।
सर्वसङ्गं परित्यज्य तदेकाकी भवाम्यहम् ॥ ९६९ ॥
चिन्तयन्निति सुप्तोऽसौ निशान्ते मन्दरोपरि ।
स्वप्ने श्वेतगजारूढं पश्यत्यात्मानमुच्चकैः ॥ ९७० ॥
शङ्खतूर्यरवेणाऽथ प्रतिबुद्धो निरामयः ।
हृष्टो दध्यावहो ! स्वप्नः प्रधानो ददृशे मया ॥ ९७१ ॥
यतः-
गोवृषे पर्वताग्रे च प्रासादे सफलद्रुमे ।
आरोहणं गजेन्द्रे च स्वप्नशास्त्रे प्रशस्यते ॥ ९७२ ॥
किञ्च-
प्रथमे वार्षिकं यामे द्वितीये मासिकं फलम् ।
तृतीये वासरैस्तुर्ये सद्य एव फलं भवेत् ॥ ९७३ ॥
तथा-
दृष्टः पूर्वो मया क्वाऽपि शैलराजोऽयमीदृशः।
इति चिन्तयतस्तस्य स्वजातिस्मृतिरप्यभूत् ॥ ९७४ ॥
पूर्वमर्त्यभवे कृत्वा श्रामण्यं प्राणते सुरः ।
आसं तत्राऽर्हज्जन्मादावागतो दृष्टवानिमम् ॥ ९७५ ॥
ततो बुद्धः स्वयं पुत्रं न्यस्य राज्ये नमिर्नृपः ।
देवतादत्तलिङ्गः सन् प्रव्रज्यां प्रतिपन्नवान् ॥ ९७६ ॥
पुर्या निर्यान्तमालोक्य तच्चरित्रेण रञ्जितः ।
विप्रवेषधरस्तत्राऽऽययौ शक्रः परीक्षितुम् ॥ ९७७ ॥

वदत्येवं च भो राजंस्तावज्जीवदयाव्रतम् ।
त्वद्व्रतग्रहणे चैषा क्रन्दते दुःखिता पुरी ॥ ९७८ ॥
तदयुक्तमिदं पूर्वाऽपरबाधाकरं व्रतम् ।
ततो ब्रूते मुनिर्दुःखकारणं नो मम व्रतम् ॥ ९७९ ॥
किन्तु लोके स्वस्वकार्यहानिर्दुःखस्य कारणम् ।
ततोऽहमपि कार्यं स्वं कुर्वे किं मेऽन्यचिन्तया ? ॥९८० ॥
प्रज्वलन्त्युपदर्श्याऽथ गृहाण्यन्तःपुराणि च ।
हरिराह किमेतत् त्वं दह्यमानमुपेक्षसे ? ॥ ९८१ ॥
नमिराह सुखेनाऽस्मि मम यन्नास्ति किञ्चन ।
किञ्चिद् मे दह्यमानायां मिथिलायां न दह्यते ॥ ९८२ ॥
पुनराह हरिः पुर्या प्राकारमतिदुर्गमम् ।
नानायन्त्रयुतं राजन् ! कारयित्वा परिव्रज ॥ ९८३ ॥
राजर्षिः प्राह भो भद्र ! संयमो नगरं मम ।
शमाख्यो विहितस्तत्र प्राकारो नययन्त्रवान् ॥ ९८४ ॥
इन्द्रोऽवोचद् निवासाय लोकानां सुमनोहरान् ।
प्रासादान् कारयित्वा भोः ! क्षत्रिय ! प्रव्रजेस्ततः ॥९८५॥
मुनिः प्रोचे कुधीरेव कुर्यात् पथिकवद् गृहम् ।
निश्चलं यत्र संस्थानं युक्तं तत्रैव मन्दिरम् ॥ ९८६ ॥
हरिः प्राह निगृह्याऽऽदौ चौरान् सुस्थं कुरु प्रभो ! ।
व्रत्याह चौरा रागाद्या निगृहीताश्च ते मया ॥ ९८७ ॥
वासवः प्राह ये केऽपि नमन्ति न तवोद्धताः ।
पार्थिवास्तान् विनिर्जित्य प्रव्रज्यां कुरु सत्तम ! ॥९८८॥
व्रत्याह लक्षसङ्ख्यान् यः सङ्ग्रामे सुभटान् जयेत् ।
यश्चात्मानं जयेदेकमेष मे परमो जयः ॥ ९८९ ॥
हरिः प्राह गृहावासपरो धर्मोऽस्ति नाऽपरः ।
यत्र देदीयते दीना-ऽनाथेभ्यो दानमन्वहम् ॥ ९९० ॥
नमिः प्राह गृही धर्मं न कुर्याज्जीवघातकृत ।

नैष सर्षपतुल्योऽपि यतिधर्ममहागिरेः ॥ ९९१ ॥
हरिः प्राह कुरु स्वर्णमणिमुक्तादिसंचयम् ।
मा त्वमागामिभोगानां हेतोर्हस्तगतांस्त्यज ॥ ९९२ ॥
व्रत्याह स्वर्णशैलैरप्यसन्तुष्टस्य नो धृतिः ।
कामाश्च विषशल्याहितुल्यास्तैः शंस किं सुखम्? ॥९९३॥
न भोगाऽऽशंसया भोगास्त्यक्ता हस्तगता मया ।
अजीर्णसंभवे दोषे घृतं पिबति कः सुधीः ? ॥ ९९४ ॥
इत्यादिभणितोऽप्येष यदा न चलति व्रतात् ।
साक्षाद् भूत्वा ततः शक्रो नमिं नत्वेदमब्रवीत् ॥ ९९५ ॥
तवैव श्लाघ्यते गोत्रं सत्त्वं यस्याऽसमं मुने ! ।
यश्च त्वं मोहपङ्केन नाकाशमिव लिप्यसे ॥ ९९६ ॥
इत्येवं तं हरिः स्तुत्वा वन्दित्वा त्रिः प्रदक्षिणम् ।
उत्पपात नभो देदीप्यमानमणिकुण्डलः ॥ ९९७ ॥
अरुष्टतुष्टो निर्वाह्य व्रतं सिद्धिं गतो नमिः ।
साध्वी मदनरेखाऽपि शुद्धा शुद्धगतिं गता ॥ ९९८ ॥
जन्तुचित्तं स्थिरीकर्त्तु शीलस्यैवं गुणा-ऽगुणाः ।
पालना-ऽपालनादुक्ता अधुना तप उच्यते ॥ ९९९ ॥
तप एव परं तेजः सर्वेषामपि तेजसाम् ।
प्रकाशयति यज् ज्ञानात् सहसैव जगत्त्रयम् ॥ १००० ॥
तपस्तेजोऽर्कसंपर्काज्जीवसूर्योपलेऽमले ।
तेजस्तज्जायते येन कर्मैधो भस्मतां व्रजेत् ॥ १००१ ॥
बाह्याऽभ्यन्तरभेदाख्यधाराद्वितयशालिना ।
तपःखड्गेन ये मोहं घ्नन्ति ते सुभटा भुवि ॥ १००२ ॥
अनन्तकालनिचितं निकाचितमपि क्षणात् ।
दह्यते तपसा कर्म दारुग्रन्थिरिवाऽग्निना ॥ १००३ ॥
आत्मा सितपटः सूक्ष्मस्तपस्ताप-शमोदकैः ।
क्षीणकर्ममलोऽत्यन्तं मुक्तिश्रीभुक्तिभाग् भवेत् ॥१००४॥

अनपेक्षतया न्यस्य निराबाधतयाऽऽत्मनः ।
मोक्षैकतानमनसा कर्तव्यं सात्त्विकं तपः ॥ १००५ ॥
ग्रन्थान्तरेऽप्युक्तम्-
तपश्च त्रिविधं ज्ञेयमफलाकाङ्क्षिभिर्नरैः ।
श्रद्धया परया तप्तं सात्त्विकं तप उच्यते ॥ १००६ ॥
सत्कार-मान-पूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १००७ ॥
मूढग्रहेणाऽऽत्मनो यत् पीडया क्रियते तपः ।
परस्योच्छेदनार्थं च तत् तामसमुदाहृतम् ॥ १००८ ॥
मन्दा भवन्ति विच्छाया तपसस्तेजसा जिताः ।
सात्त्विकास्तूज्ज्वला बाढमग्निशौचमिवाऽनलात् ॥१००९॥
प्राज्यं राज्यं परित्यज्य कुर्वतः सात्त्विकं तपः ।
जाताः सनत्कुमारस्य लब्धयः पश्य कीदृशः ॥ १०१० ॥
तथाहि-
अस्त्यत्र भरतक्षेत्रे विषये कुरुजङ्गले ।
महर्द्धिभरसंपूर्णं हस्तिनागपुरं पुरम् ॥ १०११ ॥
कुरुवंशाब्धिपूर्णेन्दुरश्वसेनो नराधिपः ।
तत्राऽऽसीद् विक्रमाक्रान्ताशेषविक्रान्तभूपतिः ॥ १०१२ ॥
सहदेवी प्रिया तस्य कामिनी यामिनीषु या ।
पूर्णशीलेन्दुना रेजे पूर्णिमेव सदोज्ज्वला ॥ १०१३ ॥
चतुर्दशमहास्वप्नसूचितोऽभूत् तयोः सुतः ।
श्रीमान् सनत्कुमाराख्यः सर्वलक्षणसंयुतः ॥ १०१४ ॥
सूरराजसुतस्तस्य कालिन्दीकुक्षिसम्भवः ।
अभूद् महेन्द्रसिंहाख्यः स पांशुक्रीडितः सखा ॥१०१५॥
समं तेनाऽर्पितो राज्ञा कलाचार्यस्य नन्दनः ।
तेनाऽप्येष दिनैः स्तोकैर्ग्राहितः सकलाः कलाः ॥१०१६॥
कुमारः सहितस्तेन सख्या शिष्टजनोचितान् ।

विनोदान् विविधान् कुर्वन् कस्य न प्रीतयेऽजनि?॥१०१७॥
अथाऽस्य यौवनारम्भस्तनौ जनदृगुत्सवः ।
प्रावर्तत वसन्तश्च वने तौ तु श्रिया समौ ॥ १०१८ ॥
यथा हि यौवनारम्भो न वसन्तसमः कथम् ? ।
यत्र तस्य मुखं जज्ञे स्मेरचम्पकसन्निभम् ॥ १०१९ ॥
केशा भ्रमरवद् रेजुर्नवं दलमिवाऽधरः ।
दीर्घिकावद् दृशौ कर्णौ दोलावत् क्रीडितुं श्रियः ॥१०२०॥
तयोः सदृशयोर्योगमिव कर्तुं कुमारराट् ।
महर्द्ध्या मकरन्दाख्यमुद्यानं मुदितो ययौ ॥ १०२१ ॥
मित्रेण सहितोऽनेकैर्नरनाथैश्च नागरैः ।
नानावसन्तक्रीडाभिश्चिरं चिक्रीड तत्र सः ॥ १०२२ ॥
अथाऽश्वपतिना वाहा[1] यथार्हं भूभुजां पुरः ।
ढौकितास्तान् समारुह्य तेऽपि वेगादवाहयन् ॥ १०२३ ॥
कुमारोऽप्यब्धिकल्लोलाभिधं वरतुरङ्गमम् ।
आरुह्य मुमुचेऽश्वोऽपि धावन्नुदपतद् नभः ॥१ ०२४ ॥
क्षणेनादर्शनीभूते तस्मिन् ज्ञात्वाऽश्वसेनराट् ।
व्याकुलः सपरीवारः पृष्ठतो गन्तुमुद्यतः ॥ १०२५ ॥
अत्रान्तरे महेन्द्रेण विज्ञप्तो नृपतिः प्रभो ! ।
स्वामी तिष्ठतु लब्ध्वा तु कुमारमहमागमम् ॥ १०२६ ॥
इति भूपं निवर्त्याऽसौ कियद्बलसमन्वितः ।
वर्षमेकं महाटव्यां गतो बभ्राम सर्वतः ॥ १०२७ ॥
अथैकदिवसे भ्राम्यन्नश्रौषीत् सारसध्वनिम् ।
आघ्रासीत् पद्मगन्धं च ततस्तत्संमुखं ययौ ॥ १०२८ ॥
दृष्ट्वा सरोवरं तत्र शृण्वन् गीतकलध्वनिम् ।
हर्षोत्फुल्लमुखो यावत् पुरो गन्तुं प्रवृत्तवान् ॥ १०२९ ॥
तावद् युवतिमध्यस्थं कुमारं पश्यति स्म सः ।

1 अश्वा.

तस्थौ च किमसंभाव्यमिदमित्यतिविस्मितः ॥ १०३० ॥
कुरुवंशैकमाणिक्याऽश्वसेननृपनन्दन ! ।
श्रीमत्सनत्कुमार ! त्वं जय त्रैलोक्यविश्रुत ! ॥ १०३१ ॥
पठ्यमानमिति श्रुत्वा महेन्द्रो बन्दिनाऽथ सः ।
संजातनिश्चयः किञ्चिदपूर्वं तोषमासदत् ॥ १०३२ ॥
ततो दृष्टिपथायातः कुमारेणोपलक्ष्य सः ।
अभ्युत्तस्थे प्रणिपतन्नालिलिङ्गे च सादरम् ॥ १०३३ ॥
तावुभावपि हर्षाश्रुपूर्णनेत्रौ सविस्मयौ ।
निविष्टौ खेचरीदत्तविष्टरौ स्नेहनिर्भरौ ॥ १०३४ ॥
विद्याधरेन्द्रलोकोऽपि सवितर्कं तदन्तिके ।
सर्वोपशान्तगीतादिनादो मृदु निविष्टवान् ॥ १०३५ ॥
परिमृज्य ततो नेत्रे कुमारो मित्रमूचिवान् ।
कथमत्राऽऽगतोऽसि त्वमिहस्थं मां कुतोऽविदः ? ॥१०३६॥
मद्वियोगात् कथं मातापितरौ प्राणधारणम् ।
कुरुतस्त्वं किमेकाकी प्रहितो भद्र ! कथ्यताम् ?॥१०३७॥
इति पृष्टे यथावृत्तं महेन्द्रः सर्वमाख्यत ।
ततोऽसौ कारितः स्नान-भोजनादि वधूजनैः ॥ १०३८ ॥
यदि देव ! प्रसन्नोऽसि ममोपरि तदा निजम् ।
अश्वापहारादारभ्याऽद्ययावद् वृत्तमुच्यताम् ॥ १०३९ ॥
इति पृष्टः पुनस्तेन कुमारोऽचिन्तयद् यथा ।
उत्तमानां निजं वृत्तं नाख्यातुं युज्यते स्वयम् ॥१०४० ॥
अनुल्लङ्घ्यो महेन्द्रश्च तदिदं दयितामुखात् ।
कथयामीति बकुलमतीं विद्याधरीं जगौ ॥ १०४१ ॥
प्रिये ! विद्याबलाज् ज्ञातसद्भावचरितं मम ।
मित्रस्य पुरतः ख्याहि निद्रा मां बाधतेऽधुना ॥ १०४२ ॥
इत्युदित्वा कुमारेन्द्रः शय्याधाम विवेश सः ।
भर्तुरादेशतुष्टा सा चख्यौ बकुलमत्यपि ॥ १०४३ ॥

तदा महेन्द्र ! वस्तावत् पश्यतामेव वाजिना ।
अपहृत्य कुमारेन्द्रो महाटव्यां प्रवेशितः ॥१०४४॥
द्वितीयेऽपि दिनेऽश्वस्य तथैव व्रजतो जवात् ।
मध्याह्नसमयो जज्ञे पान्थानामतिदारुणः ॥१०४५॥
क्षुत्-तृट्-श्रमाऽतिरेकेण जिह्वां कृष्ट्वा मुखाद् बहिः ।
तस्थावूर्ध्वस्थ एवाऽयं श्वासापूर्णगलाकुलः ॥१०४६॥
सादिनोत्तीर्य पर्याणं यावदुत्तारितं हयात् ।
घूर्णित्वा पतितस्तावदसौ प्राणैश्च तत्यजे ॥ १०४७ ॥
ततः कुमारो नीरार्थं परिभ्राम्यन्नितस्ततः ।
क्वाऽपि नाऽऽप जलं तापादथाऽभूदाकुलो भृशम् ॥१०४८॥
दूरे सप्तच्छदं दृष्ट्वा हृष्टस्तमभिधावितः ।
कथञ्चित् प्राप्य तस्याऽधः पपात भ्रमितेक्षणः ॥ १०४९॥
अथ यक्षेण तत्पुण्यानुभावात् तन्निवासिना ।
आनीय सलिलं सिक्तः सर्वाङ्गेषु नृपाङ्गजः ॥ १०५० ॥
लब्ध्वाऽसौ चेतनां पीत्वा जलं पप्रच्छ को भवान् ? ।
कुतो वेदमिहाऽऽनिन्ये जलं यक्षोऽप्यथाऽब्रवीत् ॥१०५१॥
यक्षोऽहं निवसाम्यत्र मानसाख्यसरोवरात् ।
त्वन्निमित्तं महाभाग ! समानिन्ये जलं मया ॥१०५२॥
कुमारः प्राह तस्यैव सरसो मज्जनेन चेत् ।
प्रयाति मम सर्वाङ्गसन्तापो यक्षपुङ्गव ! ॥१०५३॥
पूरयामि तवाऽभीष्टमधुनेति प्रजल्पता ।
यक्षेणैषोऽञ्जलौ कृत्वा निन्ये सपदि मानसम् ॥१०५४॥
कृतस्नानश्च तत्राऽसौ कुमारः पूर्ववैरिणा ।
दृष्टोऽसिताख्ययक्षेण युद्धं च समभूत् तयोः ॥१०५५॥
अत्रान्तरे महेन्द्रस्तां पप्रच्छ वद खेचरि ! ।
किं तेन सह यक्षेण स्वामिनो वैरकारणम् ? ॥१०५६॥

साऽप्यूचे श्रूयतामस्ति श्रीकाञ्चनपुरं पुरम् ।
तत्रासीद् विक्रमयशोनामा नरपतिः पुरा ॥१०५७॥
तस्य पञ्चशतान्यन्तःपुरीणां सुतनुश्रियाम् ।
तत्रेभ्यो नागदत्तोऽभूद् विष्णुश्रीस्तस्य वल्लभा ॥ १०५८॥
रूप-लावण्य-सौभाग्यैः सुरस्त्रीभ्योऽपि साऽधिका ।
कथञ्चिद् ददृशे राज्ञा क्षिप्ता चाऽन्तःपुरे द्रुतम् ॥१०५९॥
प्रायः परधन-स्त्रीषु मूढानां हि रतिर्भवेत् ।
यदपथ्यं शरीरस्य तद्धि मन्दाय रोचते ॥ १०६० ॥
तां विना नागदत्तोऽपि हा ! प्रिये ! कमलानने ! ।
मृणालकोमलभुजे ! रम्भोरु ! मृगलोचने ! ॥ १०६१ ॥
क्व गताऽसि कथञ्चात्मदर्शनं न ददासि मे ।
प्रलपन्नेवमुन्मत्तीभूतो बभ्राम सर्वतः ? ॥ १०६२ ॥
तदेकासक्तचित्तस्तु नृपः कृत्यपराङ्मुखः ।
नयत्यगणिताऽश्लोको[1] धन्यंमन्यः स वासरान् ॥१०६३॥
यतः-
विवेकदीपकस्तावन्नृणां स्फुरति मानसे ।
ताड्यते चटुलाक्षीणां न यावल्लोचनाञ्चलैः ॥ १०६४ ॥
ईर्ष्यापरिभवार्ताभिः शेषराज्ञीभिरन्यदा ।
संभूय कार्मणं कृत्वा विष्णुश्रीर्विनिपातिता ॥ १०६५ ॥
ततस्तदवसानेनाऽत्यन्तशोकातुरो नृपः ।
अश्रुपूर्णाक्षिरुन्मत्तो नागदत्त इवाऽभवत् ॥ १०६६ ॥
तदङ्गं राज्ञि संस्कर्तुमददानेऽथ मन्त्रीभिः ।
आलोच्य वञ्चयित्वैनं नीत्वाऽरण्ये समुज्झितम् ॥१०६७॥
अपश्यन्नथ तद् राजा त्यक्तपानाऽशनादिकः ।
तस्थौ योगीव निश्चेष्टः शून्यं ध्यायन् दिनत्रयम् ॥१०६८॥

---

१ अश्लोकोऽयशः ।

अदृष्टे म्रियते नूनमिति निश्चित्य मन्त्रिभिः ।
नीतोऽरण्ये नृपोऽद्राक्षीद् बीभत्सं तत्कलेवरम् ॥१०६९॥
चलत्कृमि गलत्पूति वायसाकृष्टलोचनम् ।
दुर्गन्धमुपरिभ्राम्यद्गृध्रौघं खण्डितं खगैः ॥ १०७० ॥
( युग्मम् )
तद् दृष्ट्वाऽसौ निनिन्दैवं लज्जा शीलं कुलं यशः ।
त्यक्तानि यत्कृते जीव ! धिग् दशा तस्य कीदृशी? १०७१
इत्थं वैराग्यमापन्नः सर्वस्वं तृणवत् क्षणात् ।
नृपस्त्यक्त्वा प्रवव्राज सुधर्माचार्यसन्निधौ ॥ १०७२ ॥
सन्तोऽन्तेऽपि निवर्तन्ते यत् तदालम्ब्य पापतः ।
मग्नास्तत्रैव नश्यन्ति मूढा मत्कोटवत् पुनः ॥ १०७३ ॥
शुद्धचारित्रदुग्धेन प्रक्षाल्यात्मपटे मषीम् ।
पापरूपां विपद्याऽन्ते तृतीयं कल्पमाप सः ॥ १०७४ ॥
ततश्च्युत्वा रत्नपुरे जिनधर्माभिधोऽभवत् ।
इभ्यपुत्रो जिनाख्यातद्वादशव्रतधारकः ॥ १०७५ ॥
इतश्च नागदत्तोऽपि प्रियाविरहदुःखितः ।
महार्तध्यानतो मृत्वा भ्रान्त्वा तिर्यक्ष्वनेकशः ॥ १०७६॥
पुरे सिंहपुरे सोऽभूदग्निशर्माऽभिधो द्विजः ।
कियत्यपि गते काले त्रिदण्डिव्रतमग्रहीत् ॥ १०७७ ॥
तप्यमानस्तपस्तीव्रं द्विमासक्षपणादि सः ।
आगाद् रत्नपुरं तत्र नृपोऽस्ति नरवाहनः ॥ १०७८ ॥
तेन त्रिदण्डिभक्तत्वाज् ज्ञात्वा तीव्रतपा इति ।
श्रद्धयाऽऽमन्त्र्य निन्येऽसौ स्वगृहं पारणादिने ॥ १०७९॥
जिनधर्मोऽपि तत्राऽऽगात् तदानीं दैवयोगतः ।
तं दृष्ट्वा स मुनिः प्राच्यवैरात् ताम्रेक्षणोऽजनि ॥१०८०॥
अब्रवीच्च नृपं राजन् ! पृष्ठेऽस्य श्रेष्ठिनो यदि ।
न्यस्य पात्रीं ददास्युष्णपायसं पारये ततः ॥ १०८१ ॥

नृपः प्राह महात्माऽयं मान्यो मे कोऽपि तन्मुने ! ।
अपरोऽस्तु, मुनिः प्राह नान्यथा पारयाम्यहम् ॥१०८२॥
ततः तस्यानुरागेण प्रतिपन्नं नृपेण तत् ।
सोऽपि तुष्टमना भोक्तुं तथैवाऽऽरब्धवान् मुनिः ॥१०८३॥
श्राद्धोऽपि पूर्वदुष्कर्मफलमेतदुपस्थितम् ।
मन्वान इति पृष्ठस्थपात्रीदाहं सहत्यलम् ॥ १०८४ ॥
भुक्तोर्ध्वं पृष्ठतः पात्री त्वग्-मांस-रुधिरैः समम् ।
उत्पपाट ततः श्रेष्ठी धीरः सन् स्वगृहं ययौ ॥ १०८५ ॥
सन्मान्य क्षमयित्वा च सर्वस्वजन-पूजनान् ।
पूजां विधाय चैत्येषु महात्मा निर्ययौ पुरात् ॥ १०८६ ॥
तुङ्गाद्रिशिखरे गत्वा विहितानशनः क्रमात् ।
कायोत्सर्गेण तस्थौ स पक्षं पक्षं चतुर्दिशम् ॥ १०८७ ॥
पीडां सम्यक् सहन् पृष्ठे खाद्यमानः खगादिभिः ।
नमस्कारपरो मृत्वा सौधर्मेन्द्रो बभूव सः ॥ १०८८ ॥
त्रिदण्ड्यपि विपन्नस्तेनाऽऽभियोगिककर्मणा ।
तस्यैव वाहनं जज्ञे गज ऐरावणाऽभिधः ॥ १०८९ ॥
तत ऐरावतश्च्युत्वा भ्रान्त्वा तिर्यक्षु नृष्वपि ।
अज्ञानतपसो यक्षोऽसिताक्षोऽजनि तत्र सः ॥ १०९० ॥
च्युतः शक्रोऽपि सौधर्माद् हस्तिनागपुरेऽभवत् ।
चक्री सनत्कुमारोऽयमिति वैरस्य कारणम् ॥ १०९१ ॥
तत्राऽसिताक्षयक्षेण चालयन्नचलोपलान् ।
उन्मूलितमहावृक्षः प्रथमं मुमुचेऽनिलः ॥ १०९२ ॥
ततो बहुलधूलीभिरन्धकारितमम्बरम् ।
मुक्ता मुक्ताट्टहासाश्च पिशाचा ज्वलिताननाः ॥ १०९३ ॥
यावत् तथैव न क्षुब्धः कुमारः सोऽमुना ततः ।
मुक्तज्वालास्फुलिङ्गाक्षैर्नागपाशैरबध्यत ॥ १०९४ ॥
जीर्णरज्जुवदेतेन त्रोटितास्तेऽप्यसौ पुनः ।

कराभ्यां प्रहरन् बाहुप्रहारेण प्रपातितः ॥ १०९५ ॥
ततो राक्षसरूपेण तेन जातोरुमत्सरात् ।
कुमारः कर्कशं लोहमुद्गरेण हतो हृदि ॥ १०९६ ॥
तेनाऽप्येकं महावृक्षमुन्मूल्याऽऽच्छोटितोऽसुरः ।
वृद्धिमूर्ध्वं दधत् छिन्नद्रुमवत् पतितः क्षितौ ॥ १०९७ ॥
रक्षसोत्पाट्य तस्याऽथो परिक्षिप्तो गिरिर्महान् ।
पीडिताङ्गो दृढ तेन सोऽपि निश्चेतनोऽजनि ॥१०९८॥
लब्धसंज्ञः क्षणाद् भूयः कुमारो यक्षराडपि ।
प्रवृत्तौ बाहुयुद्धेन योद्धुमाबद्धमत्सरौ ॥ १०९९ ॥
नर्दन्तौ मत्तवृषवत् सिंहनादं च मुञ्चतः ।
वेतालवच्च कुरुतो महाकिलाकिलारवम् ॥११०० ॥
चक्रवच्च परिभ्राम्योल्लुलतस्तौ प्लवङ्गवत् ।
कुर्कुटाविव वेगेनाऽपसृत्य मिलतः पुनः ॥ ११०१ ॥
कुमारेण ततो लब्धलक्षेणाऽऽहत्य मुष्टिना ।
शतखण्डीकृतो यक्षोऽमरत्वान् न मृतः पुनः ॥११०२ ॥
नष्टे तस्मिन्नथारार्टीं मुक्त्वा तत्कौतुकाऽऽगतैः ।
देव-विद्याधरैर्व्योम्नि कृतो जयजयारवः ॥ ११०३ ॥
अहो ! यक्षः कुमारेण जितोऽयमितिवादिभिः ।
विहिता पुष्पवृष्टिश्च कुमारोपरि हर्षितैः ॥ ११०४ ॥
आर्यपुत्रस्ततो यावदपराह्णे सरोवरात् ।
प्रतस्थे तावदायासीदग्रतो नन्दनं वनम् ॥ ११०५ ॥
तत्राऽष्टौ भानुवेगस्य विद्याधरपतेः सुताः ।
अपश्यद् दिव्यरूपेण दिक्कुमारीरिवाऽद्भुताः ॥११०६॥
स्निग्धदृष्ट्या स ताभिश्च वीक्ष्यमाणोऽतिविस्मयात् ।
गत्वा तदन्तिके कन्यामेकामुद्दिश्य पृष्टवान् ॥ ११०७ ॥
का यूयं किं निमित्तं च शून्यारण्यमलङ्कृतम् ।
भवतीभिरिदं ता अप्यूचुर्मधुरया गिरा ? ॥ ११०८ ॥

महाभाग ! इतो नातिदूरेऽस्ति प्रियसङ्गमा ।
नाम्नाऽस्माकं पुरी तत्र तावद् विश्रम्यतां त्वया ॥११०९॥
किङ्करैर्दर्शिताध्वाऽसौ ततो गन्तुं प्रवृत्तवान् ।
सायं प्राप्तः पुरीं ताभी राजसौधं च नायितः[1] ॥ १११० ॥
दृष्ट्वाऽथाऽभ्युत्थितो भानुवेगराजेन संभ्रमात् ।
कृत्यं तत्रोचितं कृत्वा कुमारोऽभाणि साञ्जसम् ॥११११॥
भद्र ! कन्या इमा मेऽष्टावेतासां च वरः पुरा ।
त्वमेव मुनिनाऽऽख्यातोऽसिताक्षजयकारकः ॥ १११२ ॥
ततः परिणयस्वेमा इति भूपालभाषितम् ।
तथेति प्रतिपद्यार्यपुत्रोऽसौ क्रिययाऽकरोत् ॥ १११३ ॥
विवाहाऽनन्तरं बद्धकङ्कणो वासमन्दिरे ।
शयित्वा वरपल्यङ्के सुखं यावदजागरीत् ॥ १११४ ॥
स्वं तावदीक्षते भूमौ कङ्कणं च करे पुनः ।
किमेतदिति संचिन्त्य धीरचित्तस्ततोऽचलत् ॥ १११५ ॥
ततोऽरण्ये गिरेः शृङ्गे मणिस्तम्भप्रतिष्ठितम् ।
दिव्यं भवनमद्राक्षीदिन्द्रजालभ्रमं दधत् ॥ १११६ ॥
तदासन्ने गतो नार्या रुदत्याः करुणस्वरम् ।
श्रुत्वा गतभयः सौधं कुमारः प्रविवेश तत् ॥ १११७ ॥
तत्र सप्तमभूमिस्था दृष्टैका दिव्यकन्यका ।
रुदती करुणं भूयो भणन्तीति च कोमलम् ॥ १११८ ॥
कुरुवंशनभश्चन्द्र ! भूया[2] भर्ता त्वमेव मे ।
श्रीमन् ! सनत्कुमारेशाऽपरस्मिन्नपि जन्मनि ॥ १११९ ॥
भणित्वेदं तया भूयो रुदत्याऽप्यासनेऽर्पिते ।
उपविश्याऽमुना पृष्टा विस्मिताऽऽह्लादितेन सा ॥११२०॥
पद्भ्यां, मध्येन, वक्त्रेण पद्मं सिंहं सुधाकरम् ।
जित्वा त्रिजगतः सारं या त्वमुच्चैरिह स्थिता ॥११२१॥

---

१ प्रापित. । २ क्रियापदमेतत् ।

नख-केश-तनूकान्ति-दृष्टि-दन्त-स्वरादिभिः ।
विशिष्टलक्षणैरेव लक्षिता या च लक्ष्यसे ॥ ११२२ ॥
सा त्वं कथमिमां दीनां दशां प्राप्ताऽसि सुन्दरि ! ।
किञ्च सनत्कुमारः स्यात् तव यं शरणीयसि ? ॥११२३॥
साऽवोचद् भद्र ! मे भर्ता स मनोरथमात्रतः ।
पित्रा दत्ताऽस्मि यत् तस्मै दुःखहेतुमथो शृणु ॥११२४॥
श्रीसाकेतपुरे राजा सुरभिश्चन्दना प्रिया ।
दुहिताऽहं तयोर्जाता प्राणेभ्योऽप्यतिवल्लभा ॥११२५॥
रूपं सनत्कुमारस्य लिखित्वा फलकेऽन्यदा ।
आगाद् दूतोऽश्वसेनस्य पित्रा तद् दर्शितं मम ॥११२६॥
जाता शून्याऽस्मि तद् वीक्ष्य यन् मे चित्तापहारतः ।
तत् सजीवमभूच्चित्रं निर्जीवत्वं पुनर्मम ॥ ११२७ ॥
ततः पित्रा विदित्वाऽहं संप्रदानविधानतः ।
दत्ता सनत्कुमाराय विवाहोऽद्यापि नाऽभवत् ॥११२८॥
एको विद्याधरस्तावत् कुट्टिमाद् मामिहाऽनयत् ।
विद्याविकुर्विते सौधे मुक्त्वा चाऽस्मिन् कुतोऽप्यगात्११२९
एवं वदति सा यावत् तावद् विद्याधराऽधमः ।
सहसा स समागत्य कुमारं गगनेऽक्षिपत् ॥११३०॥
ततो हाहारवं रौद्रं कुर्वाणा साऽपि बालिका ।
मूर्च्छापरवशीभूता पपात धरणीतले ॥ ११३१ ॥
तावन्मुष्टिप्रहारेण हत्वा तं दुष्टखेचरम् ।
आर्यपुत्रोऽन्तिके तस्या अक्षताङ्गः समाययौ ॥ ११३२ ॥
तां समाश्वास्य चाऽऽख्यातस्ववृत्तान्तो व्यवाहयत् ।
सा च स्त्रीरत्नमेतस्य सुनन्दाख्या भविष्यति ॥ ११३३ ॥
तमस्तोमसमं दुष्टखेचरं विनिहत्य तम् ।
सा बाला पद्मिनी येनाऽऽनन्दिता सूर एव सः ॥११३४॥

शरणमिच्छसि ।

तस्याऽथ वज्रवेगस्य नाम्ना सन्ध्यावली स्वसा ।
आगता भ्रातरं तत्र हतं दृष्ट्वाऽकुपत्तराम् ॥ ११३५ ॥
वज्रहन्तुरियं भार्या भवितेति मुनेर्वचः ।
पुनः स्मृत्वा विवाहार्थं सा कुमारमुपस्थिता ॥ ११३६ ॥
गन्धर्वविधिना साऽपि कुमारेण विवाहिता ।
सुखेन तस्थुषोऽस्यैवं यज्जातं तन्निशम्यताम् ॥ ११३७ ॥
चन्द्रवेग-भानुवेगखेचराभ्यां सुतौ तथा ।
प्रेषितौ रथ-संनाहौ ताभ्यां चाऽभाणि राजसूः ॥११३८॥
पुत्रस्य मृत्युवृत्तान्तं ज्ञात्वा देव ! तवोपरि ।
आगच्छत्यशनिवेगो विद्याधरबलैः समम् ॥ ११३९ ॥
तदावां प्रेषितौ चन्द्र-हरिचन्द्राऽभिधौ सुतौ ।
युष्मच्चरणसेवार्थमुत्सुकाः पितरोऽपि नः ॥ ११४० ॥
अथागतौ चन्द्रवेग-भानुवेगौ सहायके ।
सन्ध्यावल्याऽपि दत्ताऽस्य विद्या प्रज्ञप्तिसंज्ञिका ॥११४१॥
अथाऽऽगादशनिवेगबलं कलकलाकुलम् ।
प्रलयायेव लोकानां मुक्तसीमाऽम्बुधेर्जलम् ॥ ११४२ ॥
तदा सैन्यद्वये वीरसन्नाहोत्साहकारिणा ।
भेरीभाङ्कारनादेन सहसाऽपूर्यताऽम्बरम् ॥ ११४३ ॥
कुमारस्य पुरश्चन्द्र-भानुवेगबलं ततः ।
सैन्येनाऽशनिवेगस्य सह योद्धुं प्रचक्रमे ॥ ११४४ ॥
हस्ती नागं, हयो वाहं, पत्तिः पत्तिं, रथो रथम् ।
सख्यार्थमिव सङ्ख्याया[1]ऽन्योऽन्यं समतयाऽमिलत् ११४५
सैन्यमेघे शरासारं नभः प्रच्छाद्य वर्षति ।
शिरःकमलसंकीर्णा रक्तनद्यस्तदाऽवहन् ॥ ११४६ ॥
तयो रणमहोत्साहवशान् मिलितयोः क्रमात् ।
प्रावर्तत महायुद्धमबद्धबलयोर्द्विधा ॥ ११४७ ॥

१ सङ्ग्रामाय ।

वादितातोद्यनिस्वानस्वानोत्कर्णपुरन्दरम् ।
दराऽपेत[1]भटाकीर्णं कीर्णमुण्डकलेवरम् ॥ ११४८ ॥
वरार्थदेवीसङ्घातं घाताऽलक्ष्यनिजाऽपरम् ।
परस्परोद्दीर्णगोत्रं गोत्रा[2]कारपतद्गजम् ॥ ११४९ ॥
( त्रिभिर्विशेषकम् )
बलद्वयेऽपि भग्नेऽथ द्वयोरेव परस्परम् ।
अङ्गाङ्गि समभूद् युद्धं कुमारा-ऽशनिवेगयोः ॥ ११५० ॥
महोरगास्त्रं मुमुचेऽशनिवेगेन भीषणम् ।
कुमारो गरुडास्त्रेण सत्वरं तन् न्यपातयत् ॥ ११५१ ॥
आग्नेयं वारुणास्त्रेण वायव्यं शैलनामना ।
चिक्षेप रिपुमुक्तास्त्रं प्रत्यस्त्रेण कुमारराट् ॥ ११५२ ॥
ततो गाण्डीवमादाय नाराचाऽऽसारमुल्बणम् ।
विमुञ्चन्नुत्थितो रोषारुणोऽशनिरिवाऽशनिः ११५३ ॥
सगुणोऽपि सुवंशोऽपि हिंसकोऽयमितीव सः ।
चक्रे तमपि निर्जीवमर्धचन्द्रै[3]र्नृपाङ्गजः ॥ ११५४ ॥
शतखण्डीकरोम्येनमधुनेति रुषा रिपुः ।
कोशतः खड्गमाकृष्य दन्तपेषं प्रधावितः ॥ ११५५ ॥
कोशे सत्यप्यसौ बाढं गाढमुष्टिर्मलीमसः ।
इतीवाऽसिः कुमारेण तस्य छिन्नभुजः कृतः ॥ ११५६ ॥
ततश्च बाहुयुद्धेन प्रवृत्ते खेचराधिपे ।
कुमारस्य स्फुरद्रश्मिचक्रं चक्रं करेऽचटत् ॥ ११५७ ॥
गुणैरेकोऽप्यसौ तेन द्रुतं दशगुणोऽभवत् ।
करस्थेन पुरस्थेन बिन्दुनाऽङ्को यथैककः ॥ ११५८ ॥
चक्रे चक्रेण तेनाऽरिं कुमारश्छिन्नमस्तकम् ।
श्रीरप्यशिरसं दृष्ट्वा मुमोच सहसैव तम् ॥ ११५९ ॥
सर्वाऽप्यशनिवेगस्य राज्यश्रीः सह खेचरैः ।

---

१ भयरहित । २ गोत्रो गिरि. । ३ बाणविशेषै. ।

संचक्राम कुमारेन्द्रे स्थिरीचक्रे च सोऽपि ताम् ॥११६०॥
एष सनत्कुमाराख्यो जीयाद् भरतभूतले ।
चतुर्थश्चक्रवर्तीति चक्रे देवैर्जयध्वनिः ॥ ११६१ ॥
ततो लब्धजयाः सर्वे गता वैताढ्यपर्वतम् ।
मङ्गलातोद्यवाद्येन स्वस्वधामानि चाऽविशन् ॥ ११६२ ॥
तत्र सनत्कुमारस्य संभूयाऽखिलखेचरैः ।
विद्याधरमहाराज्येऽभिषेको विदधे मुदा ॥ ११६३ ॥
एवं महासुखं तिष्ठन् चक्री विज्ञपितोऽन्यदा ।
चन्द्रवेगेन यद्येवं पुरा मे मुनिराख्यत ॥ ११६४ ॥
तव पुत्रीशतं भानुवेगस्याऽष्टौ च कन्यकाः ।
चक्री सनत्कुमाराख्यः परिणेष्यत्यहो ! इति ॥ ११६५ ॥
तदेतासां विवाहेन प्रसादः क्रियतां विभो ! ।
इत्यभ्यर्थनया ता अप्यार्यपुत्रो व्यवाहयत् ॥ ११६६ ॥
वैताढ्यं साधयामास कारयामास चाऽर्हताम् ।
चैत्येष्वष्टाहिकापूजां सङ्गीतोत्सवपूर्वकम् ॥ ११६७ ॥
अथो विविधलीलाभिः खेचरीभिः सहाऽनिशम् ।
क्रीडन्नत्राऽऽययौ भर्ता तावत् त्वं मीलितोऽधुना ॥११६८॥
यावद् बकुलमत्येवं महेन्द्रस्य न्यवेदयत् ।
तावच्चक्री समुत्तस्थौ निद्रान्ते वासमन्दिरात् ॥ ११६९ ॥
परिस्पन्देन महता वैताढ्यं च गतस्ततः ।
विज्ञप्तोऽवसरं प्राप्य महेन्द्रसुहृदा नृपः ॥ ११७० ॥
पितरौ तव दुःखेन कालं गमयतः प्रभो ! ।
अतस्तद्दर्शनात् कार्यः प्रसादोऽस्मादृशामपि ॥११७१॥
श्रुत्वा सनत्कुमारस्तदतीवाऽभवदुत्सुकः ।
यन्नामाऽपि सुधातुल्यं गुरूंस्तान् स्पृहयेन्न कः?॥११७२॥
अथ व्योमगताऽश्वेभविमानारूढखेचरैः ।
दिव्यवेषधरैश्चक्री हस्तिनागपुरं ययौ ॥ ११७३ ॥

परमानन्दितौ मातापितरौ नागरा अपि ।
महारत्नानि जातानि चक्राद्यानि चतुर्दश ॥११७४॥
( युग्मम् )
साधितं भरतं सर्वमुत्पन्ना निधयो नव ।
जातो विख्याततेजाश्च चक्रवर्ती महानिति ॥११७५॥
भोगानुदारांस्तस्यैवं भुञ्जानस्याऽन्यदा दिवि ।
सौधर्मेन्द्रः सभासीनः प्रेक्षमाणोऽस्ति नाटकम् ॥११७६॥
अत्राऽन्तरे सङ्गमाख्य ईशानसुरलोकतः ।
एको देवः समायातः सौधर्मेन्द्रस्य सन्निधौ ॥११७७॥
तद्देहप्रभया तत्र सर्वे देवाः सभास्थिताः ।
अभूवन्निष्प्रभाः सूर्योदये चन्द्रग्रहा इव ॥११७८॥
पृष्टोऽथ विस्मितैर्देवैर्देवेन्द्रो यदयं कुतः ।
कारणाद् द्वादशादित्याधिकतेजाः सुरः प्रभो ! ? ॥११७९॥
तत इन्द्रोऽवदद् देवाः ! कृतं प्राच्यभवेऽमुना ।
आचाम्ल वर्धमानाख्यं तपस्तेनेदृशोऽजनि ॥ ११८० ॥
तथात्माऽनेन हेमेव तपस्तापेन शोधितः ।
तदाधारोऽस्य देहोऽपि येनाऽयं दीव्यतेतराम् ॥११८१॥
ततः पृष्टं पुनर्देवैर्यथाऽन्योऽपि जगत्त्रये ।
अस्ति कोऽपि न वेदृक्षस्तेजोरूपर्द्धिसंयुतः ? ॥ ११८२ ॥
इन्द्रेण भणितं बाढं हस्तिनागपुरे पुरे ।
चक्री सनत्कुमारोऽस्ति कुरुवंशविभूषणम् ॥११८३॥
यस्य तेजश्च रूपं च देवेभ्योऽप्यतिरिच्यते ।
तन् निशम्य सुराः प्रापुर्विस्मयादतिविस्मयम् ॥११८४॥
विजयो वैजयन्तश्च सुरौ तद्वचनं पुनः ।
अश्रद्धाय जरद्विप्ररूपेण भुवमागतौ ॥ ११८५ ॥
नरेन्द्रभवने वेत्रिमुक्तद्वारौ प्रविश्य तौ ।
गत्वा राज्ञोऽन्तिकं तस्य निरवर्णयतां तनुम् ॥११८६॥

दृष्टस्ताभ्यां तदा कुर्वन् तैलाभ्यङ्गविधिं नृपः ।
विस्मितौ चाऽधिकां दृष्ट्वा शक्रोक्ताद् रूपसंपदम् ॥११८७॥
पृष्टौ च चक्रिणा किं भो इहाऽऽगमनकारणम् ? ।
केवलं तौ धुनीतः स्म शिरोन्युञ्छनकं किल ॥११८८॥
उक्तं ताभ्यां यथारूपं वर्णितं ते जगत्त्रये ।
तद् द्रष्टुं कौतुकेनाऽऽवां चक्रवर्तिन्निहाऽऽगतौ ॥११८९॥
अहो ! धन्योऽहमेवैको यद्रूपं वर्ण्यते सुरैः ।
इत्यलंगर्वितेनोक्तौ तौ भूयोऽपि महीभुजा ॥ ११९० ॥
अहो ! विप्रौ ! मदीयं किं रूपं लोकेन वर्ण्यते ।
युवाभ्यां ददृशे किं वा स्तोकवेला प्रतीक्ष्यताम् ? ॥११९१॥
विधाय मज्जनं यावत् पुनर्मण्डनभूषणैः ।
शरीरसंस्थितिं कृत्वाऽलङ्करोमि सभामहम् ॥ ११९२ ॥
तदा सिंहासनस्थस्य युवां मे रूप-तेजसोः ।
प्रेक्षेथां श्रियमित्युक्तौ तौ द्विजौ निर्गतौ ततः ॥ ११९३ ॥
जीयते मत्तमातङ्गघटाऽपि सुभटैः कलौ ।
गर्वः सर्वंकषस्त्वेष महतामपि दुर्जयः ॥ ११९४ ॥
अथ शीघ्रं नृपः स्नात्वा कृत्वाऽङ्गे मण्डनादिकम् ।
मध्येराजसभं सिंहासनस्थोऽजूहवद् द्विजौ ॥ ११९५ ॥
ताभ्यां चाऽऽगत्य दृष्ट्वा तद्देहशोभामनीदृशीम् ।
समुत्पन्नविषादाभ्यां भणितो भूपतिर्यथा ॥ ११९६ ॥
मनुष्याणामहो ! रूप-तेजो-यौवनसंपदः ।
अनित्याः क्षणमात्रेण यदेता नाशमागताः ॥ ११९७ ॥
चक्रवर्ती ततोऽपृच्छत् संभ्रान्तौ भो द्विजौ ! कथम् ? ।
सविषादाविव ब्रूथस्तावप्यभणतां पुनः ॥ ११९८ ॥
भो महाराज ! देवानां रूप-तेजो-बल-श्रियः ।
आरभ्योत्पत्तितः शेषषण्मासान् यावदासते ॥ ११९९ ॥
ततः परं तु हीयन्ते, मनुष्याणामिमाः पुनः ।

आरभ्य जन्मतो यावद् वर्धन्ते मध्यजीवितम् ॥१२००॥
ततः परं हीयमाना यान्ति, यावदसुव्ययः ।
दृष्टमस्माभिराश्चर्यं तव रूपश्रियः पुनः ॥ १२०१ ॥
येयं दुर्जनमैत्रीव सन्ध्याश्रीरिव सम्प्रति ।
परिवृत्य क्षणेनैव ययौ विच्छायतामिति ॥ १२०२॥
चक्री प्राह कथं त्वेतद् यूयं जानीत तावपि ।
प्रकटीभूय भूपाय परमार्थं शशंसतुः ॥ १२०३ ॥
आवामश्रद्दधानौ ते रूपमिन्द्रेण वर्णितम् ।
आगतौ तद्यथायुक्तं कुर्या उक्त्वेति तौ गतौ ॥ १२०४ ॥
नृपोऽथ विस्मितो दिव्यकटकाङ्गदभूषितम् ।
सम्यगालोकयन् बाहुयुग्मं विच्छायमैक्षत ॥ १२०५ ॥
अपि वक्षस्थलं हाराऽर्द्धहाराद्यैर्विभूषितम् ।
निःश्रीकमिव सोऽपश्यद् रजश्छन्नार्कबिम्बवत् ॥ १२०६॥
ततो दध्यावहो ! लोके काऽपि जागर्त्यनित्यता ।
रूप-यौवन-तेजांसि यत् क्षणादेव मेऽनशन् ॥ १२०७ ॥
संपन्नरतये रम्याऽप्यनित्यत्वप्रदूषिता ।
नेष्टा रसवती स्वादुरपि यद् विषमिश्रिता ॥ १२०८ ॥
अत एव महात्मानः सदप्यसदिवाऽखिलम् ।
हृदि मत्वा परिव्रज्य प्रागेव वनमाश्रिताः ॥ १२०९ ॥
ध्यात्वेति सहसा राजपट्टं बद्ध्वात्मजन्मनः ।
विनयन्धरगुर्वन्ते निःसङ्गः प्राव्रजन् नृपः ॥ १२१० ॥
ततः श्रीरत्नमुख्यानि रत्नान्यपरयोषितः ।
आभियोगिकदेवाश्च नरेन्द्रा निधयस्तथा ॥ १२११ ॥
किं वाऽथ बहुना सर्वे स्कन्धावारजना अपि ।
तस्य मार्गानुलग्नाः षण्मासान् यावदबम्भ्रमन् ॥ १२१२ ॥
( युग्मम् )
सिंहाऽवलोकितेनाऽपि न च ते तेन वीक्षिताः ।

अगन्धनकुले नागा वान्तमिच्छन्ति किं पुनः ? ॥१२१३
नैवं तैः प्रतिबद्धुं स शेके दीनैर्नतैरपि ।
घनैरपि घनै रोद्धुं शक्यते किं रविर्व्रजन् ? ॥ १२१४॥
अथाऽसौ षष्ठभक्ताऽन्ते भ्रमन् गोचरचर्यया ।
चीनकूरमजातक्रसहितं लब्धवान् मुनिः ॥ १२१५ ॥
तच्च भुक्त्वा पुनः षष्ठोपवासं विदधे महान् ।
आरभ्य तद्दिनात् तेन दोषेण व्याधयोऽभवन् ॥१२१६॥
शुष्ककच्छूर्ज्वरः कासः श्वासश्चान्नाऽरुचिस्तथा ।
अक्षिदुःखं तुन्ददुःखं सप्तैतेऽत्यन्तदारुणाः ॥ १२१७ ॥
सप्तवर्षशतानीत्थं सम्यक् तस्याऽधिसह्य तान् ।
दीप्तोग्रतप्तघोरादिभेदेन चरतस्तपः ॥ १२१८ ॥
कफ-विप्रुण्-मला मर्श सर्वौषधिमहर्द्धयः ।
संभिन्नश्रोतोलब्धिश्च सप्तैवं लब्धयोऽभवन् ॥ १२१९ ।
( युग्मम् )

तथाप्यङ्गप्रतीकारं न चक्रे स महामुनिः ।
सतामारब्धनिर्वाहसारा एव प्रवृत्तयः ॥ १२२० ॥
अथ भूयोऽपि सौधर्मसभायामृषिवर्णनम् ।
कुर्वन् सनत्कुमारस्य प्रशंसामकरोद्धरिः ॥ १२२१ ॥
अहो ! सनत्कुमारस्य परीषहसहिष्णुता ।
काष्ठा च परमा काऽपि तपसोऽस्य महामुनेः ॥ १२२२ ।
निशम्य तत्परीक्षायै तावेव त्रिदशौ पुनः ।
कृत्वा शबरवैद्यस्य रूपं मुनिमुपागतौ ॥ १२२३ ॥
अवोचतां च भगवन्ननुजानीहि येन ते ।
धर्मवैद्याविमावावां कुर्वो व्याधिप्रतिक्रियाम् ॥ १२२४ ॥
निरपेक्षोऽसि किन्तु स्यान् न धर्मोऽपि तनुं विना ।
कृतमौने मुनावेवं भणतस्तौ पुनः पुनः ॥ १२२५ ॥

ततोऽसौ श्लेष्मणा लिप्त्वा स्वर्णवर्णां निजाऽङ्गुलिम् ।
विधाय दर्शयामास तयोरिति बभाण च ॥ १२२६ ॥
अहो ! यदि युवां वैद्यौ सत्यौ तदिह सत्वरम् ।
संसारनामकं भावव्याधिं स्फेटयतं मम ॥ १२२७ ॥
ऊचतुस्तौ पुनः स्वामिन् ! संसारव्याधिरुल्वणः ।
नावाभ्यां स्फेट्यते, शक्तो गुरुर्वैद्यस्त्वमेव हि ॥१२२८॥
इति प्रशंसापरमौ स्वं स्वरूपं प्रकाश्य तौ ।
क्षमयित्वा मुनिं भूयो जग्मतुः स्वास्पदं सुरौ ॥ १२२९ ॥
श्रीमान् सनत्कुमारोऽपि परिपूर्यायुरुत्तमम् ।
कल्पं सनत्कुमाराख्यं सौख्यधाम जगाम सः ॥ १२३० ॥
ज्ञात्वेति गुरुमाहात्म्यं सेवितं च महात्मभिः ।
तपः कार्यं यथाशक्ति कर्मनिर्मूलनोद्यतैः ॥ १२३१ ॥
उक्तान्यङ्गानि दानादीन्येवं धर्मनरेशितुः ।
तस्य तेष्वधुना जीवो भावनामा प्रतन्यते ॥ १२३२ ॥
भावो धर्मस्य हृन्मित्रं भावः कर्मेन्धनाऽनलः ।
सत्कृत्याऽन्ने घृतं भावो भावो वेत्री शिवश्रियः ॥१२३३॥
धर्मे सुकाव्यनाट्यादावपि भावः प्रशस्यते ।
नाङ्गस्य तं विना भुक्तं घृतान्नमपि पुष्टये ॥ १२३४ ॥
भावस्यैकाङ्गवीरस्य सांनिध्याद् बहवः शिवम् ।
ययुर्नैकोऽपि दानाद्यैर्भावहीनैर्घनैरपि ॥ १२३५ ॥
चिरादेकेन दानादिक्लेशैः पुण्यं यदर्जितम् ।
तस्याऽनुमोदनाभावात् क्षणादन्यस्तदर्जयेत् ॥ १२३६ ॥
भावात् सुकृतलेशोऽपि नृणां सर्वार्थसिद्धिदः ।
भ्रष्टानां तु ततो नूनं सर्वतो भ्रष्टता भवेत् ॥ १२३७ ॥
तथाहि जम्बूद्वीपेऽत्र क्षेत्रे विदेहनामनि ।
विजये पुष्कलावत्यां पुरी श्रीपुण्डरीकिणी ॥ १२३८ ॥
महापद्माभिधो राजा तत्र पात्रं नयश्रियः ।

भूषितैर्भूषणं यस्य गुणैरासीन्न दूषितैः ॥ १२३९ ॥
कुलं शीलेन, रूपेण शीलं, रूपं च विद्यया।
विद्या शौर्येण, शौर्यं च दानेनाऽस्य विभूषितम् ॥१२४०॥
प्रिया पद्मावती तस्य स्त्रीषु रेखोपमा प्रिया।
लीला-विनय-लज्जाभिर्नम्रत्वाद् गुरुतां दधौ ॥१२४१॥
सनयौ तनयौ तस्य शस्त्र-शास्त्रविशारदौ।
बभूवतुः पुण्डरीक-कण्डरीकाभिधावुभौ ॥ १२४२ ॥
अन्यदा बहिरुद्याने नलिनीवननामनि।
आययौ सुव्रताचार्यो बहुसाधुर्बहुश्रुतः ॥ १२४३ ॥
महापद्मनृपो ज्ञात्वा गतस्तत्र गुरुं मुदा।
नत्वोपविष्टो भूभागे गुरुर्धर्ममथाऽऽदिशत् ॥ १२४४ ॥
धर्मो निष्कृत्रिमस्नेहबन्धुरा जननी नृणाम्।
धर्मश्चातुल्यवात्सल्यसंपूर्णहृदयः पिता ॥ १२४५ ॥
धर्म एवाऽभिन्नचित्तो भ्राता यामिर्हितैषिणी।
धर्मोऽखिलसुखाधाराऽनुरक्ता सगुणा प्रिया ॥ १२४६ ॥
धर्मः कुलधुराधुर्यो दृक्-चित्ताह्लादकः सुतः।
धर्मः सुशीलसौन्दर्या कुलोन्नतिकरी सुता ॥ १२४७ ॥
धर्मः कलावान् विश्वासस्थानमेकरसः सखा।
किं वाऽथ बहुना सर्वं यत् शुभं धर्म एव सः ॥ १२४८॥
देश-सर्वविरत्याख्यः स च धर्मो द्विधा भवेत्।
गृहस्थ-यतिभेदेन यदिष्टं तत् समाचर ॥ १२४९ ॥
अतीवसमयोपात्तं पुण्यं भुञ्जन्ति येऽखिलम्।
न बीजमपि रक्षन्ति कुतस्तेषां पुनः सुखम् ?॥ १२५० ॥
इत्यादिदेशनां श्रुत्वा जातश्रद्धो महीपतिः।
योग्यं ज्ञात्वा श्रियं न्यस्य पुण्डरीकेऽग्रहीद् व्रतम् ॥१२५१॥
गतस्नेहपरित्यक्ताऽखिलसङ्गमलक्षणात्।
स्नानादिव व्रतात् तस्मात् स राजा शुशुभेतराम् ॥१२५२॥

स चतुर्दशपूर्वाणि समधीत्य समाहितः ।
चिरं तपोभिर्विविधैः श्रामण्यं पर्यपालयत् ॥ १२५३ ॥
मासं संलेखनां कृत्वा प्रान्ते हित्वा कलेवरम् ।
सर्वदुःखपरिक्षीणो निर्वाणपदमासदत् ॥ १२५४ ॥
अथ कालेन तत्रेयुस्त एव स्थविराः पुनः ।
पुण्डरीको गतो नन्तुं सानुजः सपरिच्छदः ॥ १२५५ ॥
ववन्दे च गुरुं भक्त्या गुरुणाऽपि सविस्तरम् ।
चतुर्गतिप्रबन्धाढ्या विहिता धर्मदेशना ॥ १२५६ ॥
पुण्डरीकोऽपि तत् सर्वं हृदि सम्यग् विभावयन् ।
लघुकर्मतया जातसंवेगः प्राविशत् पुरीम् ॥ १२५७ ॥
आकार्य च निजामात्यप्रधानान् स महामनाः ।
कण्डरीकं पुरस्कृत्य सहर्षमिदमब्रवीत् ॥ १२५८ ॥
वत्स ! भुक्ता मया भोगाः पालितं राज्यमक्षतम् ।
वशीकृताश्च राजानः साधितं क्षोणिमण्डलम् ॥ १२५९ ॥
दिगन्तरेभ्य आनीता बहुव्ययसहाः श्रियः ।
पूजिता देवगुरवो गृहिधर्मो निषेवितः ॥ १२६० ॥
सत्कृताः स्वजनाः सर्वेऽप्यर्थिनः सफलीकृताः ।
जनाऽनुरागतः कुन्दसुन्दरं च यशोऽर्जितम् ॥ १२६१ ॥
तारुण्यमधुना याति शनकैर्ढौकते जरा ।
मृत्युरासन्नतामेति क्षीयते बलमैन्द्रियम् ॥ १२६२ ॥
भावितो जिनधर्मोऽन्तश्चिरं ज्ञाता भवस्थितिः ।
प्रनष्टा भवसौख्येच्छा सिद्धावुत्कण्ठते मनः ॥ १२६३ ॥
पुनर्जन्म पुनर्मृत्युः पुनर्घस्रः पुनर्निशा ।
एवंविडम्बनाप्रायात् पुनश्चर्वितचर्वणात् ॥ १२६४ ॥
विरक्तोऽस्म्यहमग्रेऽपि श्रुतं गुरुवचोऽधुना ।
तद् गन्तुमुत्सुकस्येदं शकुनप्रेरणोपमम् ॥ १२६५ ॥
गृहाण तदिदं राज्यं सन्नीत्या पालय प्रजाः ।

गृह्णामि सुगुरोरन्ते गत्वा दीक्षामहं यथा ॥ १२६६ ॥
कण्डरीको जगौ भ्रातः ! किं मां पातयसे भवम् ?।
चतुर्गतिभवं दुःखं मयाऽपि गुरुतः श्रुतम् ॥ १२६७ ॥
प्रव्रज्यां तद् ग्रहीष्येऽहमपि नावं भवोदधौ ।
यदभीष्टं हि तद् देव ! दीयते लघुबन्धवे ॥ १२६८ ॥
अथाह नृपतिर्वत्स ! व्रतमेव महाधियाम् ।
मर्त्यत्वे चारु किन्त्वेतन् नवे वयसि दुष्करम् ॥ १२६९ ॥
अहिंसा सर्वभूतेषु पाल्या समतया यतः ।
भाषितव्यं हित सत्यं नित्याऽव्यहितचेतसा ॥ १२७० ॥
परेण तृणमात्रस्याऽप्यदत्तस्य विवर्जनम् ।
धार्यं ब्रह्मव्रतं भोगिन् ! यावज्जीवं सुदुष्करम् ॥१२७१॥
धनादौ प्रेष्यवर्गे च सर्वथाऽप्यपरिग्रहः ।
रात्रौ चतुर्विधस्याऽपि सदाऽऽहारस्य वर्जनम् ॥१२७२॥
संनिधेः सञ्चयस्त्याज्यो न कार्यो गृहिसंस्तवः ।
इतीदमुच्यते खड्गधाराचङ्क्रमणोपमम् ॥१२७३॥
किञ्च-
इन्द्रियाणि चलानीह दुष्टा रागादयोऽरयः ।
प्रमादबहुलो जीवो यौवनं च विकारभूः ॥१२७४॥
अनवस्थं मनः सोढुं न शक्याश्च परीषहाः ।
ततो वत्स ! व्रतं वार्द्धिभुजातरणसंनिभम् ॥१२७५॥
अज्ञातपरमार्थोऽसि तद् विदित्वा जिनागमम् ।
कृत्वाऽऽत्मतुलनां भुक्त्वा राज्यं श्रितगृहिव्रतः ॥१२७६॥
निर्वर्तितान्यकर्तव्यः समतिक्रान्तयौवनः ।
पश्चारोहक्रमेणैव परिव्रज्यां त्वमाश्रयेः ॥ १२७७ ॥
( युग्मम् )
उक्तोऽपि युक्तिभिर्भूयो भूय एवं नृपेण सः ।
अमुञ्चन्नाग्रहं प्राह राजन् ! युक्तं त्वयोदितम् ॥ १२७८ ॥

किन्तु हृन्मुषितं देव! जल्पितं पुरतश्च ते ।
परिव्रज्याविधानं तत् कृत्यमेव मया ध्रुवम् ॥ १२७९॥
किञ्चाऽशक्तिमतः पुंसो बिलमप्यर्णवायते ।
साहसाद्यतचित्तस्य सागरोऽपि हि गोष्पदम् ॥ १२८०॥
अथाऽसौ वार्यमाणोऽपि प्रधानैर्व्रतमग्रहीत् ।
राज्ञाऽपि कारितो भ्रातुर्महान् निष्क्रमणोत्सवः ॥१२८१॥
यावद् राज्यधरः कोऽपि स्यात् तावत् स्थीयतां विभो! ।
इत्युक्तो मन्त्रिभिस्तस्थौ राजा भावयतित्वभृत् ॥१२८२॥
कण्डरीकोऽपि सत्सामाचारीं तां पालयन् भृशम् ।
जज्ञे बहुमतः सर्वसाधूनामपि मानसे ॥१२८३॥
तस्याऽपि तस्थुषो भावात् स्वाध्याय-नियमादिषु ।
सुखं जज्ञेऽधिकं स्वर्गादेवं कालो बहुर्ययौ ॥१२८४॥
अन्यदा मधुरारावभृङ्गालिमणिनूपुरैः ।
अलङ्कृतमृदुस्वच्छपाटलांह्रिमनोहरा ॥१२८५॥
प्रत्यग्रलसिताऽशोकप्रवालकरपल्लवा ।
स्मेराम्बुजमुखी फुल्लमल्लिकादशनोज्ज्वला ॥१२८६॥
चारुचम्पकपुष्पाङ्गी कोकिलारवबन्धुरा ।
तिलकालङ्कृता श्वेतकेतकीपत्रशालिनी ॥१२८७॥
स्फीतयाऽतीव सुभगम्भविष्णुर्बकुलश्रिया ।
दक्षिणाऽनिलसद्गन्धमुखश्वासैकजीविता ॥ १२८८ ॥
सुवर्णमञ्जरीरम्यै राजितोपरिवर्तिभिः ।
सान्द्रमच्छायमाकन्दमायूरातपवारणैः ॥ १२८९ ॥
प्रफुल्लकिंशुकव्यूहकौसुम्भाऽम्बरधारिणी ।
प्रावर्तत वसन्तश्रीर्मूर्तेव वनदेवता ॥ १२९० ॥
( षड्भिः कुलकम् )
श्रीखण्डपुष्पधवलास्ताम्बूलालक्तकद्रवैः ।
जातासिन्दूररेखाढ्या कस्तूरीस्तबकाङ्किता ॥ १२९१ ॥

नर-नारीगणा यत्र सङ्गीतकमनोहराः ।
राजन्ति जङ्गमाः क्रीडासौधा इव मधुश्रियः ॥१२९२ ॥
( युग्मम् )
चिरं स्थित्वा जला-ऽऽन्दोल-पुष्पावचयकेलिभिः ।
निषीदन्ति वने लोका माधवीमण्डपादिषु ॥ १२९३ ॥
प्रसृता चर्चरी दिक्षु चक्षुराक्षेपकारणम् ।
मुनेरपि किमन्येषां कौतुकाकुलचेतसाम् ? ॥ १२९४ ॥
वसन्ते विलसत्येवं पापकर्मोदयान्मनः ।
चलितं स्मृतराज्यस्य कण्डरीकस्य संयमात् ॥ १२९५ ॥
कर्मवैचित्र्यतोऽनादिभवाभ्यासवशेन च ।
तारुण्यस्य विकारित्वात् काम्यत्वात् काननस्य च १२९६
तादृग्वंशोद्भवस्याऽपि तस्य व्रतविघातकृत् ।
चारित्रावरणीयाख्यमुदीर्णं कर्म कर्कशम् ॥ १२९७ ॥
अत उच्यते-
नैवाऽस्ति नाऽप्यसौ भावी विततेऽपि जगत्त्रये ।
यो यौवनमनुप्राप्तो निर्विकारः सदा भवेत् ॥ १२९८ ॥
सा श्रद्धा सा च गुर्वाज्ञा तत् प्रतिज्ञातमुच्चकैः ।
सकुलस्याऽपि मानश्च सर्वमेकपदे गतम् ॥ १२९९ ॥
अलं प्रव्रज्यया दुःखदायिन्या राज्यमेव तत् ।
श्रयामीति धिया सोऽभूद् बाह्यकृत्येऽप्यनादरः १३०० ॥
यतः-
सद्द्रव्यलाभलोभेन यथा क्लेशो न दुःसहः ।
तथा धर्माशयानिष्टचेष्टा कष्टं पुनर्भृशम् ॥ १३०१ ॥
उच्यते च-
देवलोकसमानो हि पर्यायो यतिनां व्रते ।
रतानामरतानां च महानरकसन्निभः ॥ १३०२ ॥
धर्मे भग्ने गुणे भ्रष्टे स लब्धाऽवसरैस्ततः ।

रागादिरिपुभिर्व्याप्तश्छलैश्छिभिरिवाऽभितः ॥ १३०३ ॥
परीषहैरपि जितः सहसा स क्षुधादिभिः।
कैराक्रम्येत निःसत्त्वो न मन्दाग्निरिवाऽऽमयैः ? ॥१३०४॥
भावभ्रष्टमिति ज्ञात्वा तत्यजुः साधवोऽपि तम्।
वाताण्डमिव भारुण्डा गुरुणा चाऽप्युपेक्षितः ॥ १३०५ ॥
स च तुष्टस्तदा बाधामुक्तोऽपथ्यक्षणेच्छया।
वैद्य-शुश्रूषकाऽभावे यथा रोगी मुमूर्षकः ॥ १३०६ ॥
अन्यदाऽवसरे द्रव्यलिङ्गोपकरणाऽन्वितः।
गत्वा स्वनगरीं तस्थौ बहिरुद्यानसीमनि ॥१३०७॥
प्रालम्ब्य तरुशाखायां पात्रकं हरिताऽवनौ।
निविश्याऽऽकारयमास भूपमुद्यानपालकान् ॥ १३०८ ॥
कण्डरीक इहायातः किमेकाकीति चिन्तयन्।
वृतः कतिपयैस्तत्र प्रधानैर्भूपतिर्ययौ ॥ १३०९ ॥
दृष्ट्वा भग्नपरीणामं वन्दित्वा तं नृपोऽब्रवीत्।
कुशलं ते सोऽपि प्राह यादृगस्ति त्वमीक्षसे ॥१३१०॥
संभ्रान्तः पुनरप्याह भूपः कूपसमे भवे।
संयमं मेरुमारुह्य किमात्मानं प्रपातयेः ? ॥ १३११ ॥
कुलस्याऽतिकलङ्कोऽयं दीक्षां सन्धां च येऽत्र भोः !।
आदाय समितेर्भग्ना वलन्ति सुखलम्पटाः ॥१३१२॥
सुलभं सुमहद् राज्यं सुलभा गुणसम्पदः।
सुलभं सर्वमप्यन्यज्जिनधर्मस्तु दुर्लभः ॥१३१३॥
कण्डरीकोऽथ तं प्राह यदिष्टं तत् प्रयच्छ मे।
किं वचोभिः क्षुधार्तस्य जलपानसमैरिमैः ॥१३१४॥
औषधं जीवनिर्मुक्ते शुष्कमूले जलोक्षणम्।
भावभ्रष्टे हिताख्यानं किं करोतीति चिन्तयन् ॥१३१५॥
नृपः प्राह गृहाणेदं राज्यं येनाऽस्य रक्षकः।
चिरान् मे वाञ्छितोऽभ्यागाद् हितायैतत्तु भाषणम् १३१६

अमात्या भो नरेन्द्राश्च पूर्वमेव निषिध्यतः ।
ममाऽयं जगृहे दीक्षां राज्यं गृह्णातु सम्प्रति ॥१३१७॥
ब्रुवाणस्यैवमादाय राजचिह्नानि भूपतेः ।
निजानि साधुलिङ्गानि कण्डरीकः समर्पयत् ॥१३१८॥
अमृतेन विषं ह्येको जगृहेऽन्यः सुधां विषात् ।
व्रतराज्यविपर्यासाच्चित्रं चित्रा मनोगतिः ॥१३१९॥
कण्डरीकोऽथ कृष्णास्यैः पौरामात्यादिभिः सह ।
पुरीं प्रविश्य सौधान्तर्गत्वा स तमुपाविशत् ॥१३२०॥
धिक् सिंह इव निष्क्रम्य जातोऽसौ जम्बुकोऽधुना ।
इति सामन्तमुख्यास्ते नाद्रियन्ते हसन्ति च ॥१३२१॥
इन्द्रकेतुमिव ध्वस्तं विध्यातमिव पावकम् ।
धर्मभ्रष्टं श्रियाऽपेतं को न हीलयते नरम् ? ॥१३२२॥
ततः कोपान् नृपो दध्यौ तावत् कुर्वेऽत्र भोजनम् ।
पश्चादेषां करिष्यामि दुष्टानां सुष्ठु निग्रहम् ॥१३२३॥
क्षुधार्त्तः स चिरात् पाकं सर्वाऽन्नानामकारयत् ।
प्रेक्षणीयस्य दृष्टान्तं चिन्तयामास चेत्यसौ ॥१३२४॥
रङ्गे स्यादुपविष्टेषु ग्राम्येषु महतां स्थितिः ।
तथा कदन्ने भुक्ते प्रागुत्तमान्नं हि रोचते ॥१३२५॥
क्रमेणाऽनेन सर्वान्नैर्भोजनं स तथाऽकरोत् ।
कथञ्चिद् भुजयोर्धृत्वा शय्यानीतो यथेतरैः ॥१३२६॥
जज्ञे विसूचिका शूलं प्रवृत्तं प्रसृताऽरतिः ।
बभूवाऽऽपूर्णमुदरं रुद्धः पवननिर्गमः ॥१३२७॥
तीव्रवेदनया सोऽथ प्रलापं कर्तुमुद्यतः ।
भ्रष्ट इत्यस्य नो चक्रे राजवर्ग्यैः प्रतिक्रिया ॥१३२८॥
यदि रात्रिर्विभात्येषा कथञ्चन ततो ध्रुवम् ।
मदुपेक्षाकरान् मन्त्रिवैद्यादीन् संहराम्यहम् ॥१३२९॥
इति स्फूर्जन्महारौद्रध्यानतन्मयमानसः ।

मृत्वा सोऽशरणो जज्ञे नारकः सप्तमावनौ ॥ १३३० ॥
( युग्मम् )

अहो ! मोहो, महारत्नं मुक्त्वा काचमणीच्छया ।
यदेष सहसा धावन्नन्धकूपेऽन्तराऽपतत् ॥१३३१॥
राजर्षिः पुण्डरीकस्तु धन्योऽहं येन दुर्लभः ।
प्राप्तोऽयं साधुधर्मस्तत् कुर्वे तं गुरुसाक्षिणम् ॥१३३२॥
चिन्तयन्निति शुद्धात्मा प्रतस्थे गुरुसन्निधौ ।
क्षुत् तृट्-तापादिदुःखेऽपि भावादचलमानसः ॥ १३३३ ॥
( युग्मम् )

मार्गातिगमनादेष गलद्रक्तपदः श्रमात् ।
वासाय ग्राम एकस्मिन्नुपाश्रयमयाचत ॥ १३३४ ॥
तृणसंस्तरके तत्र शस्यलेश्यो निविश्य सः ।
धर्मध्यानमिदं साधुर्भावयामास चेतसि ॥ १३३५ ॥
कदाऽहं सुगुरोरन्ते परिव्रज्यां यथोदिताम् ।
करिष्यामि गताशेषकर्मनिर्मूलनक्षमाम् ॥१३३६ ॥
मस्तके चाऽञ्जलिं न्यस्य बभाण विशदाक्षरम् ।
नमोऽर्हद्भ्यो भगवद्भ्यो नमो मे धर्मसूरये ॥ १३३७ ॥
अधुनाऽपि तत्पादान्ते प्रत्याख्यामि समन्ततः ।
हिंसामलीकं चाऽदत्तं मैथुनं च परिग्रहम् ॥ १३३८ ॥
निशाभक्तं क्रुधं मानं मायां लोभं सरागताम् ।
द्वेषं कलहा-ऽभ्याख्याने पैशुन्यं परनिन्दनम् ॥ १३३९ ॥
मायामृषा तथा मिथ्यादर्शनं शल्यनामकम् ।
त्यजाम्यष्टादशेमानि पापस्थानानि सर्वथा ॥ १३४० ॥
यदपीष्टं प्रियं कान्तं चिरकालं च लालितम् ।
शरीरमन्तिमोच्छ्वासे तदपि व्युत्सृजाम्यहम् ॥१३४१ ॥
इति भावाम्बुना धौतकल्मषात्मा विपद्य सः ।
गत्वा सर्वार्थसिद्धाख्ये विमानेऽभूत् सुरोत्तमः ॥१३४२॥

इत्थं भावस्य माहात्म्यं विदित्वा विदुषा सदा ।
भाव्यं भावप्रधानेन धर्मकृत्येषु सर्वतः ॥ १३४३ ॥
अपि भावैकपाद् धर्मो जात्यश्व इव सद्ग्रहम् ।
कलौ नरं नयत्येव बहिर्भवरणाङ्गणात् ॥ १३४४ ॥
दानादिचतुरीमध्ये चतुर्ज्ञानेष्टकोपरि ।
केवलज्योतिराश्रित्य मुक्तिस्त्रीमुद्वहेद् वरः ॥ १३४५ ॥
इत्यादिदेशनां श्रुत्वा प्रभोर्वदनपङ्कजात् ।
बहवः सर्वसावद्यविरतिं जगृहुर्जनाः ॥ १३४६ ॥
केऽपि भव्याः पुनर्देशविरतिं प्रतिपेदिरे ।
प्रपन्नाः केऽपि सम्यक्त्वं केऽपि भद्रकतां ययुः ॥१३४७॥
प्राप्याऽपि जिनरत्नाद्रिं निजभाग्यानुमानतः ।
किञ्चिच्चटति कस्याऽपि धर्मरत्नं नृणां करे ॥ १३४८ ॥
अश्वसेननृपस्याऽपि धर्मः श्रीपार्श्वभाषितः ।
शर्करादुग्धसंयोग इवाऽतीव स रोचते ॥ १३४९ ॥
राज्यं दत्त्वा च तत्रैव हस्तिसेनाय सूनवे ।
भवाऽम्बुधितरीं दीक्षां मुमुक्षुर्जगृहे नृपः ॥१३५०॥
वामादेवी-प्रभावत्यावपि प्राव्रजतां तदा ।
यद् विश्वस्याऽपि सामान्या जिनर्द्धिः किमु बन्धुषु ॥१३५१
आर्यदत्त आर्यघोषो वशिष्ठो ब्रह्मनामकः ।
सोमश्च श्रीधरो वारिसेनो भद्रयशा जयः ॥ १३५२ ॥
विजयश्चेति गणभृन्नामकर्मभृतो दश ।
बभूवुर्व्रतिनस्तत्र प्रज्ञा-रूप-कुलोज्ज्वलाः ॥ १३५३ ॥
( युग्मम् )
तेषामुत्पाद-विगम-ध्रौव्यरूपां पदत्रयीम् ।
स्वाम्याख्यत्, ते तया सद्यो द्वादशाङ्गीमसूत्रयन् ॥१३५४॥
अथोत्थाय विभुस्तेषां स्वयं शक्रोपढौकितान् ।

१ पाणिग्रहणमण्डप 'चोरी' इति भाषायाम् ।

रत्नस्थालस्थितान् दिव्यवासान् मौलिषु न्यक्षिपत् ॥१३५५॥
सद्द्रव्य-गुण-पर्यायैरनुयोगं तथा गणम् ।
अन्वजानात् तथेत्युक्त्वा प्रतीषुस्तेऽपि तं नराः ॥१३५६॥
( युग्मम् )

दुन्दुभिध्वानपूर्वं तु तेषामुपरि चिक्षिपुः ।
वासान् सुरादयोऽप्येवं तीर्थमासीच्चतुर्विधम् ॥ १३५७ ॥
उपविश्य पुनस्तेषामनुशिष्टिं विभुर्व्यधात् ।
पूर्णप्रथमपौरुष्यां देशनां विससर्ज च ॥ १३५८ ॥
अथोत्थायोत्तरद्वारान्निर्गत्येशानदिक्स्थिते ।
देवच्छन्दे विभुर्गत्वा विश्रामसुखमन्वभूत् ॥१३५९॥
कर्माभ्रजालविगमाद् भविनां सुदृश्यो
दृष्टिप्रसादजनने विततप्रभावः ।
दन्तांशुमांसलरुचाऽस्ततमा मुदं वः
पार्श्वप्रभोः प्रथयतां मुखशारदेन्दुः ॥ १३६० ॥

इति श्रीकालिकाचार्यसन्तानीय-श्रीभावदेवसूरिविरचिते श्रीपार्श्वनाथ-चरिते महाकाव्येऽष्टसर्गे भावाङ्के भगवद्विवाह-दीक्षा-केवल-ज्ञान-समवसरण-देशनावर्णनो नाम षष्ठः सर्गः ॥ ६ ॥

अर्हम् ।

# अथ सप्तमः सर्गः ।

अथ पार्श्वप्रभोः पादपीठस्थो गणभृद् नृणाम् ।
आर्यदत्तो जिने भक्तिस्थैर्यार्थं देशनां व्यधात् ॥ १ ॥
इह सर्वोत्तमस्तावद् यतिधर्मो मनीषिणाम् ।
तत्राऽशक्ताः पुनर्भव्या गृहिधर्मं प्रकुर्वते ॥ २ ॥

तत्राऽपि कृतिनः पूजां विधाय विधिनाऽर्हताम् ।
कुर्वते सफलं सद्यो गृहमेधिभवद्रुमम् ॥ ३ ॥
सा च पुष्पा-ऽक्षत स्तोत्ररूपा सामान्यतस्त्रिधा ।
श्रुते प्रोक्ता प्रभोरङ्गपट्टसद्भावगोचरा ॥ ४ ॥
आसामेकतमाऽप्यासीद् विशिष्टफलहेतवे ।
यथा किल तथा सम्यग् दृष्टान्तैः श्रूयतां क्रमात् ॥ ५ ॥
लवोऽपि जिनधर्मस्य सुधाबिन्दुरिव ध्रुवम् ।
करोत्येवाऽपरीभावं सम्यगासेवितो नृणाम् ॥ ६ ॥
तत्रादौ पुष्पपूजायां कथ्यते तावदद्भुतम् ।
वरसेनकुमारस्य चरित्रमिह तद्यथा ॥ ७ ॥
अस्त्यत्र भरते ख्यातमृषभाख्यं पुरं वरम् ।
ईश्वराऽवस्थितेर्नित्यं यस्याऽभूद् नाम साऽन्वयम् ॥ ८ ॥
तस्याऽधीशः कुशो राजा नाम यस्य दृढं गुणैः ।
बद्धोऽपि मण्डले प्रीतिमवाप परमां जनः ॥ ९ ॥
तत्राऽभयङ्करः श्रेष्ठी श्रेष्ठाचार-विचारवान् ।
प्रिया कुशलमत्याख्या तस्य सार्थाऽन्वयाऽभवत् ॥ १० ॥
भद्रकप्रकृती तस्याऽभूतां कर्मकरावुभौ ।
गृहकर्म करोत्येकश्चारयत्यपरस्तु गाः ॥ ११ ॥
अन्यदा तौ मिथो वार्तां चक्राते विजनस्थितौ ।
धन्य एको हि नः स्वामी यस्य शुद्धा भवत्रयी ॥ १२ ॥
प्राचीनसुकृतात् तावदिदानीं पुण्यभोगभूः ।
बभूव, भविता भाविभवे सुगतिसौख्यभाक् ॥ १३॥
आवां तु हतकौ सर्वपुरुषार्थबहिष्कृतौ ।
भवं निर्गमयावः स्वमफलं स्नुहिवृक्षवत् ॥ १४ ॥
चिन्तयन्ताविति ज्ञात्वा धर्मयोग्याविमावथ ।
चातुर्मासदिने श्रेष्ठी सह निन्ये जिनौकसि ॥ १५॥
चारुकारितशृङ्गारौ जगाद यदहो ! सुतौ ! ।

युवां पुष्पाणि गृह्णीतं पूजनाय जिनेशितुः ॥ १६ ॥
ऊचतुस्तौ च पुष्पाणि यस्य तस्य फलं भवेत् ।
अस्माकं चेष्टिरेवाऽत्र गृह्णीवस्तादिमानि न ॥ १७ ॥
अमन्यमानौ सुतरां श्रेष्ठिना बोधितावपि ।
नीतौ गुर्वन्तिके भावं ज्ञात्वा च गुरुणोदितौ ॥ १८ ॥
भद्रौ ! भावेन देवार्चा पुष्पेणाऽपि महाफला ।
तदहो ! युवयोः स्वल्पमपि किं नास्ति वेतनम् ? ॥ १९ ॥
तयोर्जगाद गोपालो विंशतिर्मे कपर्दकाः ।
सन्ति पञ्च च किन्त्वेतदस्ति स्तोकं मुनीश्वर ! ॥ २० ॥
अनिगूहन्नात्मशक्तिं तपो-दानादि तन्वपि ।
कुर्वाणः शुद्धभावेन लभते विपुलं फलम् ॥ २१ ॥
मुनिनेत्युदितो हृष्टः क्रीत्वा पुष्पाण्यपूजयत् ।
जिनं श्रेष्ठियुतो यावद् द्वितीयस्तावदुन्मनाः ॥ २२ ॥
एतावन्मात्रमप्यासीदस्य किञ्चित् पुनर्न मे ।
चिन्तयन्निदमद्राक्षीत् प्रत्याख्यानकरं नरम् ॥ २३ ॥
पप्रच्छ च गुरोः पार्श्वे किमेतेन कृतं विभो ! ।
गुरुरप्याह भो भद्र ! कृतमद्याऽमुना तपः ॥ २४ ॥
अयं च तस्याऽङ्गीकारे विधिः, पुण्यं च पुष्कलम् ।
स्यादित्याकर्ण्य भव्यत्वादुपवासं चकार सः ॥ २५ ॥
ततो भोजनवेलायां सहार्येण गतो गृहम् ।
परिवेषय्य भक्तं च निदध्यौ द्वारि संस्थितः ॥ २६ ॥
यदि कोऽप्येति मत्पुण्यैर्मुनीन्द्रस्तद् ददाम्यदः ।
भक्तं श्रेष्ठिगृहे येन कर्म कृत्वा मयाऽर्जितम् ॥ २७ ॥
अथ ग्लानादिकार्येण येनाऽभक्तं कृतं नहि ।
स मुनिर्दैवयोगेन तत्र भिक्षार्थमाययौ ॥ २८ ॥
तं दृष्ट्वा कर्मकृद् दध्यौ कुतोऽहं रङ्कमात्रकः ।
ईदृशा मुनयः कुत्र केदं द्रव्यं मयार्जितम् ? ॥ २९ ॥

तन्नूनं काऽपि संपत्तिर्ममाऽपि भविताऽद्भुता ।
भवे भाविनि सामग्री स्यादेवं कथमन्यथा ? ॥ ३० ॥
इति तोषादसौ सर्वं तद् भोज्यं मुनये ददौ ।
तद् वीक्ष्य मुदितः श्रेष्ठी तस्याऽन्यत् पर्यवेषयत् ॥३१॥
तच्च कर्मकरोऽनिच्छन्नूचेऽद्याऽहमुपोषितः ।
श्राद्धोऽप्युवाच यद्येवं गृहीत किं त्वया पुरा ? ॥ ३२ ॥
सोऽब्रवीत् तात ! कं हेतुं त्यजामि निजभोजनम् ? ।
ततस्तुष्टोऽधिकं श्रेष्ठी वात्सल्यं कुरुते तयोः ॥ ३३ ॥
इतश्च सूरसेनाऽऽख्यः कलिङ्गाधिपतिर्नृपः ।
दायादहृतराज्यश्रीः कुरुदेशं गतः क्रमात् ॥ ३४ ॥
नृपं गजपुराधीशं तत्राऽवलगता[1] ततः ।
समृद्धिबन्धुरा ग्रामाश्चत्वारस्तेन लेभिरे ॥ ३५ ॥
तत्राऽस्य सुकराभिख्ये ग्रामे निवसतः सुखम् ।
प्रियाऽस्ति विजयादेवी तस्याः कुक्षाववातरत् ॥ ३६ ॥
पूर्वं दानकृतो जीवो मृत्वा पश्चाज्जिनाऽर्चकः ।
ज्यायानमरसेनाख्यो वरसेनाऽभिधोऽनुजः ॥३७॥ (युग्मम्)
प्राच्यपुण्यानुभावेन रूप-विद्यादिकस्तयोः ।
गुणौघः सह देहेन ववृधे स्तोकवासरैः ॥ ३८ ॥
कला-तेजोनिधी विश्वपूरिताशौ नवोदयौ ।
तौ राजहंसौ नो केषामनुरागं वितेनतुः ? ॥ ३९ ॥
गृहकार्यधुराभारधुर्यौ सुतवृषाविमौ ।
मनोरथशतं पित्रोः प्रमाणभुवि निन्यतुः ॥ ४० ॥
इतस्ततश्च तौ दृष्ट्वा विलसन्तौ महर्द्धिभिः ।
सापत्न्यजननी द्वेषं जयाख्या वहते हृदि ॥ ४१ ॥
अन्येद्युः सा गते राज्ञोऽवलगायां स्वभर्तरि ।
आगते च मृषा कोपं कृत्वा कोपगृहेऽविशत् ॥ ४२ ॥

---

१ सेवमानेन ।

राज्ञोऽतिवल्लभत्वेन साऽथ पृष्टा पुनः पुनः ।
कोपस्य कारणं कष्टादिवाऽऽचख्यौ सबाष्पदृक् ॥ ४३ ॥
यूयं यद्दिवसाद् देव ! गता ग्रामान्तरं तदा ।
आरभ्य तव पुत्राभ्यामहं संक्षोभिता भृशम् ॥ ४४ ॥
पतिभक्त्या च शक्त्या च किन्तु शीलं मया दधे ।
विचार्याऽतः परं नाथ ! क्रियतां यत् कुलोचितम् ॥४५॥
अलीकवचएधोभिरिति संधुक्षितस्तथा ।
कोपवह्निस्तयो राज्ञो यथाऽन्तर्ज्वलितो भृशम् ॥ ४६ ॥
चण्डमाकार्य मातङ्गमादिदेशाऽथ भूपतिः ।
अरे ! ग्रामाद् बहिर्वाहक्रीडया स्तः कुमारकौ ॥ ४७ ॥
तत्रात्मपरिवारेण सह गत्वा तयोर्द्रुतम् ।
शीर्षे छित्त्वा समानीय दर्शयेर्मम कर्मठ ! ॥ ४८ ॥
अचिन्तयच्च मातङ्गः किमिदं हन्त ! वैशसम् ? ।
यदेवंगुणिनोर्भक्तिशालिनोः कुपितः पिता ॥ ४९ ॥
अस्तु सर्वं भविष्येऽस्याऽधुना कालोचितं ब्रुवे ।
देव ! प्रमाणमादेश इत्युक्त्वाऽगात् तदन्तिके ॥ ५० ॥
रुदंश्च कथयामास तत्स्वरूपं कुमारयोः ।
ताभ्यां चाऽभाणि भोः ! शीघ्रं कुरु तातसमीहितम् ॥५१॥
गरीयान् कश्चिदावाभ्यामपराधः कृतो ध्रुवम् ।
अन्यथा कथमत्युग्रमिदं भणति नः पिता ? ॥ ५२ ॥
ततो भूयो निषादेन प्रार्थितौ तौ सगद्गदम् ।
प्रसद्य मयि वेगेन यातं देशान्तरं युवाम् ॥ ५३ ॥
कुमारावूचतुस्त्वं भोः ! सकुटुम्बो हनिष्यसे ।
अस्मत्कृते नरेन्द्रेण न कुर्मस्तादिदं वयम् ॥ ५४ ॥
स्वं रक्षिष्याम्युपायेन विलम्बेथां तु मा युवाम् ।
तेनेत्युक्तौ च तौ पादचारेणैकां दिशं गतौ ॥ ५५ ॥

१ अदन्तोऽयं भविष्यत्कालवाचक ।

आदायाऽश्वौ निषादोऽपि शीर्षे कारयित्वा(?) मृण्मये ।
चित्रेण जाततद्रूपे सायं राज्ञः पुरो गतः ॥ ५६ ॥
समर्प्य तुरगौ द्वारे दर्शयित्वा च मस्तके ।
स जगाद नृपादेशः कृतोऽयमवधार्यताम् ॥ ५७ ॥
नृपोऽप्याह बहिर्ग्रामादिमे गर्ताऽऽहिते कुरु ।
आदेश इति विज्ञप्य मातङ्गो गतवांस्ततः ॥ ५८ ॥
तुष्टा राज्ञी च सा दुष्टा, हृष्टाः कण्टकिनो यतः ।
परतापेन जायन्ते ग्रीष्मेणेव [1]यवासकाः ॥ ५९ ॥
राजपुत्रौ च तौ यान्तावविच्छिन्नप्रयाणकैः ।
क्रमेण तत्र संप्राप्तौ यत्रैकाऽस्ति महाटवी ॥ ६० ॥
विविधप्रोल्लसत्सान्द्रद्रुमच्छायाऽन्धकारिते ।
यत्र क्षिपति शू[2]रोऽपि भियेव न करं वने ॥ ६१ ॥
एकतः शाल-हिन्ताल-प्रियाल-सरला-ऽर्जुनाः ।
अन्यतो नाग-पुन्नाग-लवङ्गा-ऽगुरु चन्दनाः ॥ ६२ ॥
क्वचिच्चिञ्चा-ऽऽम्र-जम्बीर-कपित्था-ऽश्वत्थ-जम्बवः ।
क्वचिद् बकुल कङ्कोल-पाटला-ऽशोक-चम्पकाः ॥ ६३ ।
क्वचिद् न्यग्रोध-मन्दार-पिचुमन्द-हरीतकाः ।
कर्णिकार-काञ्चनार कृतमाल-धवा-ऽञ्जनाः ॥ ६४ ॥
क्वचित् ताल-नक्तमाल-तमाल-मदनाऽशनाः ।
लकुचा-ऽङ्कुल्लबिल्वाद्या विचित्रा यत्र शाखिनः ॥ ६५ ।
कर्तुं पुष्पफलाऽऽतिथ्यं यत्र वातेरिता द्रुमाः ।
पथिकानाह्वयन्तीव सुताम्रकरपल्लवैः ॥ ६६ ॥
शाखाऽऽकर्षणभङ्गाद्यं जनाद् दुःखं सहिष्णवः ।
व्यञ्जयन्ति कुलीनत्वं यत्र सर्वसहारुहा[3]ः ॥ ६७ ॥
यत्रेभ-महिष व्याघ्र-चित्रकादिभयाज्जनान् ।
रक्षन्तीव महावृक्षाः शाखोर्ध्वीकृतबाहुभिः ॥ ६८ ॥

---

१ वृक्षविशेष । २ भानुर्वीरश्च । ३ वृक्षा ।

अथ तौ स्वजनस्येव समग्रगुणशालिनः ।
विशश्रमतुराम्रस्य तले संतापहारिणि ॥ ६९ ॥
सत्फलैः सहकारस्याऽमलैर्गिरिनदीजलैः ।
पितृमातृसुखं ताभ्यां प्रापि तत्राऽपि धर्मतः ॥ ७० ॥
तयोस्तत्रस्थयोर्भानुरस्तमाप गलद्द्युतिः ।
दिनान्ते का कथाऽन्यस्य शूरस्याऽपीदृशी दशा ? ॥७१॥
मन्दतेजा व्रजन्नीचैः करदण्डोपलाक्षितः ।
वृद्धत्वेन ध्रुवं सूर्योऽप्यासन्नास्तो विडम्ब्यते ॥ ७२ ॥
सन्ध्याऽपि पक्षिणां रावैः क्रन्दित्वेनाऽत्यये क्षणात् ।
रक्ताऽम्बरवती सद्यो ममज्जेवाऽपराऽम्बुधौ ॥ ७३ ॥
कृता पद्मापणश्रेणिरनुद्घाटा सरोवरैः ।
मित्रनाशे यतो दुःख जायते विमलात्मनाम् ॥ ७४ ॥
छिद्रेक्षिभिरिवाऽऽक्रान्तमकस्मात् तारकैर्नभः ।
येन दोषोदये क्षुद्राः प्रकटाः स्युः कुतोऽपि हि ॥ ७५ ॥
गते तमोरिपावस्तमभितः प्रसरत् तमः ।
सर्वमेव समीचक्रे निर्विवेक इव प्रभुः ॥ ७६ ॥
आकाशफलके ध्वान्तमषीलेपिन्युडुच्छलात् ।
कालो बाल इवाऽद्यापि लिखत्यक्षरमालिकाम् ॥ ७७ ॥
अथैतत् समयेऽपृच्छद् वरसेनः सहोदरम् ।
किं किञ्चिज् ज्ञायते भ्रातः ! तातरोषस्य कारणम् ? ॥७८॥
ज्येष्ठोऽवादीन्न जानामि वत्स ! किञ्चित् तथाविधम् ।
इङ्गितैः किन्त्विदं मन्येऽपरमातुर्विजृम्भितम् ॥ ७९ ॥
लघुर्बभाण तातोऽपि प्रत्येति किमलीकके ? ।
सोऽप्यूचे वत्स ! मुग्धस्त्वं महिला कूटमन्दिरम् ॥ ८० ॥
अलीकमपि जल्पन्ति तथैव कथमप्यमूः ।
मन्यन्ते सत्यमेवेति यथा रागान्धबुद्धयः ॥ ८१ ॥

१ इन सूर्य । २ रजन्युदयेऽपि ।

गङ्गाया वालुकां वार्धेर्जलं मानं महागिरेः ।
मतिमन्तो विजानन्ति महिलाया मनस्तु न ॥ ८२ ॥
अथवा किमनेनैषा जाताऽतीवोपकारिणी ।
तयैव दर्शिताऽस्माकं सकलेयं मही यतः ॥ ८३ ॥
धन्या गुणार्थिनो येषां दोषेऽपि हि गुणग्रहः ।
पश्यन्ति तु सदाभ्यासाद् दुष्टा दोषं गुणेष्वपि ॥ ८४ ॥
तत्तद्वार्ताः प्रकुर्वाणोऽमरसेनोऽथ निद्रया ।
दुःखितोऽयं महात्मेति सुखं कर्तुमिवाऽऽश्रितः ॥ ८५ ॥
वरसेनः पुनः कुर्वन् वाम-दक्षिणवीक्षणम् ।
नास्त्येव जाग्रतो भीतिर्मत्वेत्यवहितः[1] स्थितः ॥ ८६ ॥
अत्रान्तरे कीर एकस्तत्राम्रविटपे स्थितः ।
कृपयाऽऽर्द्रमनाः स्पष्टं भणति स्म निजां प्रियाम् ॥ ८७ ॥
अये ! योग्याविमौ कौचित् स्वागतस्य नरावुभौ ।
किन्तु नो विद्यते किञ्चिदनयोरुपयोगि यत् ॥ ८८ ॥
कान्तया भणितं नाथ ! मैवं वद सदाशय ! ।
सुकूटपर्वते यस्मादतिगूढैकगह्वरे ॥ ८९ ॥
रोपितौ निजविद्याऽभिषिक्तबीजौ नभश्चरैः ।
सहकारावथाऽस्माकं शृण्वतां कथितं च तैः ॥ ९० ॥
तयोर्माहात्म्यमन्योऽन्यं यथैकस्य तरोः फलम् ।
यो भक्षयति तस्येह राज्यं स्यात् सप्तमे दिने ॥ ९१ ॥
द्वितीयस्य फलं यस्योदरे तिष्ठति तन्मुखात् ।
प्रातः पतति गण्डूषे दीनारशतपञ्चकम् ॥ ९२ ॥
भण्यमानं च तत् कान्त ! त्वयाऽप्याकर्णितं ततः ।
आनीय फलमेकैकं तदीयं दीयतेऽनयोः ॥ ९३ ॥
धन्यस्त्वं जीवितं श्लाघ्यं तव यस्येदृशी स्पृहा ।
परस्योपकृतिं कर्तुं दुर्लभोऽवसरो यतः ॥ ९४ ॥

---

१ सावधान ।

त एव दिवसाः श्लाघ्या यत्रोपक्रियते परे।
शेषास्तु दयित! ज्ञेया ध्रुवं द्यूतेन हारिताः॥ ९५॥
नतिरेवोन्नतिर्लोके दानमेव महाधनम्।
परार्थ एव हि स्वार्थो महतां येन कथ्यते॥ ९६॥
आदित्याय तमः सृष्टं, मेघाय ग्रीष्मशोषणम्।
मार्गश्रमस्तु वृक्षाय, दुःखिनस्तूपकारिणे॥ ९७॥
अन्यथा कथमेतेषां ज्ञायते महिमा महान्।
तदेतौ भवतो भाग्यादायातौ मा विलम्ब्यताम्॥ ९८॥
कीरोऽप्याह प्रिये! युक्तं स्मारितं मे त्वयाऽधुना।
इत्युदित्वा झगित्येव सुकूटाद्रिं गताविमौ॥ ९९॥
वरसेनस्तदश्रौषीत् सर्वं यावत् क्षणार्धतः।
सहकारफले भूमावीक्षिते पतिते पुरः॥ १००॥
ज्ञात्वा तद्वचनाद् भेदं गृहीत्वा ते न्यधात् कटौ।
दध्यौ च किमिदं सत्यमासन्नप्रत्ययोऽथवा॥ १०१॥
अथ ज्येष्ठो जागरित्वा बन्धुप्रहरके स्थितः।
वरसेनः क्षणं तत्र निद्रायाः सुखमन्वभूत्॥ १०२॥
सूरोदये ततः स्थानात् पुरतः प्रस्थितावुभौ।
आसाद्यैकं सरस्तत्र देहशौचादि चक्रतुः॥ १०३॥
तत्त्वं चाऽकथयन्नाम्रफलं राज्यकरं ददौ।
ज्येष्ठभ्रातुः, स्वयं प्राश वरसेनोऽपरं पुनः॥ १०४॥
प्रच्छन्नीभूय गण्डूषं यावत् तत्र करोत्यसौ।
पतति स्म पुरस्तावद् दीनारशतपञ्चकम्॥ १०५॥
वस्त्र-भोजन-ताम्बूलादिना प्रतिपुरं ततः।
कुमारो विलसत्युच्चैः सह ज्येष्ठेन बन्धुना॥ १०६॥
तेनाऽयमन्यदा पृष्टः कुतो द्रव्यं तवेति सः।
ऊचे कौटुम्बिकैर्दान्यासुवर्णं मे प्रवेशितम्॥ १०७॥
भाण्डागारे तदद्याऽपि नाऽऽसीदर्पितमित्यदः।

क्रमाच्च सप्तमदिने तौ काञ्चनपुरं गतौ ॥ १०८ ॥
तत्रैकस्य तरोर्मूले सुष्वाप बहिरग्रजः ।
श्रान्तानामलसानां च निद्रा हि सुलभागमा ॥ १०९ ॥
पुरान्तर्भोजनाद्यर्थं वरसेनः पुनर्ययौ ।
तस्मिंश्च समये तत्र पुरे राजा मृतोऽसुतः ॥ ११० ॥
ततो हस्त्य-ऽश्व-कलश-च्छत्र-चामरलक्षणम् ।
बम्भ्रमीति पुरे देवाऽधिष्ठितं वस्तुपञ्चकम् ॥ १११ ॥
नरं राज्यधरं कञ्चित् तेनाऽन्वेषयता बहिः ।
गत्वा सोऽमरसेनाख्यः कुमारः सहसाऽऽश्रितः ॥ ११२॥
आरूढोऽथ गजस्कन्धं दिव्यवेषधरो नृपः ।
प्रणम्य मन्त्रि-सामन्त-नागरैरभिनन्दितः ॥ ११३ ॥
उपरिष्टाद् धृतच्छत्रः श्वेतचामरवीजितः ।
पुरः कौतुकिभिर्लोकैः कृतसङ्गीतमङ्गलः ॥ ११४ ॥
शृण्वन् जयजयारावं जनादीक्षितुमागतात् ।
पुरे प्रविश्य शोभाढ्ये नीत्या राज्यं करोति सः ॥ ११५॥
( विशेषकम् )
वरसेनोऽपि तां शुद्धिं लब्ध्वा मानधनोऽधिकम् ।
दध्यौ किं याम्यहं तत्र सकाशे भ्रातुरात्मनः ? ॥ ११६॥
अथवा धिगिदं चित्तं यदेषोऽभूद् नृपो नवः ।
गत्वाऽहमपि किं तत्र तद् वक्ष्ये दीनमीदृशम् ॥ ११७ ॥
तवाऽहं सोदरस्तेन देशग्रामादि किञ्चन ? ।
ममाऽपि दीयतामित्थं युगान्तेऽपि न वच्म्यहम् ॥११८॥
दिवसो रजनी वाऽपि क्षयं यातावुभाविमौ ।
व्यवसायं परित्यज्य परास्यं[1] यत्र वीक्ष्यते ॥ ११९ ॥
पौरुषाकृतियुक्तस्य नीचवृत्तौ कुतो रतिः ? ।
मत्तेभकुम्भनिर्भेदी केसरी तृणमत्ति किम् ? ॥ १२० ॥

---

१ परसुखम् ।

यतन्ते हि धने नीचा निजदेहे तु मध्यमाः ।
उत्तमास्तेजसि न्याय्ये भुवनव्यापिनि ध्रुवे ॥ १२१ ॥
दीनमुक्त्वा परं नत्वा लल्लीं[1] कृत्वा यदर्ज्यते ।
जीव्यते ननु किं तेन युगानि दश पञ्च वा ? ॥ १२२ ॥
यच्चापकर्षणे वामबाहुं निजमपीक्षते ।
सहायं दक्षिणो बाहुर्वीरस्तेनाऽपि लज्जते ॥ १२३ ॥
यत्करौ योजयेल्लोकांस्तद्दूरं शलिकातृणम् ।
नरोऽपि न स यो ऽन्यस्य पुरतः कुरुतेऽञ्जलिम् ॥१२४॥
ये प्रणामाञ्जलिं नीचैः कुर्वन्ति कृपणाः प्रभोः ।
ते श्रियः प्रियपद्मायाः दर्शयन्तेऽम्बुजं ध्रुवम् ॥ १२५ ॥
चिन्तयित्वेति तत्रैव धनेन विलसत्यसौ ।
गृहे च वसति प्रौढमगधाख्यपणश्रियः[2] ॥ १२६ ॥
भृशमेष नृपेणाऽथ नगरेऽन्वेषितः परम् ।
नैव दृष्टस्ततो राजा व्यग्रोऽभूद् राज्यचिन्तया ॥ १२७ ॥
नव्यर्द्धिसङ्गमे सद्यस्तन्मयीभूतचेतसः ।
सर्वं हि पूर्वसम्बन्धि याति प्रायेण विस्मृतिम् ॥ १२८ ॥
स्वेच्छया वरसेनोऽपि त्याग-भोगपरायणः ।
गीत-द्यूते-ष्टगोष्ठ्यादिविनोदैर्नयते दिनान् ॥ १२९ ॥
अन्यदा कुट्टिनी प्रोचे मगधां पुत्रि ! ते प्रियः ।
महादानेश्वरो भोगी नाऽन्यः कोऽपि भुवीदृशः ॥ १३० ॥
राजसेवादिकं किञ्चिन्न करोति कदाऽप्यसौ ।
भूयानर्थव्ययश्चैष पृच्छयतां कारणं ततः ॥ १३१ ॥
मगधाऽप्याह हे ! मातः ! प्रश्नेनाऽनेन किं वृथा ? ।
तद् भूरि पूरयत्येष वित्तं कार्यं हि येन वः ॥ १३२ ॥
अत्याग्रहेण चाऽक्कायाः[3] प्रेरिता मगधाऽन्यदा ।
पप्रच्छ वरसेनं ते कुतो देव ! धनागमः ? ॥ १३३ ॥

---

१ चाटूनि । २ पणश्रीर्वेश्या । ३ अक्का माता ।

सहकारफलस्याऽस्यै प्रभावं सोऽप्यचीकथत् ।
प्रायः प्राञ्जलचित्तानामकथ्यं नास्ति किञ्चन ॥ १३४ ॥
तज्ज्ञात्वा कुट्टिनी चूतफलस्याऽऽशु जिघृक्षया ।
संयोजितसुरादानाद् वमनं तमकारयत् ॥ १३५ ॥
धृत्वा तद् भाजने मध्याद् गृहीत्वाऽऽम्रफलं तया ।
भक्षितं लुब्धया किन्तु वृथाऽभूत् तन्मुखे गतम् ॥१३६॥
देवीपूजां करिष्यामो देवाऽद्य तद् बहिस्त्वया ।
स्थेयमित्यधनत्वात् स मिषेण प्रेषितो गृहात् ॥ १३७ ॥
सत्कृता बहुधाऽप्यत्र सत्क्रियन्ते यदाऽपि न ।
तदाऽपि विक्रियां यान्ति खल-देह-पणश्रियः ॥१३८॥
पराभूत इव स्वान्ते वीक्ष्य तासामनादरम् ।
दध्याविति किमेताभिः सर्वं द्रव्येण मे जगत् ? ॥ १३९ ॥
स द्वितीयदिने यावद् गण्डूषं कुरुते मुखात् ।
तावन्निष्ठीवनं मुक्त्वा नाऽन्यत् पतति किञ्चन ॥ १४० ॥
ततोऽत्याकुलितश्चित्ते चिन्तयामास राजसूः ।
अस्मादृशामिति स्तोकं [1]रागान्धलधियामिदम् ॥ १४१ ॥
एवमेव दिनं नीत्वा विलक्षवदनो भ्रमन् ।
सन्ध्यायां शून्यभावेन निर्गतो नगराद् बहिः ॥ १४२ ॥
प्रतोली पिहिता तावत् ततस्तत्रैव शर्वरीम् ।
सन्निधाने श्मशानस्य शून्यदेवकुलेऽवसत् ॥ १४३ ॥
यत्र कुर्वन्ति घूत्कारं घूकाः फेत्कुर्वते शिवाः ।
भ्रमन्ति श्वापदा विष्वक् क्रन्दन्ति मृगधूर्तकाः ॥ १४४ ॥
राक्षसास्तन्वते क्षोभं प्रेताः किलकिलायितम् ।
अट्टहासं तु वेताला रौद्रोद्द्योतं विभीषिकाः ॥ १४५ ॥
यदेवंविधरूपेण यमस्याऽपि भयङ्करम् ।
तत्राऽपि निर्भयः सोऽस्थात् किं वज्रं भिद्यते घनैः ? ॥

1 अन्धलोऽन्ध ।

अथो निशीथसमये चौराश्चत्वार आगताः ।
सुष्ठुवस्तुकृते तेऽपि विवदन्ते परस्परम् ॥ १४७ ॥
कुमारेण कृतां चौरसंज्ञां विज्ञाय तस्करैः ।
चौरोऽयमित्यथाऽऽहूय पुरस्तादुपवेशितः ॥ १४८ ॥
कुमारः स्माऽऽह भो यूयं कथं युध्यत बान्धवाः ! ? ।
दस्युभिः कथितं मित्र ! विवादे कारणं शृणु ॥ १४९ ॥
पादुके लकुटः कन्था मोषवस्तुत्रयं, वयम् ।
चत्वारस्तेन नो कर्तुं विभागोऽमुष्य शक्यते ॥ १५० ॥
कुमारोऽप्याह को वादः कृतेऽस्याऽसारवस्तुनः ।
तैरूचे मुग्ध ! नो वेत्सि महिमामस्य तत्त्वतः ॥ १५१ ॥
कथ्यतां यदि कथ्यं स्यात् कुमारेणेति भाषिते ।
एकीभूय स्म ते प्राहुर्यद्येवं तन्निशम्यताम् ॥ १५२ ॥
अत्र प्रेतवने सिद्धैनैकेनाऽऽराध्य तोषिता ।
षड्भिर्मासैर्महाविद्या वस्तून्येतानि सा ददौ ॥ १५३ ॥
हेरयित्वा च षण्मासान् सिद्धं व्यापाद्य संप्रति ।
वस्तून्यादाय संप्राप्ता अत्र देवकुले वयम् ॥ १५४ ॥
अस्याः प्रस्फोट्यमानायाः कन्थाया दिवसोदये ।
शतानि पञ्च रत्नानां पतन्ति प्रतिवासरम् ॥ १५५ ॥
शस्त्रं तु लकुटेनोच्चैर्भ्राम्यमाणेन नो लगेत् ।
पादुके पादयोर्न्यस्य गम्यते चिन्तिताऽऽस्पदम् ॥ १५६ ॥
तत् श्रुत्वा हृदये तुष्टः कुमारः स्माऽऽह, नाऽधृतिः ।
कार्या निर्धारयिष्यामि विवादमधुनैव वः ॥ १५७ ॥
चतसृषु क्षणं दिक्षु गत्वा दूरेऽवतिष्ठत ।
विचार्याऽऽकारयिष्येऽहमागच्छेत तदा द्रुतम् ॥ १५८ ॥
तैस्तथा विहिते कन्थां स स्कन्धे लकुटं करे ।
पादुके पादयोर्न्यस्योत्पत्याऽन्तर्नगरं ययौ ॥ १५९ ॥
विलक्षवदनाश्चौरा ययुर्निजनिजाऽऽस्पदम् ।

पुनर्भाग्यवतां संपद्, विपदायाति पापिनाम् ॥ १६० ॥
वरसेनोऽथ मित्रस्यैकस्य विश्वाससद्मनः ।
गृहे संगोप्य वस्तूनि स्वयं भ्रमति लीलया ॥ १६१ ॥
कन्थाप्रस्फोटनोद्भूतरत्नानां पञ्चभिः शतैः ।
दिव्यवस्त्रादिसामग्रीं कृत्वा चेटैः समान्वितः ॥ १६२ ॥
गीतसूक्तादिलीनात्मा प्रशस्ये देवमन्दिरे ।
उपविष्टः सुखेनाऽस्ते दोगुन्दुग इवाऽमरः ॥ १६३ ॥
( युग्मम् )
अथ तत् तादृशं तस्य स्वरूपं चेटिकामुखात् ।
निशम्य धनमादातुमुत्सुकाऽतीव कुट्टिनी ॥ १६४ ॥
कारयित्वा सितं वेषं वेणीबन्धं च पुत्रिकाम् ।
मगधाख्यां कुमारस्याऽन्तिकं गत्वेदमब्रवीत् ॥ १६५ ॥
( युग्मम् )
अत्यासङ्गवशाद् वत्स ! तदा त्वं प्रहितो बहिः ।
तत्रैवाऽवस्थितः कस्माद् नागतो निजमन्दिरम् ॥१६६॥
तद्दिनान्मगधा रुष्टा न मया सह जल्पति ।
जीवत्यपि महाकष्टं श्वेतवेषाद्यवस्थया ॥ १६७ ॥
त्वदेकजीविता सैवं त्वमेवंविधलीलया ।
वर्तसे, कथितं कथ्यं मया, कुरु कुलोचितम् ॥ १६८ ॥
इति मायावचस्तस्याः श्रुत्वा दध्यौ नृपाङ्गजः ।
रण्डया मण्डितं कूटमिदं भूयो ममोपरि ॥ १६९ ॥
किन्त्विदानीं भलिष्येऽहमपि नत्वा ततोऽवदत् ।
मातर्युक्तमिदं सर्वं घटते दुहितुस्तव ॥ १७० ॥
किं करोम्यधुना शीघ्रं निरोपं देहि सा जगौ ।
गृहमागम्यतां सोऽपि तथैवाऽस्या गृहे स्थितः ॥ १७१ ॥
पुनर्वित्तागमप्रश्ने प्रेरिता मगधाऽभ्यधात् ।
अतिलुब्धाऽसि हे ! पापे ! पृच्छ त्वं स्वयमेव तम् ॥१७२।

वृद्धयाऽथ स्वयं पृष्टो व्याजहार नृपाङ्गजः ।
अप्रकाश्यमिदं किन्तु कथ्यतेऽम्ब ! तवाग्रतः ॥ १७३ ॥
विद्ययाऽधिष्ठितं दिव्यमस्ति मे पादुकाद्वयम् ।
तदारूढ' खमुत्पत्य वाञ्छितार्थं समानये ॥ १७४ ॥
पापा श्रुत्वेति सा दध्यौ तावन्नाऽद्याऽपि किञ्चन ।
यावच्चटति नो हस्ते ममेदं पादुकाद्वयम् ॥ १७५ ॥
अन्येद्युर्मायया मन्दीभूय सा जीर्णमञ्चके ।
पतिता कुरुते शूलपीडितेवाऽतिकूजितम् ॥ १७६ ॥
पृष्टा वृद्धा कुमारेण मान्द्यहेतुमुवाच सा ।
तत्र किं कथ्यते वत्स ! निजाङ्गेनैव सह्यते ॥ १७७ ॥
मया हि कथिते दुःखे स्वच्छप्रकृतिवत् तथा ।
तवाऽपि प्रतिबिम्ब्येत मौनमेव ततो वरम् ॥ १७८ ॥
निर्बन्धेन पुनः पृष्टाऽनिच्छन्तीव जगाद सा ।
श्रूयतां तर्हि हे ! वत्स ! परदुःखेन दुःखिता ॥ १७९ ॥
तदा त्वयि गते दुःखादौपयाचितकं मया ।
विदधे कामदेवस्य वार्धिमध्यगतौकसः ॥ १८० ॥
दुष्करं तच्च तेनादौ तवाग्रे न प्रकाशितम् ।
क्षिपामि जलधौ पापामिति संचिन्त्य सोऽवदत् ॥१८१॥
नहि मे दुष्करं शीघ्रं चल्यतामिति तद्गिरा ।
सद्यः सज्जतरीभूता साधु साध्विति भाषिणी ॥ १८२ ॥
स्कन्धमारोप्य तां हृष्टः पादयोः क्षिप्तपादुकः ।
उत्पत्य सहसाऽम्भोधिमध्यदेवकुलेऽपतत् ॥ १८३ ॥
अथोचे कुट्टिनी वत्स ! त्वमादौ काममर्चय ।
इत्यसौ पादुके मुक्त्वा बहिर्मध्ये प्रविष्टवान् ॥ १८४ ॥
गृहीत्वा तत् तु सा शीघ्रं स्वस्थानं कुट्टिनी ययौ ।
वरसेनोऽपि तज्ज्ञात्वा दुःखितो ह्यचिन्तयत् ॥ १८५ ॥
धूर्तोऽपि वञ्चितोऽस्म्येष करोमि किमु सम्प्रति ? ।

अन्यथा चिन्तितं कार्यं दैवतो जायतेऽन्यथा ॥ १८६ ॥
भ्रमन्तमिति तं गच्छन्नुपर्येको नभश्चरः ।
विलोक्य निकटीभूय सदयः पृष्टवानिदम् ॥ १८७ ॥
कस्त्वं भोः ! कथमत्राऽऽगाः कुमारोऽपि यथातथम् ? ।
आचख्यौ खचरोऽप्येनं धीरयामास दुःखितम् ॥१८८॥
यावदायामि गत्वाऽग्रे मासार्धं तावदत्र भोः ! ।
स्थातव्यं ते ततः स्थानं नेष्यामि त्वां समीहितम् ॥१८९॥
देवतां पूजयेरस्यायतनस्य च पृष्ठतः ।
अस्ति सर्वर्तुकोद्यानं क्रीडार्थं निर्मितं सुरैः ॥ १९० ॥
तत्र गच्छेर्विनोदार्थं किन्तु चैत्यपुरस्तरू ।
तिष्ठतो यौ तदासन्नमपि गम्यं त्वया नहि ॥ १९१ ॥
प्रतिपन्नं कुमारेण मोदकादि च शम्बलम् ।
दत्त्वा विद्याधरोऽप्यस्मै जगामाकाशमण्डलीम् ॥१९२॥
अर्चन् कामं कुमारस्तु कौतुकाद् द्रष्टुमन्यदा ।
तदुद्यानं गतस्तावत् तत्रैकत्र प्रवर्तते ॥ १९३ ॥
वसन्तसमयश्चूतमञ्जरीपुञ्जपिञ्जरः ।
कोकिलाकण्ठनिर्यातपञ्चमोद्गारबन्धुरः ॥ १९४ ॥
प्रफुल्लमाल्लिकामोदमेदुरः स्मितचम्पकः ।
उद्भिद्यमानकिसलो विकसन्नवमालिकः ॥ १९५ ॥
(विशेषकम्)
एकतो जयति ग्रीष्मः पाटला-बकुलाश्रितः ।
जनिताऽम्भोऽवगाहेच्छदीर्घिकासुभगीकृतः १९६ ॥
एकतः केकिकेकाढ्यो विकसज्जातियूथिकः ।
कदम्बकेतकोद्भेदसुन्दरः प्रावृडागमः ॥ १९७ ॥
एकतः कमलोल्लासी स्वस्थीकृतसरोवरः ।
रम्यहंसरवः सप्तच्छदोन्मेषी शरत्क्षणः ॥ १९८ ॥
हेमन्त ऋतुरेकत्र यत्र पत्रेऽपि सौरभम् ।

धत्ते मरुबकः कुन्द-मचकुन्दादि चाऽर्हति ॥ १९९ ॥
एकतः शिशिरो यत्र करणी-शतपत्रिकाः ।
अव्यभ्रमरझङ्काराः सौभाग्यं दधतेऽद्भुतम् ॥ २०० ॥
तत्राऽसौ कुसुमामोदैर्दीर्घिकाऽम्भोऽवगाहनैः ।
सत्फलप्राशनैः प्रीतो गमयामास वासरान् ॥ २०१ ॥
प्रायो वारितवामत्वाज्जनस्य दिवसेऽन्यदा ।
पुष्पं निषिद्धवृक्षस्य जिघ्रति स्म स राजसूः ॥ २०२ ॥
अथैष सहसादेव गरीयान् रासभोऽजनि ।
भूत्कुर्वन्नीक्षितः पक्षायातेन खचरेण च ॥ २०३ ॥
बहु निर्भर्त्स्य सोऽन्यस्याऽऽघ्रापितः कुसुमं तरोः ।
भूयो मर्त्यत्वमासाद्य क्षमयामास खेचरम् ॥ २०४ ॥
अतीव महदाश्चर्य किमेतदिति शंस मे ।
कृत्यं चादिश तेनेति प्रेरितः खेचरोऽब्रवीत् ॥ २०५ ॥
विद्यया खरमानव्याऽऽवासितौ कारणादिमौ ।
मया वृक्षौ पुनश्चात्र भवता पञ्च वासरान् ॥ २०६ ॥
स्थातव्यमिति संभाष्य खेचरः पुनरप्यगात् ।
वरसेनस्तु तद्वृक्षपुष्पे द्वे अपि सोऽग्रहीत् ॥ २०७ ॥
पञ्चमे च दिनेऽभ्येत्य नीतो विद्याधरेण सः ।
काञ्चनाख्यं पुरं तत्र तथैव विलसत्यलम् ॥ २०८ ॥
अक्का च तं पुनर्वीक्ष्य विस्मिता चकिता भृशम् ।
जानु-कूर्परयोः पट्टान् बद्ध्वा तस्याऽन्तिकं ययौ ॥२०९॥
स गाढाऽमर्षयुक्तोऽपि विहिताकारसंवरः ।
जगाद किमिदं मातः ! सा रुदतीदमब्रवीत् ॥२१०॥
त्वं ज्ञास्यसि कथं वत्स ! त्वन्निमित्तमिदं मया ।
सर्वमासादितं किं वा सर्वं भव्यं तवाऽऽगमात् ? ॥२११॥
स्वरूपं कथ्यते किन्तु कामस्य भवने यदा ।
पूजां कर्तुं प्रविष्टोऽसि तदा विद्याधरो बहिः ॥ २१२ ॥

कोऽपि दुष्टः समागत्य गृहीत्वा तत्र पादुके ।
प्रस्थितोऽहं च तस्याशु विलग्ना निविडग्रहम् ॥२१३॥
दैवादत्राऽऽगतेनाऽहं तेनोल्लाल्य प्रपातिता ।
अङ्गोपाङ्गानि भग्नानि पश्य कस्येह कथ्यते ॥ २१४ ॥
इत्युक्त्वा गृहमानीतः स गृहीत्वा तया भुजे ।
पृष्टश्च ते कुतो वित्तं कथं चाऽत्र समागमः ? ॥ २१५ ॥
तत्राऽऽराद्धो मया कामस्तेन तोषाद् धनं बहु ।
दत्त्वाऽऽनीतोऽहमत्रेति तेनोक्ते सा पुनर्जगौ ॥ २१६ ॥
तेनाऽन्यदपि ते दत्तं विशिष्टं वस्तु किञ्चन ।
स ऊचे दत्तमाश्चर्यकारकं दिव्यमौषधम् ॥ २१७ ॥
येनाऽऽघ्रातेन सद्यः स्यात् सुवृद्धस्याऽपि यौवनम् ।
अथोत्सुकमनाः साऽभूत् वार्तयाऽपि तया भृशम् ॥२१८॥
आख्यच्च वत्स ! यद्येवं तन्नवं कुरु मे वपुः ।
यतस्ते किमु कोऽप्यस्ति गौरव्यो भुवि मां विना ? ॥२१९॥
कुमारोऽभिदधे सर्वं करिष्ये सुन्दरं यतः ।
युष्मन्निमित्तमेवेदं मयाऽऽनीतमिहौषधम् ॥ २२० ॥
आनीय लकुटं कन्थामथासौ कुसुमं दधौ ।
तस्या नासाग्रतः सा च रासभी सहसाऽभवत् ॥ २२१ ॥
कन्थामारोप्य तत्पृष्ठे चटितो लकुटं करे ।
धृत्वा तां कुट्टयंस्तेन पुरमध्येन निर्ययौ ॥ २२२ ॥
सुन्दरं कृतमेतेन यदस्या अतिलोभजम् ।
दर्शितं फलमित्युक्त्वा मगधा स्वगृहे स्थिता ॥ २२३ ॥
शेषस्तु गणिकावर्गः पूत्कुर्वन् नृपमन्दिरे ।
गत्वा न्यवेदयन्नाथ ! विप्लवो वर्तते महान् ॥ २२४ ॥
यदद्य धूर्तेनैकेन कुतोऽप्यौषधयोगतः ।
अस्मत्कुटुम्बवृद्धा स्त्री सहसा रासभी कृता ॥ २२५ ॥
राज्ञाऽपि हसितं पूर्वं वेश्या कस्य नु हास्यभूः ? ।

ततः शीघ्रं तलारक्षः प्रेषितोऽगात् तदन्तिके ॥२२६॥
अरेऽस्माकं पुरे कर्तुं लभ्यते नाऽसमञ्जसम् ।
तेनेत्युक्तो कुमारोऽपि कुपितो गाढमब्रवीत् ॥ २२७ ॥
रे ! यस्य बलमत्राऽस्ति गत्वा तस्याशु कथ्यताम् ।
ततो रुष्टस्तलारक्षः प्रजहार शरादिभिः ॥ २२८ ॥
भल्ली-बावल्लशल्यानां वरसेनः शतानपि ।
लकुटेनैव चिक्षेप योगी ध्यानेन दोषवत् ॥ २२९ ॥
स भूपप्रहितानेकभटक्षिप्तशरव्रजे ।
परितस्थे बभौ कामं परिवेषे[1] इवाऽर्यमा ॥ २३० ॥
यो यस्तीव्रतराटोपो युद्धाय तमुपस्थितः ।
अपवाद इवोत्सर्गं तं तमेष निषिद्धवान् ॥ २३१ ॥
अन्येऽपि मन्त्रि-सामन्ता नाक्रामंस्तं कथञ्चन ।
दण्डेन भ्राम्यता जातचक्रभ्रमभयादिव ॥ २३२ ॥
कौतुकादथ भूपालस्तत्रागात् सपरिच्छदः ।
प्रवेशोऽस्ति तिलस्याऽपि न यत्र प्रेक्षकैर्जनैः ॥२३३ ॥
नृपं दृष्ट्वा विशेषेण लकुटं भ्रमयंस्तथा ।
स खरीं ताडयामास रारटीति स्म सा यथा ॥ २३४ ॥
तदा लोकोऽब्रवीदेवं अहो ! साम्यं बलद्वये ।
राजैकत्रेभमारूढः खरीमेको नरोऽन्यतः ॥ २३५ ॥
संमुखं च चलन्नेष पार्थिवेनोपलक्षितः ।
गजाच्च सहसोत्तीर्याऽऽलिङ्गितः स्नेहनिर्भरम् ॥ २३६ ॥
कुमारेणोदितं भ्रातः ! प्रतीक्षस्व क्षणं यथा ।
कौतुकं पूरये बाह्वोः खरीमाहत्य कर्कशम् ॥ २३७ ॥
बभाषे भूपतिर्वत्स ! किमेतदिति सोऽपि तम् ।
वृत्तान्तं कथयित्वा तां पथि स्थाणौ[2] बबन्धयत् ॥ २३८ ॥
स्वयं च द्विरदारूढः समं राज्ञाऽविशत् पुरम् ।

१ मण्डले । २ कीलके ।

अथ लोकस्तथा दृष्ट्वा कुट्टिनीं पापठीत्यदः ॥ २३९ ॥
अतिलोभो न कर्तव्यो लोभं नैव परित्यजेत् ।
अतिलोभाभिभूतात्मा कुट्टिनी रासभी भवेत् ॥२४०॥
निर्बन्धाच्च नृपस्याऽन्यत् पुष्पमाघ्राप्य तां पुनः ।
कुमारो मानुषीं कृत्वाऽमुञ्चदादाय पादुके ॥ २४१ ॥
यौवराज्येऽभिषिक्तोऽथ वरसेनो महीभुजा ।
तेन युक्तो नृपः शब्दोऽर्थेनेव शुशुभेतराम् ॥ २४२ ॥
तौ महौजःश्रिया राज-युवराजौ विरेजतुः ।
अवतीर्णौ भुवं स्वर्गादिन्द्रो-पेन्द्राविव स्वयम् ॥ २४३ ॥
अथाऽऽनाय्य निजं तत्र भक्त्या जनकमूचतुः ।
भुङ्क्ष्व राज्यमिदं तात ! कृत्यं चाऽस्माकमादिश ॥२४४॥
त्वत्प्रसादादिदं राज्यं मातरस्माभिरर्जितम् ।
इत्युक्त्वाऽपरमाताऽपि त्याजिता चित्तकश्मलम् ॥ २४५ ॥
स मातङ्गोऽपि सर्वत्र स्वजातावधिपः कृतः ।
भ्रश्यन्ति कथमौचित्यान्महात्मानः कदापि हि ? ॥२४६॥
अन्यदा तौ गवाक्षस्थौ वीक्षमाणौ पुरश्रियम् ।
भ्रमन्तं भिक्षया मार्गे मुनिमेकमपश्यताम् ॥ २४७ ॥
युगमात्रान्तरे दत्तदृष्टिमव्यग्रमानसम् ।
शनैःकृतपदन्यासं भूमिभारभयादिव ॥ २४८ ॥

(युग्मम्)

स्नेहेन नियतं क्वाऽपि पुराऽपि मुनिरीदृशः ।
दृष्टोऽस्माकं दृशौ तेन सहर्षमिव धावतः ॥ २४९ ॥
ध्यायन्ताविति तौ सद्यो जातजातस्मृती मुनिम् ।
यथास्थानगतं भूरिविभूत्या वन्दितुं गतौ ॥ २५० ॥
अथ पप्रच्छ तं नत्वा नृपो वद मुनीश्वर ! ।
त्वयि दृष्टे मनोऽस्माकमतीव मुमुदे कथम् ? ॥२५१॥

मुनीन्द्रोऽपि विशिष्टेनाऽवधिना प्राग्भवं तयोः ।
ज्ञात्वा तथैव चाख्याय विशेषादिदमब्रवीत् ॥ २५२ ॥
रोपितो यस्त्वया राजन् ! साधुदानमहातरुः ।
तस्य पुष्पमिदं राज्यं भविताऽतः परं फलम् ॥ २५३॥
वरसेनः कपर्दानां पञ्चकैः पञ्चभिः पुनः ।
क्रीत्वा पुष्पाणि यत् पूजां जिनस्य कृतवान् पुरा ॥२५४॥
तत्प्रभावेन संपन्ना लब्धिः पञ्चशतादिका ।
भोगाश्च विपुला दिव्यरूपादिगुणशालिनः ॥ २५५ ॥
निर्वाहे पुनरत्यन्ताऽनन्तसौख्यविधायिनी ।
निश्चिता भविता सिद्धिर्युवयोरुभयोरपि ॥ २५६ ॥
देवत्व-मनुजत्वेन सुभोगान् भवपञ्चकम् ।
यावद् भुक्त्वा भवे षष्ठे विदेहे पूर्वदिक्स्थिते ॥ २५७ ॥
उत्पद्य प्राज्यसाम्राज्यसुखं निर्वाह्य निस्तुषम् ।
तपः कृत्वा च पर्यन्ते युवां सिद्धिं समेष्यथः॥ २५८ ॥
इति श्रुत्वा मुनेर्वाक्यं बहुलोकः प्रबुद्धवान् ।
पृष्ट्वा भूयोऽपि तौ जैनधर्मे स्वं चक्रतुर्मुदा ॥ २५९ ॥
ततो वाचंयमं नत्वा गत्वा च निजमन्दिरे ।
सद्धर्मरथधौरेयावभूतां भ्रातरावुभौ ॥ २६० ॥
कारयित्वा महीं नव्यजिनमन्दिरमण्डिताम् ।
रथयात्रोत्सवं देवपूजां नवनवर्द्धिभिः ॥ २६१ ॥
साधूनां प्रणतिं तेषु प्रतिकूलनिवारणम् ।
प्रतिग्रामपुरं दानशालां दीनादिहेतवे ॥ २६२ ॥
धार्मिकाणां च वात्सल्यं लोके धर्मप्रवर्तितम् ।
नित्यं विदधतोरेवं निर्व्यूढं जीवितं तयोः ॥ २६३ ॥
पर्यन्ते व्रतमादाय ब्रह्मलोकं गतौ ततः ।
पूर्वाख्यातक्रमात् सिद्धौ विदेहे तावुभावपि ॥ २६४ ॥
आख्यातं वरसेनस्य पुष्पार्चाविषयं मतम् ।

अधुनाऽक्षतपूजायां शुकराजस्य कथ्यते ॥ २६५ ॥
अस्त्यत्र भरतक्षेत्रे विलसत्पुरुषोत्तमम् ।
नानारामाभिरामं च नगरं श्रीपुराऽभिधम् ॥ २६६ ॥
तत्राऽस्ति बहिरुद्याने नन्दनोद्यानसंनिभे ।
देवराजविमानाभं युगादिजिनमन्दिरम् ॥ २६७ ॥
सर्वसौख्यनिधानेषु स्थानदानाय यत् सदा ।
चलद्ध्वजाञ्चलव्याजाज्जनमाह्वयति ध्रुवम् ॥ २६८ ॥
दृढं दण्डमिवाऽऽलम्ब्य यं दूरे दुर्गमामपि ।
धर्मवृद्धाः सुखेनैव गच्छन्ति परमां गतिम् ॥ २६९ ॥
एकोऽयमेव सर्वज्ञः स्वामी संसारतारकः ।
येनाऽऽख्यातुमितीवोर्ध्वाङ्गुलिश्चक्रे ध्वजच्छलात् ॥२७०॥
स्फटिकाङ्गणसंक्रान्तप्रतिबिम्बेन तारकाः ।
यस्मै तारकराजत्वात् प्रणाममिव कुर्वते ॥ २७१ ॥
अन्तर्जिनजुषो यस्माद् ध्वजासितपटोच्छ्रितात् ।
यानपात्रसमा जीवास्तरन्ति भवसागरम् ॥ २७२ ॥
यस्योज्ज्वलप्रभाजालच्छलेन निशि लक्ष्यते ।
जिनेन्दोर्बन्धुबुद्ध्येव मिलनायाऽऽगतः शशी ॥ २७३ ॥
स्थिता उच्चैस्तरे यस्मिन् मन्यन्ते भुवि धार्मिकाः ।
करग्राह्यमिवाऽमर्त्यभवनं संशयं विना ॥ २७४ ॥
पुरतस्तस्य चैत्यस्य सहकारमहाद्रुमे ।
स्नेहानुविद्धमन्योऽन्यं युग्मं वसति कीरयोः ॥ २७५ ॥
अन्यदा भणितो भर्ता कीर्या यन्मेऽस्ति दोहदः ।
क्षेत्रादानीयतां नाथ ! त्वयैकं शालिशीर्षकम् ॥ २७६ ॥
सा तेन भणिता कान्ते ! क्षेत्रं श्रीकान्तभूपतेः ।
अत्र गृह्णाति यः शीर्षं तस्य शीर्षं ध्रुवं व्रजेत् ॥ २७७ ॥
तयोचे प्रिय ! कोऽप्यन्यस्त्वत्तुल्यो नैव कातरः ।
यः प्रियां प्राणलोभेन म्रियमाणामुपेक्षसे ॥ २७८ ॥

श्रुत्वेति लज्जितो बाढं भूत्वा जीवितनिस्पृहः ।
शालिक्षेत्रे च गत्वाऽयमानिन्ये शालिशीर्षकम् ॥ २७९ ॥
एवं प्रतिदिनं राजनराणां रक्षतामपि ।
मञ्जरीरानयत्येष भार्यादेशेन सोद्यमः ॥ २८० ॥
अन्यदा नृपतिस्तत्र शालिक्षेत्रे समागतः ।
विध्वस्तं प्रेक्षते तस्यैकदेशं पक्षिभिर्भृशम् ॥ २८१ ॥
पृष्टोऽथ भूभुजा शालिरक्षको वद केन भोः ! ।
विनाशितमिदं क्षेत्रं सोऽप्युवाचससंभ्रमम् ? ॥ २८२ ॥
स्वामिन्नेकशुको नित्यं गृहीत्वा शालिमञ्जरीम् ।
प्रयाति रक्ष्यमाणोऽपि नष्ट्वा झगिति चौरवत् ॥ २८३ ॥
अरे ! धृत्वाशु पाशेन तमानय ममाऽन्तिकम् ।
निगृह्णामि यथा चौरमिवेत्युक्त्वा गतो नृपः ॥ २८४ ॥
अथाऽन्यदिवसे तेन पुरुषेण नृपान्तिकम् ।
नीयते पाशबद्धोऽसौ पश्यन्त्यां कीरयोषिति ॥ २८५ ॥
पृष्ठलग्ना ततो धावत्यश्रुपूर्णाऽम्बका[1] शुकी ।
दयितेन समं प्राप्ता सुदुःखा नृपमन्दिरम् ॥ २८६ ॥
विज्ञप्तः शालिपालेन तत्राऽऽस्थानस्थितो नृपः ।
देव ! सैष शुको बद्ध्वाऽऽनिन्ये शालिमलिम्लुचः[2] ॥२८७॥
तं दृष्ट्वा कुपितो राजा हन्ति यावन्निजासिना ।
सहसैव शुकी तावत् पतिता पत्युरन्तरे ॥ २८८ ॥
अब्रवीच्च ममैवाऽद्य देहे प्रहर सत्वरम् ।
मुञ्चेमं दयितं देव ! मम जीवितदायिनम् ॥ २८९ ॥
येन मे दोहदो जज्ञे शालिशीर्षोपरि प्रभो ! ।
सोऽनेन पूरितो मत्वा तृणतुल्यं स्वजीवितम् ॥ २९० ॥
हसित्वाऽऽह नृपः कीर ! पाण्डित्यं लोकविश्रुतम् ।
कथं ते, यः स्त्रियः कार्ये त्यजस्येवं स्वजीवितम् ? ॥२९१॥

१ अम्बक नेत्रम् । १ चौर ।

शुकी जगाद दूरेऽस्तु पितृ-मातृ-धनादिकम् ।
देव ! कान्ताऽनुरागेण नरः प्राणानपि त्यजेत् ॥ २९२ ॥
त्वं श्रीदेव्याः कृते त्यक्तं जीवितव्यं यथा त्वया ।
तथाऽन्योऽपि त्यजत्यत्र दोषः कीरस्य कः प्रभो ! ? ॥२९३॥
सगर्भवचनेनाऽस्या विस्मितो राऽडचिन्तयत् ।
जानाति कथमेषा मे वृत्तान्तं हन्त ! पक्षिणी ? ॥ २९४ ॥
अप्राक्षीच्च नृपो भद्रे ! दृष्टान्तोऽस्मि कथं त्वया ।
कृतः, कथय तत् सर्वं येन मे गुरुकौतुकम् ? ॥ २९५ ॥
शुकी प्रोवाच दृष्टान्तो ज्ञातो येनाऽसि तच्छृणु ।
पुरा परिव्राजिकैका राज्ये देव ! बभूव ते ॥ २९६ ॥
महामायाविनी क्षुद्रप्रयोगनिपुणाऽथ सा ।
उपचर्य चिरं प्रोक्ता श्रीदेव्या तव भार्यया ॥ २९७ ॥
अम्ब ! पत्नी नृपस्याऽहं बहुभार्यो मम प्रियः ।
जाता कर्मवशेनाऽहं सर्वासामपि दुर्भगा ॥ २९८ ॥
तत् प्रसीद तथा येन भवामि पतिवल्लभा ।
मयि जीवति जीवन्त्यां मृतायां म्रियते च सः ॥ २९९ ॥
सा तया भणिता वत्से ! स्त्रीणां राजावरोधतः ।
अन्यन्नास्तीदृशं दुःखं यदुक्तं पण्डितैरिदम् ॥ ३०० ॥
सपत्नीनां शते वासः पुत्रस्याऽपि न दर्शनम् ।
कार्ये न्याय्येऽपि न स्वेच्छा धिग् जन्म नृपयोषिताम् ॥३०१॥
प्राणिस्वेच्छाच्छिदः क्रूराः कारागारनियोगिनः ।
मृत्वा सत्पात्रदानेन जायन्ते नृपयोषितः ॥ ३०२ ॥
गृहाण तदिमां सद्यःप्रत्ययामौषधीं सुते ! ।
पाने दद्याश्च येनाशु तव भर्ता वशीभवेत् ॥ ३०३ ॥
प्रवेशोऽपि गृहे तस्य नास्ति मे, दर्शनं कुतः ? ।
पाने च भगवत्यस्य यच्छामि कथमौषधीम् ? ॥ ३०४ ॥

---

१ नृप ।

यद्येवं तर्हि भद्रे ! त्वं गृहीत्वाऽद्य मदन्तिकात् ।
साधयैकमना मन्त्रं सौभाग्यजननं परम् ॥ ३०५ ॥
इत्युदित्वा तपस्विन्या दत्तो मन्त्रः शुभक्षणे ।
पूजां विधाय राज्ञ्याऽपि गृहीतो विधिपूर्वकम् ॥ ३०६ ॥
यावद् ध्यायति सा देवी सततं मन्त्रमादरात् ।
तावत् तत्र प्रतीहारी नृपेण प्रहिताऽवदत् ॥ ३०७ ॥
आज्ञापयति देवि ! त्वां देवो यद् वासमन्दिरे ।
आगन्तव्यं विमुच्याऽद्य कुविकल्पं त्वया ध्रुवम् ॥३०८॥
अद्याऽसौ कृतशृङ्गारा राजलोकसमन्विता ।
करिणीस्कन्धमारुह्य नृपधाम समाययौ ॥ ३०९ ॥
राज्ञा च कृतसन्माना दौर्भाग्यं शेषयोषिताम् ।
दत्त्वा सौभाग्यमादाय महादेवी बभूव सा ॥ ३१० ॥
राज्ये यत् कृत्तिकासौख्यं भुञ्जाना सा मनोमतम् ।
तुष्टाऽभीष्टपदं दत्ते रुष्टा मूलं निकृन्तति ॥ ३११ ॥
नारी स्वयंप्रभा पत्युः प्रसादात् स्यान्नरो न तु ।
रात्रिरिन्दुं विनाऽपि स्याद् दिवसो न रविं विना ॥३१२॥
अथाऽन्यदिवसे देवी परिव्राजिकया तया ।
पृच्छ्यते स्म यथा वत्से ! संपूर्णास्ते मनोरथाः ? ॥३१३॥
स्वामिनि ! त्वत्प्रसादेन तन्न यन्न भवेदिह ।
तथाऽप्यद्याऽपि हृदयं मम दोलायतेतराम् ॥ ३१४ ॥
यदि जीवति जीवन्त्यां मृतायां म्रियते मयि ।
ज्ञायते निबिडस्नेहस्तदा राजा ममोपरि ॥ ३१५ ॥
यद्येवं तर्हि गृह्णीष्व नस्यं मूलिकयाऽनया ।
येन त्वं गतजीवेव जीवन्त्यपि हि लक्ष्यसे ॥ ३१६ ॥
द्वितीयमूलिकायास्तु नस्यं दत्त्वा वपुस्तव ।
पुनर्नवं करिष्यामि मा भैषीर्मेऽन्तिके स्थिता ॥ ३१७ ॥
मातरेवं करिष्यामीत्युक्तवत्या नृपस्त्रिया ।

समर्प्य मूलिकां दिव्यां सा जगाम यथाऽऽस्पदम् ॥३१८॥
अथाऽसौ मूलिकानस्यमादाय शयिताऽन्तिके ।
निश्चेष्टा ददृशे राज्ञी गतजीवेव भूभुजा ॥ ३१९ ॥
ततो देवी मृतेत्युच्चैः सहसा नृपमन्दिरे ।
अत्याक्रन्दरवो राजलोकवक्त्रादुदच्छलत् ॥ ३२० ॥
नृपादेशेन मिलिता बहवो वैद्य-मान्त्रिकाः ।
त्यक्ता मृतेति सा तैरप्यभव्य इव साधुभिः ॥३२१ ॥
युक्तोऽस्या वह्निसंस्कारो देवेति सचिवोदिते ।
राज्ञाऽभाणि ममाऽप्येष क्रियतामनया सह ॥ ३२२ ॥
लगित्वा पादयोर्लोकः शोकश्याममुखोऽब्रवीत् ।
विश्वाधारस्य ते देव ! न युक्तं कर्तुमीदृशम् ॥ ३२३ ॥
सदुःख पार्थिवोऽप्याह न स्नेहस्य द्वयी गतिः ।
तन्मा विलम्ब्यतां यन्मे क्षणोऽप्यब्दसमोऽधुना ॥ ३२४ ॥
द्रुतं चन्दनकाष्ठानि कृष्यन्तां रच्यतां चिता ।
भणित्वेति समं राज्या निर्ययौ स स्वमन्दिरात् ॥ ३२५ ॥
दीप्ततूर्यरवेणोच्चै रुदन् नारीनरव्रजैः ।
पूरयन्नम्बराऽऽभोगं प्राप्तः प्रेतवनं नृपः ॥ ३२६ ॥
आरोहति चितां यावदसौ प्रियतमायुतः ।
व्रजन्ती दूरतस्तावत् तत्राऽऽयाता तपस्विनी ॥ ३२७ ॥
अभाणि च तया देव ! मा साहसमिदं कुरु ।
राज्ञाऽपि गदितं पूज्ये ! जीवितं मे सहाऽनया ॥३२८॥
यद्येवं तद् विलम्बस्व क्षणं भूर्मा स्म कातरः ।
जीवयामि यथा लोकसमक्षं खलु ते प्रियाम् ॥ ३२९ ॥
निशम्य तद्वचः कामं नृपस्योच्छ्वसितं मनः ।
जीवितादधिकं कान्तालाभसम्भावनं दधत् ॥ ३३० ॥
प्रसीद भगवत्यद्याऽमोघं भूयात् तवोदितम् ।
दयिताजीवदानेन जीवितोऽहमपि त्वया ॥ ३३१ ॥

राज्ञेति कथिते संजीवनीनस्यस्तया ददे ।
जीविता तत्प्रभावेन देवी सह नृपाशया ॥ ३३२ ॥
तन्निरीक्ष्य जनो हर्षजलप्लावितलोचनः ।
नरीनर्ति भुजामूर्ध्वीकृत्य तूर्यमहारवैः ॥ ३३३ ॥
सर्वाङ्गाभरणैः पादौ पूजयित्वा नृपोऽवदत् ।
तां परिव्राजिकामार्ये ! ददाम्यद्य यदीहसे ॥ ३३४ ॥
तयाऽभाणि महाभाग ! कार्यं केनाऽपि नास्ति मे ।
संतुष्टा त्वत्पुरे भिक्षाग्रहणेनैव केवलम् ॥ ३३५ ॥
ततः करिवरस्कन्धमारुह्य सह कान्तया ।
गतः स्वभवनं राजा हर्षोत्सवमकारयत् ॥ ३३६ ॥
काञ्चनस्तम्भसोपानां स्फटिकोपलनिर्मिताम् ।
आर्यायै मठिकां[1] राजा कारयामास तोषतः ॥ ३३७ ॥
सा परिव्राजिका देव ! मृत्वार्तध्यानदोषतः ।
शुकी जाता पुनः साऽहं समायाता तवाऽन्तिके ॥३३८॥
तव त्वदीयराज्याश्च दर्शनेन ममाऽधुना ।
जातिस्मृतिरभूत् तेन चरितं ते मयोदितम् ॥ ३३९ ॥
निशम्य वचनं तस्या रुदती राज्यवोचत ।
पूज्ये ! तत् तादृशी मृत्वा कथं जाताऽसि पक्षिणी ? ॥३४०॥
मा कृशोदरि ! खिद्यस्व दुःखार्ता मम जन्मनः ।
यतः कर्मवशाज्जन्तोस्तन्नास्ति यन्न संभवेत् ॥ ३४१ ॥
त्वं नारीविषये राजन् ! तेनोदाहरणं कृतः ।
तदाकर्ण्य हृदि प्रीतो व्याजहार शुकीं नृपः ॥ ३४२ ॥
सत्य एव त्वया भद्रे ! दृष्टान्तोऽहमिहोदितः ।
अतस्तुष्टोऽस्मि याचस्व यदिष्टं तद् ददामि ते ॥ ३४३ ॥
शुकी प्राह नराधीश ! ममाऽभीष्टो निजप्रियः ।
तदस्मै जीवितं देहि कार्यं नाऽन्येन केनचित् ॥ ३४४ ॥

---

१ लघुमठम् ।

हसित्वाऽऽह महादेवी देव ! कीर्यै प्रदीयताम् ।
भर्ता भोजनदानं च क्रियतां नित्यमेतयोः ॥ ३४५ ॥
नृपेण भणितं भद्रे ! यथास्थानं शुकि ! व्रज ।
त्वद्वचोजातसंतोषान्मुक्त एष पतिस्तव ॥ ३४६ ॥
आदिष्टः शालिपालश्च तदहो ! क्षेत्रभूतले ।
पुञ्जीकृत्याऽनयोर्नित्यं दातव्याः शालितन्दुलाः ॥ ३४७ ॥
प्रसादोऽयं कृतो ज्यायानस्माकमुपरि प्रभो ! ।
कीरयुग्मं गदित्वेति झगित्युड्डीनमम्बरे ॥ ३४८ ॥
चूतशाखिनि पूर्वोक्ते गत्वा संपूर्णदोहदा ।
निजनीडे शुकी रम्यं प्रसूते स्माऽण्डकद्वयम् ॥ ३४९ ॥
तस्मिंश्च समये तस्याः सपत्नी तत्र शाखिनि ।
पृथग्नीडास्थिता याऽस्ति सा प्रसूतैकमण्डकम् ॥ ३५० ॥
चूणिहेतोर्गता क्वाऽपि द्रुमं मुक्त्वाऽथ साऽन्यदा ।
मत्सरेण तदीयाऽण्डं निन्ये प्रथमया ततः ॥ ३५१ ॥
अपराऽप्यागता यावन्निजाण्डं तत्र नेक्षते ।
शफरीव ततो दुःखतप्ता स्म लुठति क्षितौ ॥ ३५२ ॥
विलपन्तीं च तां दृष्ट्वा पश्चात्तापेन नोदिता ।
तदण्डं प्रथमा नीत्वा तत्रैव मुमुचे पुनः ॥ ३५३ ॥
लुठित्वा भूतले यावत् किरी साऽऽरोहति द्रुमम् ।
स्वनीडेऽण्डं निजं तावत् सुधासिक्तेव पश्यति ॥ ३५४ ॥
आद्यकीर्या तन्निमित्तं कर्मबद्धं सुदारुणम् ।
पश्चात्तापहतं तस्थौ योग्यमेकभवस्य तु ॥ ३५५ ॥
शुकी शुकश्च संजातं तत्राऽण्डयुगले द्वयम् ।
पितृभ्यां संयुतं क्रीडां करोति वनगह्वरे ॥ ३५६ ॥
शालिक्षेत्रे नृपादेशरचितात् तण्डुलोत्करात् ।
चञ्च्वाऽऽदाय कणान् नित्यं तत् कीरमिथुनं व्रजेत् ॥ ३५७ ॥
आगतो ज्ञानवांस्तत्र चारणश्रमणोऽन्यदा ।

जिनेन्द्रभवने देवं वन्दित्वैवं तमस्तवीत् ॥ ३५८ ॥
देवः स वः शिवमसौ तनुतां युगाद्यो
यस्यांसपीठलुठितासितिकुन्तलाली[1] ।
दोःस्तम्भयोरुपरि मन्मथ-मोहदर्प-
जैत्रप्रशस्तिफलकाश्रियमाश्रयेताम् ॥ ३५९ ॥
आदिप्रभोरनिशमंसतटीनिषण्ण-
केशच्छलेन परितो वदनारविन्दे ।
किं नालिकादलमिदं तदुपेयुषी वा
सद्गन्धलुब्धमधुपावलिराविभाति ॥ ३६० ॥
निष्कासिताऽविरतियोषिति बाहुदम्भ-
स्तम्भोपरिस्थकिशलोपमकेशकान्तिः ।
श्रीनाभिजस्य हृदयावसथे विशन्त्या
दीक्षाश्रियः स्फुरति वन्दनमालिकेव ॥ ३६१ ॥
एषा यदादिमजिनस्य शिरोरुहश्री-
रुद्भूतधूमलहरीव विभोर्विभाति ।
सद्ब्रह्मरूपमनुमेयमघेन्धनेद्ध-
मन्तःस्फुरत् तदिह नूनमनूनमर्चिः ॥ ३६२ ॥
शङ्के पुरः स्फुरति कोमलकुन्तलश्री-
दम्भादमुष्य वृषभस्य विभोरभीक्ष्णम् ।
स्कन्धाधिरूढदृढसंयमभूरिभार-
व्यक्तीभवत्किणगणोल्वणकालिकेयम्[2] ॥ ३६३ ॥
सैष प्रभुः कनकभङ्गनिभाऽङ्गयष्टि-
र्लोकम्पृणो न कथमस्तु यदंसदेशे ।
मेरोरुपाग्रविलसद्वनराजगर्व-
सर्वंकषा स्फुरति पेशलकेशलक्ष्मीः ॥ ३६४ ॥
मन्ये विशोध्य विधिरैन्दवमेव बिम्बं

---

१ द्विवचनम् । २ किणो घर्षणचिह्नम् ।

श्रीनाभिपार्थिवभुवो मुखमुच्चकार ।
तस्य ध्रुवं तदियमंसनिवेशकेश-
च्छायाच्छलादपतदङ्ककलङ्कलेखा ॥ ३६५ ॥
अंसस्थली चिकुरकञ्चुकिता युगादि-
देवस्य विग्रहगृहे[1] विहिताश्रयायाः ।
क्रीडाकृते मरकतोपलबद्धभूमि-
शोभां दधाति गुरुसंयमराजलक्ष्म्याः ॥ ३६६ ॥
इत्युदारस्तवं कृत्वा वन्दित्वा च जिनं मुनिः ।
निविष्टः शुद्धभूभागे वन्दारु[2]जनवेष्टितः ॥ ३६७ ॥
पूजयित्वा नरेन्द्रोऽथ तत्र पुष्पाक्षतैर्जिनम् ।
फलमक्षतपूजाया मुनिं पप्रच्छ सोऽब्रवीत् ॥ ३६८ ॥
ध्रुवं रत्नत्रयोपास्तिर्मनो-वाक्-कायशोधनम् ।
त्रिशल्योन्मूलने हेतुर्यज्जन्मत्रयपावनम् ॥ ३६९ ॥
अखण्डस्फुटितैश्चोक्षाऽक्षतैः पुञ्जत्रयं नराः ।
पुरो जिनस्य कुर्वाणाः प्राप्नुवन्त्यक्षतं सुखम् ॥ ३७० ॥
( युग्मम् )
इत्थं गुरुवचः श्रुत्वाऽक्षतपूजासमुद्यतम् ।
दृष्ट्वा लोकं शुकी कान्तं निजमेवमवोचत ॥ ३७१ ॥
अक्षतानां जिनं पुञ्जत्रयेणावामपि प्रिय ! ।
पूजयावोऽचिरेणैव यथा सिद्धिसुखं भवेत् ॥ ३७२ ॥
एवमित्युदिते चञ्चुपुटेनाऽऽदाय तन्दुलान् ।
जिनस्य पुरतस्ताभ्यां पुञ्जत्रयमरच्यत ॥ ३७३ ॥
अपत्ययुगलं चाभ्यां शिक्षितं यज्जिनेशितुः ।
मुञ्चताऽग्रेऽक्षतान् सौख्यं येनाऽऽसादयताऽक्षयम् ॥३७४॥
इति प्रतिदिनं कृत्वा जिनस्याऽक्षतपूजनम् ।
गतान्यायुःक्षये तानि चत्वार्यपि सुरालयम् ॥ ३७५ ॥

१ शरीरगृहे । २ वन्दनशीला. ।

भुक्त्वा स्वर्गसुखं च्युत्वा कीरजीवस्ततोऽजनि ।
राजा हेमप्रभो नाम पुरे हेमपुराऽभिधे ॥ ३७६ ॥
शुकीजीवः पुनश्च्युत्वा देवलोकादजायत ।
तस्यैव भूभुजो भार्या नाम्ना च जयसुन्दरी ॥ ३७७ ॥
द्वितीयाऽपि शुकी भ्रान्त्वा संसारमुदपद्यत ।
राज्ञो हेमप्रभस्यैव रतिसंज्ञाऽपरा प्रिया ॥ ३७८ ॥
राज्यो बभूवुरस्याऽन्या अपि पञ्चशतीमिताः ।
प्रसादसदनं किन्तु प्रथमे द्वे अपि प्रिये ॥ ३७९ ॥
अथाऽन्यदा महादाहज्वरार्तोऽभूत् तथा नृपः ।
चन्दनैः सिच्यमानोऽपि यथा भुवि लुठत्यलम् ॥३८०॥
अङ्गभङ्गिर्भ्रमिः स्फोटिः शोफः श्वासः शिरोव्यथा ।
दाहश्च ज्वरवक्त्राणि सप्ताऽपि स्फुटतामगुः ॥ ३८१ ॥
आययुर्विविधा वैद्या आयुर्वेदविशारदाः ।
इत्यूहाञ्चक्रिरेऽन्योऽन्यं नृपचेष्टां विलोक्य ते ॥३८२ ॥
अत्यम्बुपानतो घस्रशयनान्निशि जागरात् ।
विण्-मूत्रादिनिरोधाच्च विषमासनतस्तथा ॥ ३८३ ॥
शोक-क्रोधादिचिन्ताभ्यो वनिताऽत्यन्तसङ्गतः ।
अजीर्णाच्च भवेद् रोगो धातुतुल्याशनेन च ॥ ३८४ ॥
तत्र ज्वरा दश द्वौ च मलाजीर्णत्रिदोषजाः ।
खेदजो रक्तकालोत्थो ह्यष्ट्येको द्वित्र्यहान्तराः ॥ ३८५ ॥
तथा—
ज्वरस्य प्रथमोत्थाने भेषजैर्दिनत्रयम् ।
न देयं कथितं तोयं भेषजं च न रोगिणाम् ॥ ३८६ ॥
प्रवातं नातिनिर्वातं न पथ्यं नैव लङ्घनम् ।
क्रिया साधारणा कार्या मानुषे ज्वरसंस्थिते ॥ ३८७ ॥
भूत-ताप-श्रमा-ऽनङ्ग-शोक-शङ्कादिसम्भवे ।
ज्वरे पित्ताधिके चाऽपि न लङ्घनविधिर्मतः ॥ ३८८ ॥

अन्यः प्राह—
वात-पित्त-कफोद्भूतो रोगः शाम्यति भेषजैः ।
मानसो ज्ञान-विज्ञान-स्मृति-धैर्य-समाधिभिः ॥ ३८९ ॥
पित्तं राजा शरत्काले वैशाख-ज्येष्ठयोरपि ।
चैत्र-फाल्गुनयोः श्लेष्मा शेषेषु पवनः पुनः ॥ ३९० ॥
कट्वा-ऽऽम्ल-लवणैर्वायुः, कषाय-स्वादु-तिक्तकैः ।
पित्तमेति शमं, तिक्त-कषाय-कटुभिः कफः ॥ ३९१ ॥
अपरस्त्वाह—
अजीर्णप्रभवा रोगास्तच्चाऽजीर्णं चतुर्विधम् ।
आमं विदग्धं विष्टब्धं रसशेषं तथाऽपरम् ॥ ३९२ ॥
आमे सद्दशगन्धः स्याद् विदग्धे धूमगन्धता ।
गात्रभङ्गश्च विष्टब्धे रसशेषे च जाड्यता ॥ ३९३ ॥
आमे च वमनं प्रोक्तं विदग्धे तूष्णमापिबेत् ।
विष्टब्धे स्वेदनं कुर्याद् रसशेषे पुनः स्वपेत् ॥ ३९४ ॥
इति संलप्य तैर्यः कोऽप्युपचारः कृतोऽत्र सः ।
अलक्ष्यभेदान्मोघोऽभूद् धानुष्कस्येव सायकः ॥ ३९५ ॥
एवमन्नविहीनोऽस्थान्नरेन्द्रः सप्त वासरान् ।
मन्त्र-यन्त्र-कलादक्षाः सर्वे जाताः पराङ्मुखाः ॥ ३९६ ॥
शान्तिरुद्धोष्यते दानं विविधं च प्रदीयते ।
देवस्थाने पुनः पूजा-ऽभिग्रहादि विधीयते ॥ ३९७ ॥
अथ केलीकिलः कोऽपि प्रकटीभूय राक्षसः ।
उवाच निशि भूपालं किं तेऽलीककृतैरिमैः ? ॥ ३९८ ॥
अद्याऽवतारणीकृत्य यद्यात्मानं तव प्रिया ।
नृप ! क्षिपत्यग्निकुण्डे तज् जीवस्यन्यथा नहि ॥ ३९९ ॥
भणित्वेति गतं रक्षो दध्यौ राजा च विस्मितः ।
इन्द्रजालमिदं किन्तु स्वप्नो वा रक्ष एव वा ? ॥४००॥
विकल्पसहितस्यैवं व्यतीता भूपतेर्निशा ।

उदयाचलचूलायामाययौ सविता पुनः ॥ ४०१ ॥
राज्ञा रजनिवृत्तान्तः कथितो मन्त्रिणः पुरः ।
तेनोक्तं जीवितस्याऽर्थे देवेत्यपि विधीयते ॥ ४०२ ॥
परप्राणैर्निजप्राणरक्षां कुर्वन्ति नोत्तमाः ।
तन्मे भवतु यद् भाव्यं राज्ञा मन्त्रीति जल्पितः ॥४०३॥
आकार्य नृपतेर्भार्याः समस्ता अपि मन्त्रिणा ।
तत्पुरः कथितः सर्वो वृत्तान्तो राक्षसोदितः ॥ ४०४ ॥
तत् श्रुत्वा प्राणलोभेन सर्वोऽप्यन्तःपुरीजनः ।
तस्थावधोमुखीभूय दधौ प्रतिवचो न च ॥ ४०५ ॥
विकाशवदनोत्थाय रतिराज्ञी वदत्यदः ।
मज्जीवितेन चेज्जीवेत् प्रियो लोभेन किं मया ? ॥४०६॥
श्रुत्वेति सचिवः सौधं गवाक्षस्याऽवनावधः ।
विधाप्य कुण्डमगरुदारुभिः पर्यपूरयत् ॥ ४०७ ॥
अथ सा कृतशृङ्गारा नत्वा वक्ति निजप्रियम् ।
जीव मे जीवितेन त्वं नाथ ! कुण्डे पताम्यसौ ॥४०८॥
सदुःखं भाषते राजा मत्कृते जीवितं प्रिये ! ।
मा त्याक्षीर्यन्मया कर्म वेदनीयं पुरा कृतम् ॥ ४०९ ॥
विलग्य पादयोः साह मा स्वामिन्नीदृशं वद ।
यद् याति तव कार्ये तत् सफलं जीवितं मम ॥ ४१० ॥
राज्ञोऽवतारणीकृत्यात्मानं राज्ञी बलादपि ।
स्थित्वा वातायने तस्मात् कुण्डे दीप्तानलेऽक्षिपत् ॥४११॥
अथाऽसौ राक्षसस्तस्यास्तुष्टः सत्त्वेन तत्क्षणात् ।
अप्राप्तामेव तां कुण्डं दोर्भ्यां दूरमुदाक्षिपत् ॥ ४१२ ॥
अब्रवीच्च रतिं देवि ! तुष्टः सत्त्वेन तेऽधुना ।
मनोऽभीष्टं वरं ब्रूहि ददाम्येष न संशयः ॥ ४१३ ॥
किमनेन पितृभ्यां मे दत्त एष वरः पुरा ।
भद्रे ! तथापि याचस्व न मोघं देवदर्शनम् ॥ ४१४ ॥

यद्येवं तर्हि मे भर्ता प्रसादात् तव जीवतु ।
चिरकालमयं व्याधिवैधुर्यरहितः सदा ॥ ४१५ ॥
एवमस्त्विति तामुक्त्वा दिव्याऽलङ्कारभूषिताम् ।
कृत्वा स्वर्णाम्बुजे न्यस्य ययौ रक्षो यथाऽऽस्पदम् ॥४१६॥
जीवेत्याह जनस्तस्याः शीर्षे पुष्पा-ऽक्षतान् क्षिपन् ।
निजजीवितदानेन जीवितो दयितो यया ॥ ४१७ ॥
तुष्टोऽहं तव सत्त्वेन प्रियेऽभीष्टं वरं वृणु ।
राज्ञेति भणिता साऽऽह वरोऽभीष्टस्त्वमेव मे ॥ ४१८ ॥
अहं जीवितपुण्येन त्वया देवि ! वशीकृतः ।
तत् किञ्चिदन्यद् याचस्व सा हसित्वा ततोऽवदत् ॥४१९॥
यद्येवं तर्हि ते चित्तनिधौ तिष्ठत्वयं वरः ।
प्रस्तावे प्रार्थयिष्येऽहं पुनरेनं तवाऽन्तिकात् ॥ ४२० ॥
अन्यदा प्रार्थिता रत्या पुत्राऽर्थे कुलदेवता ।
सुतेन जयसुन्दर्या बलिं दास्येऽस्तु मे सुतः ॥ ४२१ ॥
भवितव्यनियोगेन द्वयोरपि तयोः सुतौ ।
बहुलक्षणसंपूर्णौ विश्वहृद्यावजायताम् ॥ ४२२ ॥
रतिश्चिन्तयते तुष्टा दत्तो देव्यैष मे सुतः ।
पुत्रेण जयसुन्दर्या दास्ये त्वस्यै कथं बलिम् ? ॥ ४२३ ॥
चिन्तयन्त्या तयोपायो लब्धः पत्युर्वरेण यत् ।
राज्यं कृत्वा वशे सर्वं करिष्यामि समीहितम् ॥ ४२४ ॥
इति निश्चित्य भूपालः प्रस्तावे भणितस्तया ।
नाथ ! प्राक् प्रतिपन्नो यस्तं वरं देहि मेऽधुना ॥ ४२५ ॥
यदिष्टं देवि ! याचस्व ददे जीवितमप्यहम् ।
यद्येवं दीयतां तर्हि राज्यं मे पञ्च वासरान् ॥ ४२६ ॥
एवमस्तु मया राज्यं दत्तं तुभ्यमितीरिते ।
महाप्रसाद इत्युक्त्वा तत् तया प्रत्यपद्यत ॥ ४२७ ॥
पालयन्तीति सा राज्यं अथो यामेऽन्तिमे निशि ।

रुद्त्या जयसुन्दर्याः पुत्रमानाययद्द् बलात् ॥ ४२८ ॥
स्नपयित्वा चर्चयित्वा श्रीखण्ड-कुसुमा-ऽक्षतैः ।
पटल्यां न्यस्य तं बालं दासीमूर्धन्यतिष्ठिपत् ॥ ४२९ ॥
उच्छलत्तूर्यनादेन नृत्यन्नारीजनेन च ।
परिवारयुताऽगच्छदुद्याने देवतागृहम् ॥ ४३० ॥
अथ काञ्चनपूःस्वामी सूरो विद्याधराऽधिपः ।
व्रजन्नाकाशमार्गेण तं दारकमवैक्षत ॥ ४३१ ॥
वियदुद्द्योतयन्नात्मतेजसा भानुमानिव ।
गृहीतस्तेन सोऽलक्षं मुक्त्वाऽन्यं मृतबालकम् ॥ ४३२ ॥
विमानान्तःशयानाया निजाया हरिणीदृशः ।
स्थापयित्वाऽन्तिके बालं बभाषे स मृदुस्वरम् ॥४३३॥
कृशोदरि ! लघूत्तिष्ठ पश्य जातं स्वदारकम् ।
जागरित्वा च सा सद्यः सखेदमिदमब्रवीत् ॥ ४३४ ॥
किं त्वं हससि देवेन हसिताऽहं दुरात्मना ।
किं कदापि सुतं वन्ध्या प्रसूते जीवितेश्वर ! ॥४३५॥
सोऽप्याह हसिताऽऽस्यो मे श्रद्धानं वाचि नो यदि ।
ततः स्वं स्वयमीक्षस्व रत्नराशिसमं सुतम् ॥ ४३६ ॥
इति विभ्रान्तचित्तायास्तस्याः सत्यमचीकथत् ।
स्वपुत्ररहितायास्ते पुत्र एष सुलोचने ! ॥ ४३७ ॥
प्रतिपद्येति नीतोऽसौ स्वपुरं प्रतिवासरम् ।
कलाभिर्वर्धते चन्द्रः श्वेतपक्षगतो यथा ॥ ४३८ ॥
राज्ञी रतिरपि प्रीतचित्ता तं मृतबालकम् ।
देव्याः शीर्षोपरि परिभ्रमय्यास्फालयत् पुरः ॥ ४३९ ॥
ततो गत्वा वसत्येषा गृहे पूर्णमनोरथा ।
व्रजन्ति जयसुन्दर्याः सुदुःखेन पुनर्दिनाः ॥ ४४० ॥
राज्ञ्येका पूर्णिमा तोषादमावास्याऽपरा शुचा ।
ताभ्यां राजा तदा प्राप पोष-शोषविडम्बनाम् ॥ ४४१॥

मदनाङ्कुर इत्याख्यां कुमारस्याऽपि खेचरैः ।
विधाय विविधा विद्याः शिक्षितः शिक्षणे पटुः ॥ ४४२ ॥
अन्यदाऽसौ व्रजन् व्योम्नि सौधवातायनास्थिताम् ।
अपश्यज्जननीं पुत्रशोकजाश्रुजलप्लुताम् ॥ ४४३ ॥
अथैतां दर्शनोत्पन्नस्नेहपाशस्खलद्गतिः ।
उत्क्षिप्याऽऽरोपयामास विमानं मदनाङ्कुरः ॥ ४४४ ॥
साऽपि दृष्ट्वा कुमारं तं हर्षजाताश्रुवारिणा ।
सिञ्चन्ती वीक्षते भूयो भूयः स्नेहलया दृशा ॥ ४४५ ॥
ऊर्ध्वबाहुः पुरीमध्ये जनो व्याहरतेऽखिलः ।
एषैषा ह्रियते राज्ञो गृहिणीति महास्वरम् ॥ ४४६ ॥
नृपः सूरोऽपि भूस्थत्वान्नाऽत्र किञ्चित्करोऽभवत् ।
कुब्जः करोति किं दृष्ट्वा तरूच्चशिखरे फलम् ? ॥ ४४७॥
दध्यौ हेमप्रभो राजा क्षारक्षेपः क्षते कृतः ।
सुतस्य मरणे भार्याहरणं यन्ममाऽजनि ॥ ४४८ ॥
एवमस्ति महादुःखपूरितः स्वपुरे नृपः ।
गृहिणीहरणाद् दुःखं कस्य न स्याज्जगत्त्रये ? ॥४४९॥
इदं चाऽवधिनाऽज्ञासीत् तदाऽपत्यशुकी दिवि ।
हरते गृहिणीबुद्ध्या मम भ्राता स्वमातरम् ॥ ४५० ॥
गत्वाऽथ स्वपुरासन्नसरस्तीरे कुमारराट् ।
जनन्या सहितो यावदास्ते चूततरोस्तले ॥ ४५१ ॥
तावद् वानर-वानर्यो रूपं देवी विधाय सा ।
अतिष्ठच्चूतशाखायां तत्रेदं वानरोऽवदत् ॥ ४५२ ॥
प्रियेऽदः कामुकं तीर्थं तिर्यञ्चः पतिता इह ।
लभन्ते खलु मानुष्यं मर्त्या देवत्वमुत्तमम् ॥ ४५३ ॥
प्रेक्षस्व द्वाविमौ मर्त्यौ दिव्यरूपौ सुराविव ।
आवां मनसिकृत्यैतावस्मिन् तीर्थे पताव तत् ॥ ४५४ ॥
यथा त्वमीदृशी स्त्री स्यान्नरोऽहं पुनरीदृशः ।

वानर्या भणितं कान्त! नामाऽप्यस्य न गृह्यते॥ ४५५॥
य इमां जननीं स्वीयां हरते गृहिणीधिया।
अहं तस्याऽपि पापस्य रूपमिच्छामि किं प्रिय!?॥४५६॥
वानर्या वचनं श्रुत्वा विस्मितौ तावुभावपि।
कुमारोऽचिन्तयद् हन्त! जनन्येषा कथं मम?॥ ४५७॥
स्नेहेनाऽपहृता मातृबुद्धिं मे जनयत्यलम्।
राज्ञी साऽपीदृशं दध्यौ कथमेष सुतो मम?॥ ४५८॥
दृष्टमात्रेऽपि चैतस्मिन् निजाऽङ्गज इवाऽधिकम्।
उल्लसत्पुत्रवात्सल्यमिदं धावति मे मनः॥ ४५९॥
कुमारो वानरीं शङ्काऽऽकुलः पप्रच्छ सादरम्।
किं नु सत्यमिदं भद्रे! यत् त्वया भाषितं वचः?॥४६०॥
तयोचे सत्यमेवेदं संदेहोऽद्यापि ते यदि।
ततो वननिकुञ्जेऽस्मिन् पृच्छ ज्ञानधरं मुनिम्॥ ४६१॥
उक्त्वेत्यदर्शनीभूतं तद् वानरयुगं क्षणात्।
सुविस्मितः कुमारोऽपि गत्वा पप्रच्छ तं मुनिम्॥ ४६२॥
भगवंस्तत् कथं सत्यं वानर्या यदभाणि मे।
मुनिरप्याह भो भद्र! सत्यमेवेति नाऽन्यथा॥ ४६३॥
स्थितोऽस्मि सततं ध्याने कर्मणां क्षयकारणे।
तत् ते हेमपुरे व्यक्तं सर्वं वक्ष्यति केवली॥ ४६४॥
ततो नत्वा मुनिं मातृसहितः स गतो गृहम्।
पितृभ्यामतिहृष्टाभ्यां ददृशे विमना भृशम्॥ ४६५॥
तेन विद्याधरीमाता लगित्वा पादयो रहः।
पृष्टा ब्रूहि स्फुटं मातः! का मे माता पिता च कः?॥४६६॥
पृच्छत्येवं किमेषोऽद्य सवितर्केति साऽवदत्।
वत्स! नो वेत्सि किं माता तवाऽहं जनकस्त्वयम्?॥४६७॥
अस्त्येवं किन्तु पृच्छामि पितरौ जन्मदायकौ।
परमार्थं पिता तर्हि तव ज्ञास्यति पुत्रक!॥ ४६८॥

पित्राऽपि परितुष्टेन पटलीप्रमुखोऽखिलः ।
उक्तो व्यतिकरस्तस्य न पुनर्जनकादिकः ॥ ४६९ ॥
कुमारः प्राह यैषाऽद्याऽऽनिन्ये नारी मया पितः ! ।
वानर्या बहिराख्याता सा जन्मजननी मम ॥ ४७० ॥
पृष्टेन मुनिनाऽप्येवमाख्यायाऽभाणि यत् तत्र ।
सविशेषमिदं हेमपुरे ख्यास्यति केवली ॥ ४७१ ॥
भगवन्तं ततो गत्वा पृच्छामस्तात ! तत्र तम् ।
यथा त्रुटति संदेहो जीर्णतन्तुरिव क्षणात् ॥ ४७२ ॥
इत्युक्त्वा जननी-तातसहितः प्रस्थितस्ततः ।
असौ हेमपुरे पादमूले केवलिनो ययौ ॥ ४७३ ॥
नत्वा तस्य मुनेः पादौ सूरो विद्याधरेश्वरः ।
निविष्टः सपरीवारः कुमारश्चाऽवनीतले ॥ ४७४ ॥
नारीसहस्रमध्यस्था राज्ञी च जयसुन्दरी ।
सहिता निजपुत्रेण शृणोति गुरुभाषितम् ॥ ४७५ ॥
तथा हेमपुराधीशो राजा हेमप्रभोऽपि हि ।
तत्र पौरजनैः सार्धमुपविष्टो गुरोः पुरः ॥ ४७६ ॥
लब्ध्वाऽवसरमप्राक्षीद् नत्वा केवलिनं नृपः ।
मम भार्या विभो ! केनाऽपहृता जयसुन्दरी ? ॥ ४७७ ॥
केवली प्राह राजेन्द्र ! निजपुत्रेण सा हृता ।
राजाऽपि विस्मितः स्माऽऽह प्रभो ! तस्याः कुतः सुतः ? ॥
य आसीत् तनयस्तस्या बाल एव स पापिना ।
दैवेन कवलीचक्रे द्वितीयो नास्ति तत्सुतः ॥ ४७९ ॥
तवाऽलीकं वचो नैव नास्ति तस्याः पुनः सुतः ।
संशयो मामयं शत्रुरिव सन्तापयत्यलम् ॥ ४८० ॥
मुनिर्वदति सत्येऽस्मिन् वाक्ये मा संशयं कृथाः ।
नृपोऽवादीद् मुने ! तर्हि परमार्थो निवेद्यताम् ॥ ४८१ ॥
कुलदेव्यादिवृत्तान्तः सर्वोऽपि मुनिनोदितः ।

स वैताढ्यपुराद् यावत् तत्रोद्याने समागतः ॥ ४८२ ॥
राजा विस्फारिताक्षोऽथ यावदुद्यानमीक्षते ।
तावद् विध्वस्तसंदेहः कुमारस्तातमानमत् ॥ ४८३ ॥
सुतमालिङ्ग्य सन्तापनिर्वापणसुधाकरम् ।
रुदन्नतीव दुःखेन गुरुणा बोधितो नृपः ॥ ४८४ ॥
विलग्य पादयोः पत्युर्मुमोच जयसुन्दरी ।
अश्रुपूरं तथा येनाऽखिलोऽभूदाकुलो जनः ॥ ४८५ ॥
पप्रच्छ च मुनिं नाथ ! मम केनैष कर्मणा ।
दुःसहः सुतविश्लेषो जज्ञे वर्षाणि षोडश ? ॥ ४८६ ॥
मुनिराह मुहूर्तानि षोडश स्थापिता त्वया ।
यत् सपत्नी शुकी दुःखे हृत्वाऽण्डं तत्फलं ह्यदः ॥४८७॥
सुखं दुःखं च यो यस्य तिलाल्पमपि यच्छति ।
सुक्षेत्रे बीजवद् भूरि लभतेऽमुत्र तत्फलम् ॥ ४८८ ॥
इत्थं गुरुवचः श्रुत्वा पश्चात्तापाऽऽकुलात्मना ।
प्राचीनदुष्कृतं राज्ञी तयाऽऽशु क्षमिता रतिः ॥ ४८९ ॥
रत्याऽप्युत्थाय भणिता प्रणम्य जयसुन्दरी ।
क्षमस्व जनितं यत् ते सुतदुःखं मया सति ! ॥ ४९० ॥
गुरुस्ते इत्युपाद्दिहद् युवाभ्यां मत्सरेण यत् ।
बद्धं गुरुतरं कर्म ध्वस्तं क्षमणयाऽद्य तत् ॥ ४९१ ॥
यथा हि मलिनैः स्पृष्टो जलस्पर्शेन शुद्ध्यति ।
दुष्कृतैर्मलिनोऽप्यात्मा क्षमणात् स्यात् तथा शुचिः॥४९२॥
तावद् धन्यतमास्तेऽत्र दुष्कृतं ये न कुर्वते ।
[1]धन्यास्तेभ्योऽपि ते ये स्वं क्षिपन्ति क्षामणादघम् ॥४९३॥
नृपः पप्रच्छ किं नाथ ! प्राक् कृतं सुकृतं यतः ।
राज्यं मे जयसुन्दर्याः कुमारस्याऽप्यजायत ॥ ४९४ ॥
यथा शुकभवे क्षिप्त्वा जिनस्य पुरतोऽक्षतान् ।

१ श्लाघ्यते सोऽपि कृत्वाऽपि पाप योऽस्मान्निवर्तते, इत्यपि ।

देवत्वमपि राज्यं च तत् सर्वं मुनिराख्यत ॥ ४९५ ॥
यच्चक्रे जिनबिम्बस्याक्षतपुञ्जत्रयं पुरः ।
तत् तृतीयभवे राजन्नक्षयं स्थानमेष्यति ॥ ४९६ ॥
अथाऽसौ रतिपुत्रस्य राज्यं दत्त्वाऽग्रहीद् व्रतम् ।
सहितो जयसुन्दर्या कुमारेण च भूपतिः ॥ ४९७ ॥
पालयित्वा परिव्रज्यामन्तं कृत्वा च सोऽभवत् ।
समं पुत्र-कलत्राभ्यां शुक्रकल्पे सुराऽधिपः ॥४९८॥
ततश्च्युत्वा मनुष्यत्वं प्राप्य सर्वजनोत्तमम् ।
जगाम कर्म निर्मूल्य स राजा मोक्षमक्षयम् ॥४९९॥
एवं राज्ञी कुमारश्च स्थिता देवी च या दिवि ।
चत्वार्यपि ययुर्मोक्षमक्षताचाप्रभावतः ॥५००॥
पुष्पा-ऽक्षतगता द्रव्यपूजेत्थं कथिताऽधुना ।
भावरूपस्तथाऽर्चायां वनराजकथोच्यते ॥ ५०१ ॥
अस्त्यत्र भरतक्षेत्रे नरेन्द्रैः सुप्रतिष्ठितम् ।
क्षितिप्रतिष्ठितं नाम पुरं सुरपुरोपमम् ॥ ५०२ ॥
नर-नारीजना यत्र सुरसारूप्यधारिणः ।
लक्ष्यन्तेऽक्षिनिमेषेण पादस्पर्शेन च क्षितौ ॥ ५०३ ॥
तत्र चण्डभुजादण्डक्षपिताऽरातिगोत्रपः ।
रक्षिता लोकसस्यानां सुस्थितो नाम पार्थिवः ॥ ५०४ ॥
अथोच्छिन्नकुलस्तत्र धन-स्वजनवर्जितः ।
आर्तध्यानपरो नित्यमेकोऽस्ति कुलपुत्रकः ॥ ५०५ ॥
पात्रपाणिः स भक्ष्यार्थं प्रतिगेहं परिभ्रमन् ।
समाख्यातीव लोकानामदातुः फलमीदृशम् ॥ ५०६ ॥
प्रायेण तद् गृहं नास्ति यत्र लौल्याद् गतो नहि ।
परं दौस्थ्यतमश्छन्नमिव तं कोऽपि नेक्षते ॥ ५०७ ॥
वित्तादुत्तानतामेति निःस्वान्नीचमुखो भवेत् ।
अरघट्टघटीत्यर्थे स्पष्टमेव निदर्शनम् ॥ ५०८ ॥

मातङ्गादपि दारिद्र्यसंभवं भुवि निश्चितम् ।
मालिन्यमधिकं येन स्पृशति स्वजनोऽपि न ॥ ५०९ ॥
न रात्रिर्न दिनं नोच्चं न नीचं स्वो न नाऽपरः ।
दारिद्र्यतमसा तस्य सर्वमेव समीकृतम् ॥ ५१० ॥
अतो दत्ते स्वयं धीमानन्यं च न निवारयेत् ।
महादौस्थ्यमयं ज्ञात्वा दानद्वेषतरोः फलम् ॥ ५११ ॥
निषिध्यमानो लोकेन चिन्तयत्येष हन्त ! भोः ! ।
काकोऽपि लभते पिण्डीं नाऽहं सिक्थमपि क्वचित् ॥५१२॥
जीवन्नेवं महाकष्टादन्यदा स पुराद् बहिः ।
भवितव्यानियोगेन भ्रमन्नुपवनं ययौ ॥ ५१३ ॥
तत्र शान्तिमयं कान्तं विश्वस्याऽपि हितैषिणम् ।
असौ धर्ममिवाऽध्यक्षं मुनिमेकमलोकत ॥ ५१४ ॥
उपतस्थे च तं पश्यन्नानन्दोज्ज्वलया दृशा ।
संसारदुःखनिर्विण्णः पथि खिन्न इव द्रुमम् ॥ ५१५ ॥
नमयित्वा शिरस्तस्मै दत्तदृष्टिर्मुखे मुनेः ।
उपविष्टः पुरो भागे तद्ध्यानाऽऽहितमानसः ॥ ५१६ ॥
मुनीन्द्रोऽपि तरुः शुष्यन् सेचनीयो विशेषतः ।
इत्यार्द्रमानसस्तस्मै धर्मतत्त्वं समादिशत् ॥ ५१७ ॥
परस्याऽऽपदि जायन्ते साधवोऽतीव वत्सलाः ।
महावृक्षा विशेषेण ग्रीष्मकाले हि शाड्वलाः ५१८ ॥
अहो ! जीवाः समृद्धेऽपि भ्रमन्ति भुवनत्रये ।
धर्माऽभिज्ञानहीनास्तु लभन्ते नैव किञ्चन ॥ ५१९ ॥
धर्मकर्मक्षमं न स्याद् धनं देहश्च यद्यपि ।
औचित्येन तथाऽप्येष कार्य एव विपश्चिता ॥ ५२० ॥
बीजमुप्तं विना न स्याद् यथा सस्याऽऽगमो नृणाम् ।
चिरेणाऽपि तथा धर्मं विना नैवेष्टसंपदः ॥ ५२१ ॥
न शक्नोमीति नास्तीति जल्पतामिह देहिनाम् ।

विधाय करुणां देवः कथं दास्यति किञ्चन ? ॥ ५२२ ॥
तस्माद् बाल्येऽपि दुःखेऽपि निर्धनत्वेऽपि सद्धिया ।
देवदर्शनमात्रोऽपि धर्मः कार्यो निरन्तरम् ॥ ५२३ ॥
इति श्रुत्वा लसद्धर्षप्रकर्षेण सगद्गदम् ।
योजयित्वा करौ सास्रमुवाच कुलपुत्रकः ॥ ५२४ ॥
अनाथो बन्धुरहितस्तथा शरणवर्जितः ।
एतावन्ति दिनान्येष भ्रान्तोऽहं नाथ ! भूतले ॥ ५२५ ॥
नाथो बन्धुः शरण्यं च सर्वमेकपदेऽधुना ।
मुनीश्वर ! मयाऽवापि त्वयि दृष्टे कृपानिधौ ॥ ५२६ ॥
अद्य यावन्न केनाऽपि सुधामधुरया गिरा ।
त्वयेवाऽऽलापितः स्वामिन्नहमाक्रोशदुःखितः ॥ ५२७ ॥
मया दुःखार्णवास्यान्तरितश्चेतश्च गाहनात् ।
निराधारेण लब्धोऽद्य यानपात्रसमो भवान् ॥ ५२८ ॥
तद् विधाय प्रसादं मे को देवः किमु वा मुने ! ।
दर्शने तस्य भण्येत कथ्यतां प्रमिताक्षरैः ? ॥ ५२९ ॥
इत्थमुद्घाटयामास दुःखमेष मुनेः पुरः ।
दुःखदग्धो यथा दग्धोपलस्तापं जलाग्रतः ॥ ५३० ॥
मुनिरप्याह भो भद्र ! स्त्री-शस्त्रोपाधिवर्जितः ।
देवः पद्मासनाऽऽसीनः शान्तमूर्तिर्जिनेश्वरः ॥ ५३१ ॥
गत्वाऽस्य भवने कृत्वा भूतलन्यस्तमस्तकम् ।
प्रणामाञ्जलिं बद्ध्वा च पुरः स्थित्वेदमुच्यते ॥ ५३२ ॥
जितसंमोह ! सर्वज्ञ ! यथाऽवस्थितदेशक ! ।
त्रैलोक्यमहित ! स्वामिन् ! वीतराग ! नमोऽस्तु ते ॥५३३॥
तथेति प्रतिपद्याऽसौ गत्वा तत्रैव संस्थिते ।
अर्हच्चैत्ये जिनं दृष्ट्वा नमस्कारं पठत्यमुम् ॥ ५३४ ॥
तत्राऽन्यत्राऽपि सर्वज्ञभवने तस्य नैत्यकम् ।
कुर्वाणस्येति तद्ध्यानचित्तस्यार्त्तिः क्षयं गता ॥ ५३५ ॥

संतोषश्च यथालब्धे लब्धिश्च प्रायशो जनात् ।
जज्ञे किन्त्वस्य निःसत्त्वात् क्षणमेवं मनस्यभूत् ॥ ५३६ ॥
किं नमस्कारमात्रेण भविताऽनेन मे फलम् ।
अथवा धिगिदं ध्यातं सर्वसिद्धिरतो ध्रुवम् ॥ ५३७ ॥
चलदित्यन्तरा चित्तं तस्य स्थिरयतो भृशम् ।
आयुर्निर्वाह्य कालेन पर्यन्तसमयोऽभवत् ॥ ५३८ ॥
या पूर्वं रङ्कमात्रस्य दृष्ट्वा सुस्थितभूपतिम् ।
इच्छा बभूव राज्यस्य सा तदा हृदयेऽवसत् ॥ ५३९ ॥
एवं च चिन्तयामास किमुत्तमकुलैर्नरैः ।
कुले नीचेऽपि जातस्य भाग्यमेकं प्रशस्यते ॥ ५४० ॥
इति ध्यानपरः स्मृत्वा भणित्वा च मुहुर्मुहुः ।
वीतरागस्तुतिश्लोकं कालं कृत्वा समाहितः ॥ ५४१ ॥
तत्रैव नगरे सोमनाम्नो राजपुरोधसः ।
गृहकर्मकरीकुक्षौ पुत्रत्वेनोदपद्यत ॥ ५४२ ॥

( युग्मम् )

तस्य जन्म द्रुतं गत्वा पुरुषेण निवेदितम् ।
सभाऽऽसीननृपाऽऽसन्नोपविष्टस्य पुरोधसः ॥ ५४३ ॥
लग्नं तत्र क्षणे स्वामियुतमुच्चाऽखिलग्रहम् ।
शुभयोगबलोपेतं मुहूर्तमपि सुन्दरम् ॥ ५४४ ॥
विचार्य हृदये जातचमत्कारः पुरोहितः ।
विस्मितास्यः शिरो धुन्वन् स नखाच्छोटनं ददौ ॥५४५॥
तद् दृष्ट्वा तं नृपोऽपृच्छत् किमेतदिति सादरम् ? ।
पुरोधाः स्माऽऽह निर्गूढं तत्त्वं देव ! निशम्यताम् ॥५४६॥
मद्गृहे चेटिकाया यस्तनयोऽजनि सम्प्रति ।
सुमुहूर्तप्रमाणेन तव पट्टे निवेक्ष्यते ॥ ५४७ ॥
तत् श्रुत्वा सहसा व्योम-तमाल-यमुनाजलैः ।
समानमाननं जज्ञे राज्ञः साशङ्कचेतसः ॥ ५४८ ॥

विसृज्याऽथ सभालोकं द्रुतमुत्थाय चाऽऽसनात्
प्रविश्य चिन्तया सौधं हृदि चिन्तितवानिदम् ॥ ५४९ ॥
आः ! किमेतदसंभाव्यं यदेष वृषलीसुतः ।
मयि तिष्ठति सत्पुत्रे मम राज्यं ग्रहीष्यति ?॥ ५५० ॥
अथवा किमसंभाव्यं दैवस्याऽघटकारिणः ।
भवतु च्छिद्यते व्याधिर्यावदस्ति सुकोमलः ॥ ५५१ ॥
इति निश्चित्य चण्डाऽऽख्यं भृत्यमाकार्य सत्वरम् ।
आदिदेश नृपो यत् त्वमहो ! मे कार्यकर्मठः ॥ ५५२ ॥
तत्पुरोधोगृहासन्ने चेव्या जातोऽस्ति यः सुतः ।
गुप्तवृत्त्या गृहीत्वाऽसौ बहिर्नीत्वा निगृह्यताम् ॥ ५५३॥
स आदेशः प्रमाणं मे इत्युदित्वा गतस्ततः ।
चण्डश्चण्डः प्रकृत्यैव विशेषात् तन्नियोगतः ॥ ५५४ ॥
कृतान्तेनेव तेनाऽथ भ्रमताऽस्या गृहान्तिकम् ।
प्रस्तावं वीक्षमाणेन सन्ध्यायाः समयेऽन्यदा ॥ ५५५ ॥
निवृत्ते सूतके दास्यां गतायामन्यतो गृहे ।
एकाकी बालको दृष्टो गृहीतश्च सपोतकः ॥ ५५६ ॥
ततः शीघ्रं बहिर्गत्वा नगरान्नाऽतिदूरतः ।
जीर्णशुष्कमहाऽऽराममध्ये कूपस्य सन्निधौ ॥ ५५७ ॥
आम्रवृक्षादधः स्थित्वा यावदुत्सार्य चीवरम् ।
बालमालोकते तावत् तन्मुखेन्दुप्रभाभरैः ॥ ५५८ ॥
तमस्तोमं तिरस्कृत्य सहसोद्द्योतितं वनम् ।
चण्डोऽपि मुदितश्चित्ते विस्मयं च परं गतः ५५९ ॥
अचिन्तयच्च धिगिदं पारवश्यं नृणामिह ।
यदेवंविधबालानां क्रियते कर्म निर्घृणम् ॥ ५६० ॥
एष भाग्याऽधिकः कोऽपि राजाऽऽदेशश्च दारुणः ।
तथापि न हनिष्यामि बालमेनं सुरोपमम् ॥ ५६१ ॥
सौम्यस्य दर्शने नूनमार्द्रः स्यात् कठिनोऽपि हि ।

चन्द्राऽऽलोकेन किं न स्यात् पाषाणस्य जलद्रवः ? ॥५६२॥
अस्य कुर्वन्तु सान्निध्यमधुना वनदेवताः ।
इत्युक्त्वा मुमुचे बालं स तस्यैव तरोस्तले ॥ ५६३ ॥
चलितश्च ततः स्थानाच्चण्डभृत्यः पुरं प्रति ।
तदीयप्रतिबन्धेन बन्धेनेव स्खलद्गतिः ॥ ५६४ ॥
पश्चाच्च वलितग्रीवं वीक्षमाणो मुहुर्मुहुः ।
कान्तिरश्मिभिरेतस्याऽऽकुञ्च्यमान इवाऽधिकम् ॥५६५॥
(युग्मम्)
गत्वा न्यवेदयद् राज्ञो यथाऽऽदेशः कृतः प्रभो ! ।
तच्छ्रुत्वा सुतरामस्मै नृपः प्रासादिकं ददौ ॥ ५६६ ॥
अथाऽऽसन्नाऽऽगते सूरे पद्मबन्धौ भयादिव ।
नष्टा श्रस्ततमःकेशी पद्मश्रीहारिणी निशा ॥ ५६७ ॥
मुखेन दिनसिंहस्य भिन्नध्वान्तेभकुम्भतः ।
मुक्ता इव गलन्ति स्म दिक्षु सर्वासु तारकाः ॥ ५६८ ॥
रविरग्राऽपि दूरेणाऽरुणेनैव हृतं तमः ।
स्वामिनः सुप्रतापेन समर्थाः पङ्गवोऽपि हि ॥ ५६९ ॥
निलीनमन्धलैर्मूकैर्घूकैर्गिरिगुहादिषु ।
स्वयमेव विलीयन्ते काले किल भयङ्कराः ॥५७०॥
दिक्षु सर्वासु पूर्वाऽऽशा सान्ध्यरागवती बभौ ।
सत्कुङ्कुमाङ्गरागेव दिवा भर्तुः समागमे ॥ ५७१॥
अमिलच्चक्रयुग्मौघो रुवन्नाख्यन्निवाङ्गिनाम् ॥
दिने प्रतीक्षते भूयो भवत्येवेष्टसङ्गमः ॥ ५७२ ॥
अथैवं समये तस्मिन्नारामे मालिको गतः ।
सहसा वनमद्राक्षीत् पत्र-पुष्प-फलाऽऽकुलम् ॥५७३॥
प्रायश्छायाऽपि दुष्प्रापा यत्र पत्राद्यभावतः ।
स आरामोऽभिरामोऽभूदन्धकूपोऽपि सोदकः ॥ ५७४ ॥
किमेतदश्रुताऽदृष्टपूर्वमित्यातिविस्मितः ।

स यावदग्रतो याति तावद् बालं तरोस्तले ॥ ४७५ ॥
अपश्यद् विकसन्नेत्रपत्रं सत्कण्ठकन्दलम् ।
विस्फुरत्कान्तिकिञ्जल्कं धारयन्तं मुखाम्बुजम् ॥५७६॥
(विशेषकम्)

तं दृष्ट्वा मालिको दध्यौ नूनमस्य प्रभावतः ।
अचिन्तितमिवाऽकस्माद् बभूव सफलं वनम् ॥ ५७७ ॥
अपुत्रस्य यतः पुत्रं सर्वलक्षणसंयुतम् ।
अदाद् मदीयभाग्येन तुष्टा मे वनदेवता ॥ ५७८ ॥
अर्पये निजगेहिन्या इति निश्चित्य तं हृदि ।
दोर्भ्यामादाय गत्वाऽसौ स्वगृहे हर्षनिर्भरः ॥ ५७९ ॥
दत्तो देवतया तोषात् पुत्रोऽयं गृह्यतां प्रिये ! ।
इत्युक्त्वा प्रीतितन्मय्याः स्वप्रियायाः समर्पयत् ॥ ५८० ॥
मालिन्या गूढगर्भायाः पुत्रो जात इति श्रुतिम् ।
बहिर्विस्तारयामास प्रच्छन्नीकृत्य तामसौ ॥ ५८१ ॥
अथो विचित्रपुष्पाणि प्रकीर्य स्वगृहाङ्गणे ।
घृतेनोदुम्बरं सिक्त्वा द्वारे सम्पूर्य तोरणम् ॥ ५८२ ॥
आगच्छदक्षतामत्रं संमिलत्स्वजनव्रजम् ।
विधीयमानसन्मानं मानिताऽशेषदैवतम् ॥ ५८३ ॥
वाद्यमानमहातूर्यं भवद्धवलमङ्गलम् ।
सत्कारोत्थमुदा नृत्यत्सजातीयाऽङ्गनाजनम् ॥ ५८४ ॥
बालप्रभावसंपन्नं व्ययित्वा द्रविणं बहु ।
अकारयदयं पुत्रजन्मवर्धापनोत्सवम् ॥ ५८५ ॥
(कलापकम्)

कुलजज्ञातिसम्बन्धि भक्तसत्कारपूर्वकम् ।
सुदिने नाम बालस्य वनराज इति व्यधात् ॥ ५८६ ॥
यत्नादारामिकेणैष पाल्यमानो निरन्तरम् ।
नवचम्पकवद् बालः प्राप वृद्धिं मनोहराम् ॥ ५८७ ॥

लीननेत्रालिसद्गन्धमुखपुष्पः स बालकः ।
दोःशाखाग्रस्फुरत्पाणिपल्लवः किं न चम्पकः ? ॥५८८॥
पांशुक्रीडारसेनाऽसौ देवानामपि दुर्लभम् ।
भुञ्जानो बाल्यजं सौख्यं संजातः पञ्चवार्षिकः ॥ ५८९ ॥
वसन्तसमयेऽन्येद्युर्विचित्रकुसुमैः कृतम् ।
पुष्पाऽऽभरणमादाय मालाकारस्य गेहिनी ॥ ५९० ॥
सभाऽऽसीनस्य भूपस्याऽवलगायां गताऽन्तिकम् ।
कुतूहलेन बालोऽपि ययौ तत्र तया सह ॥ ५९१ ॥
तथैवाऽथ नृपासन्नोपविष्टेन पुरोधसा ।
तं दृष्ट्वा धूनितं शीर्षं नखाच्छोटनपूर्वकम् ॥ ५९२ ॥
किमेतदिति संभ्रान्तमानसेन महीभुजा ।
पृष्टोऽसौ मन्दमाचख्यौ निमित्तज्ञानकोविदः ॥ ५९३ ॥
य एष बालको देव ! दृश्यते पुरतः स्थितः ।
स त्वदीयमिदं सिंहासनमाक्रमिता ध्रुवम् ॥ ५९४ ॥
साशङ्कं पुनरप्यूचे नृपो वेत्सि कथं त्विदम् ? ।
शरीरलक्षणैर्देव ! कानि तानि निशम्यताम् ? ॥ ५९५ ॥
उक्तं सामुद्रिके शास्त्रे नराणां यच्छुभा-ऽशुभम् ।
लक्षणं तत् समासेन नख-केशाग्रमुच्यते ॥ ५९६ ॥
अस्वेदौ पाटलौ श्लिष्टाऽङ्गुली कूर्मोन्नतौ मृदू ।
उष्णौ ताम्रनखौ गूढगुल्फौ पादौ नृणां शुभौ ॥५९७॥
सूर्पाकारास्तथा भुग्ना वक्राः शीताः शिरायुताः ।
सस्वेदाः पाण्डुरा रूक्षाश्चरणास्त्वतिनिन्दिताः ॥५९८ ॥
राज्याय पादयो रेखा ध्वज-वज्रा-ऽङ्कुशोपमाः ।
अङ्गुल्योऽपि समा दीर्घाः संहिताश्च समुन्नताः ॥ ५९९ ॥
अङ्गुष्ठैर्विपुलैर्दुःखं सदाऽध्वगमनं नृणाम् ।
वृत्तैस्ताम्रनखैः स्निग्धैर्हासितैस्तु सुखं भवेत् ॥ ६०० ॥
ह्रस्वा क्लेशाय भोगायाऽङ्गुष्ठाद् दीर्घा प्रदेशिनी ।

समा तु मध्यमा श्रेष्ठा धिये दीर्घा कनिष्ठिका ॥६०१॥
असंहिताभिर्ह्रस्वाभिरङ्गुलिभिस्तु मानवः ।
दासो वा दासकर्मा वा समुद्रवचनं यथा ॥ ६०२ ॥
हंसे-भ-वृषभ-क्रौञ्च-सारसानां गतिः शुभा ।
खरो ष्ट्र-महिष-श्वानगतयस्तु महाधमाः ॥ ६०३ ॥
दुःखिनः काकजङ्घाः स्युर्दीर्घजङ्घा महाऽध्वगाः ।
बन्धनं चाऽश्वजङ्घानां मृगजङ्घस्तु पार्थिवः ॥ ६०४ ॥
जानुनी मांसले स्निग्धे ऊरू विस्तीर्णवर्तुले ।
इष्टकाऽऽभा कटी शस्या मध्यं तु कुलिशोपमम् ॥६०५॥
मृग-व्याघ्रोदरो भोगी श्व-शृगालोदरोऽधमः ।
मण्डूकसदृशं यस्योदरं स स्यान्महीपतिः ॥ ६०६ ॥
वर्तुला गर्भगम्भीरा नाभिः शस्या न तून्नता ।
गम्भीरे भूपतिः कुक्षावुत्ताने स्त्रीमुखेक्षकः ॥ ६०७ ॥
ईश्वरो व्याघ्रपृष्ठः स्यात् कूर्मपृष्ठस्तु पार्थिवः ।
समोपचितविस्तीर्णहृदयेन सुभोगभाक् ॥ ६०८ ॥
प्रलम्बबाहुः स्वामी स्याद् ह्रस्वबाहुस्तु किङ्करः ।
स्वच्छारुणनखौ दीर्घाङ्गुली रक्तौ करौ श्रिये ॥ ६०९ ॥
शक्ति-तोमर-दण्डा-ऽसि-धनुश्चक्रा-ऽङ्गदोपमा ।
यस्य हस्ते भवेद् रेखा राजानं तं विनिर्दिशेत् ॥ ६१० ॥
ध्वज-वज्रा-ऽङ्कुश-च्छत्र-शङ्ख-पद्मादयस्तले ।
पाणिपादेषु दृश्यन्ते यस्याऽसौ श्रीपतिः पुमान् ॥६११॥
स्वस्तिके जनसौभाग्यं मीने सर्वत्र पूज्यता ।
श्रीवत्से वाञ्छिता लक्ष्मीर्गवाद्यं दामकेन तु ॥ ६१२ ॥
पुत्रदा करभे रेखा कनिष्ठाऽधः कलत्रकृत् ।
अङ्गुष्ठमूलरेखा तु भ्रातृ-भाण्डानि शंसति ॥ ६१३ ॥
अङ्गुष्ठेषु यवैर्भाग्यं, विद्या चाऽङ्गुष्ठमूलजैः ।
ऊर्ध्वाऽऽकारा पुनः पाणितले रेखा महाश्रिये ॥ ६१४ ॥

यान्त्यां कनिष्ठिकामूलाद् रेखायां तर्जनीं प्रति ।
वृद्धिः स्यादतिवृद्धायां हीनायां हानिरायुषः ॥ ६१५ ॥
स्थूलरेखा दरिद्राः स्युः सूक्ष्मरेखा महाधनाः ।
खण्डित-स्फुटिताभिः स्यादायुषः क्षय एव हि ॥ ६१६ ॥
शङ्खग्रीवाः प्रशस्यन्ते शुष्को-ष्ट्रग्रीवकौ न तु ।
संपूर्णवदनं फुल्लकपोलफलकं शुभम् ॥ ६१७ ॥
कुन्ददन्तो भवेद् भोगी विद्यावान् दन्तुरः पुनः ।
दुःखितो विकृते रूक्षैर्दन्तैर्मूषकसन्निभैः ॥ ६१८ ॥
द्वात्रिंशद्दशनो राजा भोगी स्यादेकहीनकः ।
त्रिंशद्दन्तास्तु सुखिन एतद्धीनास्तु दुःखिताः ॥६१९॥
पद्मपत्रसमा जिह्वा रक्ता सूक्ष्मा सुशोभना ।
हंस-क्रौञ्चस्वरो धन्यः क्षीण-भिन्नस्वरोऽधमः ॥ ६२० ॥
पार्थिवः शुकनासः स्यात् ह्रस्वनासस्तु धार्मिकः ।
शूलाग्रा विकृता नासा येषां ते पातकप्रियाः ॥६२१॥
श्वानतुल्येक्षणाश्चौराः पिङ्गाक्षाः क्रूरकर्मठाः ।
गवाक्षाः सुभगा निम्न-केकराक्षा[1] दुराशयाः ॥ ६२२ ॥
आवर्तकर्णा धनिनः स्निग्धकर्णा महासुखाः ।
भ्रूयुग्मे मिलिते कूपावर्तगल्ले कुशीलता ॥ ६२३ ॥
ललाटे चाऽर्धचन्द्राभे राजा धार्मिष्ठ उन्नते ।
विद्याभागी विशाले स्याद् विषमे[2] नैःस्व्यदुःखितः ॥६२४॥
रेखाः पञ्च ललाटस्थाः समाः कर्णान्तगोचराः ।
भणितं यस्य गम्भीरं तं विद्यात् सकलायुषम् ॥६२५॥
छत्राकारं नरेन्द्राणां शिरो दीर्घं तु दुःखिनाम् ।
अधमानां घटाकारं पापिनां स्थपुटं पुनः ॥६२६॥
मृदुभिः श्यामलस्निग्धैः सूक्ष्मैर्भवति भूपतिः ।
स्फुटितैः कपिलै स्थूलैः रूक्षैः केशैः सुदुःखितः ॥६२७॥

---

१ केकराक्षो वक्रनेत्र । २ विषमम् ।

चक्षुःस्नेहेन सौभाग्यं दन्तस्नेहे सुभोजनम् ।
त्वचः स्नेहेन सौख्यं स्याद् नखस्नेहे महाधनम् ॥६२८॥
लक्षणानां तदेतेषां यत् किञ्चिदतिशोभनम् ।
तदस्मिन् दृश्यते देव! बालके नाऽत्र संशयः ॥६२९॥
विशेषः पुनरेकोऽत्र भ्रुवोर्मध्ये यदीक्ष्यते ।
ऊर्णाऽऽख्य रोम तेनाऽस्य राज्यं नैव विसंवदेत् ॥६३०॥
इति वाक्यतमोग्रासग्लपिताऽऽननचन्द्रमाः ।
विसृज्याऽऽशु जनं राजा चण्डमाहूय पृष्टवान् ॥६३१॥
अभीस्ते ब्रूहि सत्यं भोः! त्वया बालो हतो न वा ?।
तेनाऽपि कथिते सत्ये स किंकृत्याऽऽकुलोऽभवत् ॥६३२॥
ततः साय समाहूय भीमसेनाऽऽख्यसेवकम् ।
आदिदेश नृपो बालवधार्थमथ सोऽप्यगात् ॥ ६३३ ॥
अश्वमारुह्य गोधूलिवेलायां मालिकौकसि ?।
जगृहे च बलाद् बालं रममाणं गृहाद् बहिः ॥६३४॥
गच्छन् पुराद् बहिर्भीमस्तात! मां कुत्र नेष्यसि ।
इति बालवचः स्निग्धं श्रुत्वाऽभून्मृदुमानसः ? ॥६३५॥
दृष्ट्वा च करजैरीषत्स्पृशन्तं श्मश्रुतः कचान् ।
रोमाञ्चितवपुर्जातसुतप्रीतिरवोचत ॥६३६॥
पुत्र! नेष्यामि तत्र त्वां भाविता यत्र सुन्दरम् ।
इति संतोष्य तं भीमो ययौ खरतराऽटवीम् ॥६३७॥
तत्राऽतिभीषणेऽनेकवनेचर-निशाचरैः ।
आश्वासभवनं यक्षभवनं दिव्यमैक्षत ॥६३८॥
सोऽश्वादुत्तीर्य तस्याऽन्तः प्रविवेश सबालकः ।
यक्षस्य सुन्दराऽऽख्यस्य प्रतिमां वीक्ष्य चाऽवदत् ॥६३९॥
त्वदीयशरणे बालो मुक्तोऽयं परमेश्वर! ।
न्यस्येति तं तदुत्सङ्गे व्यावृत्त्य स्वगृहं गतः ॥ ६४० ॥
मोदकं देहि मे तात! क्षुधितोऽहमिति मृदु ।

वदन् बालः कराग्रेण यक्षतुन्दं परामृशत् ॥ ६४१ ॥
यक्षः पाषाणरूपोऽपि भिन्नस्तद्वचसा भृशम् ।
चिन्तिताऽऽहृतमेतस्मै ददौ प्रवरमोदकम् ॥ ६४२ ॥
अथ तत्र कृताऽऽवासः सार्थेशः केशवाऽभिधः ।
तदा वृषेषु नष्टेषु जाग्रत् सुप्तोऽस्ति चिन्तया ॥ ६४३ ॥
तस्याऽऽदेशं ददौ यक्षो मा कार्षीदधृतिं भवान् ।
स्वयमेव समेष्यन्ति बलीवर्दास्तव प्रगे ॥ ६४४ ॥
अन्यश्च वनराजाऽऽख्यो मदुत्सङ्गगतः सुतः ।
ग्रहीतव्यस्त्वया येनाऽपुत्रत्वेनाऽसि दुःखितः ॥ ६४५ ॥
इति श्रुत्वा स सार्थेशः स्मृतदेव-गुरुक्रमः ।
जजागार महाहर्षप्रकर्षवशमानसः ॥ ६४६ ॥
निशाऽन्ते च बलीवर्दाऽऽगमं श्रुत्वा परिच्छदात् ।
समादाय महापूजां यक्षस्य भवनं ययौ ॥ ६४७ ॥
कृत्वा पूजां स्तुतिं चाऽपि हसिताऽऽस्यं तदङ्कतः ।
आदाय बालकं तुष्टः स्वप्रियायै समर्पयत् ॥ ६४८ ॥
ततः क्रमेण सार्थेशः स्वं सुशर्मपुरं ययौ ।
विभूत्या तत्र पुत्राप्तिवर्धापनमकारयत् ॥ ६४९ ॥
कारितः सदुपाध्यायसन्निधौ पठनक्रमम् ।
सदभ्यस्तकलाशास्त्रो जज्ञे षोडशवार्षिकः ॥ ६५० ॥
अथाऽसौ वनराजेन समं सार्थपतिः पुरे ।
क्षितिप्रतिष्ठिते सार्थसंवाहेन गतः क्रमात् ॥ ६५१ ॥
सार्थं निवेश्य सुस्थाने पुत्रेण सहितः स्वयम् ।
गृहीत्वोपायनं चारु प्रतस्थे सुस्थितं नृपम् ॥ ६५२ ॥
आसने दापिते राज्ञा निविष्टे सार्थनायके ।
वनराजो नृपं पश्यन्नूर्ध्व एव स्म तिष्ठति ॥ ६५३ ॥
पुरोधा वीक्ष्य तं भूयः कुमारममराकृतिम् ।
विभाव्य च हृदि स्पष्टं तथैवाऽऽच्छोटयन्नखम् ॥ ६५४ ॥

पप्रच्छ कारण भूपो नखाऽऽच्छोटे पुरोधसम् ।
सोऽप्याचख्यौ चतुष्कर्ण देव ! किं तव कथ्यते ? ॥६५५॥
आकृतिर्या पुरःस्थस्य कुमारस्याऽस्य दृश्यते ।
ध्रुवमस्याः प्रभावेण तव राज्यं ग्रहीष्यति ॥ ६५६ ॥
भूपोऽपि हृदि साकूतं चिन्तयामास विस्मितः ।
अरे ! पापः स एवाऽयं यः पूर्वं कथितोऽमुना ॥६५७॥
किमसावसुरः कोऽपि व्यन्तरः खेचरोऽपि वा ? ।
यो मयाऽऽज्ञापराद् भृत्याद् घातितोऽपि हि जीवति ॥६५८॥
विकल्पकल्पनैः किं वा कोऽप्युपायो विधीयते ।
तृतीयोड्डयने येन मयूरोऽपि हि गृह्यते ॥६५९॥
इति पप्रच्छ सार्थेशं ननु कोऽयं कुमारकः ? ।
दृश्यते तव पाश्चात्यः सोऽप्यूचे देव ! मे सुतः ॥६६०॥
नृपोऽप्युवाच यद्येवं कियतोऽपि दिनांस्तदा ।
अस्तु पार्श्वे ममैवाऽयं येन मेऽक्षिगतो भृशम् ॥६६१॥
हसतां रुदतां वाऽपि राजाऽऽदेशः कृतः श्रिये ।
मत्वेति केशवोऽप्यूचे क्रियतां देव ! यद् वरम् ॥६६२॥
ततः प्रीतो नृपः सर्ववस्तुनो दानमोचनम् ।
कृत्वा वस्त्रादिसन्मानं स्वहस्तेनाऽस्य निर्ममे ॥६६३॥
अथ सास्रेक्षणो बाढं निर्जीव इव केशवः ।
अव्यक्तवचनः पुत्रं बाहौ धृत्वेदमूचिवान् ॥ ६६४॥
अनुल्लङ्घ्यवचा वत्स ! राजा तत् किं करोम्यहम् ? ।
कियन्त्यपि दिनान्यत्र स्थातव्यं ते नृपाऽन्तिके ॥ ६६५ ॥
अधृतिर्मे पितुर्मा भूदिति स्मितमुखाऽम्बुजः ।
एवं तात ! करिष्यामीत्यभाषत कुमारकः ॥ ६६६ ॥
ततो राजानमापृच्छय सुतमाऽऽलिङ्गय केशवः ।
ययौ स्वस्थानमङ्गेन, हृदा तत्रैव तु स्थितः ॥ ६६७ ॥
बहिष्प्रमुदिताऽऽकारः करे कृत्वा कुमारकम् ।

नृपोऽवोचत् त्वया वत्स! कर्तव्या काऽपि नाऽधृतिः ६६८
समस्तजगतीलोकशरण्यस्य तवाऽन्तिके ।
स्थितस्य मम किं दुःखमिति सोऽपि नृपं जगौ ॥६६९॥
कियन्त्यपि दिनान्येवं स्थापयित्वाऽन्तिके नृपः ।
समर्प्य निजपादातीन् चक्रे देशैकनायकम् ॥ ६७० ॥
तत्र देशे गतः सोऽपि स्वाम्यं प्राप्योत्कटं क्रमात् ।
निजं चक्रे परीवारं प्राहिणोन्नृपसेवकान् ॥ ६७१ ॥
सार्थेशः केशवोऽप्यस्मै बहु प्रेषयते धनम् ।
तेन तुष्टो विशेषेण बभूव स कुमारराट् ॥ ६७२ ॥
प्रगेऽथ प्रहितो राज्ञा नरसिंहो निजाङ्गजः ।
सामन्तमेकमुच्छेत्तुं देशोपद्रवकारिणम् ॥ ६७३ ॥
गतोऽपि महता सैन्यसंनिवेशेन राजसूः ।
निग्रहीतुं न शक्नोति तं दुर्ग-बलदुर्धरम् ॥ ६७४ ॥
अतस्तत्र नृसिंहस्य सङ्ग्राममाग्राय भूभुजा ।
वनराजो निजाऽऽदेशं प्रस्थाप्य प्रहितस्तदा ॥ ६७५ ॥
अथ तत्र गते तस्मिन् तक्रं फेन इवाऽऽहिते ।
सहसा बहलीभूतं नृसिंहबलमुल्लसत् ॥ ६७६ ॥
सैन्यं समुदितीभूय द्वयोरपि कुमारयोः ।
वेष्टयित्वाऽभितो दुर्गं तस्थौ कलकलाऽऽकुलम् ॥ ६७७ ॥
अरे! निर्याहि निर्याहि मृगधूर्तो[1] दरीमित्र ।
कथं दुर्गं प्रविश्याऽसि स्थितो बिलमिवोन्दुरः ॥ ६७८ ॥
देशविध्वंसपापस्य फलमेतदरेऽधम!।
ब्रुवाणमिति तत् सैन्यं समन्ताद् ढौकितं युधे ॥ ६७९ ॥
कोहलातुमुलैर्ढक्कानादैर्निस्वाननिस्वनैः ।
तदा बुम्बारवैश्चाऽपि स्फुटतीव नभोऽङ्गणम् ॥ ६८० ॥
बहिर्मण्डितयन्त्रोत्थस्थूलपाषाणगोलकैः ।

१ शृगाल । २ शृङ्गाकार वाद्यम् ।

गोफणीमुक्तगोलैश्च वज्रसंपातदारुणैः ॥ ६८१ ॥
तीरी-तोमर-नाराच-शल्य-वावल्ल-यष्टिभिः ।
उत्पत्य निपतत्तीव्रगृध्रसंपातसन्निभैः ॥ ६८२ ॥
बधिरोऽन्धोऽभवल्लोको दुर्गमध्यगतः क्षणात् ।
प्राकारं खण्डयित्वान्तर्व्यानशे स बहिर्भटैः ॥ ६८३ ॥
वनराजेन बद्धाऽथ ससामन्तः समर्पितः ।
नरसिंहस्य सूराणामाकृतेः किमु दुष्करम् ? ॥ ६८४ ॥
अहो ! धैर्यमहो ! धैर्यमिति ख्यातिर्जगत्यपि ।
वनराजस्य विस्तीर्णा, जागर्ति प्राक् कृतं शुभम् ॥ ६८५॥
जगत्सरसि नो केषामुल्ललास मुखाम्बुजम् ।
तेजसा तस्य सूरस्य मुक्त्वा तं कुमुदं नृपम् ?॥६८६॥
तं तत्राऽप्यक्षयं श्रुत्वा विशेषचकितो नृपः ।
जनाऽपवादभीरुत्वात् स्वयमेव रहःस्थितः ॥ ६८७ ॥
वनराजस्य दातव्यं विषमित्यक्षराङ्कितम् ।
प्राहिणोन्नरसिंहस्य लिखित्वा लेखमौष्ट्रिकान् ॥६८८॥
( युग्मम् )
निर्विलम्बं च ते यान्तस्तत्र प्रययुरौष्ट्रिकाः ।
यत्र सुन्दरयक्षेणाऽधिष्ठिताऽस्ति महाटवी ॥ ६८९ ॥
श्रान्ताश्च निशि तत्रैव यक्षदेवकुलेऽस्वपन् ।
प्रयुक्ताऽवधिरज्ञासीत् तं लेखं यक्षराडपि ॥ ६९० ॥
अरे ! मदीयपुत्रस्य वधार्थोऽयमुपक्रमः ।
तत् करिष्ये तथेदानीं भविता सुन्दरं यथा ॥ ६९१ ॥
उत्सार्य स्वप्रभावेण विषदानाऽक्षरावलीम् ।
कमला वनराजस्य दातव्येति लिलेख सः ॥ ६९२ ॥
औष्ट्रिकाः प्रातरुत्थाय कुमारकटकं गताः ।
लेखं समर्पयामासुस्तं नृसिंहोऽप्यवाचयत् ॥ ६९३ ॥

दध्यौ विज्ञाय लेखार्थं भ्रातृस्नेहेन मेऽन्तिके ।
आयाताऽस्ति स्वसा साऽस्मै तोषात् तातेन दापिता ॥६९४॥
निर्विकल्पः कुमारोऽपि वनराजस्य सन्निधौ ।
गत्वाऽऽख्याय स्वरूपं तद् विवाहविधिमातनोत् ॥६९५॥
निजाऽऽवासपुरः सान्द्रचन्दनोक्षितभूतलम् ।
पुष्पप्रकरसंभारसुरभीकृतदिङ्मुखम् ॥ ६९६ ॥
बद्धाऽगरुघटीभास्वदुत्तम्भस्तम्भशोभितम् ।
दुकूलमयमुल्लोचपद्मकोल्लासिमौक्तिकम् ॥ ६९७ ॥
विचित्रमणिमाकन्ददलाढ्यद्वारतोरणम् ।
वेदिकासुन्दरं सद्यः स मण्डपमकारयत् ॥ ६९८ ॥
( विशेषकम् )
उच्छलत्तूर्यनादेन महाधवलमङ्गलैः ।
महर्द्धिभासुरस्तत्र वनराजः समाययौ ॥ ६९९ ॥
महार्घ्यः सोऽथ लब्धाऽर्घः प्रशस्यवनिताजनात् ।
मण्डपद्वारमुल्लङ्घ्य विवेशाऽन्तर्यथास्थिति ॥ ७०० ॥
अथ प्रवरनेपथ्यां कृतकौतुकमङ्गलाम् ।
कमलां परिणिन्येऽसौ वेदिकाऽन्तः शुभक्षणे ॥ ७०१ ॥
स तया शुशुभेऽत्यन्तं मूर्तयेव जयश्रिया ।
कलयेव द्वितीयेन्दुर्विद्युतेव नवाऽम्बुदः ॥ ७०२ ॥
जयवन्तौ ततस्तौ स्वं पुरं व्यावृत्य जग्मतुः ।
पुरो न्यस्याहृतं वस्तु राजानं च प्रणेमतुः ॥ ७०३ ॥
विपक्षनिग्रहं कन्यापाणिग्रहमहोत्सवम् ।
वनराजस्य माहात्म्यं नरसिंहो व्यजिज्ञपत् ॥ ७०४ ॥
सामन्तं विजितं श्रुत्वा न तथा मुमुदे नृपः ।
विवाहं वनराजस्य ज्ञात्वाऽभूद् दुःखितो यथा ॥ ७०५ ॥
अरे ! दैव ! त्वमेवाऽत्र प्रतिद्वन्द्वी ममाऽभवः ।
एवं विनाश्यमानोऽपि यदेष भृशमेधते ॥ ७०६ ॥

अथवा किं मुधा दैवोपालम्भेन यथा तथा ? ।
प्रतिकूलप्रतीकारे यतितव्यं मनस्विना ॥ ७०७ ॥
इति ध्यात्वा भणित्वा च कुमारौ ! साधु साधु भोः ! ।
मायये ति निजाऽऽवासे नृपेण प्रहिताबुभौ ॥ ७०८ ॥
पुनस्तस्य वधध्यानाल्लुब्धोपायः स भूपतिः ।
आकार्य निजमातङ्गौ शिक्षयामास निर्जने ॥ ७०९ ॥
अरे ! यः कोऽपि यामिन्यामर्चितुं द्वारवासिनीम् ।
अद्य सोपस्करो याति स वध्यो निशितासिभिः ॥७१०॥
इति प्रहित्य तौ तत्र संध्यायाः समये नृपः ।
वनराजं समाकार्य प्रच्छन्नमिदमब्रवीत् ॥ ७११ ॥
जेतुं गतस्य सामन्तं तव क्षेमाऽऽगमेन नु ।
कथितं द्वारवासिन्या देव्या वत्स ! मयाऽर्चनम् ॥७१२॥
तच्च कृत्यं त्वया रात्रौ पूजोपस्करपाणिना ।
व्रजित्वैकाकिना तत्र यथा स्यां सत्यसङ्गरः[1] ॥ ७१३ ॥
कृतमेवेदमित्युक्त्वा द्वियामसमये निशि ।
पटलीं बलि दीपाढ्यां करे कृत्वाऽथ सोऽचलत् ॥७१४॥
तदा च स निजाऽऽवासवातायननिवेशिना ।
ददृशे नरसिंहेन दीपोद्द्योताच्च लक्षितः ॥ ७१५ ॥
उत्तीर्य सहसा तस्याऽन्तिकं गत्वा नृपाङ्गजः ।
पप्रच्छ किमिदं देव ! सोऽपि तत्त्वमचीकथत् ॥ ७१६ ॥
नरसिंहस्ततस्तस्मादादाय पटलीं करात् ।
तत्राऽहमेव यास्यामीत्युक्त्वा तं प्राहिणोद् गृहम् ॥७१७॥
स्वयं तु द्वारवासिन्या भवनं प्रति निर्भयः ।
एकाग्रमानसो यावद् गच्छति त्वरितक्रमः ॥ ७१८ ॥
तत्राऽऽसन्नगतस्तावदकस्मादेत्य पार्श्वतः ।
नृपाऽऽदिष्टनिषादाभ्यां स हतो निशिताऽसिभिः ॥७१९॥

---

१ सत्यप्रतिज्ञ ।

जाते कलकले लोकस्तत्राऽऽगत्य निरीक्ष्य तम् ।
राज्ञे निवेदयामास सोऽपि तुष्टो भृशं हृदि ॥ ७२० ॥
किमिदं किमिदं हन्तेत्याकुलत्वादिव ब्रुवन् ।
गत्वा तत्रेक्षते यावत् तावदग्रे निजाङ्गजः ॥ ७२१ ॥
तं परासुं[1] सुतं दृष्ट्वा सुस्थितोऽतीव दुःस्थितः ।
चेष्टां चक्रे न कां शोकशङ्कुभिन्नमना भृशम् ? ॥ ७२२ ॥
विललाप च हा ! वत्स ! सच्चन्दनरसोचिते ।
तवाङ्गे किमु दुर्दैवात् पतिता निशिताऽसयः ॥ ७२३ ॥
तव राज्यकृते पुत्र ! यन्मया चिन्तितं परे ।
त्वय्येव तत् पपातेदं किं वा मय्येव नो तव ॥ ७२४ ॥
त्वद्वियोगार्त्तिसंतापाविधुरं द्रुतमेकदा ।
निर्वापय पितुर्भक्त ! निजवाक्यामृतेन माम् ॥ ७२५ ॥
इत्यादि चिरमारट्य वह्निसंस्कारमङ्गलम् ।
विधाय निजपुत्रस्य वनराजमथाऽब्रवीत् ॥ ७२६ ॥
वत्स ! वज्रोपमं भाग्यं जयत्येकं तव क्षितौ ।
मया घनसमानेन यन्न भिन्नं कथञ्चन ॥७२७॥
महाज्ञाननिधेः किं वा वचस्तस्य पुरोधसः ।
देवेन दानवेनाऽपि कथमप्यन्यथा भवेत् ? ॥७२८॥
अतिभाग्याऽधिकत्वेन लघिष्ठोऽपि गुरुर्भवान् ।
क्षन्तव्यस्तदसौ सर्वोऽप्यपराधो मम त्वया ॥७२९॥
गृहाण राज्यमेतच्च तव भाग्यैः समर्पितम् ।
अहं तु दुष्कृतोच्छित्त्यै करिष्ये व्रतमुज्ज्वलम् ॥७३०॥
इत्युदित्वोत्तमत्वेनाऽनिच्छन्तमपि तं नृपः ।
स्वीयसिंहासने न्यस्य राज्यं दत्त्वा वनं ययौ ॥७३१॥
वनराजोऽथ भूपालो भास्वानिव वृषं[2] चरन् ।
आचक्राम प्रतापेन निखिलानपि भूभृतः ॥७३२॥

---

१ मृतम् । २ धर्मं वृषराशिं च ।

सतीष्वन्तःपुरे गोपपुत्रीष्वपि सहस्रशः ।
कमलेव हरेस्तस्य कमला पट्टमासदत् ॥७३३॥
अन्यदा नन्दनोद्याने नन्दनाख्यो महामुनिः ।
आययौ मुनिहंसालिसेव्यमानपदाम्बुजः ॥७३४॥
तद्वन्दनाय गच्छन्तं लोकं दृष्ट्वा नृपोऽपि हि ।
स्वनराज् ज्ञातवृत्तान्तस्तत्र धर्मेच्छया ययौ ॥७३५॥
वन्दित्वाऽथ मुनिं नीचैरुपविश्योचितासने ।
श्रुत्वा तदुपदेशं च पप्रच्छ समये नृपः ॥ ७३६ ॥
किं मया विहितं नाथ ! सुकृतं पूर्वजन्मनि ।
येनैतदद्भुतं राज्यमासादितमिदं वद ? ॥ ७३७ ॥
ज्ञानाऽतिशयसंपन्नस्तस्य प्राच्यभवं मुनिः ।
कथयामास गम्भीरमधुरध्वनिकोकिलः ॥ ७३८ ॥
कुलपुत्रभवे भूप ! स्तुतिपूजा जिनस्य यत् ।
श्रद्धया विदधे तेन राज्यमासादितं त्वया ॥ ७३९ ॥
यत् तु चिन्तितमेतेन स्तुतिमात्रेण किं फलम् ? ।
भविता, तेन ते सौख्यं मध्येऽभूत् किञ्चिदन्तरम् ॥७४०॥
अन्तकाले तु यच्चित्तेऽभूदिदं सुकुलेन किम् ? ।
प्रशस्यं भाग्यमेवैकं तेन ते कुलमीदृशम् ॥ ७४१ ॥
इति श्रुत्वा समुत्पन्नजातिस्मरणतो नृपः ।
स्मृत्वा पूर्वभवं शुद्धश्रद्धासद्ध्यानमानसः ॥ ७४२ ॥
अङ्गीकृत्य मुनिख्यातं जिनधर्मं तदादितः ।
कारयामास सच्चैत्य जिनबिम्बान्यनेकशः ॥ ७४३ ॥
विदधे विविधां पूजां स्तुतिपूजां विशेषतः ।
स्वयं नवनवच्छन्दोबद्धकाव्यैर्मनोहरैः ॥ ७४४ ॥
वीतरागचरित्राणि शृण्वानो लेखयंश्च सः ।
तत्तत्त्वं भावयन्नन्तरन्येषां च प्रकाशयन् ॥ ७४५ ॥
भावपूजामयीमेवं स्तुतिपूजां जिनेशितुः ।

निर्वाह्य तन्मना भूपः क्रमेणाऽऽप परं पदम् ॥ ७४६ ॥
एव भव्या न के जग्मुः पूज्यतां जिनपूजया ? ।
तदहो ! सर्वथा धन्याः प्रयतन्ते जिनार्चने ॥ ७४७ ॥
निराकाङ्क्षतया सा तु कर्तव्या, काङ्क्षया यतः ।
भक्तिच्छलेन देवस्य प्रत्युताऽऽशातना भवेत् ॥ ७४८ ॥
तथाह्यटव्यामेकत्र गिरिगह्वरमध्यगे ।
शिवस्य प्रतिमा चैत्ये व्यन्तरेणाऽस्त्यधिष्ठिता ॥ ७४९ ॥
सकलेयमिति ज्ञात्वा मुग्धको नाम धार्मिकः ।
दूरादागत्य तां मूर्तिं नित्यमर्चति सादरम् ॥ ७५० ॥
स्नपयित्वा जलैः स्वच्छैर्विलिप्य घनचन्दनैः ।
प्रपूज्य पुष्पैः सद्गन्धैर्ढौकयित्वा बलिं पुरः ॥ ७५१ ॥
प्रधानाऽगरुमुत्क्षिप्य स्तवं कृत्वा मनोहरम् ।
नतमूर्धाऽञ्जलिं बद्ध्वा भाषते नित्यमित्यसौ ॥ ७५२ ॥
( युग्मम् )
त्वयि तुष्टे मम स्वामिन् ! संपत्स्यन्तेऽखिलाः श्रियः ।
त्वदेकशरणोऽस्म्येष प्रसीद परमेश्वर ! ॥ ७५३ ॥
इति विज्ञपितस्तस्य सचिन्तो जायते सुरः ।
वृक्षोऽप्यपक्के पीड्येत च्छिद्यमाने फले ध्रुवम् ॥ ७५४ ॥
अन्यदा धार्मिकः पूजामपनीतां निरीक्ष्य सः ।
पूजयित्वा पुनः पूजाहर्तिं ज्ञातुं रहः स्थितः ॥ ७५५ ॥
एकः पुलिन्द्रको यावद् वामहस्ते धनुःशरान् ।
धृत्वा पुष्पाद्यमन्यस्मिन् जलापूर्णमुखो द्रुतम् ॥७५६॥
तत्रागत्य शिवस्याद्यपूजामुत्सार्य चाङ्घ्रिणा ।
गण्डूषाच्छोटनं कृत्वा क्षिप्त्वा पुष्पौघमानमत् ॥७५७॥
सुरस्तेन समं तोषादालापं कर्तुमुद्यतः ।
तदेकान्तगतो दृष्ट्वा धार्मिको ह्यदूयत ॥७५८॥
पुलिन्द्रे च गते कोपादुपालेभे सुरोऽमुना ।

अहो ! यादृक् पुलिन्द्रोऽसौ तादृक् त्वं कटपूतनः ॥७५९॥
एवं विडम्बनारूपं पूजितोऽशुचिमूर्तिना ।
येनाऽत्यन्ताऽधमेन त्वं तं साक्षादेव जल्पसि ॥ ७६० ॥
येनैवं तु मया चोक्षवस्त्रदेहभृता चिरम् ।
विधिना पूजितस्तस्य स्वप्नेऽपि स्वं न दर्शयेः ॥ ७६१ ॥
सुरः प्रोवाच मा कोपं कार्षीर्मुग्ध ! यदन्तरम् ।
स्वस्य तस्य च कल्ये त्वं ज्ञास्यसि स्वयमेव हि ॥७६२॥
द्वितीयादिवसे यावदाययौ धार्मिकः शिवम् ।
एकाक्षिविकलं तावद् ददर्शैवं शुशोच सः ॥ ७६३ ॥
हहा ! केनाऽपि पापेन स्वामिनो नेत्रमुद्धृतम् ।
नीचानां संगतिः किं वा देवानामपि दारुणा ॥ ७६४ ॥
इत्यस्मिन् विलपत्यागात् पुलिन्द्रस्तादृशं शिवम् ।
वीक्ष्य सद्योऽम्बकं तस्मै भल्ल्योद्धृत्य निजं ददौ ॥७६५॥
अहो ! सात्त्विक ! याचस्व किमपीष्टमिदं सुरे ।
वदत्येव निरीहत्वात् पुलिन्द्रोऽगाद् यथागतम् ॥७६६॥
सुरोऽथ धार्मिकं ब्रूते मुग्ध ! दृष्टं त्वयाऽन्तरम् ? ।
एवं सात्त्विकभक्त्याऽहं तुष्ये नो बाह्यपूजया ॥ ७६७ ॥
इत्युदाहरणं ज्ञात्वा पूज्यो धर्मधियैव हि ।
जिनो येन तरुः सिक्तः स्वयमेव फलिष्यति ॥ ७६८ ॥
तथा केनाऽप्यसंबद्धप्रार्थनावशतः स्फुटम् ।
अकिञ्चनकरं तीर्थमपि लोके विधीयते ॥ ७६९ ॥
तथा देवपुरे सोमनामासीत् कुलपुत्रकः ।
रूपवांश्चतुरो दाता गुणरागी प्रियंवदः ॥ ७७० ॥
पत्नी च तस्य रुद्राख्या स्तब्धा कर्कशभाषिणी ।
कुरूपा निर्गुणा किन्तु प्रिये प्रेमवती भृशम् ॥ ७७१ ॥
भर्ता तु दर्शनेनाऽपि स तस्या दूयतेतराम् ।

१ राक्षस. ।

वज्राहत इवासीच्च तद्वचःश्रवणात् पुनः ॥ ७७२ ॥
इत्थं विडम्बनाप्रायं गृहस्थत्वं तयोरभूत् ।
एककर्णस्थताडङ्क[1]मुखदर्शनसन्निभम् ॥७७३॥
भूयोभिरपि सा यावत् प्रकारैस्ताडिता सती ।
न याति स्नेहबद्धत्वात् तावदेष व्यचिन्तयत् ॥ ७७४ ॥
कपिकच्छूर्ध्रुवं मेऽसौ जीवतो नाऽपयास्यति ।
तथा कुर्वे यथा जन्मान्तरेऽप्येषा न मे भवेत् ॥ ७७५ ॥
अन्यदा कामुकं तीर्थं श्रुत्वा पूर्णाभिधे गिरौ ।
जगाम तत्र सर्वस्वं विहाय मरणोन्मुखः ॥ ७७६ ॥
ममाऽहो ! जन्मनि क्वाऽपि रुद्रा मा भूत् पुनः प्रिया ।
इत्यसौ कामनां कृत्वा स्वं मुमोच शिलातलात् ॥७७७॥
तदेकध्याना रुद्राऽपि तद् विदित्वा कुतोऽपि हि ।
द्रुतं जगाम तत्रैव विलम्बं सोढुमक्षमा ॥ ७७८ ॥
भवान्तरेऽपि मे भर्ता सोमो भवतु सर्वदा ।
इत्युदित्वाऽपतत् साऽपि विपन्नौ तावुभावपि ॥ ७७९ ॥
तस्य तीर्थाधिदेवस्य संदेहे पतितं मनः ।
तद्याचनया देवः सेवितः स्यान्महाफलः ॥ ७८० ॥
विशेषेण जिनेन्द्रस्य धर्म-मोक्षार्थिभिर्नरैः ।
पूजां कृत्वा न कर्तव्याऽऽशंसा साऽल्पफला यतः ॥७८१॥
इत्यादिसुकृतैः पुंसां गृहिधर्मोऽपि मुक्तये ।
क्रमात् स्यात् किन्तु तत्राऽपि कोऽप्यलं[2] कर्मलाघवात् ॥७८२॥
यतित्वं गृहधर्मित्वं तावदास्तामिदं द्वयम् ।
धर्मश्रद्धानधन्यत्वमपि पुंसां सुदुर्लभम् ॥ ७८३ ॥
प्राप्याऽपि शस्यमानुष्यरत्नद्वीपं भवोदधौ ।
मूढवद् धारयन्त्येके मूलद्रव्यमपि स्फुटम् ॥ ७८४ ॥

---

१ कर्णभूषणम् । २ समर्थः ।

तथाहि-

श्रीवसन्तपुरेऽभूवन् चत्वारः सार्थवाहजाः ।
चारुर्योग्यो हितज्ञश्च मूढश्चेत्यभिधानतः ॥ ७८५ ॥
अन्योऽन्यसुहृदः सर्वे ते वणिज्यार्थमन्यदा ।
उल्लङ्घ्य जलधिं रत्नद्वीपं रत्नाकरं ययुः ॥ ७८६ ॥
तत्र चारुः स्वभावेन कौतुक-व्यसनोज्झितः ।
लोकस्यावर्जको रत्नपरीक्षाकुशलः स्थिरः ॥ ७८७ ॥
वज्रे-न्द्रनील-वैडूर्य-पद्मरागा-ऽञ्जनादिकम् ।
पञ्चवर्णं महानर्घ्यं स रत्नौघमुपार्जयत् ॥ ७८८ ॥
योग्योऽपि कुरुते किञ्चिद् वाणिज्यं चारुशिक्षया ।
जानीते सोऽपि रत्नानां गुण-दोषविचारणाम् ॥ ७८९ ॥
किन्त्वारामसरःक्रीडाकौतुकी भ्रमते बहु ।
तथापि मिलितान्यस्य माणिक्यानि कियन्त्यपि ॥७९०॥
शृणोति च वचश्चारोर्मन्यते च करोत्यपि ।
वर्ततेऽसौ तथा चारौ यथा तस्य हृदि स्थितः ॥ ७९१ ॥
हितज्ञश्च न जानाति स्वयं रत्नपरीक्षणम् ।
ततोऽसौ यस्य कस्याऽपि कथितं मन्यतेऽखिलम् ॥७९२॥
शृणोति चारुशिक्षां च तुष्टः किन्त्वस्य नो हृदि ।
किञ्चित् तिष्ठति मुग्धत्वान्नाट्यादौ च बहुभ्रमात् ॥७९३॥
अतः परमुखप्रेक्षी स धूर्तैर्विप्रतारितः ।
काचा-ऽश्मगवलादीनि रत्नभ्रान्त्या समग्रहीत् ॥७९४॥
मूढस्तु न स्वयं वेत्ति न चारुमपि पृच्छति ।
न शृणोत्युदितं तस्य न चाऽपि बहु मन्यते ॥७९५॥
दक्षंमन्यतया मूर्खः शङ्ख-शुक्ति कपर्दकान् ।
केवलं मीलयामास कृत्वा भूरि धनव्ययम् ॥ ७९६ ॥
कुसङ्गतिपरैर्धूर्तैर्वञ्च्यमानः स नित्यशः ।
अविश्वस्तश्च मित्राणां मोहाद् गमयते दिनान् ॥ ७९७ ॥

अथ संपूर्य बोहित्थं[1] रत्नैः स्तोकदिनैरपि ।
चारुः कृतार्थः स्वस्थानं प्रति गन्तुमना अभूत् ॥७९८॥
हे ! वयस्याः ! कृतार्थाश्चेत् स्वस्थानं गम्यते तदा ।
इति त्रीनपि योग्यादीन् चारुराकारयत् सह ॥७९९॥
तत् तेषु चारुरत्नानि वीक्ष्य तादृगुपार्जनैः ।
जातश्रद्धोऽधिकं योग्यः सदैन्यमिदमूचिवान् ॥८००॥
रत्नद्वीपमपि प्राप्य जानताऽपि मया सखे ! ।
तथाविधानि रत्नानि नार्जितानि प्रमादतः ॥८०१॥
ततो मित्र ! प्रतीक्षस्व यथाऽहमपि सम्प्रति ।
साररत्नानि संगृह्य कृतार्थस्त्वां व्रजाम्यनु ॥८०२॥
हितज्ञोऽपि निजं काच-गवलादिकमर्जितम् ।
अदर्शयद् ऋजुत्वेन चारोः सोऽथ तमब्रवीत् ॥८०३॥
न स्युरेतानि रत्नानि धूर्तैस्त्वं मुग्ध ! वञ्चितः ।
त्यक्त्वैतानि तदद्याऽपि यत्नं रत्नार्जने कुरु ॥८०४॥
ततोऽसौ चारुमभ्यर्च्य गुण-दोषपरीक्षणम् ।
शिक्षयित्वा क्रमाज्जज्ञे सम्यग् रत्नपरीक्षकः ॥ ८०५ ॥
काननाऽऽलोकचित्राद्यं त्यक्त्वा धूर्तैश्च सङ्गतिम् ।
स्नैः रत्नानि संगृह्य हितज्ञोऽपि तमन्वगात् ॥ ८०६ ॥
मूढस्तु चारुणा प्रोक्तो दुष्टोत्तरमिवाऽवदत् ।
न शम्बलमपि भ्रातरस्ति मे करवै किमु ? ॥ ८०७ ॥
चारुणाऽभाणि ते नीवीमर्पयिष्ये,[2] कुसङ्गतिम् ।
विहाय कुरु वाणिज्यं नेष्यामस्त्वां प्रपाल्य भोः ! ॥८०८॥
सर्वोऽपि कृत्रिमस्नेहं धत्ते स्वीयोऽत्र कोऽपि न ।
तस्मादविघटं स्थानं स्वीयमेव हि गम्यते ॥ ८०९ ॥
मूढः स्माऽऽह महाभाग ! यत्रैव मनसो रतिः ।
तदेव स्थानकं स्वीयं नैवाऽन्यदिति मे मतिः ॥ ८१० ॥

---

१ प्रवहणम् । २ मूलधनम् ।

तदहो ! विविधाऽऽराम-रामा-नाट्यादिकौतुकैः ।
रमणीयमिदं स्थानं मुक्त्वा नाऽन्यत्र मे मनः ॥ ८११ ॥
इति तं बोधविमुखं ज्ञात्वा मुक्त्वा च ते क्रमात् ।
गताः स्वस्थानमानन्दं चाऽऽपुश्चार्वादयः परम् ॥८१२॥
मूढस्तु व्यसनाऽसक्तस्तत्रैव स्वजनोज्झितः ।
परिक्षीणधनो धूर्तैर्महादुःखेन संस्थितः ॥ ८१३ ॥
दृष्टान्तोऽयं मयाऽऽख्यातोऽधुनोपनय उच्यते ।
यद् वसन्तपुरं राशिरेष सांव्यवहारिकः ॥ ८१४ ॥
ये वयस्याश्च चत्वारस्ते यति-श्राद्ध-भद्रकाः ।
मिथ्यादृष्टिश्च, यो रत्नद्वीपो मर्त्यभवो हि सः ॥ ८१५ ॥
समुद्रलङ्घनं यत् तद् जीवयोन्यवगाहनम् ।
यानेन द्वीपप्राप्तिर्या तन्मर्त्यत्वं सुकर्मणा ॥ ८१६ ॥
चारोः पञ्चविधै रत्नैर्यच्च बोहित्थपूरणम् ।
व्रतानां न्यसनं ब्रह्म[1]पञ्चमानां तदात्मनि ॥८१७॥
योग्यस्य काननेच्छा या स्वल्परत्नार्जनं च यत् ।
गृहिणो विषयासेवापूर्वं सोऽणुव्रतोद्यमः ॥ ८१८ ॥
यद् हितज्ञस्य मुग्धत्वात् काचखण्डादिसंग्रहः ।
भद्रकत्वेन जीवस्य सा सर्वत्राऽपि धर्मधीः ॥ ८१९ ॥
मूढस्य यच्च शुक्त्यादिग्रहणं धूर्तवञ्चनात् ।
स कुधर्मग्रहो मिथ्यादृशो वैधर्मिकाऽऽज्ञया ॥ ८२० ॥
यत् स्वाऽऽस्पदं गमी योग्य-हितज्ञौ चारुरूचिवान् ।
यतेरासन्नमोक्षस्य तज् ज्ञेयं भव्यबोधनम् ॥ ८२१ ॥
यच्च तौ चारुमभ्यर्च्य रत्नान्यार्जयतां पुनः ।
श्राद्ध-भद्रकयोः साधुधर्माङ्गीकरणं हि तत् ॥ ८२२ ॥
शिष्टोऽपि चारुणा मूढः स्वस्थानं नाऽगमद् यथा ।
गुर्वादेशेऽप्यभव्यस्य तथा मुक्तावनादरः ॥ ८२३ ॥

---

1 ब्रह्म ब्रह्मचर्यं पञ्चमं येषु तेषाम् ।

चार्वाद्या इव यत्याद्या मुक्तिस्वस्थानमियूति ।
भवाऽब्धौ मूढवद् दुःखी मिथ्यादृष्टिस्तु तिष्ठति ॥८२४॥
अन्तरङ्गमिमं सारोपदेशं हृदि बिभ्रता ।
पश्चादपि हि मोक्षाय यतितव्यं मनीषिणा ॥ ८२५ ॥
इत्यादिदेशनां कृत्वा विरते गणभृद्वरे ।
प्रणम्य सर्वे श्रीपार्श्वं स्थानं निजनिजं ययुः ॥ ८२६ ॥
तत्तीर्थसंभवः पार्श्वनामा श्यामश्चतुर्भुजः ।
यक्षः फणिफणच्छत्रो गजाऽऽस्यः कूर्मवाहनः ॥ ८२७ ॥
नकुला-ऽही वामदोर्भ्यां बीजपूरो-रगौ पुनः ।
दक्षिणाभ्यां दधद् दोर्भ्यां भक्तः पार्श्वोऽभवद् विभोः ॥८२८
तदा पद्मावती नाम्ना देवी तत्तीर्थभूरभूत् ।
स्वर्णवर्णा प्रभावाऽऽढ्या कुर्कुटो-रगवाहना ॥ ८२९ ॥
दक्षिणाभ्यां पद्म-पाशौ वामाभ्यां च फला-ऽङ्कुशे ।
कराभ्यां दधती स्वामिपार्श्वे शासनदेवता ॥ ८३० ॥
अथ याति पुरो धर्मचक्रे सिंहासने च खे ।
दुन्दुभौ ध्वनति च्छत्र-चामरैरुपशोभितः ॥ ८३१ ॥
विजहार ततोऽन्यत्र स्वर्णाम्भोजेषु सञ्चरन् ।
अवस्थितकच-श्मश्रु-नखः सङ्घान्वितो विभुः ॥ ८३२ ॥
(युग्मम्)
गच्छतोऽस्याऽभवन् नम्रा द्रुमा न्युब्जाश्च कण्टकाः ।
ऋतवि न्द्रियार्थ-मरुतोऽनुकूलाः शकुना अपि ॥८३३॥
प्रभुप्रभावतो नेशुरायोजनशतं गदाः ।
तद्विहाराऽवनौ चासन्नेति-वैराद्युपप्लवाः ॥८३४॥
सर्वातिशयवानेवं कोटिसङ्ख्यैः सदा सुरैः ।
सेव्यमानपदाम्भोजः स व्यहार्षीद् विभुर्भुवम् ॥८३५ ॥
यस्योच्चैः कमठाम्बुदोज्झितजलैरुद्भूतभोगीश्वरो-

१ गच्छन्ति । २ सप्तम्यन्तम् । ३ अधोमुखा ।

त्सर्पद्भोगलतावितानममलं भेजे तथा मूर्धनि ।
येनाऽद्याऽपि तदाश्रितं जगदपि प्रीतिं परामश्नुते
सोऽव्याद् वः शुभभावदेवविनतः श्रीपार्श्वनाथः प्रभुः ॥८३६॥

इति श्रीकालिकाचार्यसंतानीय-श्रीभावदेवसूरिविरचिते श्रीपार्श्वनाथ-चरिते महाकाव्येऽष्टसर्गे भावाङ्के भगवद्गणधरदेशना-शासन-देवतावर्णनो नाम सप्तमः सर्ग. ॥ ७ ॥

। अर्हम् ।

# अथाष्टमः सर्गः ।

शश्वद् विश्वत्रयस्वामी विश्वानुग्रहहेतवे ।
विहरन्नन्यदा पुण्ड्रदेशे तत्सुकृतैरगात् ॥ १ ॥
इतश्च पूर्वदेशेऽभूत् ताम्रलिप्त्यां तदा पुरि ।
सुधीः सागरदत्ताऽऽख्यः सार्थवाहसुतो युवा ॥ २ ॥
स तु प्राच्यभवे विप्रः पत्न्याऽन्याऽऽसक्तया विषम् ।
दत्त्वाऽसंज्ञो बहिः क्षिप्तो गोकुलिन्या च जीवितः ॥ ३ ॥
परिव्राड् भूत्वा मृत्वा च तत्र श्रेष्ठिसुतोऽभवत् ।
जातजातिस्मृतिश्चैष विरक्तः स्त्रीषु सर्वथा ॥ ४ ॥
लोकधर्मरता मृत्वा गोकुलिन्यप्यऽभूत् सुता ।
तत्रैवेभ्यस्य रूपाढ्या स तां स्निग्धदृशेक्षते ॥ ५ ॥
तज् ज्ञात्वा सागरार्थे सा वृता लब्धा च बन्धुभिः ।
तस्यामपि पुनस्तस्य रता दृष्टिर्मनस्तु न ॥ ६ ॥
स स्त्रीः शस्त्रीरिवाऽमंस्त भिया हि प्राग्भवं स्मरन् ।
साऽथ पत्रे लिखित्वेमं श्लोकं प्रैषीदखिन्नधीः ॥ ७ ॥
कुलीनामनुरक्तां च किं स्त्रीं त्यजसि कोविद ! ? ।

१ मूर्छित । २ सन्यासी ।

कौमुद्या हि शशी भाति विद्युताऽब्दो गृही स्त्रिया ॥ ८ ॥
सागरो वाचयित्वैनं लिखित्वा च दृढाशयः ।
प्रजिघाय प्रति श्लोकं साऽपि चैवमवाचयत् ॥ ९ ॥
स्त्री नदीवत् स्वभावेन चपला नीचगामिनी ।
उद्वृत्ता च जडात्माऽसौ पक्षद्वयविनाशिनी ॥ १० ॥
दध्यौ च यत् स्मरत्येष स्त्रीदोषं प्राच्यजन्मजम् ।
ततः प्रैषीत् पुनः श्लोकं सोऽप्येवमवाचयत् ॥ ११ ॥
एकस्या दूषणे सर्वा तज्जातिर्नैव दुष्यति ।
अमावास्येव रात्रित्वात् त्याज्येन्दोः पूर्णिमाऽपि किम्? १२॥
इति तस्याः प्रबोधेन वैदग्ध्येन च रञ्जितः ।
विवाहं सागरश्चक्रे भोगांश्च बुभुजे मुदा ॥ १३ ॥
इभ्यः सागरदत्तोऽथ व्यवहर्तुं जलाऽध्वना ।
प्रचक्रमे सप्तवारान् यानं चाऽभज्यताऽम्बुधौ ॥ १४ ॥
आगतः सन्नऽपुण्योऽयमिति लोकैः स हस्यते ।
दध्यौ च धिक् कथं दैवं विरुद्धं मयि शत्रुवत्? ॥ १५ ॥
इति किंकृत्यतामूढोऽनिशं भ्राम्यन्नितस्ततः ।
सोऽन्यदा कूपिकातोऽम्भः कर्षन्तं कञ्चिदैक्षत ॥ १६ ॥
सप्तवारान् जलं नाऽऽगादागाद् वारेऽष्टमे पुनः ।
तद् दृष्ट्वा सोऽस्मरद् मूलमनिर्वेदः श्रियो ध्रुवम् ॥१७॥
यतः—
दैवोऽपि शङ्कते तेभ्यः कृत्वा विघ्नांश्च खिद्यते ।
विघ्नैरस्खलितोत्साहाः प्रारब्धं न त्यजन्ति ये ॥ १८ ॥
ध्यात्वैवं शकुनं मत्वा स चचालाऽधिसिंहलम् ।
पोतेन रत्नद्वीपं च प्राप वातवशादसौ ॥ १९ ॥
तत्र रत्नानि संगृह्य प्रतस्थे स्वपुरीं प्रति ।
रत्नलुब्धैश्च निर्यामैः स क्षिप्तो निशि वारिधौ ॥ २० ॥
दैवाच्च फलकं प्राप्य तटेऽगात् पाटलापथम् ।

पुरं तत्रैक्षि वाणिज्याऽऽगतेन श्वशुरेण सः ॥ २१ ॥
तेन नीतो गृहं स्नातभुक्तोऽसौ सर्वमाख्यत ।
स्थापितः श्वशुरेणाऽस्थात् कियत् तत्रैव सागरः ॥ २२ ॥
तद् यानमपि तत्राऽऽगान्निर्यामा रोधिता नृपात् ।
रत्नान्यादाय च पुनर्मोचिताः सागरेण ते ॥ २३ ॥
विशेषादर्जितश्रीकः स तत्रायातबन्धुषु ।
सत्कारादर्थिदानाच्च चकार सफलं धनम् ॥ २४ ॥
रत्नबिम्बचिकी[1]ः सोऽथ धर्मार्थी धर्मतीर्थिकान् ।
को देवो मुक्तिदायीत्यपृच्छत् तेऽन्योऽन्यमूचिरे ?॥ २५ ॥
ततोऽस्याऽऽख्यत कोऽप्याप्तः सद्रत्नमधिवास्य भोः ! ।
कृताऽष्टमो ध्याय देवीं त्वादिष्टं काऽपि वक्ष्यति ॥२६॥
तथैव सागरश्चक्रे देवतैका ततोऽर्हतः ।
सुवर्णवर्णा प्रतिमां पुरो मुक्त्वेत्यभाषत ॥ २७ ॥
देवोऽयं तात्त्विको भद्र ! स्वरूपं त्वस्य साधवः ।
वदन्तीति गदित्वाऽसौ देवताऽगाद् यथागतम् ॥ २८ ॥
सोऽपि साध्वन्तिके गत्वा प्रदर्श्य प्रतिमामिमाम् ।
कोऽयं देवः प्रतिष्ठा स्यात् कथं चाऽस्येति पृष्टवान् ?॥२९॥
साधवोऽपि जिनाऽऽख्यातं धर्ममुक्त्वेदमूचिरे ।
पार्श्वनाथप्रभुः पुण्ड्रदेशेऽस्ति ननु पृच्छ तम् ॥ ३० ॥
श्रावकत्वं प्रपद्य श्रीपार्श्वं चाऽभ्येत्य सागरः ।
प्रणम्य च तदप्राक्षीत् स्वाम्यप्यर्हद्गुणान् जगौ ॥ ३१ ॥
जिनार्चां स्थापनां चाऽख्यत् सागरोऽपि यथाविधि ।
अर्हद्बिम्बमिति प्रीतः प्रतिष्ठाप्य स्वपूपुजत् ॥ ३२ ॥
संविग्नः सागरोऽन्येद्युः प्रवव्राजाऽन्तिके प्रभोः ।
नाथोऽपि सपरीवारो विजहार ततोऽन्यतः ॥ ३३ ॥
अथोऽभूवन् प्रभोः शिष्याश्चत्वारः शुद्धवंशजाः ।

---

१ चिकी कर्तुमिच्छु. ।

शिवः सुन्दर-सोमौ च जयश्चेत्यभिधानतः ॥ ३४ ॥
चिराऽऽचीर्णव्रता भूरिश्रुताः किन्तु परीषहैः ।
जिताः सन्तो जिनेन्द्रं ते प्रणम्येदं व्यजिज्ञपन् ॥ ३५ ॥
सिद्धिरस्मिन् भवेऽस्माकं भविता भगवन् ! न वा ? ।
प्रभुर्जगाद चरमदेहाः सेत्स्यथ सम्प्रति ॥३६॥
ततस्तैश्चिन्तितं तावद् यतित्वे कष्टमन्वहम् ।
गृहिणोऽप्याधि–बाधाभिः सदैवाऽतीवदुःखिताः ॥३७॥
हुं ज्ञातं बौद्धतीर्थेऽस्ति ध्रुवं सौख्यं मनीषितम्[1] ।
यतो बुद्धो जिनः स्वीययतीनामिदमादिशत् ॥ ३८ ॥
मनोज्ञं भोजनं भुक्त्वा मनोज्ञशयना-ऽऽसनः ।
मनोज्ञे भवने तिष्ठन् मनोज्ञं ध्यायति व्रती ॥ ३९ ॥
तथा—
मृद्वी शय्या प्रगे पेया भक्तं मध्ये परेऽहनि ।
पानकं शर्करा द्राक्षा नक्तमन्ते पुनः शिवम् ॥ ४० ॥
ततस्तत्रैव गत्वाऽतिवाहयामः सुखं दिनान् ।
अवश्यंभाविनि शिवे किं वृथा कष्टकल्पना ? ॥ ४१ ॥
इति निर्णीय ते तस्थुर्गत्वा सुगतदर्शने ।
तेषां कालेन चाऽऽसन्नमोक्षत्वादित्यभून्मनः ॥ ४२ ॥
अहो ! विश्वत्रयाऽऽधारं पार्श्वनाथं गुरुं गुरुम् ।
प्राप्याऽपि भ्रंशितोऽस्माभिर्धिगात्मा शिथिलैरिति ॥४३॥
सच्चारित्रजलेऽस्माभिः स्नात्वा मातङ्गवत् कथम् ? ।
कुसंसर्गरजस्यात्मा लोठितो हन्त ! सम्प्रति ॥ ४४ ॥
प्रमादनिद्रावैवश्याज्जिनधर्मसुधाघटम् ।
अस्माकं क्षिपतां पादैः का गतिर्भविता हहा ! ? ॥४५॥
अनन्यशरणानां नः सर्वथा शरणं भवान् ।
प्रसह्याऽऽलम्बनं देहि पार्श्वनाथप्रभोऽधुना ॥ ४६ ॥

---

१ मनोऽभिलषितम् ।

इति ध्यानभवाऽपूर्ववीर्योल्लासितयाऽऽत्मनः ।
क्षपकश्रेणिनिःश्रेणिमारुरुहुः क्षणेन ते ॥ ४७ ॥
प्राप्याऽथ केवलज्ञानं शैलेशीकरणाद् द्रुतम् ।
तेऽपि सिद्धिपदं प्रापुः प्रसादः कटरे ! प्रभो ! ॥४८॥
इतश्चाऽऽसीन्नागपुर्यां पुर्यां धनपतिर्धनी ।
तत्सूनुश्चारुतारुण्यो बन्धुदत्ताऽभिधः सुधीः ॥ ४९ ॥
वसुनन्दसुतां चन्द्रलेखां स परिणायितः ।
पित्रा, कङ्कणहस्तैव साऽहिदष्टा मृता निशि ॥ ५० ॥
तस्यैवं षण्मृता भार्या ऊढमात्रा विधेर्वशात् ।
विषहस्तोऽयमित्यन्यां कन्यां लेभे पुनः स न ॥५१॥
क्षीयमाणं च तं कृष्णपक्षचन्द्रमिवाऽन्वहम् ।
जनको वीक्ष्य तच्चित्तव्यासङ्गाय[1] प्रचक्रमे ॥ ५२ ॥
सुतं धनपतिः प्रैषीद् यानं संवाह्य सिंहलान् ।
सोऽपि पित्राज्ञया तत्र गत्वा भूरि स्वमार्जयत् ॥ ५३ ॥
बहुलाभेन तुष्टोऽसौ प्रतस्थे स्वपुरीं प्रति ।
गच्छतश्चाऽस्य दुर्वाताद् वार्धौ यानमभज्यत ॥ ५४ ॥
प्राप्याऽथ काष्ठफलकं स रत्नद्वीपमासदत् ।
नीचैरुच्चैश्च पुंसां हि चक्रनेमिक्रमाद् दशा ॥ ५५ ॥
पादचारी फलाहारी रत्नाद्रिं स ययौ क्रमात् ।
तत्राऽऽरूढो ददर्शैकं चैत्यं रत्नमयं महत् ॥ ५६ ॥
प्रविश्य च स तस्यान्तः श्रीनेमेर्बिम्बमानमत् ।
यं श्रितोऽङ्कच्छलाच्छङ्खो वृत्तोज्ज्वलत्वयुतो ध्रुवम् ॥ ५७ ॥
तत्स्थान् साधूंश्च वन्दित्वा स्वोदन्तं सर्वमाख्यत ।
तत्राऽऽग्रमुनिनाऽग्राहि जिनधर्मं प्रबोध्य सः ॥ ५८ ॥
तत्र चित्राङ्गदो नाम खेचरो जिनधार्मिकः ।
साधर्मिकतया प्रीतोऽभ्यर्थ्य तं स्वगृहेऽनयत् ॥ ५९ ॥

---

१ व्यासङ्गश्चैककार्यस्थैर्यम् ।

सत्कृत्वा बन्धुदत्तस्य स्नान-भोज्यादिगौरवम् ।
ऊचे खगामिनीं विद्यां किं कन्यां वा ददामि ते ? ॥ ६० ॥
त्वद्विद्या मद्वशेत्युक्त्वा तूष्णीमिभ्यसुते स्थिते ।
दध्यौ चित्राङ्गदः कन्यां खल्वेष इयतेच्छति ॥ ६१ ॥
सा कन्याऽस्मै प्रदातव्या सुरूपाऽऽयुष्मती च या ।
तत् काऽहो ! भरतेऽस्तीदृक् इत्यपृच्छत् स खेचरान् ? ॥६२॥
ततो मृगाङ्कलेखा तद्भ्रात्रङ्गदसुताऽवदत् ।
अस्तीदृक् तात ! कौशाम्ब्यां सखी मे प्रियदर्शना ॥६३॥
तत्पितुर्जिनदत्तस्य गृहं प्राग् गतया मया ।
मुनितोऽश्रावि यत् सैकं सुतं सूत्वा [1]व्रतीयिता ॥ ६४ ॥
ततश्चित्राङ्गदो बन्धुदत्तेन सह खेचरान् ।
प्रैषीदमितगत्याद्याः कौशाम्ब्यां तेऽप्यगुः क्षणात् ॥६५॥
आवात्सुर्बहिरुद्याने तत्र श्रीपार्श्वमन्दिरम् ।
ते प्रविश्याऽनमन् पार्श्वं बन्धुदत्तोऽस्तवीदथ ॥ ६६ ॥
जय त्रिभुवनोत्तंस ! पार्श्वनाथजिनेश्वर ! ।
सुराऽसुरनत ! स्वामिन्नमेयमहिमानिधे ! ॥ ६७ ॥
तव निध्यानसद्ध्यानसिद्धयोगजुषां जिन ! ।
व्याधिराधिरिवाऽऽसत्तिमियर्ति न कदाचन ॥ ॥६८ ॥
तव शान्तवपुःकान्तिनीरपूरप्लुतात्मनाम् ।
दुष्टोऽपि दहनोऽनिष्टं द्वेषो वा कर्तुमक्षमः ॥ ६९ ॥
आस्तामन्यजलोल्लङ्घवार्ता धीरधियः प्रभो ! ।
त्वामवाप्य सदाधारं तरन्ति भवसागरम् ॥ ७० ॥
ध्यातत्वन्नाममन्त्राणां कथमाशीविषा भिये ? ।
[2]नेष्टे दृष्टिविषोऽप्येषां नाथ ! मिथ्यात्वपन्नगः ॥ ७१ ॥
यान्त्यभीष्टं सधन्वा-ऽसित्वत्पादशरणाः पदम् ।
चौरैरक्षैरिवाऽध्वस्ताः क्रान्त्वा भवमिवाऽटवीम् ॥ ७२ ॥

---

१ व्रतमभिलषिष्यति । २ न शक्नोति ।

प्रभोः फणिमणिज्योतिःप्लुष्टाऽन्तर्वैरिभूरुहाम् ।
तत्पल्लवनिभाः पुंसां अन्ये सन्त्येव नाऽरयः ॥ ७३ ॥
सनाथानां त्वया नाथ ! श्वापदा विपदे कुतः ? ।
तेषां कर्माष्टपाद्[1] मोहशरभः करभायते ॥ ७४ ॥
अत्राऽमुत्राऽपि नो तेषां दोष-दौर्गत्यजा विपत् ।
भवन्तं ये सदानन्दश्रेयोनिधिमधिश्रिताः ॥ ७५ ॥
रोगा-ऽनल-जल-व्याल-चौरा-ऽरि-श्वापदा-ऽऽपदः ।
बहिरन्तरपि स्वामिन्न भिये त्वयि वीक्षिते ॥ ७६ ॥
तव स्तवनवज्राङ्गीकृतरक्षाः सदा प्रभो ! ।
यान्ति दुर्गमपि श्रेयो भावदेवमुनिस्तुत ! ॥ ७७ ॥
इति स्तुतिपरे तस्मिन् जिनदत्तोऽर्चितुं जिनम् ।
तत्राऽगात् खेचरान् बन्धुं तथा दृष्ट्वा च तुष्टवान् ॥७८॥
साधर्मिकत्ववात्सल्यं कर्तुमभ्यर्थ्य ते निजम् ।
तेनाऽऽनीता गृहं तेषां स्वागतं च कृतं बहु ॥ ७९ ॥
पृष्टाश्चाऽऽगमने हेतुं खेचराः कार्यमैहिकम् ।
किञ्चित् कूटं विना न स्यादिति ध्यात्वेदमूचिरे ॥८०॥
वयं रत्नाचलान्नेमिं नन्तुं रैवतकाचले ।
गतास्तत्राऽमिलद् बन्धुदत्तोऽयं स्निग्धबन्धुवत् ॥ ८१ ॥
चक्रे साधर्मिकत्वं च धार्मिकोऽयं ततो वयम् ।
प्रीत्याऽनेन युताः श्रीमत्पार्श्वं नन्तुमिहाऽऽगताः ॥ ८२ ॥
जिनदत्तस्ततो बन्धुदत्तं तद्धर्मरञ्जितः ।
खेचरैरुपरोध्यैनं स्वपुत्र्या पर्यणाययत् ॥ ८३ ॥
स्वस्थानं खेचरा जग्मुर्बन्धुदत्तश्च सप्रियः ।
तत्रैवाऽस्थाच्चतुर्वर्षी धर्मकृत्यपरः सुखम् ॥ ८४ ॥
अथ गुर्व्या[2] गुणैर्गुर्व्या प्रियदर्शनयाऽन्वितः ।
आपृच्छ्य श्वशुरं बन्धुदत्तः स्वां प्रस्थितः पुरीम् ॥८५॥

---

१ कर्माण्येवाष्टौ पादा यस्य । २ गर्भिण्या ।

गच्छन्नतुच्छसार्थोऽसौ भीष्मां पद्माटवीं ययौ ।
त्र्यहेणोल्लङ्घ्य चैकस्य सरसस्तीरमावसत् ॥ ८६ ॥
चण्डसेनाऽभिधस्याऽथ सार्थे तस्मिन्नचिन्तिताः ।
पल्लीशस्य यमस्येव भिल्लाः शल्या इवाऽपतन् ॥ ८७ ॥
ते तत्सर्वस्वमादाय प्रियदर्शनया सह ।
पल्लिशायाऽर्पयन् सोऽपि तां दीनां वीक्ष्य दुःखितः ॥८८॥
केयं कस्येत्यपृच्छच्च तच्चेटीं साऽप्यचीकथत् ।
कौशाम्ब्यां जिनदत्तस्य पुत्रीयं प्रियदर्शना ॥ ८९ ॥
तत् श्रुत्वा सहसाऽमूर्च्छल्लब्धसंज्ञश्च पल्लिराट् ।
नत्वोचे भगिनी मे त्वमुपकारिसुताऽसि यत् ॥ ९० ॥
शृणु प्रागस्मि कौशाम्ब्यां गतश्चौरैर्वृतो बहिः ।
सायं मद्यं पिबंस्तत्र निरीक्ष्याऽऽरक्षकैर्धृतः ॥९१॥
वधार्थं नीयमानोऽहं पौषधान्ते निजं गृहम् ।
त्वत्पित्रा गच्छता दृष्ट्वा नृपं विज्ञप्य मोचितः ॥ ९२ ॥
तत् तेऽहं किं करोम्यद्य तेनेत्युक्ताऽथ साऽब्रवीत् ।
पतिं दर्शय मे बन्धुदत्तं धाट्या वियोजितम् ॥ ९३ ॥
कृतमेवेदमित्युक्त्वा पल्लीशस्तां सुरीमिव ।
पश्यन् भक्त्या गृहे मुक्त्वा तत्पतिं वीक्षितुं ययौ ॥९४॥
भ्रान्त्वा बन्धुमसंप्राप्य पुनः स्वगृहमागतः ।
स बन्धुदत्तभार्यायाः साक्ष्यं प्रत्यशृणोदिति ॥९५॥
षण्मासान्ते बन्धुदत्तं नाऽऽनयामि समीक्ष्य चेत् ।
ज्वलज्ज्वालाकुले नूनं तदा वह्नौ विशाम्यहम् ॥ ९६ ॥
प्रैषीच्च सर्वतो भिल्लान् भ्रान्तास्तेऽपि चिरं परम् ।
बन्धुं नाऽऽपुर्विलक्षाऽऽस्यः पल्लीशोऽथेत्यचिन्तयत् ॥९७॥
धारयन्नक्षमः प्राणान् प्रियाविश्लेषदुःखितः ।
भृगुपातादिना क्वाऽपि बन्धुदत्तो मृतो ध्रुवम् ॥ ९८ ॥
गताः सन्धाऽवधेर्मासाश्चत्वारः साम्प्रतं पुनः ।

प्रसूतायां बन्धुपत्न्यां कौशाम्ब्यां तत्सुतां नये ॥ ९९ ॥
ततो वह्निं प्रवेक्ष्यामि ध्यायन्निति झगित्यसौ ।
अवधिं चेव्या यत् पुत्रं प्रसूता प्रियदर्शना ॥ १०० ॥
तोषदानं च दत्त्वाऽस्याः पल्लीशः कुलदेवताम् ।
चण्डसेनाऽभिधामेवमुपायाचत भक्तितः ॥ १०१ ॥
मासं यदि सपुत्राऽसौ स्वसा कुशलिनी मम ।
भविष्यति तदा दास्ये बलिं ते दशभिर्नरैः ॥ १०२ ॥
क्षेमेण च व्यतीतायां दिनानां पञ्चविंशतौ ।
आनेतुं बलियोग्यान् नॄन् स प्रैषीत् सर्वतो नरान् ॥१०३॥
इतश्च बन्धुदत्तोऽपि प्रियाविरहतो भ्रमन् ।
हिन्तालवनमासाद्याऽपश्यत् सप्तच्छदद्रुमम् ॥ १०४ ॥
मां विना क्षणमप्येकं न जीवेत् प्रियदर्शना ।
तन्म्रियेऽहमपीह स्वं तरावुद्बध्य सम्प्रति ॥ १०५ ॥
ध्यात्वेति तं द्रुमं यावत् सोऽभ्यगात् तावदग्रतः ।
सरस्तीरे ददर्शैकं हंसं हंसीवियोगिनम् ॥ १०६ ॥
दुःखितं तं सदुःखेऽस्मिन् पश्यत्येव क्षणादपि ।
राजहंसोऽमिलद् हंस्या पद्मच्छायानिलीनया ॥ १०७ ॥
तद् दृष्ट्वेभ्यसुतो दध्यौ संयोगो जीवतां पुनः ।
स्यादेव तत् पुरीं यामि स्वां निस्वो यामि वा कथम्?१०८
कौशाम्ब्यामपि नो युक्तं गमनं प्रियया विना ।
तदुपैमि विशालायां धनदत्तं स्वमातुलम् ॥ १०९ ॥
तस्माद् द्रव्यं गृहीत्वाऽहं दत्त्वा च शबरेशितुः ।
मोचयामि प्रियां पश्चाद् दास्येऽर्थं स्वपुरीं गतः ॥११०॥
ध्यात्वेति यान्[1] द्वितीयेऽह्नि प्राप्य स्थानं गिरिस्थलम् ।
विश्रान्तो यक्षगेहेऽसौ तत्रैकश्चाऽऽगतोऽध्वगः ॥ १११ ॥
पृष्ट्वा ज्ञात्वा विशालाया बन्धुदत्तस्तमागतम् ।

---

१ गच्छन् ।

मातुलस्य पुनः क्षेमं धनदत्तस्य पृष्टवान् ॥ ११२ ॥
पान्थः स्माऽऽह धने ग्रामं गते तस्याऽऽदिमः सुतः ।
क्रीडन् पत्न्या समं नाऽजीगणद् यान्तं पुरो नृपम् ॥११३॥
क्रुद्धोऽतस्तं नृपो गुप्तौ सकुटुम्बमपि न्यधात् ।
आगतो धनदत्तश्च दत्त्वा दण्डममोचयत् ॥ ११४ ॥
दण्डावशेषकोश्यर्थे धनदत्तः स्वसुः सुतम् ।
नागपुर्यां बन्धुदत्तमुद्दिश्य ह्योऽचलद् गृहात् ॥ ११५ ॥
तत् श्रुत्वाऽचिन्तयद् बन्धुरहो ! कष्टा विधेर्गतिः ।
यत्राऽऽशाऽजनि मे सोऽपि मातुलो हाऽभवत् कथम् ? ११६
भग्नाऽऽश इयता द्वेधाऽप्यहं दैव ! हतोऽभवम् ।
अधुना मत्समो दुःखी मन्ये नान्योऽस्ति भूतले ॥ ११७ ॥
अथवा
दिनमेकं शशी पूर्णः क्षीणस्तु बहुवासरान् ।
सुखाद् दुःखं सुराणामप्यधिकं का कथा नृणाम् ? ॥११८॥
तिष्ठाम्यत्रैव तत् तावन्मातुलस्य मिलाम्यहम् ।
नागपुर्यां यतोऽध्वाऽयं ध्यात्वैवं तत्र स स्थितः ॥११९॥
अथाऽऽगात् पञ्चभिर्घस्रैर्धनस्तत्र कियत्सखः ।
तस्मिंश्च व्यश्रमच्चैत्ये बन्धुदत्तोऽथ चाऽब्रवीत् ॥ १२० ॥
यूयमेताः कुतो गम्यं कुत्र वाऽथ धनोऽब्रवीत् ? ।
विशालाया इहाऽऽयाता यामो नागपुरीं पुरीम् ॥ १२१ ॥
बन्धुरूचेऽहमप्यस्मीत एता किन्तु तत्र वः ।
कोऽस्ति सोऽपि जगौ बन्धुदत्तो मेऽस्ति स्वसुः सुतः ? १२२
ज्ञात्वाऽप्येवं मातुलं तं बन्धुः स्वं त्वप्रकाशयन् ।
बन्धुर्मे मित्रमित्युक्त्वा तं तत्राऽस्थापयद् दिनम् ॥१२३॥
प्रातः शौचार्थमेकाकी बन्धुदत्तो गतो नदीम् ।
कदम्बगह्वरेऽपश्यद् रत्नच्छायाऽरुणां भुवम् ॥ १२४ ॥

---

१ एता आगता ।

तां खनन् रत्नालङ्कारपूर्णं ताम्रकरण्डकम् ।
स लेभे छन्नमादाय धनदत्तमुपेयिवान् ॥ १२५ ॥
स्वं प्रकाश्य स नत्वाऽऽख्यद् मया पान्थात् तवाऽखिला ।
लब्धा प्रवृत्तिस्त्वत्पुण्यैः करण्डोऽयं च गृह्यताम् ॥१२६॥
द्रव्येणाऽनेन मोच्यन्तां मानुषाणि नृपगृहात् ।
संभ्रमाद् धनदत्तोऽवक् हा ! कथं ते दशेदृशी ? ॥१२७॥
स्ववृत्ते बन्धुनाऽऽख्याते धनदत्तोऽभ्यधात् पुनः ।
वत्स ! प्राग् मोचयिष्यामि भिल्लेभ्यः प्रियदर्शनाम् ॥१२८॥
अत्राऽन्तरे भटा राज्ञोऽकस्मादेयुरुदायुधाः ।
पान्थांस्तत्रोषितान् सर्वान् दध्रुस्ते चौरशङ्कया ॥ १२९ ॥
धनदत्त-बन्धुदत्तौ भयाद् यक्षाऽऽलयाऽन्तिके ।
द्रव्यं क्षिपन्तौ तैर्दृष्टौ पृष्टौ च किमिदं न्विति ? ॥१३०॥
ऊचतुस्तौ निजं वित्तं स्थगन्तौ स्तो भयेन वः ।
सवित्तौ तावुपामात्यं भटैः पान्थाश्च निन्यिरे ॥ १३१ ॥
पान्थान् निरीक्ष्य मुक्त्वा च मन्त्री जामेय-मातुलौ ।
उवाच कौ युवां कस्य वित्तमस्ति करण्डके ? ॥ १३२ ॥
ताभ्यामूचे विशालायामावामिभ्यसुतावुभौ ।
प्रस्थितौ लाटदेशाय वित्तं नः पूर्वजार्जितम् ॥ १३३ ॥
किं किमस्तीति मे ब्रूतं मन्त्रिणेत्युदितौ पुनः ।
अभिज्ञानाऽनभिज्ञानाच्चक्रतुर्मौनमेव तौ ॥ १३४ ॥
मन्त्री स्वयमथोद्घाट्य करण्डं यावदैक्षत ।
ददर्श नृपनामाङ्कं तावद् रत्नविभूषणम् ॥ १३५ ॥
मन्त्री दध्याविदं नूनं मध्यात् प्राग्गतवस्तुनः ।
आजह्रतुरिमावन्यदपि तज् ज्ञास्यतोऽखिलम् ॥ १३६ ॥
ताडयित्वाऽथ तौ पृष्टौ वस्त्वन्यदपि कथ्यताम् ।
तावब्रूतां वयं नैव विद्मः किञ्चिदतः परम् ॥ १३७ ॥
मन्त्र्यथो नरकाऽऽकारकारायां तावुभौ न्यधात् ।

शेषादपि हि कर्मांशाच्छुट्यते न कथञ्चन ॥ १३८ ॥
षण्मासान्ते पुनः कोऽपि लिङ्गिवेषो विटो निशि ।
सधनः प्रापि बद्ध्वा चाऽऽरक्षकैर्मन्त्रिणोऽर्पितः ॥१३९॥
क्वेदृग् वित्तं परिव्राजां चौरोऽयमिति मन्त्रिणा ।
निर्णीय तद्वधाऽऽदिष्टा भटास्तं निन्यिरे बहिः ॥ १४० ॥
स जातानुशयो दध्यौ यद् वाक्यं नाऽन्यथा मुनेः ।
मृत एवाऽस्मि तल्लोकं सुखीकुर्वे हृताऽर्पणात् ॥ १४१ ॥
अब्रवीच्च स आरक्षान् चौरोऽहं मुषितं पुरम् ।
मयैव, विद्यते लोप्त्रं सर्वं गिरिवनादिषु ॥ १४२ ॥
तदर्पयत यद् यस्य निगृह्णीत ततश्च माम् ।
इति श्रुत्वा समस्तोऽपि जनोऽभूत् हृष्टविस्मितः ॥१४३॥
आरक्षा मन्त्रिणे चाऽऽख्यन् मन्त्री चौरोक्तभूमिषु ।
सर्वं ददर्श तद् द्रव्यं विनैकं तं करण्डकम् ॥ १४४ ॥
मन्त्र्यूचे तं परिव्राजं निर्भयो ब्रूहि किं तव ? ।
भद्रेदं चेष्टितं वेषविरुद्धं सोऽप्यभाषत ॥ १४५ ॥
श्रूयतां नगरे पुण्ड्रवर्धनेऽहं द्विजाङ्गजः ।
श्रीधराख्योऽन्यदाऽपश्यं चौरबुद्ध्या धृतान् नरान् ॥१४६॥
महादुष्टा विहन्यन्ताममी इत्यवदं ततः ।
अहहा ! कष्टमज्ञानमित्येको मुनिरूचिवान् ॥ १४७ ॥
मया नत्वा किमज्ञानमिति पृष्टो मुनिर्जगौ ? ।
यत् परस्याऽतिपीडाकृदसद्दोषाधिरोपणम् ॥ १४८ ॥
एते प्राक्कर्मणा क्लिष्टाः कथं दुष्टास्त्वयोदिताः ? ।
प्राक्कर्मफलशेषं हि लप्स्यसे त्वमपि ध्रुवम् ॥ १४९ ॥
प्राक्कर्मफलशेषं च मया पृष्टो मुनिर्जगौ ।
अस्त्यत्र भरते क्षेत्रे नगरं गर्जनाभिधम् ॥ १५० ॥
तत्र त्वं चन्द्रदेवाख्यो द्विजन्माऽभूः श्रुतैकभूः ।
योगात्मा नाम विख्यातस्तपस्व्येकश्च नैष्ठिकः ॥१५१॥

अथैका वीरमत्याख्या तत्रत्यश्रेष्ठिनः सुता ।
विधवा सिंहलाऽऽख्येन मालिकेन सहाऽगमत् ॥१५२॥
दैवात् तद्दिन एवाऽगाद् योगात्माऽप्यन्यतः क्वचित् ।
गता वीरमती क्वाऽपीत्यभूद् वार्ताऽखिले पुरे ॥१५३॥
त्वयोचे सा ययौ योगात्मना सार्धं न संशयः ।
तच्छ्रुत्वाऽभूज्जनो योगात्मनि धर्मेऽप्यनादरः ॥१५४॥
इत्थं निकाचितं कर्म कृत्वा मृत्वा क्रमादभूः ।
एडको जम्बुको वेश्यासुतस्तुर्ये भवे पुनः ॥ १५५ ॥
मुखरोगान्मृतः सर्वभवेष्वासीद् द्विजोऽधुना ।
अतस्ते कर्मणस्तस्य शेषमद्याऽपि तिष्ठति ॥ १५६ ॥
तन्निशम्य समुत्पन्नभिया सुगुरुसन्निधौ ।
मयैतज्जगृहे भद्र ! परिव्राजकदर्शनम् ॥ १५७ ॥
भक्तत्वान्मे गुरुः प्रान्ते ददौ विद्यां खगामिनीम् ।
तालोद्घाटनिकां चाऽपि यत्नान्मां चेत्यशिक्षयत् ॥१५८॥
इमे विद्ये त्वया धर्म-देहरक्षां विनाऽन्यतः ।
न प्रयोज्ये मृषावाक्यं वर्जनीयं च सर्वथा ॥ १५९ ॥
प्रमादाच्चेन्मृषोक्तं स्यान्नाभिदघ्ने तदाऽम्भसि ।
प्रविश्योर्ध्वभुजोऽष्टाग्रसहस्रं विद्ययोर्जपेः ॥ १६० ॥
सम्यग् दत्त्वेति मे शिक्षां परलोकं गतो गुरुः ।
पापोऽहं व्यसनासक्तस्तत् सर्वं चकराऽन्यथा ॥ १६१ ॥
श्वो दिने च वने स्त्रीभिः पृष्टो वैराग्यकारणम् ।
पत्नीमृत्युमभाषिषं प्रायश्चित्तं च न व्यधाम् ॥ १६२ ॥
कृत्वाऽद्य चौरिकां रात्रौ व्रजन्नारक्षकैरहम् ।
धृतः खगामिनीविद्या नास्फुरत् तत् कुरूचितम् ॥ १६३ ॥
मन्त्र्यूचे किं न सम्प्राप्त एको रत्नकरण्डकः ।
स स्माऽह दैवतो ज्ञात्वा पथिकः कोऽप्यपाहरत् ॥१६४ ॥

तत् श्रुत्वा तं परिव्राजं महात्मा सचिवोऽमुचत् ।
करण्डकहरौ तौ चाऽऽह्वास्त जामेय मातुलौ ॥ १६५ ॥
पृष्टौ तेनाऽभयं दत्त्वा यथाऽवस्थं शशंसतुः ।
अथ सत्याविमौ मत्वा नीतिज्ञो मन्त्र्यमुञ्चत ॥ १६६ ॥
ततस्तौ चलितौ स्वस्य मन्यमानौ नवं जनुः ।
प्राप्तौ च पथि पल्लीशनरैर्बालिनरेक्षिभिः ॥ १६७ ॥
धृत्वा पश्चाऽटवीदेव्याश्चण्डाया भवने च तौ ।
क्षिप्तौ बन्दिनृणां मध्ये, धृतानां वधहेतवे ॥ १६८ ॥
चण्डसेनोऽथ तत्राऽऽगात् सपुत्रां प्रियदर्शनाम् ।
आनाय्य बालमादाय देव्यै प्राऽणमयत् स्वयम् ॥१६९॥
देवीं रौद्रं च कर्मेदं द्रष्टुं नेयं क्षमेति सः ।
पल्लीशो बन्धुभार्याया नयने वाससाऽप्यधात् ॥१७०॥
समर्प्य देवीपूजार्थमेतस्या रक्तचन्दनम् ।
भिल्लैरानाययच्चैकं देव्या वृन्दनरं पुरः ॥ १७१ ॥
तैश्च दैववशाद् बन्धुदत्त एवोपढौकितः ।
कोशान्निस्त्रिंशमाकर्षन्निस्त्रिंशोऽथ स पल्लिराट् ॥ १७२ ॥
बन्धुपत्नी ततो दध्यौ हा ! कष्टं श्रावके कुले ।
जाताया अपि मे कार्ये हन्यन्ते इति पूरुषाः ॥ १७३ ॥
बन्धुरप्यागतां स्वस्य मृतिं ज्ञात्वा सुधीरधीः ।
परमेष्ठिनमस्कारोच्चारमारभत द्रुतम् ॥ १७४ ॥
निशम्य तद्ध्वनिं भर्तृशङ्कया प्रियदर्शना ।
दृशावुद्घाटयामास ददर्श च पतिं पुरः ॥ १७५ ॥
पल्लीशं च जगौ भ्रातः ! सत्यसन्धो भवानभूत् ।
मा शंसेथाः स एवाग्रे यत्तेऽयं भगिनीपतिः ॥ १७६ ॥
ततो हृष्टविषण्णोऽसौ पल्लीशो बन्धुपादयोः ।
पतित्वाऽऽख्यद् ममाऽज्ञानाऽपराधः क्षम्यतां विभो ! ॥१७७॥

१ आच्छादयामास ।

बन्धुदत्तः प्रियां वीक्ष्य मुदितस्तमभाषत ।
कोऽपराधस्तवाऽयं यः प्रियया माममेलयत् ? ॥१७८॥
इदं तु किं त्वयाऽऽरेभे वृत्तान्तं सोऽप्यचीकथत् ।
उपयाचितपर्यन्तं बन्धुदत्तस्ततोऽब्रवीत् ॥१७९॥
पुष्पाद्यैरेव पूज्यन्ते देवा जीववधैर्न तु ।
क्रव्यादा[1] एव क्रव्यादा[2] देवा देव्यस्तु नेदृशाः ॥१८०॥
हिंसामसत्यमन्यस्वं परस्त्रीमतिलोभताम् ।
वर्जयेरिति बन्धूक्तं स सर्वं प्रत्यपद्यत ॥ १८१ ॥
बन्धुदत्ताज्ञयाऽमुञ्चत् पल्लीशः सर्ववृन्दगान् ।
देव्यूचे पात्रगा चाऽर्च्या पुष्पाद्यैरस्म्यतः परम् ॥१८२॥
तत् श्रुत्वा बहवो भिल्ला बभूवुर्भद्रकास्तदा ।
प्रियदर्शनया पुत्रो बन्धुदत्तस्य चाऽर्पितः ॥१८३॥
आर्पयद् बन्धुदत्तोऽपि धनदत्ताय तं सुतम् ।
ममाऽयं मातुल इति निजपत्न्यै शशंस च ॥१८४॥
कृतनीरङ्गिका साऽपि श्वशुरं दूरतोऽनमत् ।
दत्ताशीः सोऽप्युवाचैवं सूनोर्नामाऽद्य युज्यते ॥१८५॥
बान्धवानामसौ जीवदानादानन्दको हि यत् ।
बान्धवानन्द इत्याख्यां पितरौ चक्रतुस्तयोः ॥१८६॥
सकुटुम्बं गृहे नीत्वा नीत्या बन्धुमभोजयत् ।
भिल्लेशस्तस्य लोप्त्रं च दन्तिमुक्तादि चाऽर्पयत् ॥१८७॥
बन्धुर्यथेप्सितं दत्त्वा प्रेष्य स्वौकसि मातुलम् ।
ससार्थश्चण्डसेनेनान्वितो नागपुरीमगात् ॥१८८॥
तत्राऽभ्येत्य नृपेणाऽसौ गजारूढः प्रवेशितः ।
पृष्टश्च नृपबन्धूनां स्वोदन्तं सर्वमाख्यत ॥१८९॥
तथा च जिनधर्मानुभावाऽद्वैतं तदाऽवदत् ।
यथाऽभूत् सङ्गतो बाढमपि स्याद्वादवादिनाम् ॥ १९० ॥

१ राक्षसा. । २ मांसाशिन. ।

बन्धोः स्वानुभवाऽऽख्यानाज्जिनधर्मे बहुर्जनः।
रक्तोऽभूदथ पल्लीशं सत्कृत्याऽसौ विसृष्टवान् ॥ १९१ ॥
सुखेन तस्थुषस्तत्र बन्धुदत्तस्य धर्मिणः।
द्वादशाब्दी व्यतिक्रान्ता शरत्कालोऽन्यदाऽभवत् ॥१९२॥
यत्र सन्मार्गगा नद्यो निर्मलाश्चाऽभवन् पुनः।
क्षीणे वित्ते यथा प्रायः पुंसां चित्तप्रवृत्तयः ॥१९३ ॥
सरो हृद्याम्बुजं जज्ञे गगनं स्पष्टतारकम्।
स्वच्छभावेन साधूनां यथा चित्तं लसद्गुणम् ॥ १९४ ॥
आसेन्दुर्भानुजं तापं विवेक इव मानजम्।
सुसङ्गतिरिवाऽभूद् भूः प्रशस्यफलशालिनी ॥ १९५ ॥
मयूरा मौनिनोऽभूवन् ज्ञाततत्त्वा इवर्षयः।
हंसाश्च स्पष्टतां भेजुर्घनान्ते धार्मिका इव ॥ १९५ ॥
सरसां नीरमर्कांशुशोष्यमाणं शनैस्तटम्।
तत्याज गृहिणां द्वन्द्वदग्धं चित्तं ममत्ववत् ॥ १९६॥
श्रीपार्श्वः समवासार्षीन्नागपुर्यां तदा बहिः।
तल्लोकं सुकृताऽस्तोकं स व्यधादुत्तमोत्तमम् ॥ १९७ ॥
महर्द्ध्या बन्धुदत्तोऽपि तत्र सप्रियदर्शनः।
गत्वा नत्वा प्रभुं श्रुत्वा देशनामिति पृष्टवान् ॥ १९८ ॥
केन मे कर्मणा स्वामिन्नूढमात्रा अपि प्रियाः
षण्मृता विरहश्चासीद् बन्दिता च कथं मम ?॥ १९९ ॥
स्वाम्याख्यदत्र विन्ध्याद्रौ हिंस्रात्मा शबरेश्वरः।
नाम्ना शिखरसेनोऽभूत् श्रीमत्याख्या च तत्प्रिया ॥२००॥
मार्गभ्रष्टोऽन्यदा साधुगच्छस्तत्राऽऽगतः स तम्।
दृष्ट्वैत्य कृपयाऽपृच्छद् यूयं भ्रमत किं न्विह ?॥ २०१ ॥
मार्गे भ्रष्टा वयमिति तैरुक्ते पतिमब्रवीत्।
श्रीमती भोजयित्वैतान् फलाद्यैर्लगयाऽध्वनि ॥ २०२ ॥

१ चिक्षेप।

तैरूचे वर्णगन्धादिरहितं नः फलादिकम् ।
चिरकालगृहीतं वा कल्पते नेतरत् पुनः ॥ २०३ ॥
ततोऽसौ तादृशैः कन्दादिभिस्तान् प्रत्यलाभयत् ।
निन्ये चाध्वन्यथो धर्मं नमस्कारं च तेऽदिशन् ॥ २०४ ॥
पक्षान्तर्दिन एकस्मिन् त्वया सावद्यमुज्झता ।
नमस्कारोऽयमेकान्ते स्मर्तव्य इति चादिशन् ॥ २०५ ॥
अन्यच्च यदि ते कोऽपि तदा द्रुह्येत् तथापि हि ।
मा कार्षीः कोपमेवं ते स्वर्गश्रीः खलु हस्तगा ॥ २०६ ॥
तथेति प्रतिपद्यैतत् कुर्वतस्तस्य चान्यदा ।
सिंहस्तत्र कुतोऽप्यागाद् भीता च श्रीमती भृशम् ॥२०७॥
मा भैषीरिति जल्पंश्च द्राग् भिल्लेशोऽग्रहीद् धनुः ।
श्रीमत्या स्मारितश्चासौ नियमं गुरुभाषितम् ॥ २०८ ॥
सहसा निश्चलः सोऽभूत् श्रीमती चाथ भक्षितौ ।
उभौ सिंहेन सौधर्मेऽभूतां पल्यायुषौ सुरौ ॥ २०९ ॥
च्युत्वा भिल्लो विदेहेषु चक्रपुर्यां महीभुजः ।
सुतः कुरुमृगाङ्कस्याभूच्छबरो मृगाङ्ककः ॥ २१० ॥
कुरुमृगाङ्कश्यालस्याऽभूत् सुभूषणभूपतेः ।
सुता वसन्तसेनाऽऽख्या श्रीमत्यपि दिवश्च्युता ॥ २११ ॥
यौवनेऽथ तयो रागं मिथो रूप-गुणश्रुतेः ।
जातं ज्ञात्वा पितृभ्यां तावन्योन्यं परिणायितौ ॥ २१२ ॥
कृतकृत्योऽथ शबरमृगाङ्कस्य पिता वने ।
तापसोऽभूत् क्षमाधारः कुमारस्तु स्वयं नृपः ॥ २१३ ॥
लीनात्मा सोऽभवत् पत्नीरूपे सद्गुणशालिनि ।
सद्रत्नखचितस्वर्णालङ्कार इव हारिणि ॥ २१४ ॥
तिर्यग्वियोजनं तस्य कर्म भिल्लभवोद्भवम् ।
तदानीमुदगात् तेन यज्जातं तन्निशम्यताम् ॥ २१५ ॥
तत्राऽऽसीद् वर्धनो नाम राजा जयपुरे बली ।

निर्हेतुक्रुद्धः शबरमृगाङ्कं सोऽवदद् नरैः ॥ २१६ ॥
वसन्तसेनां मे यच्छ मन्यस्वाऽऽज्ञां ममेयता ।
भुङ्क्ष्व राज्यसुखं नो वा युद्धाय प्रगुणो भव ॥ २१७ ॥
श्रुत्वैवं सोऽत्यमर्षेण ससैन्यो निरगाद् युधि ।
तदा च वर्धनो राजा जितो नंष्ट्वा ययौ क्वचित् ॥२१८॥
तप्तसंज्ञेन राज्ञाऽथ योधयित्वा निशुम्भितः[1] ।
रौद्रध्यानवशात् षष्ठं मृगाङ्को नरकं ययौ ॥ २१९ ॥
अग्निं वसन्तसेनाऽपि प्रविश्य सहसा मृता ।
तत्रैवोत्पद्य नरके पतिमार्गाऽनुगाऽभवत् ॥ २२० ॥
उद्वृत्य पुष्करद्वीपे भरते रौरगेहयोः ।
पुत्र-पुत्र्यावजायेतां परिणीतौ च तौ मिथः ॥२२१॥
ताभ्यां च स्वगृहस्थाभ्यां साध्व्यो ददृशिरेऽन्यदा ।
उत्थाय भक्त्याऽन्नपानैः प्रत्यलाभन्त चाऽऽदरात् ॥२२२॥
पृष्ट्वा च बालचन्द्राया गणिन्यास्तौ प्रतिश्रये[2] ।
अपराह्णे गतौ धर्मं शृणुतः स्म च तन्मुखात् ॥ २२३ ॥
गृहिधर्मं प्रपद्याऽन्ते ब्रह्मलोकं गतावुभौ ।
ततश्च्युताविमौ जातौ युवामिभ्यसुताविह ॥ २२४ ॥
ततो भिल्लभवे तिर्यग्वियोगो यः कृतस्त्वया ।
अन्वमोद्यनया चासीत् तत्पाकाद् दुःखमीदृशम् ॥२२५॥
बन्धुदत्तस्ततः स्माह नाऽन्यो धन्योऽस्ति मत्समः ।
येनाप्तोऽसि विभो ! जन्मकोटिदुर्लभदर्शनः ॥ २२६ ॥
तव प्रभावतः स्वामिन्नेवमात्मानमुच्चकैः ।
श्लाघमानोऽपि नो दोषं प्रत्युताऽहं गुणं लभे ॥ २२७ ॥
तमोवृतस्य मे स्वामिन्नघे व्यक्तीकृते त्वया ।
दीपेनेवोरगे जातं यातं चाऽद्याऽखिलं भयम् ॥२२८॥
इदानीमिह मे नाथ ! यत् कर्तव्यं तदादिश ।

---

१ मारित ।   २ उपाश्रये ।

तेनेति श्रद्धया नत्वा विज्ञप्तः प्रभुरादिशत् ॥ २२९ ॥
ऐहिका-ऽमुष्मिकं सौख्यमिच्छता भविना सदा ।
कर्तव्यः साधुसंसर्गः परिहार्या कुसङ्गतिः ॥२३०॥
न लङ्घनीयमौचित्यं मान्यः सेव्यश्च सद्गुरुः ।
प्रवर्तितव्यं दानादौ चिन्तनीया तथाऽऽयतिः ॥२३१॥
विक्षेपः परिहर्तव्यः प्रक्रम्यं योगसिद्धये ।
नित्यमन्तर्मुखैर्भाव्यं भाव्या वैराग्यभावना ॥ २३२ ॥
कार्यो मङ्गलजापश्च गर्हणीयं स्वदुष्कृतम् ।
चतुःशरणमाराध्यं कार्यं पुण्यानुमोदनम् ॥ २३३ ॥
यतितव्यं परे ज्ञाने विचिन्त्यं सन्निदर्शनम् ।
श्रोतव्यं धर्मशास्त्रं च भावनीयं प्रयत्नतः ॥ २३४ ॥
यतः सद्धर्मशास्त्रस्य पदमात्रमपि श्रुतम् ।
महारसायनं जन्तोः श्रीगुप्तोऽत्र निदर्शनम् ॥ २३५ ॥
तथाहि—
अस्त्यत्र भरते नाम्ना वैजयन्ती पुरी वरा ।
तत्र राजा नलो न्यायवल्लीविस्तारमण्डपः ॥ २३६ ॥
तस्य प्रसादवित्तोऽस्ति सार्थवाहो महीधरः ।
अशेषव्यसनाऽऽसक्तः श्रीगुप्तो नाम तत्सुतः ॥ २३७ ॥
पुत्रीयाऽनर्थसन्तप्तः सार्थवाहोऽन्यदा ययौ ।
आगामिदोषरोधार्थं द्वाःस्थ[1]मुक्तो नृपान्तिकम् ॥ २३८ ॥
सगौरवं स भूपेनाऽऽलाप्य पृष्टः प्रयोजनम् ।
अधोवीक्ष्य सनिःश्वासं जगाद भयदीनवाक् ॥ २३९ ॥
उत्पन्नं दुःखमन्यस्मात् सुखेनाऽऽख्यायते विभो ! ।
शक्यते स्वसमुत्थं तु नाऽऽख्यातुं नैव गोपितुम् ॥ २४० ॥
राज्ञैकान्ते ततो दत्ते विश्रब्धं स व्यजिज्ञपत् ।
स्वामिन् ! कुलकलङ्कोऽस्ति श्रीगुप्तो नाम मे सुतः ॥२४१॥

१ द्वाःस्थो द्वारपाल. ।

द्यूतादिव्यसनैस्तेन ममाऽर्थः पूर्वसञ्चितः ।
क्षपितो वारितोऽप्युच्चैः कुसङ्गान्न निवर्तते ॥ २४२ ॥
यतः प्रभुरपि च्छेत्तुं स्वाङ्गजं दोषमक्षमः ।
न मेघो विद्युतं विध्यायपत्यौर्वं न चाऽम्बुधिः ॥२४३॥
किञ्च—
गुणो दुष्प्रकृतेर्न स्यादन्वयात् सङ्गतोऽपि वा ।
दहेच्चन्दनजोऽप्यग्निर्गन्धाऽऽढ्या[1] लशुने वृथा ॥२४२॥
द्यूतकारगृहात् स स्वं मोचयित्वा कथञ्चन ।
सोमश्रेष्ठिगृहे खात्रं दत्त्वा सर्वस्वमग्रहीत् ॥ १४५ ॥
तदिष्टदासिकावक्त्रादिदं ज्ञात्वा भयादहम् ।
अत्रायातस्ततः सर्वं गृह्यतां मे पराधिनः २४६ ॥
यतः—
चौरश्चौरार्पको मन्त्री भेदज्ञः काणकक्रयी ।
अन्नदः स्थानदश्चैव चौरः सप्तविधः स्मृतः ॥ २४७ ॥
विश्रब्धो भव सार्थेश ! मदाऽऽयत्तं धनं तव ।
धीरयित्वेति भूपेन सन्मान्य च व्यसर्जि सः २४८ ॥
अन्याय इति पूत्कुर्वन् अथाऽऽगात् तत्र पूर्जनः ।
नृपेणाऽऽकार्य पृष्टोऽसौ चौर्योदन्तं व्यजिज्ञपत् ॥ २४९ ॥
पुनः पृष्टं नृपेणाऽहो ! कियत्सङ्ख्यं गतं धनम् ।
पौरैः स्वर्णसहस्राणां कथिता पञ्चविंशतिः ॥ २५० ॥
प्रदाप्य तन्नृपः कोशाद् विससर्ज पुरीजनम् ।
क्षणं निर्भर्त्स्य चाऽऽरक्षमथ श्रीगुप्तमाह्वयत् ॥ २५१ ॥
तमधिक्षिप्य राज्ञोक्तं रे ! हृतं स्वर्णमर्पय ।
स ऊचे किं विभो ! राजा प्राह यन्मुषितं निशि ॥२५२॥
तेनोक्तं किं कुलेऽस्माकं कदाप्येवं विधीयते ? ।
राजाऽपि कुपितः प्राह तर्हि दिव्यं कुरुष्व भोः ! ॥२५३॥

१ पीतयूथिका ।

स उवाच भवत्वेवं स्थाता शिरसि कः पुनः ? ।
स्थास्येऽहमिति जल्पित्वाऽऽदिशत् कारणिकान् नृपः ॥२५
विधिनाऽथ मिलित्वा ते तत्करे फालमक्षिपन् ।
सिद्धमन्त्रं पुरा लब्धं दिव्यस्तम्भाय सोऽस्मरत् ॥२५५॥
तस्याऽनुभावतः स्वल्पमपि स्पृष्टो न वह्निना ।
पतिताः शुद्धतालाश्च नृपः कृष्णमुखोऽजनि ॥ २५६ ॥
दध्यौ च दिव्यकृच्छुद्धौ शिरःस्थो दण्ड्यते नृपैः ।
शिरःप्रतिज्ञां तत् कृत्वाऽधुना किं जीवितेन मे ? ॥२५७॥
इति मर्तुमना भूपः सर्वानाकार्य मन्त्रिणः ।
आदिशद् यदहो ! शुद्धः श्रीगुप्तो दिव्यतः स्फुटम् ॥२५८
अहं तु शिरसि स्थित्वा जातोऽलीकस्तदात्मनि ।
चौरदण्डं करिष्येऽद्य राज्ये कार्यं यथोचितम् ॥ २५९ ॥
अश्रोतव्यमिदं नाथ ! किं वयं श्राविता इति ।
उक्त्वा तैर्युक्तिभिर्बाढं बोधितोऽपि न बुध्यते ॥ २६० ॥
तत् श्रुत्वा सार्थवाहोऽपि झगित्यागत्य पार्थिवम् ।
उवाच किमिदं स्वामिन्नारब्धं विश्ववैशसम् ॥ २६१ ॥
विकल्पः को पि यद्यास्ते तन्ममैवेदमादिश ।
हेतुर्यदहमेवास्मिन्नर्थे दण्डोऽस्तु मे ततः ॥ २६२ ॥
राज्ञोचे भद्र ! मा खेदं कार्षीः पुनरिदं वद ।
यन्ममाग्रे त्वयाऽऽख्यायि तत् सत्यमथ संशयः ? ॥२६३॥
महीधरोऽवदन्नाथ ! किमलीकं पुरस्तव ।
कथ्यते सत्यमेवेदं प्रलयेऽप्यन्यथा नहि ? ॥ २६४ ॥
तत् श्रुत्वा मन्त्रिणः प्राहुर्यद्येवं तर्हि स ध्रुवम् ।
मन्त्रेणाऽस्तम्भयद् वह्निं दिव्या दिव्यस्य वा गतिः ॥२६५॥
तदद्य कुशली नामाऽस्त्यागतो दिव्यमान्त्रिकः ।
तं पार्श्वीकृत्य श्रीगुप्तोऽग्निदिव्यं कार्यतां पुनः ॥ २६६ ॥

---

१ दिव्यपरीक्षकान् ।

राज्ञा तथाकृते तस्य हतशक्तेः करद्वयम् ।
अदह्यत नृपस्योच्चैर्जयध्वनिरुदच्छलत् ॥ २६७ ॥
विविधाः सर्वतस्तत्र प्रवृत्ता मङ्गलोत्सवाः ।
श्रीगुप्तोऽपि तदा पृष्टः सर्वमाख्यद् यथातथम् ॥ २६८ ॥
लज्जया सार्थवाहस्य जीवन् मुक्तः स भूभुजा ।
देशान्निष्कासितो भ्राम्यन् ययौ गजपुरं क्रमात् ॥२६९॥
भवितव्यवशात् तत्र दृष्ट्वा कुशलमान्त्रिकम् ।
क्रुद्धो दध्यावरे ! सोऽयमकारणरिपुर्मम ॥ २७० ॥
ततः खड्गेन कुशलं हत्वा कुर्वन् पलायनम् ।
स धृत्वाऽऽरक्षकैस्तत्राऽर्पितः कारणिकेशितुः ॥ २७१॥
तेनाऽऽदिष्टो वधायाऽसौ नीत्वाऽऽरक्षनरैर्बहिः ।
श्रीगुप्तः कम्पमानाङ्गः शाखायां लम्बितस्तरोः ॥२७२॥
स्वस्थानं ते नरा जग्मुः कण्ठपाशार्दितः स तु ।
भ्रमिते रोदसी पश्यन् कामप्याप क्षणं दशाम् ॥२७३॥
भारेण त्रुटिते पाशे श्रीगुप्तः पतितो भुवि ।
शीतवातेन चैतन्यं प्राप्य भीत्या पलायितः ॥२७४॥
गच्छन् वननिकुञ्जेऽसौ प्रविष्टो मधुरध्वनिम् ।
शृण्वंस्तत्र ददर्शैकं मुनिं स्वाध्यायतत्परम् ॥२७५॥
तं पठन्तं भिया वृक्षाऽन्तरितीभूय सोऽशृणोत् ।
तदा चेत्यपठत् साधुर्जगद्वृत्तं विभावयन् ॥२७६॥
आस्तामन्यजनो हन्त ! स्वीयः स्वात्माऽपि नो भवेत् ।
एष दुःखावहं पापं करोति कथमन्यथा ? ॥ २७७ ॥
किंवा—
सत्यशौचपरा धीराः सद्देव-गुरुमानिनः ।
पूर्णकामा गुणैर्पूज्याः पुण्यैः पुण्यानुबन्धिभिः ॥ २७८ ॥
कूपस्य खनको यद्वद् धूलीभिर्मलिनीकृतम् ।
क्षालयेत् तज्जलेनाऽङ्गं तथैव पुरुषो यदा ॥ २७९ ॥

धर्मस्थानविधानाद्याऽऽरम्भजं मलमात्मनः ।
छिन्द्यात् तदुत्थपुण्येन पापं पुण्यानुबन्धि तत् ॥ २८० ॥
विद्या-रूप-बलैश्वर्याऽभिमानः सुखिनाः पुनः ।
अन्यायनिरताः स्वैराः स्युः पुण्यैः पातकोत्तरैः ॥२८१॥
जन्तुघातकराः क्रूरा दोषैकनिधयोऽधमाः ।
जायन्ते दुःखिता नित्यं पापैः पापोत्तरैर्नराः ॥ २८२ ॥
पुण्य-पापचतुर्भङ्गीमिति ज्ञात्वा विपश्चितः ।
आद्यभेदद्वये सक्ता विरतिं कुर्वते परे ॥ २८३ ॥
यदि मोक्षफलं काले भविता धर्मशाखिनः ।
सिक्तस्तथापि संसारसौख्यच्छायां करोत्यसौ ॥ २८४ ॥
अतः सिञ्चन्ति तं पुण्यक्रियानीरेण पण्डिताः ।
अनाचारकुठारेण पुनश्छिन्दन्ति बालिशाः ॥ २८५ ॥
पठ्यमानमिदं श्रुत्वा श्रीगुप्तो हृद्यचिन्तयत् ।
अहो ! सुपठितं साधोरमुमेवाऽऽश्रये ततः ॥ २८६ ॥
किंवा काऽपि न विश्वासो युज्यते मादृशां खलु ।
ततो यामीति निश्चित्य वनमध्येन सोऽचलत् ॥ २८७ ॥
कियद्भूमिं गतो यावत् तावदस्तमितो रविः ।
ततोऽसौ वटवृक्षस्य शाखामारुह्य सुप्तवान् ॥ २८८ ॥
रात्रेराद्ये गते यामे तत्रैव वटकोटरे ।
आगादेकः शुको दक्षः शुक्या चाऽभ्युत्थितो मुदा॥२८९॥
पृष्टश्च किं प्रियाऽद्याऽभूदियद् विक्षेपकारणम् ।
स ऊचे किं तवाऽकथ्यं प्रिये ! तत् तन्मनाः शृणु ?॥२९०॥
अद्य रेवानदीतीरे केदारे शालितण्डुलान् ।
सुगन्धानहमाकण्ठं भक्षयित्वा निवृत्तवान् ॥२९१ ॥
श्रमान्नानावनच्छन्ने विश्रान्तोऽशोकपादपे ।
धर्मं दिशन्तमद्राक्षं मुनिं विद्याधरं प्रति ॥ २९२ ॥
प्रतिबुद्धेन तेनाऽसौ पृष्टः प्राच्यभवं मुनिः ।

यथाऽवस्थितमाचख्यौ ततो मेऽजनि कौतुकम् ॥ २९३ ॥
अशोकादवतीर्याऽऽशु तदधःस्थं मुनीश्वरम् ।
भक्त्या ननाम तेनाऽपि स्पृष्टोऽहं मृदु पाणिना ॥ २९४॥
ततो मयाऽतिहृष्टेन पृष्टः प्राच्यभवं निजम् ।
मुनिरूचे भव्यजीवः श्रावस्त्यां त्वं पुराऽभवः ॥ २९५ ॥
व्रतमादाय वैराग्यात् समायं[1] च विधाय तत् ।
विपद्य व्यन्तरो भूत्वा शुको जातोऽसि सम्प्रति ॥ २९६॥
तत् श्रुत्वा पृष्टवान् जातजातिस्मृतिरहं मुनिम् ।
नाऽधुनाऽहं प्रभो ! योग्यस्त्वत्सेवाया व्रतस्य च ॥२९७॥
ततः कृत्वा प्रसादं मे तत् तीर्थं किञ्चिदादिश ।
यत्र गत्वा निजं कायं व्युत्सृजामि समाधिना ॥२९८॥
साधुः प्राहाऽपरं तीर्थं शत्रुञ्जयसमं नहि ।
सिद्धाः श्रीपुण्डरीकाद्याः साधवो यत्र कोटिशः ॥२९९॥
यदध्यासितमर्हद्भिरसंख्यातैर्मुनीश्वरैः ।
सिद्धानां विदधे यत्र महिमाऽनेकशः सुरैः ॥३००॥
(युग्मम्)

युगादिजिनसंपर्कात् नवरं स गिरिष्वयम् ।
विमलाऽऽख्यां दधौ कुर्याद् विमलं जगदप्यसौ ॥३०१॥
तत्र दानं तपो ध्यानं तन्वपि श्रद्धया कृतम् ।
स्यात् कालकरणं[2] चाऽपि विशिष्टफलसाधकम् ॥३०२॥
एवमेव मृताः प्रायो यत्र शत्रुञ्जयेऽङ्गिनः ।
गच्छन्ति सुगतिं तस्य माहात्म्यं किमु वर्ण्यते ? ॥३०३॥
मयोक्तं तर्हि तत्रैव तीर्थेऽनशनमाश्रये ।
मुनिर्जगाद निर्विघ्नं वाञ्छितं तव सिध्यतु ॥३०४॥
ततो मया भवेऽन्यस्मिन् इहाऽपि तव विप्रियम् ।
यत् कृतं तस्य मिथ्या दुष्कृतं दातुमिहाऽऽगमम् ॥३०५॥

---

१ सकपटम् । २ मरणम् ।

तन्निशम्य वटाधस्थः श्रीगुप्तोऽचिन्तयद् ध्रुवम् ।
स एवाऽसौ मुनिः पूर्वं यो दृष्टः सुपठन् मया ॥३०६॥
जगाद च शुकं धन्यो भवान् भद्रेति यो मुनिम् ।
सिषेवेऽहमधन्यस्तु यस्तं दृष्ट्वा नतोऽपि न ॥३०७॥
किं वाऽतीतस्य शोकेन शुकराज ! त्वमेव मे ।
अधुना गुरुरादेशं देहि धर्मविधौ बुध ! ॥३०८॥
तस्याऽथ तत्त्वं सद्देव-गुरु-धर्मगतं शुकः ।
आख्याय क्षमयित्वा च ययौ शत्रुञ्जयाचलम् ॥३०९॥
इतश्च पुत्रदुःखेन सार्थवाहो महीधरः ।
वणिज्यामिषतः पुत्रान्वेषी देशान्तरं ययौ ॥३१०॥
स्थाने स्थाने स तच्छुद्धिं कुर्वस्तत्राऽऽगतः पुरे ।
अकस्माच्च तदाऽपश्यन्निर्गच्छन्तं वनात् सुतम् ॥३११॥
श्रीगुप्तं वीक्ष्य संजातपुलकाङ्गो महीधरः ।
आकार्याऽऽलिङ्गितं स्नेहादूचे वत्स ! कुतो भवान् ? ॥३१२॥
तेनाऽपि रुदता सर्ववृत्तान्ते कथिते पिता ।
उवाच पुत्र ! दीक्षायाः कोऽधुना समयो मम ? ॥३१३॥
किन्तु त्वां वीक्षितुं गेहाद् निर्गतोऽहं ततोऽधुना ।
सफलो मे श्रमो जज्ञे दृष्टोऽसि त्वं यदक्षतः[1] ॥३१४॥
तथा कथमपीदानीं वर्तितव्यं त्वया यथा ।
आद्यो भवसि साधूनां याति वंशः समुन्नतिम् ॥ ३१५ ॥
श्रीगुप्तोऽपि रुदन्नाह किं तात ! बहुना मयि ।
अद्यप्रभृत्यविश्वासः क्वाऽपि कार्यो नहि त्वया ॥ ३१६ ॥
ततः पुत्रं सहाऽऽदाय सार्थेशः स्वपुरं ययौ ।
राज्ञः श्रीगुप्तवृत्तान्तः शिष्टो हृष्टश्च पार्थिवः ॥ ३१७ ॥
श्रीगुप्तोऽपि तदारभ्य शुकवाक्यं हृदि स्मरन् ।
जिनधर्मे तथा सक्तो यथा सत्सु धुरि स्थितः ॥ ३१८ ॥

१ प्रत्यक्षेण ।

निशामुखेऽन्यदा तस्य सामायिकमुपेयुषः।
कृतोद्द्योतः सुरोऽकस्मादेत्य नत्वेदमब्रवीत् ॥ ३१९ ॥
अहो ! श्रीगुप्त ! ते धर्मकृत्यं निर्वहते सुखम् ?।
स ऊचे गुरु-देवानां प्रसादेन शुकस्य च ॥ ३२० ॥
शुकः क इति देवेन पृष्टे श्रीगुप्त ऊचिवान्।
शुकोपकारवृत्तान्तं, ततस्तुष्टः सुरोऽवदत् ॥ ३२१ ॥
स एवाऽहं शुकः शत्रुञ्जयाऽद्रावशनोज्झनात्।
मृत्वा सनत्कुमाराऽऽख्ये कल्पे जातो महान् सुरः ॥३२२॥
साम्प्रतं ते स्थिरीकर्तुं धर्मं कार्यान्तरं च भोः !।
आख्यातुमागतोऽस्मीह तदाकर्णय बान्धव ! ॥ ३२३ ॥
सप्तमे दिवसे तेऽद्यदिनाद् मृत्युर्भविष्यति।
तद् धर्मः सम्यगाराध्य इत्युक्त्वाऽगात् सुरो दिवम्॥३२४॥
श्रीगुप्तोऽपि सपद्येव जिनाऽऽयतनपूजनम्।
क्षामणां सर्वसत्त्वेषु कृत्वाऽन्ते व्रतमग्रहीत् ॥ ३२५ ॥
विहिताऽनशनः पञ्चनमस्कारपरायणः।
विपद्यागाद् दिवं सिद्धिमपि यास्यति स क्रमात् ॥३२६॥
इत्थमेषोऽतिदुष्टोऽपि धर्मवाक्यश्रुतेः क्षणात्।
शशाम तप्ततैलं वा जात्यचन्दनबिन्दुतः ॥ ३२७ ॥
श्रुत्वा धर्मं विजानाति श्रुत्वा त्यजति दुर्मतिम्।
श्रुत्वा सिद्धिमवाप्नोति शास्त्रं श्रव्यमतः सदा ॥३२८॥
किञ्च,
शास्त्रं श्रुत्वा पठित्वाऽपि भृशं सूक्ष्मविचारणम्।
जानाति यदि कोऽप्येको वृद्धापुत्राऽऽगमज्ञवत् ॥३२९॥
तथाहि—
पुरे काऽपि पुरा छात्रौ द्वौ सहाऽध्यायिनौ नदीम्।
गतौ तीरे श्रियं तस्याः पश्यन्तावूर्ध्वतः स्थितौ ॥३३०॥
अथैका स्थविरा शीर्षे न्यस्य नीरभृतं घटम्।

नद्या वलन्त्यदर्शत् तौ सुमूर्तौ पुस्तिकाकरौ ॥ ३३१ ॥
साऽतिहृष्टा ततोऽपृच्छद् दत्त्वाऽऽशीस्तत्पुरः स्थिता ।
देशान्तरगतस्याऽऽत्मपुत्रस्य कुशलाऽऽगमम् ॥३३२॥
पुत्रस्मृतिभवाद् दुःखाद्‌थाऽस्या वार्द्धकादपि ।
कम्पिताङ्ग्या घटो मूर्ध्नः पतित्वाऽभज्यत क्षितौ ॥३३३॥
तद् दृष्ट्वा सहसा स्थूलमतिरेकस्तयोर्जगौ ।
जानेऽहं घटभङ्गेन वृद्धे ! तव सुतो मृतः ॥ ३३४ ॥
द्वितीयस्त्वाह मा भ्रातरेवमाकस्मिकं वद ।
हे ! मातः सत्वरं गच्छ पुत्रस्ते गृहमागतः ॥ ३३५ ॥
मृतप्रत्युज्जीवितेव सा यावत् सदनं ययौ ।
निविष्टोऽस्ति पुरस्तावदुद्धूलितपदः सुतः ॥ ३३६ ॥
ततो हर्षोत्सुका वृद्धा ययौ विद्यामठं गुरोः ।
पुरश्चोपायनं मुक्त्वा तत् स्वरूपं न्यवेदयत् ॥ ३३७ ॥
उपाध्यायोऽपि तं ज्ञात्वाऽपृच्छद् वत्स ! कथं त्वया ।
घटभङ्गापशकुनात् कथितोऽस्याः सुताऽऽगमः ? ॥ ३३८ ॥
शिष्योऽसौ लज्जितः स्माऽऽह प्रभो ! युष्मत्प्रसादतः ।
उपाध्यायेन भूयोऽपि स्पष्टं पृष्टोऽथ सोऽवदत् ॥ ३३९ ॥
मयेत्यनुमितं तावद् घटभङ्गाद् यथाऽमिलत्[1] ।
मृत्स्ना भूमेर्जलं नद्यास्तथाऽस्या मिलितः सुतः ॥ २४० ॥
ततो हृष्टो गुरुर्बाढमालिङ्ग्य प्रशशंस तम् ।
अहो ! कुशाग्रसादृश्या मतिरस्य लघोरपि ॥ ३४१ ॥
भद्र ! ज्ञात्वा त्वयाऽप्येवं सूक्ष्मतत्त्वविचारणा ।
गम्भीरमतिना कार्या यथा स्याः महतां गुरुः ॥ ३४२ ॥
बन्धुदत्त इति श्रुत्वा दध्यावेवंविधं श्रुतम् ।
नित्यं प्रभुपदोपास्तिं विना न स्याद् महागुणम् ॥३४३॥

१ क्रियापदम् ।

यतः—

महान् भेदः सरस्तीरतरोर्वनतरोरपि ।
इति व्रतमना बन्धुर्नत्वाऽपृच्छत् पुनर्विभुम् ॥ ३४४ ॥
अतो नाथ ! क्व यास्यावः कियांश्च भव आवयोः ।
स्वाम्याचख्यौ युवां मृत्वा सहस्रारे व्रजिष्यथः ॥ ३४५ ॥
च्युत्वा चक्री विदेहे त्वं भावी ते च महिष्यसौ ।
भुक्तभोगौ परिव्रज्य ततः सिद्धिं प्रयास्यथः ॥ ३४६॥
तत् श्रुत्वाऽऽसन्नमोक्षत्वादुच्छन्नविषयस्पृहः ।
बन्धुदत्तः सपत्नीकस्तदैव व्रतमाददे ॥ ३४७ ॥
बाह्यं भवाय मोक्षायाऽभ्यन्तरं पुनरित्यसौ ।
बाह्यं मुक्त्वाऽऽश्रितो धर्ममन्तरङ्गकुटुम्बकम् ॥ ३४८ ॥
श्रुताऽभ्यासः पिता यत्र जिनभक्तिर्जनन्यथ ।
विवेकः सोदरो जामिः सुमतिर्दयिता क्षमा ॥ ३४९ ॥
विनयस्तनयो मित्रं संतोषो भवनं शमः ।
बन्धवस्तु गुणाः शेषाः कुटुम्बमिदमान्तरम् ॥ ३५० ॥
अनेन च कुटुम्बेन सदा सन्निहितेन सः ।
निर्वृतात्मा सुखं चारु चारित्रं निरवाहयत् ॥ ३५१ ॥
यत्र रागान्धता धूमः शिखी द्वेषः क्षमा मरुत् ।
धूर्ता वैधर्मिकाः खिङ्गा नास्तिकस्तुमलः कलिः ॥ ३५२॥
प्रदीपने भवाऽऽख्येऽस्मिन्नज्ञाङ्गाः सङ्गिपङ्गवः ।
दह्यन्ते निःसरन्त्येव ये पुनश्चरणक्षमाः ॥ ३५३ ॥
(युग्मम्)

यो हिल्लराभिधे ग्रामेऽशोकाख्यो मालिकोऽजनि ।
आरोप्य नवपुष्पाणि श्रिया चटद्भवोऽभवत् ॥ ३५४ ॥

तथाहि—

द्रम्माणां नवलक्षाणि कोटयोऽस्य तथाऽभवन् ।
एवं स्वर्णस्य रत्नानामित्यभूत् सप्तमो भवः ॥ ३५५ ॥

अष्टमे तु नवग्रामलक्षेशः स भवेऽभवत् ।
क्रमेण नवमे जातो राजा नवनिधीश्वरः ॥ ३५६ ॥
सोऽप्यन्येद्युः प्रभोरन्ते श्रुत्वा प्राग्भवं निजम् ।
प्रव्रज्य नवमं तत्त्वं मोक्षाख्यं नवमं व्यधात् ॥ ३५७ ॥
( कलापकम् )
एवं विहरतो भर्तुः सहस्राः षोडशर्षयः ।
अष्टात्रिंशत् सहस्राणि साध्वीनां तु महात्मनाम् ॥३५८॥
श्रावकाणां लक्षमेकं चतुःषष्टिसहस्रयुक् ।
त्रिलक्षी श्राविकाणां तु सहस्राः सप्तविंशतिः ॥ ३५९ ॥
शतत्रयी सपञ्चाशत् श्रीचतुर्दशपूर्विणाम् ।
अवधिज्ञानिसाधूनां चतुर्दशशतानि तु ॥ ३६० ॥
मनोविदां सप्तशती सार्धा केवलिनां पुनः ।
सहस्रं वैक्रियलब्धिमतां त्वेकशतोत्तरम् ॥ ३६१ ॥
संपन्नवादलब्धीनां षट्शतानि महात्मनाम् ।
परिवारः समभवत् केवलज्ञानवासरात् ॥ ३६२ ॥
ज्ञात्वा निर्वाणमासन्नं सम्मेताद्रिं ययौ विभुः ।
योऽजिताद्यर्हतां सिद्धिस्थानभावादिवोन्नतः ॥ ३६३ ॥
इतश्च खलु यन्मूर्ध्नि च्छत्रं भूभृत्सु राजते ।
वातान्दोलितनानाद्रुपुष्पोद्भूतरजश्छलात् ॥ ३६४ ॥
उत्पताक इवोद्दण्डचण्डधामोपलांशुभिः ।
यो यश्च निर्झराम्भोभिः कृतस्नानादिवोज्ज्वलः ॥३६५॥
किंनरीगीतिभिः साधुस्वाध्यायध्वनिना च यः ।
धत्ते रागं विरागं च सुदुर्भेद्यहृदामपि ॥ ३६६ ॥
मदमत्ता रतासक्ता यक्षिण्यो विरताऽऽमदाः ।
मुनयश्च सुखं सन्तो यस्यान्तः ख्यान्ति गौरवम् ॥३६७॥
मोक्षपद्यामिवाऽऽरुह्य तं गिरिं त्रिजगद्गुरुः ।
त्रयस्त्रिंशन्मुनियुतः सन्न्यासं मासिकं व्यधात् ॥ ३६८ ॥

श्रावणस्य सिताष्टम्यां विशाखायां स वासरे ।
बादरौ चित्त-वाग्योगौ काययोगस्थितोऽरुधत् ॥ ३७० ॥
सूक्ष्मेण काययोगेन काययोगं च बादरम् ।
रुद्ध्वा नाथोऽरुधत् सूक्ष्मौ योगौ वाक्-चित्तलक्षणौ ३७१
इति सूक्ष्मक्रियं नाम शुक्लध्यानं तृतीयकम् ।
अस्तसूक्ष्मतनूयोगं क्रमात् प्रभुरसाधयत् ॥ ३७२ ॥
ततश्च ध्यानमुत्सन्नक्रियं नाम चतुर्थकम् ।
पञ्चह्रस्वाक्षरोच्चारमिति कालमशिश्रियत् ॥ ३७३ ॥
क्षीणकर्मा निष्ठितार्थः सर्वदुःखमलोज्झितः ।
अनन्तदर्शन-ज्ञान-सुख-वीर्यचतुष्टयः ॥ ३७४ ॥
बन्धाभावादूर्ध्वगतिरेरण्डफलबीजवत् ।
स्वभावाद् ऋजुमार्गेण प्रभुर्लोकाग्रमासदत् ॥३७५॥ (युग्मम्)
स्वामिवन्निर्वृतास्तेऽपि त्रयस्त्रिंशन्मुनीश्वराः ।
कल्याणायाऽभवद् विश्वे निर्वाणमपि वैभवम् ॥ ३७६ ॥
गार्हस्थ्ये त्रिंशदब्दानि व्रतभावे तु सप्ततिः ।
सर्वायुरित्यब्दशतं श्रीमत्पार्श्वप्रभोरभूत् ॥ ३७७ ॥
क्षीराम्भोधिजलैः शक्रः स्नपयित्वा वपुः प्रभोः ।
गोशीर्षचन्दनैर्लिप्त्वाऽभूषयद् दिव्यभूषणैः ॥ ३७८ ॥
देवदूष्येन चाऽऽच्छाद्य तन्नीत्वा वासवो रुदन् ।
शिबिकायां न्यधादेवं शेषर्षीणां सुरा व्यधुः ॥ ३७९ ॥
गन्धाम्बु-सुमनोवर्षं धूपघट्यादिधारणम् ।
गीतं नृत्यं च वाद्यं च क्रन्दन परिदेवनम् ॥ ३८० ॥
स्तुतिं पूजां च पुष्पाद्यैः स्वस्वीयोत्कलिकावशात् ।
शुचा भक्त्या च कुर्वाणे देवदेवीगणे पुरः ॥ ३८१ ॥
स्वामिनः शिबिकां शक्रः साधूनां शिबिकां सुराः ।
उद्धृत्य निन्युः श्रीखण्डा-ऽगुरुदारुचितां चिताम् ॥३८२॥
( विशेषकम् )

इन्द्रादेशादथो तत्र चितयोर्न्यस्तदेहयोः ।
कर्पूर-मधु-सर्पींषि बहुशश्चिक्षिपुः सुराः ॥ ३८३ ॥
विकुर्व्य वह्निं वातं च वह्नि-वायुकुमारकाः ।
संचस्करुः क्षणेनैव देहान् स्वामि-तपस्विनाम् ॥ ३८४ ॥
अस्थिवर्जजिनाङ्गस्थदग्धेष्वखिलधातुषु ।
चितां व्यध्यापयन् क्षीराम्भोभिर्मेघकुमारकाः ॥ ३८५ ॥
दंष्ट्रे जगृहतुः शक्रे-शानावुपरिगे प्रभोः ।
दक्षिण-वामे चमर-बली चाऽधःस्थिते क्रमात् ॥ ३८६
अन्ये तु वासवा दन्तानार्चितुं दुरितच्छिदे ।
स्वीचक्रुरितरेऽस्थीनि देवा भस्मादि मानवाः ॥ ३८७ ॥
रत्नस्तूपं चितास्थाने व्यधुस्तुङ्गं सुराः प्रभोः ।
विश्वाधारं विना भ्रश्यच्चित्तस्याधारदण्डवत् ॥ ३८८ ॥
शोकाख्यं प्रसरद् नाथसूरे दूरं गते तमः ।
मिथः संबोधदीपेन रुरुधुर्वासवादयः ॥ ३८९ ॥
ततो नन्दीश्वरद्वीपे शाश्वतप्रतिमोत्सवम् ।
विधाय सर्वे गीर्वाणाः सेन्द्राः स्वस्वाऽऽस्पदं ययुः ॥३९०॥
इन्द्राः स्वस्वविमानेषु सुधर्मायां च पर्षदि ।
अधिमाणवकस्तम्भं वृत्तवज्रसमुद्गके ॥ ३९१ ॥
आवेशयन् स्वामिदंष्ट्रा आनर्चुश्च निरन्तरम् ।
तासां प्रभावात् तेषां च सदा विजय-मङ्गले ॥ ३९२ ॥

विश्वातिशायिमहिमा धरणोरगेन्द्र-
पद्मावतीसततसेवितपादपीठः ।
अन्तर्बहिश्च दुरितच्छिदनन्तशर्मा
देवः क्रियादुदयिनीं शुभभावलक्ष्मीम् ॥ ३९३ ॥

इति श्रीकालिकाचार्यसन्तानीय-श्रीभावदेवसूरिविरचिते श्रीपार्श्वनाथ-
चरिते महाकाव्येऽष्टसर्गे भावाङ्के भगवद्विहारवर्णन-
निर्वाणवर्णनो नामाष्टम. सर्गः ॥ ८ ॥



# प्रशस्तिः ।

कलिकुण्डे मथुरायां स्तम्भनके चारुवप्रशङ्खपुरे ।
नागह्रदे लाटह्रदे स्वर्णगिरिप्रमुखतीर्थेषु ॥ १ ॥
कलिकलुषगर्वसर्वंकषनखमणिकिरणसजलपदपीठः ।
एकातपत्रमहिमा जयति श्रीपार्श्वनाथजिनः ॥ २ ॥

( युग्मम् )

कलास्थानकभावेन कलिमानकदर्थनः ।
कजार्चेन कवित्वेन कल्पितानजते जिनः ॥ ३ ॥

आसीत् स्वामिसुधर्मसन्ततिभवो देवेन्द्रवन्द्यक्रमः
श्रीमान् कालिकसूरिरद्भुतगुणग्रामाभिरामः पुरा ।
जीयादेष तदन्वये जिनपतिप्रासादतुङ्गाचल-
भ्राजिष्णुर्मुनिरत्नगौरवनिधिः खण्डिल्लगच्छाम्बुधिः ॥४॥

तस्मिंश्चान्द्रकुलोद्भवः कुवलयोद्बोधैकबन्धुर्यशो-
ज्योत्स्नापूरितविष्टपो विधुरिव श्रीभावदेवो गुरुः ।
यस्याऽऽख्यानसमानमेष बहुशो व्याचक्ष्यमाणोऽधुना
गच्छोऽगच्छदतुच्छगूर्जरभुवि प्रष्ठां प्रतिष्ठामिमाम् ॥५॥

मनसि घनविवेकस्नेहसंसेकदीप्तो
द्युतिमतनुत यस्य ज्ञानरूपः प्रदीपः ।
असमतमतमांसि ध्वंसयन्नञ्जसाऽसौ
न खलु मलिनिमानं किन्तु कुत्राऽपि चक्रे ॥ ६ ॥

श्रीमांस्ततो विजयसिंहगुरुर्मुनीन्द्र-
मुक्तावलीविमलनायकतां वितेने ।
ज्योतिस्तदुज्ज्वलतरं विकिरन् धरित्र्यां
चित्रं न यस्तरलतां कलयांचकार ॥ ७ ॥

दाक्षिण्यैकनिधिर्व्यधान्न सहजे देहेऽप्यहो ! वाञ्छितं

कारुण्यामृतवारिधिर्विनिदधे गुप्तौ स्वकीयं मनः ।
शान्तात्माऽनुचरं चिरस्य विनिजग्राहेन्द्रियाणां गणं
यो विज्ञातसमस्तवस्तुरभवत् तुल्यश्च हेमा-ऽश्मनोः ॥८॥
तदीयपट्टेऽजनि वीरसूरिर्यन्मानसे निर्मलदर्पणाऽऽभे ।
निरूपयामास सरस्वती सा त्रैविद्यविद्यामयमात्मरूपम् ॥९॥
सदाभ्यासावेशप्रथितपृथुमन्थानमथिता-
दवाप्तं तर्काब्धेर्विबुधपतिसिद्धेशमहितम् ।
यदीयं वाग्ब्रह्माऽमृतमकृत दर्पज्वरभर-
प्रशान्तिं निःशेषक्षितिवलयवादीन्द्रमनसाम् ॥ १० ॥
तस्मादभूत् संयमराज्यनेता
मुनीश्वरः श्रीजिनदेवसूरिः ।
यो धर्ममारोप्य गुणे विशुद्ध-
ध्यानेषुणा मोहरिपुं बिभेद ॥ ११ ॥
आद्यनामक्रमेणैवं प्रसर्पति गुरुक्रमे ।
पुनः श्रीजिनदेवाऽऽख्या बभूवुर्वरसूरयः ॥ १२ ॥
येषां पादारविन्दानरुणनखशिखारागभूयोऽभिरज्य-
ल्लक्ष्मीलीलानिवासान्निमलगुणभृतो भेजिरे राजहंसाः ।
आकृष्टानेकलोकभ्रमरकृतनमस्कारझङ्काररम्यो
येषामद्यापि लोके स्फुरति परिमलोऽसौ यशोनामधेयः ॥१३॥
तेषां विनेयविनयी बहु भावदेव-
सूरिः प्रसन्नजिनदेवगुरुप्रसादात् ।
श्रीपत्तनाऽऽख्यनगरे रविविश्व (१३१२) वर्षे
पार्श्वप्रभोश्चरितरत्नमिदं ततान ॥ १४ ॥
समीक्ष्य बहुशास्त्राणि श्रुत्वा श्रुतधराऽऽननात् ।
ग्रन्थोऽयं ग्रथितः स्वल्पसूत्रेणाऽपि मया रसात् ॥ १५ ॥
क्वाऽपि दृष्टान्तमात्रस्तु यः कोऽपि कथितो मया ।
स्वधिया सोऽपि जैनाज्ञानुसारेण गुणेच्छुना ॥ १६ ॥

यतः—
चरितं कल्पितं चापि द्विधोदाहरणं मतम् ।
परस्मिन् साधनायाऽर्थस्यौदनस्य यथेन्धनम् ॥ १७ ॥
अथवोक्तम्—
अनादिनिधने काले जीवानां चित्रकर्मणाम् ।
संविधानं हि तन्नास्ति संसारे यन्न संभवेत् ॥ १८ ॥
अतोऽस्मिन् ग्रन्थे यन्न्यूनमधिकं वा कृतं मया ।
तदप्यनेनाऽऽधारेण तत् क्षन्तव्यं ममाऽखिलम् ॥ १९ ॥
श्रीपार्श्वचरितं तैस्तैर्वर्णितं यन्महात्मभिः ।
इत्थं मयाऽपि यत् तत्रोपक्रान्तं धाष्ट्र्यमेव तत् ॥ २० ॥
किञ्च,
उत्तुङ्गचङ्गचैत्यानि महेभ्यैः कारितानि चेत् ।
तद् देवकुलिकामल्पधनो न विदधाति किम् ? ॥ २१ ॥
पूजितो यदि देवेन्द्रैर्जिनो मन्दारदामभिः ।
पूजयन्ति न किं तत्र तान् मर्त्या मरुबकादिभिः ? ॥२२॥
अध्वानमवतीर्णा यं गुरुगत्या महागजाः ।
न सञ्चरति किं तत्र करिपोतः स्खलद्गतिः ? ॥ २३ ॥
तन्मयाऽपि प्रभोर्भक्तिप्रकर्षवशचेतसा ।
चरित्रं चरितं सन्धाऽनुमतं च न दुष्यति ॥ २४ ॥
यदत्र किञ्चिन्मूढत्वादलीकं ग्रथितं भवेत् ।
सर्वं मयि कृपां कृत्वा संशोध्यं तन्मनीषिभिः ॥ २५ ॥
निशम्य सम्यक् श्रीपार्श्वस्वामिनश्चरितं वरम् ।
भविकैस्तत्त्वतात्पर्यार्थो धारणीयः सदा हृदि ॥ २६ ॥
यतः—
गुरुमेघगतीं बिभ्रत् सरोवत् कमलोज्ज्वलः ।
दृश्यते स्फुटमुत्तानः स्थूलवत् तु रजोमयः ॥ २७ ॥
अङ्गं लवादपि यथा पद्धतां सुधायाः

कल्याणतां भजति सिद्धरसस्य लोहम् ।
सच्चन्दनस्य हिमतामतितप्ततैलं
जीवस्तथा जिनमतस्य हि सिद्धभावम् ॥ २८ ॥
दशभववरपत्रं पार्श्वभर्तुश्चरित्रं
कमलमुदयनालं पुण्यलक्ष्मीविशालम् ।
प्रमुदितमुनिभृङ्गं सौरभोद्गारचङ्गं
विलसतु बुधचेतःपल्वले नित्यमेतत् ॥ २९ ॥
ग्रन्थः सर्वाग्रमानेन प्रत्येकं वर्णसङ्ख्यया ।
चतुःसप्तत्युपेतानि षट्सहस्राण्यनुष्टुभाम् ॥ ३० ॥

समाप्तमिदं श्रीपार्श्वनाथचरितम् ।



# अशुद्धिशोधनदलम् ।

## टिप्पण्यशुद्धिः ।

| पृष्ठे, | श्लोकस्य | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १५ | १७६ | १ मां न प्रयासि न प्राप्नोषि, | १ दक्षिणस्यां दिशि। |
| २० | २४७ | २ प्रथमान्तमेतत्, | २ द्वितीयान्तमेतत् । |
| ६२ | ७८१ | २ गिर्जने | २ निर्जने । |
| ९७ | ३३९ | ३ मुले | ३ मूले । |
| २४३ | ३४ | २ कदली देवाङ्गनां च । | कदली देवाङ्गना च । |

## संस्करणाशुद्धिः ।

| सर्गे प्रथमे, | श्लोके, | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ,, | ८ | मुर्द्धनि | मूर्धनि । |
| ,, | ५१ | -मुलो | मूलो । |
| ,, | ,, | शिर्षो | -शीर्षो । |
| ,, | ९५ | -सगा- | -सङ्गा- । |
| ,, | १४९ | दिवा बल- | दिवाबल- । |
| ,, | १५८ | प्रपच्छ | पप्रच्छ । |
| ,, | १६८ | व्याध ' | व्याध । |
| ,, | ,, | -न्ताऽकृष्ट- | -न्ताऽऽकृष्ट- । |
| ,, | १७१ | -नाऽऽगम | -नागम । |
| ,, | १७६ | दक्षिणे न | दक्षिणेन । |
| ,, | ,, | प्रयासिं | प्रयासि । |
| ,, | १९१ | -प्रच्छिरे | -पृच्छिरे । |
| ,, | १९८ | समर्पयत् | समार्पयत् । |
| ,, | २३२ | -च्छयत | च्छयत । |
| ,, | २५४ | तेदे- | तदे- । |
| ,, | २६५ | -ग्रहण- | -ग्रह- । |
| ,, | २७३ | -पद्द- | -पट्ट- । |
| ,, | २८० | सज्जन. | सज्जन ! । |

| सर्गे प्रथमे, | श्लोके, | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ,, | ३०० | सत्कृतस्वा- | सत्कृत स्वा- । |
| ,, | ३१७ | विष्टां | विष्ठा । |
| ,, | ३२० | -सग- | सङ्ग- । |
| ,, | ३२१ | -सग- | -सङ्ग- । |
| ,, | ३२२ | -सगो- | -सङ्गो- । |
| ,, | ३३१ | पृष्टव्य- | प्रष्टव्य- । |
| ,, | ३४४ | -मारऽऽ- | माराऽऽ- । |
| ,, | ४०९ | माऽश्वा | माश्वा- । |
| ,, | ४४५ | सन्निभा | सन्निभा । |
| ,, | ४४७ | -पथमपू- | -पथपू- । |
| ,, | ४७५ | मुखोद्यो- | मुखोद्द्यो- । |
| ,, | ४८१ | -सग- | -सङ्गम् । |
| ,, | ५०४ | -लोभाय | -लाभाय । |
| ,, | ५३१ | चाऽऽभ्या | चाऽभ्या- । |
| ,, | ५७० | -पूजा दया दान दाक्ष्य- | -पूजा-दया दान दाक्ष्य- । |
| ,, | ५९३ | -स्थमा रा | स्थमारा- । |
| ,, | ५९४ | पप्रछ | पप्रच्छ । |
| ,, | ६२५ | धामग- | धाम ग- । |
| ,, | ६५२ | स्वच्छो | स्वच्छौ । |
| ,, | ६६० | विभो | विभो ! । |
| ,, | ६८८ | चतुथी | चतुर्थी । |
| ,, | ७०० | पुरिमध्ये | पुरीमध्ये । |
| ,, | ७०३ | शिरोऽधर | शिरोधर । |
| ,, | ७१५ | तथाचित्ते | तथा चित्ते । |
| ,, | ७३६ | -च्छवि | -च्छविम् । |
| ,, | ७५५ | चेद् | भवेद् । |
| ,, | ७५६ | एभ्यो | येभ्यो । |
| , | ७६९ | यावद् | यावत् । |
| ,, | , | तावत् | तावद् । |
| ,, | ७७५ | येनैव | ये नैवम् । |
| ,, | ८५८ | कमठो शा- | कमठोऽशा- । |
| ,, | ८७१ | -तिस्वर्गो | -ति· स्वर्गो । |
| द्वितीये | १२ | त्रीभि , स्त्रीभि | धात्रीभि. । |

| सर्गे, द्वितीये, | श्लोके | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ,, | ३५ | पैत्रिकी | पैतृकीम् । |
| ,, | २४७ | धन्था | धन्या । |
| ,, | २५२ | सिन्धूराणा | सिन्धुराणाम् । |
| ,, | २५३ | -लेकिता | -लोकिता । |
| ,, | ३२४ | क्षित्प्वा | क्षिप्त्वा । |
| ,, | ३३४ | स्वान्त्वेन | सान्त्वेन । |
| ,, | ३४९ | अलिकं | अलीकम् । |
| ,, | ३६९ | अद्य प्रभृ- | अद्यप्रभृ- । |
| ,, | ४१० | -त्सुका. | -त्सुका । |
| ,, | ४२४ | भव्य भाव- | भव्य भाव- । |
| ,, | ४२९ | -वनेसुर- | -वने सुर- । |
| ,, | ४४४ | सोऽपि | सापि |
| ,, | ४४७ | केनाप्यकृत- | केनापि कृत- । |
| ,, | ४४८ | त्वा | ता । |
| ,, | ५७४ | पुत्र ! भिक्षा | पुत्रभिक्षा । |
| ,, | ६१८ | दूत- | द्यूत- |
| ,, | ६२६ | अचितन्यच्च | अचिन्तयच्च । |
| ,, | ७२४ | पर च | च परम् । |
| ,, | १००१ | महर्धिक | महर्द्धिक । |
| ,, | १०४४ | ज्ञानात्मावि- | ज्ञानात्मा वि- । |
| तृतीये | २४ | -धर्माऽबाध- | -धर्माबाध- । |
| ,, | ५५ | लब्ध्वास्त्रा- | लब्धास्वा- । |
| ,, | १४७ | द्दष्टु- | द्रष्टु- । |
| ,, | १७० | वेक्षेत | वेक्ष्येत । |
| ,, | १८५ | न्यवर्तत | न्यवर्त्यत । |
| ,, | २३९ | प्रतिज्ञा | प्रतिज्ञा । |
| ,, | २७० | प्रपच्छ | पप्रच्छ । |
| ,, | ३७६ | महिभुजे | महीभुजे । |
| ,, | ३८३ | महर्ध्या | महद्ध्यी । |
| ,, | ४१४ | कुलिना | कुलीना । |
| ,, | ५१७ | पृष्टे | पृष्ठे । |
| ,, | ५२४ | घुर्णित- | घूर्णित- । |
| ,, | ५६४ | -त्तसै वृक्षै- | -त्तसैर्वृक्षै- । |

| सर्गे, तृतीये, श्लोके । | | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ,, | ५६५ | -लेन्दुस्त्री- | -लेन्दु स्त्री । |
| ,, | ५७२ | मेदनीम् | मेदिनीम् । |
| ,, | ७६१ | निर्म्लेप- | निर्लेम्प । |
| ,, | ८४२ | नृपेणोक्ते | नृपेणोक्तो । |
| ,, | ९१६ | तत् प्रण- | तत्प्रण । |
| ,, | ९७९ | आलम्बने न | आलम्बनेन । |
| ,, | ९९५ | -त्याद्यानु- | -त्याद्यनु- । |
| ,, | १०३९ | मत | मते । |
| ,, | १०६४ | राजापु- | राजपु- । |
| ,, | १०८६ | मनो मर्क- | मनोमर्क । |
| ,, | १०९९ | अति भीषणम् | अतिभीषणम् । |
| ,, | ११०८ | ११०८ | । । |
| ,, | ,, | ११०९ | ११०८ |
| चतुर्थे | ६ | भूभृद्दद- | भूभृद्द- । |
| ,, | १२ | -दर्शना कु- | -दर्शनाकु- । |
| ,, | २९ | पयार्ण | पर्याण । |
| ,, | ३४ | रम्भां सौ- | रम्भासौ- । |
| ,, | ६७ | -मागता ? | -मागता. ? । |
| ,, | ७४ | स मे- | समे- । |
| ,, | ७६ | -गातिर्दु - | -गार्तिदु - । |
| ,, | ८१ | चैव | चैव । |
| ,, | ८५ | -लाऽऽस्या | -ला स्या । |
| ,, | ८७ | श्रये | श्रये । |
| ,, | ९९ | महध्यॉ | महद्ध्यॉ । |
| ,, | १२६ | प्लावविष्यति | प्लावयिष्यति । |
| ,, | १६१ | १६१ | । । |
| ,, | ,, | १६२ | १६१ । |
| पञ्चमे | ६४ | नवमिाक | नवमिका । |
| ,, | १८० | प्रेसन- | प्रसेन- । |
| ,, | २१८ | नता | नता । |
| षष्ठे | १७१ | उपकुपं | उपकूपं । |
| ,, | २५४ | भामण्डल | भामण्डलं । |
| ,, | ३४६ | परणात्ते | परेणात्ते । |

| सर्गे, षष्ठे, | श्लोके। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ,, | ५११ | -मुन्मत्त | मुन्मत्तक। |
| ,, | ५१७ | -कारि तुल्य | कारितुल्य। |
| ,, | ५६० | अद्द- | अद्र- |
| ,, | ६३३ | दृष्ट्वा | दृष्ट्वा। |
| ,, | ६३७ | -त अति- | तदति-। |
| ,, | ७६० | -यासु कर्म- | -या सुकर्म-। |
| ,, | ९१५ | तत् क्षणाद् | तत्क्षणाद्। |
| ,, | ९४१ | -च्छय | -च्छय। |
| ,, | ९४५ | दूर तत | दुरन्तत। |
| ,, | ९५१ | नृप | नृप। |
| ,, | १००५ | तया न्यस्य | तयाऽन्यस्य। |
| ,, | १०६० | -स्त्रीपु | -स्त्रीषु। |
| ,, | १०८५ | पात्री | पात्री। |
| ,, | ११०७ | -मुद्दिश्य | -मुद्दिश्य। |
| सप्तमे | २ | -धम | -धर्म। |
| ,, | ४० | -हर्काय- | -हकार्य-। |
| ,, | १६३ | -नाऽस्ते | -नाऽऽस्ते। |
| ,, | २०१ | -र्दीधिका- | -र्दीर्घिका-। |
| ,, | २४३ | वर्तीणौ | -वतीर्णौ। |
| ,, | ३१८ | -स्त्रिया | -स्त्रिया। |
| ,, | ५२८ | -र्णवास्या- | -र्णवस्या-। |
| ,, | ६२० | -कौञ्च- | -क्रौञ्च-। |
| ,, | ७७६ | तीर्थ | तीर्थं। |
| ,, | ८०५ | -मम्यर्च्य | मभ्यर्च्य। |
| अष्टमे | २५० | सहस्त्राणा | सहस्राणां। |
| ,, | २७८ | गुणैर्पूज्या | गुणै पूज्या। |
| ,, | २८१ | -मान | -माना। |
| ,, | ,, | सुखिना | सुखिन। |
| ,, | ३३० | ास्थता | स्थिता। |
| ,, | ३५१ | निवृर्ता- | निर्वृता-। |
| ,, | ३५२ | -स्तुमल | -स्तुमुल। |
| ,, | ३६० | शयत्रयी | शतत्रयी। |

अर्हम्

श्रीयशोविजयजैनग्रन्थमाला [ ३२ ]

श्रीभावदेवसूरिविनिर्मितं

# पार्श्वनाथचरित्रम् ।

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरि-
पादाम्भोजचञ्चरीकायमाणाभ्यां
श्रावकपं०-हरगोविन्ददास-बेचरदासाभ्यां संशोधितम् ।

तच्च

आग्रानगरवास्तव्य-श्रेष्ठिवर्य-लक्ष्मीचन्द्र-वैद
इत्येतेषां साहाय्येन

वाराणस्यां

श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण निजधर्माभ्युदययन्त्रालये
मुद्रित प्रकाशितं च ।

वीरसंवत् २४३८ ।

YASHOVIJAYA JAINA GRANTHAMALA, 32



*THE*

# PARSHVANATH CHARITRA

OF

**SHREE BHAVA DEVA SURI.**



EDITED BY

SHRAVAK PANDIT HARGOVINDDAS

AND

SHRAVAK PANDIT BECHARDAS,

MOST DEVOTED SERVANTS OF

HIS HOLINESS SHASTRA VISHARAD JAINACHARYA

SHRI VIJAYA DHARMA SURI.



WITH

THE PECUNIARY HELP OF

SHETH LAKSHMICHAND VAIAD,

OF

AGRA



PRINTED AND PUBLISHED

BY

HARSHCHAND BHURABHAI,

Proprietor of Dharmabhyudaya Press.

BENARES.



Veer-Era, 2438.



# प्रस्तावना ।

अस्य भावाङ्कस्य श्रीपार्श्वनाथचरितनाम्नो महाकाव्यस्य कवितारः कवितारकतारकपतयोऽनवद्यत्रैविद्यविद्याविशारदाः कालिकाचार्यसन्तानीयाः श्रीभावदेवसूरयः कर्हि क मण्डलं मण्डयांचक्रिवांस. १, इति कथकथिकाना कथकथिकता नोत्थातुमवकाशवती, यतः स्वयमेव ते सूरय. स्व परिचाययन्ति, तथाहि—

"आसीत् स्वामिसुधर्मसन्ततिभवो देवेन्द्रवन्द्यक्रम
श्रीमान् कालिकसूरिरद्भुतगुणग्रामाभिराम पुरा ।
जीयादेष तदन्वये जिनपतिप्रासादतुङ्गाचल-
भ्राजिष्णुर्मुनिरत्नगौरवनिधि खण्डिल्लगच्छाम्बुधि ॥ ४ ॥
तस्मिंश्चान्द्रकुलोद्भव कुवलयोद्बोधैकबन्धुर्यशो-
ज्योत्स्नापूरितविष्टपो विधुरिव श्रीभावदेवो गुरु ।
यस्याऽऽख्यानसमानमेष बहुशो व्याचक्ष्यमाणोऽधुना
गच्छोऽगच्छदतुच्छगूर्जरभुवि प्रष्ठां प्रतिष्ठामिमाम् ॥ ५ ॥
मनसि घनविवेकस्नेहसेकदीप्तो
द्युतिमतनुत यस्य ज्ञानरूप प्रदीप ।
असमतमतमासि ध्वसयन्नञ्जसाऽसौ
न खलु मलिनिमान किन्तु कुत्राऽपि चक्रे ॥ ६ ॥
श्रीमांस्ततो विजयसिंहगुरुर्मुनीन्द्र-
मुक्तावलीविमलनायकता वितेने ।
ज्योति सदुज्ज्वलतर विकिरन् धरित्र्या
चित्र न यस्तरलता कलयाचकार ॥ ७ ॥
दाक्षिण्यैकनिधिर्व्यधान्न सहजे देहेऽप्यहो ! वाञ्छित
कारुण्यामृतवारिधिर्विनिदधे गुप्तौ स्वकीय मन ।
शान्तात्माऽनुचर चिरस्य विनिजग्राहेन्द्रियाणां गण
यो विज्ञातसमस्तवस्तुरभवत् तुल्यश्च हेमाऽश्मनो ॥ ८ ॥
तदीयपट्टेऽजनि वीरसूरिर्यन्मानसे निर्मलदर्पणाऽऽभे ।
निरूपयामास सरस्वती सा त्रैविद्यविद्यामयमात्मरूपम् ॥ ९ ॥
सदाभ्यासावेशप्रथितपृथुमन्थानमथना-

दत्वाऽस्त तर्काब्धेर्विबुधपतिसिद्धेशमहितम् ।
यदीय वाग्ब्रह्माऽमृतमकृत दर्पज्वरभर-
प्रशान्ति नि शेषक्षितिवलयवादीन्द्रमनसाम् ॥ १० ॥
तस्मादभूत् सयमराज्यनेता
मुनीश्वरः श्रीजिनदेवसूरि ।
यो धर्ममारोप्य गुणे विशुद्ध-
ध्यानेषुणा मोहरिपु बिभेद ॥ ११ ॥
आद्यनामक्रमेणैव प्रसर्पति गुरुक्रमे ।
पुन श्रीजिनदेवाऽऽख्या बभूवुर्वरसूरय ॥ १२ ॥
येषा पादारविन्दानरुणनखशिखारागभूयोऽभिरज्य-
ल्लक्ष्मीलीलानिवासान्विमलगुणभृतो भेजिरे राजहसा· ।
आकृष्टानेकलोकभ्रमरकृतनमस्कारझङ्काररम्यो
येषामद्यापि लोके स्फुरति परिमलोऽसौ यशोनामधेय ॥१३॥
तेषा विनेयविनयी बहु भावदेव
सूरि प्रसन्नजिनेदवगुरुप्रसादात् ।
श्रीपत्तनाऽऽख्यनगरे रविविश्व( १३१२ ) वर्षे
पार्श्वप्रभोश्चरितरत्नमिद ततान ॥ १४ ॥"

अत स्पष्टमेवाऽवसीयते यत्, ते कालिकाचार्यकुलतिलका· श्रीभावदेवसूरयस्त्रयोदश-चतुर्दशशताब्दीमध्यकालिका एवेति।

एतच्चरितावलोकनेनैव चैतेषा वैयाकरणचणभूषणत्वम्, कविकुलगुरुत्वम्, लौकिकशास्त्रावलोकनरसिकत्वम्, सामुद्रिकशास्त्रसिद्धमुद्रत्वम्, चिकित्सारहस्याभिज्ञातृत्वम्, श्रीजिनागमपारगामित्व चावगम्यते सुधीभि ।

निर्वर्णित चात्र चरिते, ससाराऽसाराऽऽरम्भरम्भातरुमूलोन्मूलने दुर्वारवारणत्वमाबिभ्रतः, विषमाऽकुशशमनायमानक्रोधकृशानुशमने प्रचुरपानीयतां समादधत·,दुर्वहाऽहङ्कारहुङ्कारहिमालयहिमानीनिकरद्रवणे सततसप्तसप्तित्वमनुसरत, गहनाऽमेयमायावशवशघटाविघटने खरतरधाराधरपरशुत्वमाश्रयतः दु·क्षोभलोभाऽपारावारपारपानीयप्रशोषणे ज्वलज्ज्वालवडवानलतामाकलयत·, स्वकीयसर्वसहत्वेन सर्वसहा सर्वसहामपि जडीकुर्वाणस्य, सबम्भ्रम्य प्रवासिन इव विचित्रचित्रचरित्रा-

ऽगमदुर्गमनवभवगहनगहनम्, प्रमामथ्य पीताम्बरस्येव निजपवित्रजीवनजीवासहितसद्ध्यानामन्दमन्दराचलेन दुरवगाहागाधदशमभवार्णवम्, तत सम्प्राप्त विमलकेवललक्ष्मीलीलाविलासित्व लोकोत्तररङ्गरङ्गितोत्तुङ्गचङ्गप्रासादात् समुपभुञ्जानस्य **श्रीपार्श्वनाथस्वामिनो** गुरुगुरोर्गुर्वपि भाररहितम्, कुमुदिनीकान्तकान्तमपि गतकलङ्कपङ्कम्, पतङ्गवत् पापपङ्कशोषकमपि शीतलम्, तरङ्गिणीदयितवद् गभीरमपि क्षारितक्षारतम्, मुदिरप्रकरवत् तापापहारकमपि नाऽसितम्, सचञ्चूर्यमाणसद्गुणगण चारुतर चरितम्।

तत्र तत्र च प्रस्तावात् सदुपदेशपद प्रापितानि सरसावबोधविधायकानि नैकानि कथानकानि, श्रोतृणामुपश्रावित च चिकित्सारहस्यम्, दर्शितानि च समुद्रमुनिशास्त्रशरीरशुभा-ऽशुभाभिज्ञानानि, समावेशितानि च सर्वाणि सुधास्यन्दीनि वर्णनानि, किमुच्यतेऽधिकम्?, समासादितमिद चरितं महाकाव्यगणनागण्यताम्।

एतच्चरितमुद्रणादिसर्वव्ययदातारो वदान्यवरेण्या. श्रीलश्री**लक्ष्मीचन्द्रश्रेष्ठिनो** धन्यवादस्थानम्।

एतस्य श्रीपार्श्वनाथचरितस्य पुस्तकत्रयमाप्तमस्माभिस्तदर्थं ते पुस्तकदातारो धन्यवादपात्रम्, तत्र

पुस्तकद्वय गुरूणा श्रीशास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरीणा शुद्धम्।
एक च पन्यासपदभूषितश्रीवीरविजयमुनिमहाशयानां शुद्धतरम्।

तस्मात् पुस्तकत्रयात् संशोधितामिद सुचरितं श्रवणपथ प्रापय्य पवित्रो भवतु पुरुषगण, स्वकर्मोत्करमुत्करितु पारयतात् साधुजन, तदनुमोदकः स्ताच्च प्रवरेतरनरगण, उत्साहयेच्चास्माकमुद्यमं ग्राहकमहोदय, संक्षालयेत्, प्रकटयेच्च यदत्र स्थलं सहज-कृत्रिमदोषपङ्कपङ्किलमिति

ज्ञापयतः—

**हरगोविन्द–बेचरदासौ।**

# विषयानुक्रमः ।







अर्हम् ।

# परमोदारश्रेष्ठिवर्यलक्ष्मीचन्द्रस्य वंशवृक्षः, प्रशस्तिश्च ।

मनसुखदास[1]
भार्या अमरुदे

*हंसराज[2]
भार्या नवलादे
¶चन्द्रपाल
यादराम

धनसुखदास[2]
भार्या नवलीबाई
छोगमल्लजी[3]
भार्या चुन्नीबाई
लक्ष्मीचन्दजी[4]
भार्या सुगुणबाई

अमरचंन्द मोहनलाल फूलचन्द

मोहनलाल
श्रीचन्द[6]

---

धन्वीव मार्गणगणाय वितीर्णलक्षः
कम्रो मरुष्वमरशाखिगुणान् दधद् य ।
श्रीओसवाल इति नाम वर दधानो
वशोऽस्ति वश इव मौक्तिकराशिशाली ॥ १ ॥
तत्राभूद्[1] व्यवहारिमौलिसुमणिर्दासो मनःसौख्ययुक्
सद्योषाऽमरुदेयुतस्ततमतिः श्रीशीललीलालसन् ।
येनाऽऽरोपि च पार्श्वमन्दिरशिरे † कुम्भ फलोधीपुरे

† अकारान्तोऽपि ।

श्रीनाभेयगृहे महेभ्यजगडूवत् साधुससेविते ॥ २ ॥
अभूता तत्पुत्रौ सुखिधनसुखो हंसनृपतिः
प्रियायुक्तावेतौ दिवसुखसखौ धर्मरसिकौ ।
तयोः पुर्याऽऽग्रायां *ख-युग-निधि-सोमे सुशरदि
न्यधत्त श्रीपार्श्वे जिनमतरतो हंसमहिपः ॥ ३ ॥
तयो पत्न्यौ क्रमेणाऽऽस्ता नवली-नवलाभिधे ।
धर्मकर्मप्रवीणे ते भर्तृभक्तिपरे वरे ॥ ४ ॥
*हंसेन हंसता तेन चैत्य सीमन्धरप्रभोः ।
† लोका-ऽक्षि-रस-भूम्यब्दे उदधार्यर्गले पुरे ॥ ५ ॥
¶ तत्सूनुश्चन्द्रपालाह्वो मुनिमानसहंसति ।
पुत्रो धनसुखस्याभूच्छोगमल्लो विभूतिमान् ॥ ६ ॥
अभूत् तस्योरुवशस्य भार्या चुन्नीति सञ्ज्ञया ।
दया दधाना दीनेषु संघभक्ति वितन्वती ॥ ७ ॥
तत्पुत्रो वृद्धशाखायामुपकेशगणे गुणी ।
वैदगोत्रो लसच्छ्रीको लक्ष्मीचन्द्रो विराजते ॥ ८ ॥
केचिद् दानविधौ बलिप्रभृतयोऽभूवन् दकाराप्रियाः
केचित् क्षुद्रतयाऽभवश्च कापिलादास्यादयो नप्रियाः ।
धर्माऽधर्मजकर्मणोर्विधिविधौ भूत्वाऽपि दा-नप्रियो
य· कीर्तिमतुलामलब्ध भुवि यत् तल्लक्ष्मिचन्द्रोऽद्भुतम् ॥९॥
पाताले मर्त्यलोके सुरपतिभवने सागरे भूधरेऽपि
यत्कीर्त्या व्याप्नुवत्या चिति-जडपटल सर्वमेकीकृतं यत् ।
तस्माद् वेदान्तवादी भ्रमयुतमतिकोऽनाप्तवस्तुस्वरूपः
सर्वं चैकस्वरूपीति निगदनपरः सत्य एवैष किन्न ? ॥१०॥
श्रीमानकब्बरधरापतिरेव जात-
श्च्युत्वाऽयमस्ति सदयो जिनवाक्यसेवी ।
प्राप्याऽऽगमद् विजयधर्ममुनीन्द्ररूप

---

* विक्रमसंवत्सरे, १९४० । † विक्रमवर्षे, १९२७ ।

श्रीहीरसूरिरिति कोविदतर्कणैषा ॥ ११ ॥
धर्माख्यानात् तदाऽऽदानात् प्राग्जन्मस्मरणादिव ।
स एवाऽजनि सबन्धस्तयोर्मुनि-धनाढ्ययो ॥ १२ ॥
जिनधर्मरतो मुनिभक्तियुत
शुभशास्त्रगतिस्तपदत्तमतिः ।
उपदेशमवाप्य गुरोः सुमुखात्
त्वरितः प्रथितु महर्मात्मनि यः ॥ १३ ॥
येन श्रीलक्ष्मिचन्द्रेण परदु खापहारिणा ।
कारित पथिकस्थानमौषधी-पुस्तकालयम् ॥ १४ ॥
सिद्धाचले च सत्क्षेत्रे तीर्थे सम्मेतभूधरे ।
स्वकीय कर्म दग्धु यो देवसद्मान्यकारयत् ॥ १५ ॥
सुदुस्तप तपस्तप्त्वाऽऽराधयद् यो यथाविधि ।
एकादशीतिथिं पुण्यो भावशुद्धिसमन्वित' ॥ १६ ॥
तेनैव धर्मानुचरेण हर्षात् श्रीपार्श्ववृत्तं निजवित्तदानात् ।
उद्यापनार्थै तपसो निजस्य प्राकाशि धर्माख्यमुनीन्द्रवाक्यात् ॥ १७॥
तस्यास्ति वल्लभा नाम्ना सुगुणा सुगुणालयम् ।
दग्ध काम पतिं ज्ञात्वाऽऽगमत् कि कामवल्लभा ? ॥ १८ ॥
त्रय. ससन्ति तत्पुत्रास्तेष्वाद्योऽमरचन्द्रकः ।
मध्यमो मोहनो धर्मी पश्चिम फुल्लचन्द्रकः ॥ १९ ॥
एते सर्वे महापुण्या धर्मकर्मपरायणाः ।
मातृ-पितृमहाभक्तिभाजो भान्ति महाशयाः ॥ २० ॥
पौत्रोऽप्यस्यास्ति श्रीचन्द्रो मध्यपुत्राङ्गजः शुभ. ।
नयनानन्दको योऽस्ति बालचन्द्र इवाङ्गिनाम् ॥ २१ ॥
कुटुम्बमेवमेतस्य जीवतान्नन्दतादपि ।
आकल्प धर्मकर्माणि कुर्याद् धर्मप्रभावतः ॥ २२ ॥

॥ इति वंशप्रशस्तिः ॥

---

१ आत्मार्थम् ।

खेऽस्य गगनस्य मेघस्याम्बुदस्य आख्या अस्य ख-मेघाख्यम्, तेन खम्, गगनम्, मेघ-मम्बुदमित्यादि सिद्धम् ॥३॥४॥ गिरिजाया गौर्या मल गिरिजामल तत्र, गिरिजं च तदमल चेति वा ॥ ५ ॥

स्रोतोऽञ्जनं तु कापोतं सौवीर कृष्णयामुने ॥ ११७ ॥

यमुनास्रोतसोऽञ्जन स्रोतोऽञ्जनम् ॥ १ ॥ कपोतस्येद कापोतम्, कपोतवर्णं वा ॥ २ ॥ सुवीरदेशे भव सौवीरम् ॥ ३ ॥ कृष्ण वर्णेन ॥ ४ ॥ यमुनाया भव यामुनम् ॥ ५ ॥ ११७ ॥

अथ तुत्थ शिखिग्रीव तुत्थाञ्जनमयूरके ।

तुदति अक्षिरोगास्तुत्थम्, "नीनूरमि-" ॥ ( उणा- २२७ ) ॥ इति क्थिः ॥ १ ॥ शिखिग्रीवाभ शिखिग्रीवम् ॥ २ ॥ अज्यतेऽनेनाऽञ्जन तुत्थ च तदञ्जन च तुत्थाञ्जनम् ॥ ३ ॥ मयूरस्य तुल्य मयूरकम् ॥ ४ ॥

मूषातुत्थ कांस्यनील हेमतार वितुन्नकम् ॥ ११८ ॥

मूषाया तुत्थं मूषातुत्थम् ॥ १ ॥ कास्यवन्नील कास्यनीलम् ॥ २ ॥ हेमवत्तार हेमतारम् ॥ ३ ॥ वितुदत्यक्षिरोगान् वितुन्नम्, के वितुन्नकम् ॥४॥११८॥

स्यात्तु कर्परिकातुत्थममृतासङ्गमञ्जनम् ।

कल्पते रोगान् जेतु कर्परिका, कर्परिकालक्षणं तुत्थ कर्परिकातुत्थम् ॥ १ ॥ अमृतमासजत्यनेनाऽमृतासङ्गम् ॥ २ ॥ अज्यते चक्षुरनेनाऽञ्जनम् ॥ ३ ॥

रसगर्भं तार्क्ष्यशैलं तुत्थे दार्वीरसोद्भवे ॥ ११९ ॥

दार्वीरसस्य गर्भोऽत्र रसगर्भम् ॥१॥ तार्क्ष्यशैले कुलूताया भवत्वात् तार्क्ष्यशैलम्, दार्वी दारुहरिद्रा तस्या रस क्वाथस्तदुद्भवे तुत्थे रसजात रसाग्रे अपि ॥२॥११९॥

पुष्पाञ्जनं रीतिपुष्प पौष्पक पुष्पकेतु च ।

पुष्परूपमञ्जन पुष्पाञ्जनम् ॥ १ ॥ रीतेर्ध्मायमानाया पुष्पाभं मल रीतिपुष्पम् ॥ २ ॥ पुष्पति पुष्पकम्, स्वार्थेऽणि पौष्पकम् ॥ ३ ॥ पुष्प केतुरस्य पुष्पकेतु ॥ ४ ॥

माक्षिक तु कदम्बः स्याच्चक्रनामाऽजनामकः ॥१२० ॥

माक्षिक मधु तद्वर्ण माक्षिकम् ॥ १ ॥ कदम्बकुसुमाकारत्वात् कदम्ब ॥२॥ चक्रस्य नाम अस्य चक्रनामा ॥ ३ ॥ अजस्य विष्णोर्नाम अस्य अजनामक, अत एव वैष्णवोऽपि ॥ ४ ॥ १२० ॥

ताप्यो नदीजः कामारिस्तारारिर्विटमाक्षिकः ।

ताप्या साधुस्ताप्य ॥ १ ॥ तापीनद्या जातो नदीज ॥ २ ॥ कामस्याऽरि कामारि ॥ ३ ॥ तारस्याऽरिस्तारारि ॥ ४ ॥ विट्ाह्वयो माक्षिको विटमाक्षिक ॥५॥

सौराष्ट्री पार्वती काक्षी कालिका पर्पटी सती ॥ १२१ ॥
आढकी तुवरी कंसोद्भवा काच्छी मृदाह्वया ।

सुराष्ट्राया भवा सौराष्ट्री ॥ १ ॥ पर्वते भवा पार्वती ॥ २ ॥ कक्षे भवा काक्षी ॥ ३ ॥ कालयति वस्त्र कालिका ॥ ४ ॥ पिपर्ति पर्पटी, "कपट-" ॥ (उणा- ॥ १४४) ॥ इत्यटे निपात्यते ॥ ५ ॥ अस्ति सती ॥ ६ ॥ १२१ ॥ आढौकते आढकी ॥ ७ ॥ तूयते तुवरी ॥ ८ ॥ कंसादुद्भवति कसोद्भवा ॥ ९ ॥ कच्छदेशे भवा काच्छी ॥ १० ॥ मृद आह्वयोऽस्या मृदाह्वया, तेन मृत्तिका, मृत्स्ना, मृत्सा अपि ॥ ११ ॥

कासीसं धातुकासीसं खेचरं धातुशेखरम् ॥ १२२ ॥

कसति कासीसम्, "तलिकसिभ्यामी-" ॥ (उणा- ५१६) ॥ ईसण् ॥ १ ॥ धातुरूप कासीसं धातुकासीसम् ॥ २ ॥ खे चरति खेचरम् ॥ ३ ॥ धातुषु शेखरमिव धातुशेखरम् ॥ ४ ॥ १२२ ॥

द्वितीय पुष्पकासीस कसक नयनौषधम् ।

पुष्परूप कासीस पुष्पकासीसम् ॥ १ ॥ कस्ते रञ्जयति कंसकम् ॥ २ ॥ नयनस्यौषधं नयनौषधम् ॥ ३ ॥

गन्धाश्मा शुल्वपामाकुष्ठारिर्गन्धिकगन्धकौ ॥ १२३ ॥
सौगन्धिकः शुकपुच्छः

गन्धप्रधानोऽश्मा गन्धाश्मा ॥ १ ॥ शुल्वस्य पामाया कुष्ठस्य च अरि· शुल्वारि, पामारि, कुष्ठारि ॥ २ ॥ ३ ॥ ४ ॥ गन्धोऽस्त्यस्य गन्धिक ॥५॥ गन्धयते गन्धक ॥ ६ ॥ १२३ ॥ सुगन्धो विपरीतलक्षणया स प्रयोजनमस्य सौगन्धिक ॥ ७ ॥ शुकपुच्छवर्णत्वात् शुकपुच्छ ॥ ८ ॥

हरिताल तु पिञ्जरम् ।
बिडालक विस्रगन्धि खर्जूरं वशपत्रकम् ॥ १२४ ॥
आलपीतनतालानि गोदन्त नटमण्डनम् ।
वङ्गारिर्लोमहृच्च

हरे पीतवर्णस्य ताल प्रतिष्ठाऽस्य हरितालम्, हरितामलति भूषयति वा ॥१॥ पिञ्जयति पिञ्जरम्, वर्णेन वा ॥२॥ बिडालनेत्रप्रतिकृतिर्बिडालकम् ॥ ३ ॥

विस्रस्येव गन्धोऽस्य विस्रगन्धि ॥ ४ ॥ खर्जति खर्जूरम् ॥ ५ ॥ वंशपत्राभ वशपत्रकम् ॥ ६ ॥ १२४ ॥ आलाति शोभा आलम्, अलन्ति भूषयन्ति अनेन वा ॥७॥ पीतयति पीतनम्, पीतं वर्ण नयतीति वा, "क्वचित्" ॥५।१।१७१॥ इति ड ॥ ८ ॥ ताल हारितालैकदेशो भीमवत्, ताडयति इति वा ॥९॥ गोदन्त-सदृशत्वाद् गोदन्तम्, गोपित्तमपि ॥ १० ॥ नटाना मण्डनं नटमण्डनम् ॥११॥ वज्रस्य अरिर्वज्रारि ॥ ११ ॥ लोमानि हरति लोमहृत् ॥ १३ ॥

अथ मनोगुप्ता मनःशिला ॥ १२५ ॥
करवीरा नागमाता रोचनी रसनेत्रिका ।
नेपाली कुनटी गोला मनोह्वा नागजिह्विका ॥ १२६ ॥

मनोऽभिधा गुप्ता मनोगुप्ता ॥ १ ॥ मनोवाच्या शिला मन शिला, शिला अपि ॥ २ ॥ १२५ ॥ करे विशेषेण ईर्यते करवीरा ॥ ३ ॥ नागस्य माता नागमाता ॥ ४ ॥ रोचते रोचनी ॥ ५ ॥ रसस्य नेत्री रसनेत्री, के रसनेत्रिका ॥ ६ ॥ नेपालदेशभवत्वाद् अभेदेन नेपाली, नैपाली अपि ॥ ७ ॥ कौ नटति कुनटी ॥८॥ गा लाति, गुडति वा गोला ॥ ९ ॥ मन'शब्देन हूयते मनोह्वा ॥१०॥ नागजिह्वाप्रतिकृतिर्नागजिह्विका ॥ ११ ॥ १२६ ॥

सिन्दूर नागज नागरक्त शृङ्गारभूषणम् ।
चीनपिष्ट

स्यन्दते सिन्दूरम्, "सिन्दूर-" ॥ (उणा-४३०) ॥ इति ऊरे निपात्यते ॥१॥ नागात् शेषाद् जायते नागजम् ॥ २ ॥ नागेन रज्यते नागरक्तम् ॥३॥ शृङ्गारस्य भूषण शृङ्गारभूषणम्, शृङ्गारमपि ॥ ४ ॥ चीनस्य नागस्य पिष्ट चीनपिष्टम् ॥ ५ ॥

हंसपादकुरुविन्दे तु हिङ्गुलः ॥ १२७ ॥

हंसपाद इव रक्तो हंसपाद ॥१॥ कुरून् विन्दति कुरुविन्दम्, "निगवादेर्नाम्नि" ॥५।१।६१॥ इति श ॥२॥ हिनोति हिङ्गुल, "कुमुल-" ॥ (उणा-४८७) ॥ इति उले निपात्यते, पुस्ययम्, वाचस्पतिस्तु-"हिङ्गुलस्त्वस्त्रियाम्" इति क्लीबेऽप्याह, हिङ्गुलरपि ॥ ३ ॥ १२७ ॥

शिलाजतु स्याद् गिरिजमर्थ्यं गैरेयमश्मजम् ।

शिलात स्रवजत्वाकृति शिलाजतु, क्लीबलिङ्ग ॥ १ ॥ गिरेर्जायते गिरिजम् ॥ २ ॥ अर्थ्यते रसायनार्थिभि अर्थ्यम् ॥ ३ ॥ गिरौ भवं गैरेयम्, नद्यादित्वाद् एयण् ॥ ४ ॥ अश्मनो जायते अश्मजम् ॥ ५ ॥

क्षारः काच-

क्षरति क्षार , ज्वलादित्वाद् ण ॥ १ ॥ कच्यते बध्यते काच

कुलाली तु स्यात् चक्षुष्या कुलत्थिका ॥ १२८

कुलमलति कुलाली ॥ १ ॥ चक्षुषे हिता चक्षुष्या दृक्प्रसादा कुले तिष्ठति कुलत्था पृषोदरादित्वात्, कुलत्थप्रकृतिर्वा ॥ ३ ॥ १२८

बोलो गन्धरस. प्राण पिण्डो गोपरसः शशः ।

बोल्यते बोल ॥ १ ॥ गन्धप्रधानो रसो गन्धरस ॥ २ ॥ प्र प्राण ॥ ३ ॥ पिण्ड्यते द्रव्यान्तरैरिति पिण्ड , पिण्डसहत्वाद् वा पाति रसोऽस्य गोपरस , गोप , रसोऽपि भीमवत् ॥ ५ ॥ शशति शश

रत्न वसु मणि

रमते मनोऽत्र रत्नम्- अष्टविध हीरकादि, यद् वाचस्पति —

"हीरक मौक्तिक स्वर्ण रजत चन्दनानि च ।
शङ्खश्चर्म च वस्त्र चेत्यष्टौ रत्नस्य जातय " ॥ १ ॥

"रमेस्त् च" ॥ (उणा-२६८) ॥ इति न ॥१॥ वसति लक्ष्मीर॰ लिङ्ग ॥ २ ॥ मणति महार्घता मणि पुस्त्रीलिङ्ग , माणिक्यमपि ॥ ३

तत्र वैडूर्य वालवायजम् ॥ १२९ ॥

तेषु रत्नेषु विदूरात् प्रभवति वैडूर्यम्, विदूरग्रामे हि अद मणितया तत प्रथमं भवति, विदूराद्रेर्जायते वा "वैडूर्य " ॥६।३।१५ निपात्यते ॥१॥ वालवायाद्रेर्जायते वालवायजम्, "विदूरभवमुत्कृष्ट नि॰ यजम् " इति विशेषो नाश्रित ॥ २ ॥ १२९ ॥

मरकत त्वश्मगर्भ गारुत्मत हरिन्मणिः ।

मरकं तरन्ति अनेन मरकतम्, " क्वचित् " ॥ ५।१।१७१ ॥ १ ॥ अश्मनो गर्भो अश्मगर्भम्, अश्मयोनिरित्यर्थ ॥ २ ॥ गरुत्मत विषं हन्तु गारुत्मतम् ॥ ३ ॥ हरिद् नीलवर्णो मणि हरिन्मणि. ॥ ४ ।

पद्मरागो लोहितकलक्ष्मीपुष्पाऽरुणोपलाः ॥ १३०

पद्मस्य इव रागोऽस्य पद्मराग पुक्लीबलिङ्ग , तत्र ॥ १ ॥ लोहि हितक , " लोहिताद् मणौ " ॥७।३।१७॥ इति स्वार्थे क ॥ २ ॥ पुष्पमिव लक्ष्मीपुष्पम् ॥ ३ ॥ अरुण शोण उपल अरुणोपल , इ ॥ ४ ॥ १३० ॥

नीलमणिस्त्विन्द्रनीलः

नीलवर्णो मणिर्नीलमणि ॥ १ ॥ मणीनामिन्द्रो नीलश्च मणिरिन्द्रनील. पुंक्लीबलिङ्ग , " इन्द्रनील महानीलम् " इति क्लीबे वैजयन्ति ॥ २ ॥

सूचीमुखं तु हीरकः ।

वरारक रत्नमुख्य वज्रपर्यायनाम च ॥ १३१ ॥

सूच्या इव मुखमस्य सूचीमुखम् ॥ १ ॥ हरति मनो हीर , " खुरक्षुर- " ॥ (उणा–३९६) ॥ इति रे निपात्यते, के हीरक पुलिङ्ग , वाचस्पतिस्तु– "अथाऽस्त्री हीरक " इति क्लीबेऽप्याह ॥ २ ॥ वरा अरका अस्मिन् वरारकम् ॥ ३ ॥ रत्नेषु मुख्य रत्नमुख्यम् ॥ ४ ॥ वज्रपर्याया दम्भोलिप्रभृतयो नामानि अस्य वज्रपर्यायनाम तेन वज्रम्, दम्भोलिरित्यादि ॥ ५ ॥ १३१ ॥

विराटजो राजपट्टो राजावर्त.

विराटदेशे जातो विराटज , वैराटोऽपि ॥ १ ॥ पट्टेन राजते राजपट्ट ॥२॥ आवर्तेन राजते राजावर्त., राजदन्तादित्वात् पूर्वनिपात ॥ ३ ॥

अथ विद्रुम. ।

रक्ताङ्गो रक्तकन्दश्च प्रवालं हेमकन्दलः ॥ १३२ ॥

विशिष्टो द्रुमो विद्रुम , विद्रवति अब्धौ वा, "रुक्मग्रीष्म-" ॥ ( उणा–३४६) ॥ इति मे निपात्यते, विन्दते "कुमुद"– ॥ ( उणा–२४४ ) ॥ इति उमे वा ॥ १ ॥ रक्त· अङ्गोऽस्य रक्ताङ्ग ॥ २ ॥ रक्तश्चासौ कन्दश्च रक्तकन्दः ॥ ३ ॥ प्रवलति प्रवाल पुंक्लीबलिङ्ग , ज्वलादित्वाद् ण , प्रवते अब्धेरूर्ध्वं वा "चात्वाल " ॥ ( उणा– ४८० )॥ इति निपात्यते ॥ ४ ॥ हेम्न कन्दल इव हेमकन्दल ॥ ५ ॥ १३२ ॥

सूर्यकान्त. सूर्यमणिः सूर्याश्मा दहनोपलः ।

सूर्यस्य कान्तो वल्लभ सूर्यकान्त ॥ १ ॥ सूर्यप्रियो मणि सूर्यमणि· ॥ २ ॥ सूर्यस्य अश्मा सूर्याश्मा ॥ ३ ॥ दहनजननोपलो दहनोपल ॥ ४ ॥

चन्द्रकान्तश्चन्द्रमणिश्चान्द्रश्चन्द्रोपलश्च सः ॥ १३३ ॥

चन्द्रस्य कान्त चन्द्रकान्त· ॥ १ ॥ चन्द्रस्य मणि चन्द्रमणि ॥ २ ॥ चन्द्रस्य अय चान्द्र ॥ ३ ॥ चन्द्रस्य उपल चन्द्रोपल ॥ ४ ॥ १३३ ॥

क्षीरतैलस्फटिकाभ्यामन्यौ खस्फटिकाविमौ ।

क्षीरधवलः स्फटिक क्षीरस्फटिक , तैलकान्ति स्फटिक तैलस्फटिकस्ताभ्यामन्यौ भिन्नवर्णौ इमौ सूर्यकान्त चन्द्रकान्तौ द्वौ अपि आकाशस्फटिकाख्यौ इत्यर्थ , यद् वाचस्पति —

"स्फटिकास्तु त्रयस्तेषामाकाशस्फटिको वर ।
द्वौ क्षीरतैलस्फटिकावाकाशस्फटिकस्य तु ।
द्वौ भेदौ सूर्यकान्तश्च चन्द्रकान्तश्च तत्र च" ॥ १ ॥ इति ॥ १ ॥

शुक्तिज मौक्तिक मुक्ता मुक्ताफल रसोद्भवम् ॥ १३४ ॥

शुक्तेर्जायते शुक्तिजम्, शुक्तिरुपलक्षण हस्तिमस्तकाद्युद्भवमपि, यदाह–
"हस्तिमस्तकदन्तौ तु दंष्ट्रा शुनवराहयो ।
मेघो भुजङ्गमो वेणुर्मत्स्यो मौक्तिकयोनय" ॥ १ ॥ इति ॥ १ ॥
मुक्ता एव मौक्तिकम्, विनयादित्वाद् इकण् ॥ २ ॥ मुच्यतेशुक्तिभिर्मुक्ता ॥ ३ ॥ मुक्ता फलमिव मुक्ताफलम् ॥ ४ ॥ रसाद् अम्भस उद्भवति रसोद्भवम् ॥ ५ ॥ १३४ ॥

॥ समाप्तोऽय पृथ्वीकाय ॥

अथ अप्कायमाह—

नीर वारि जल दकं कमुदक पानीयमम्भः कुशं
तोयं जीवनजीवनीयसलिलाणांस्यम्बु वा सवरम् ।
क्षीर पुष्करमेघपुष्पकमलान्याप. पय पाथसी
कीलालं भुवन वन घनरसो यादो निवासोऽमृतम् ॥१३५॥
कुलीनसं कबन्ध च प्राणदं सर्वतोमुखम् ।

नीयते नयति वा नीरम्, "ऋज्याजि-" ॥ ( उणा–३८८ ) ॥ इति किद् र ॥ १ ॥ वार्यते वारि क्लीबलिङ्ग, "स्वरेभ्य इ" ॥ ( उणा–६०६ ) ॥ २ ॥ जलति जाड्यं गच्छति जलम् ॥ ३ ॥ द्यति तृष्णा दकम्, "कीचक-" ॥ ( उणा–३३ ) ॥ इति अके निपात्यते ॥ ४ ॥ कायति कम्, "क्वचित्" ॥५।१।१७१॥ इति ड ॥ ५ ॥ उनत्ति उदकम्, "धूधून्दि-" ॥ (उणा–२९) ॥ इति किद् अक ॥ ६ ॥ पीयते पानीयम् ॥ ७ ॥ अमति निम्नप्रदेशमम्भ क्लीबलिङ्ग, "अमेर्भहौ चाऽन्तौ" ॥ ( उणा–९६२ ) ॥ इति अस् ॥ ८ ॥ कुश्यति भिनत्ति कुशम्, कु श्यतीति वा ॥ ९ ॥ तुदति तुयते वा तोयम्, "शिक्यास्य" ॥ ( उणा–३६४ ) ॥ इति ये निपात्यते ॥ १० ॥ जीव्यते अनेन जीवनम् ॥ ११ ॥ बाहुलकाद् करणेऽपि अनीये जीवनीयम् ॥ १२ ॥ सरति सरिरम्, "मदिमन्दि-" ॥ ( उणा–४१२ ) इति इर, ऋफिडादित्वाद् लत्वे सलिलम् ॥ १३ ॥ अर्यते तद् इति अर्ण॰, "अर्तीण्भ्याम्-" ॥ ( उणा-९६९ ) ॥ इति नम्, ऋणोतीति वा "अस्" ॥ ( उणा–९५२ ) ॥ इति अस् ॥१४॥ अमति अम्बु क्लीबलिङ्गौ, "कम्यमिभ्याम्-" ॥ ( उणा–७९९ ) ॥

इति बु ॥ १५ ॥ वृणोति वा स्त्रीलिङ्ग, " वाद्वारौ " ॥ ( उणा-९४४ ) ॥ इति क्विपि निपात्यते ॥ १६ ॥ सवृणोति सवरम् ॥ १७ ॥ घस्यते क्षीरम्, " घसिवासि- " ॥ ( उणा-४१९ ) ॥ इति किद् इर ॥ १८ ॥ पुष्णाति तृप्ति पुष्करम्, " सूपुषिभ्या " ॥ ( उणा-४३६ ) ॥ इति कित् कर ॥ १९ ॥ मेघाना पुष्प प्रसवो मेघपुष्पम् ॥ २० ॥ काम्यते कमलम्, " मृदि-कन्दि- " ॥ ( उणा-४६५ )॥ इत्यल ॥ २१ ॥ आप्यन्ते सुखाद् आप, स्त्रिया बहुवचनान्त, " आप क्विप् ह्रस्वश्च " ॥ (उणा-९३१ ) ॥ इति साधु ॥२२॥ पीयते पय, " पाहाग्भ्या पयह्यौ च " ॥ ( उणा-९५३ ) ॥ इति अस्, पयते गच्छति वा, " अस् " ॥ ( उणा-९५२ ) ॥ इत्यस् ॥ २३ ॥ पान्ति एतत् पाथ, क्लीबलिङ्गौ, " पातेर्जस्थसौ " ॥ ( उणा-९७७ ) ॥ इति थस् ॥ २४ ॥ कील्यते बध्यते सेतुभि॰ कीलालम्, " ऋकृमृ " ॥ ( उणा-४७५ ) इति आल, कीला ज्वाला अलति वारयति वा ॥ २५ ॥ भवति अस्मात् सर्व भुवनम्, "सूधूभूभ्रस्जिभ्यो वा " ॥ (उणा-२७४) ॥ इति किद् अन ॥ २६ ॥ वनति वनम् ॥ २७ ॥ घनस्य रसो घनरस, ' घनरसम् ' इति क्लीबे माला ॥ २८ ॥ यादसा निवासो यादोनिवास ॥ २९ ॥ न विद्यते मृतमस्माद् अमृतम् ॥ ३० ॥ १३५ ॥ कौ लीन श्लिष्टं स्यति कुलीनसम् ॥ ३१ ॥ कं सुख वायुं वह्निं वा बध्नाति कबन्धम्, ' कम्, अन्धम्, इति द्वे नाम्नी इत्येके' ॥ ३२ ॥ प्राणान् ददाति प्राणदम् ॥३३॥ सर्वतो मुखमस्य सर्वतोमुख सर्वदिग्गते ॥३४॥

शेषश्चात्र—

जले दिव्यमिरासेव्य कृपीट घृतमङ्करम् ।
विष पिप्पलपातालमलिलानि च कम्बलम् ॥ १ ॥
पावन षड्रस चापि वल्लूर तुसित पय ।
किट्टिम तदतिक्षार सालूक पङ्कगन्धिकम् ॥ २ ॥
अन्ध तु कलुष तोयमतिस्वच्छ तु काचिमम् ।

अस्थाघास्थागमस्ताघमगाधं चाऽतलस्पृशि ॥ १३६ ॥

तिष्ठति जनोऽत्र स्थाघम्, " स्थार्ति-" ॥ ( उणा-१०९ ) ॥ इति घ॰, न स्थाघमस्थाघम् ॥ १ ॥ स्थग्यते स्थाग न स्थागमस्थागम् ॥ २ ॥ तिष्ठति स्ताघम् पृषोदरादित्वात्, न स्ताघमस्ताघम् ॥३॥ गाधते गाधम्, न गाधमगाधम्, ॥४॥ ॥ ४ ॥ नास्ति तले अध स्पृक् स्पर्शोऽस्य अतलस्पृक् तत्र, एते वाच्यलिङ्गा॰ ॥ ५ ॥ ॥ १३६ ॥

निम्न गभीरं गम्भीरम्

नितरा मीयते निम्नम्, " युसुनिभ्यो माङो डित् " ॥ (उणा-१०९) ॥

इति न, निमनति इति वा ॥ १ ॥ गच्छति जलमत्र गभीरम्, गम्भीरम्, "जम्बीराभीर-" ॥ ( उणा-४२२ ) ॥ इति ईरे निपात्यते, अस्थाघादीन् एकार्थान् इत्येके ॥ २ ॥ ३ ॥

उत्तान तद्विलक्षणम् ।

ऊर्ध्वं तन्यते उत्तानं ततो गम्भीराद् विलक्षणमन्यत् ॥ १ ॥

अच्छं प्रसन्ने

अद्यते अच्छम्, "तुदिमदि-" ॥ ( उणा-१२४ ) ॥ इति छक्, न छाद्यते वा "क्वचित्" ॥ ५ । १ । १७१ ॥ इति ड ॥ १ ॥ प्रसीदति स्म प्रसन्न तत्र ॥ २ ॥

अनच्छ स्याद् आविलं कलुषं च तत् ॥ १३७ ॥

न अच्छमनच्छम् ॥ १ ॥ आविलत्याविलम् ॥ २ ॥ कल्यते कलुषम्, "ऋपॄनहि-" ॥ ( उणा-५५७ ) ॥ इत्युष ॥ ३ ॥ १३७ ॥

अवश्यायस्तु तुहिनं प्रालेयं मिहिका हिमम् ।
स्याद् नीहारस्तुषारश्च

अवश्यायतेऽवश्याय "तन्व्यधीण्-" ॥ ५ । १ । ६४ ॥ इति ण ॥ १ ॥ तोहति अर्दयति तुहिनम्, "वृजितुहि-" ॥ ( उणा-२८३ ) इति किदिन ॥ २ ॥ प्रलयादागत प्रालेयम्, "तत आगते" ॥६।३।१४९॥ इत्यण् तत "केकयमित्रयुप्रलयस्य यादे -" ॥७।४।२॥ इति वृद्धौ इयादेशे च साधु ॥ ३ ॥ मेहति मिहिका, "कुशिक-" ॥ (उणा-४५) ॥ इति इके निपात्यते, धूममहिषी धूमिका धूमर्योऽपि ॥४॥ हिनोति वर्धते जलमनेन हिमम्, "क्षुहिभ्या वा" ॥ ( उणा-३४१ ) ॥ इति किद् म ॥ ५ ॥ निह्रियते नीहारः, "घञ्युपसर्गस्य-" ॥३।२।८६॥ इति दीर्घ ॥ ६ ॥ तुष्यन्तिऽनेन तुषार, "तुषिकुठिभ्या कित्" ( उणा-४०८) ॥ इत्यार, एते त्रय पुंक्लीबलिङ्गा ॥ ७ ॥

हिमानी तु महद्धिमम् ॥ १३८ ॥

महद् हिमं हिमानी हिमसहति, "यवयवनारण्य-" ॥२।४।५५॥ इति ङी, आन् चान्त ॥ १ ॥ १३८ ॥

पारावार· सागरोऽवारपारो-
ऽकूपारोदध्यर्णवो वीचिमाली ।
यादः-स्रोतो-वा-र्नदीश सरस्वान्
सिन्धूदन्वन्तौ मितद्रु· समुद्रः ॥ १३९ ॥

सत्तेया दिट्ठीओ जाइ-जरा-मरण-गब्भवसहीणं ।
मूल संसारस्स उ हवंति निग्गथरूवेण ॥ ९८ ॥
पवयणनीहूआण ज तेसि कारिअं जहि जत्थ ।
भज्ज परिहरणाए मूले तह उत्तरगुणे अ ॥ ९९ ॥
मिच्छादिट्ठीआणं ज तेसिं कारिअं जया जत्थ ।
सव्वं पि तय सुद्ध मूले तह उत्तरगुणे अ ॥ १०० ॥
तवसंजमो अणुमओ निग्गथं पवयणं च ववहारो ।
सद्दु-ज्जुसुआणं पुण निव्वाण संजमो चेव ॥ १०१ ॥
आया खलु सामाइअ पच्चक्खाणतओ हवइ आया ।
त खलु पच्चक्खाण आवाए सव्वदव्वाण ॥ १०२ ॥
सावज्जजोगविरओ तिगुत्तो छसु सजओ ।
उवउत्तो जयमाणो आया सामाइअ होइ ॥ १०३ ॥
पढमम्मि सव्वजीवा बीए चरिमे अ सव्वदव्वाइं ।
सेसा महव्वया खलु तदिक्कदेसेण नायव्वा ॥ १०४ ॥

---

सप्तैता दृष्टयो जाति-जरा मरण गर्भवसतीनाम् ।
मूल ससारस्य तु भवन्ति निर्ग्रन्थरूपेण ॥ ९८ ॥
प्रवचनाऽकिंचित्कराणा यत् तेषा कारित यस्मिन् यत्र ।
भाज्यं परिहरणया मूले तथोत्तरगुणे च ॥ ९९ ॥
मिथ्यादृष्टिकाना यत् तेषा कारित यदा यत्र ।
सर्वमपि तत् शुद्धं मूले तथोत्तरगुणे च ॥ १०० ॥
तप संयमोऽनुमतो नैर्ग्रन्थ प्रवचन च व्यवहार ।
शब्द-ऋजुसूत्रयो पुनर्निर्वाण सयमश्चैव ॥ १०१ ॥
आत्मा खलु सामायिक प्रत्याचक्षाणको भवत्यात्मा ।
तत् खलु प्रत्याख्यानमापाते सर्वद्रव्याणाम् ॥ १०२ ॥
सावद्ययोगविरतास्त्रिगुप्त षट्सु सयत ।
उपयुक्तो यतमान आत्मा सामायिक भवति ॥ १०३ ॥
प्रथमे सर्वजीवा द्वितीये चरमे च सर्वद्रव्याणि ।
शेषाणि महाव्रतानि खलु तदेकदेशेन ज्ञातव्यानि ॥ १०४ ॥

जीवो गुणपडिवण्णो नयस्स दव्वट्ठिअस्स सामाइअं ।
सो चेव पज्जवनयट्ठिअस्अ जीवस्स एस गुणो ॥ १०५ ॥
उप्पज्जन्ति वयन्ति य परिणामंति अ गुणा, न दव्वाइ ।
दव्वप्पभवा य गुणा, न गुणप्पभवाइ दव्वाइं ॥ १०६ ॥
जं ज जे जे भावे परिणमइ पओग-वीससा दव्वं ।
तं तहा जाणेइ जिणो अपज्जवे जाणणा नत्थि ॥ १०७ ॥
सामाइअं च तिविह समत्त सुअं तहा चरित्तं च ।
दुविहं चेव चरित्तं अगारमणगारिअं चेव ॥ १०८ ॥
अज्झयणं पि अ तिविहं सुत्ते अत्थे तदुभए चेव ।
सेसेसु वि अज्झयणेसु होइ एमेव निज्जुत्ती ॥ १०९ ॥
जस्स सामाणिओ अप्पा संजमे नियमे तवे ।
तस्स सामाइअ होइ इइ केवलिभासिअं ॥ ११० ॥
जो समो सव्वभूएसु तसेसु थावरेसु य ।
तस्स सामाइअं होइ इइ केवलिभासिअं ॥ १११ ॥

---

जीवो गुणप्रतिपन्नो नयस्य द्रव्यार्थिकस्य सामायिकम् ।
स एव पर्यवनयस्थितस्य जीवस्य एष गुण ॥ १०५ ॥
उत्पद्यते व्ययन्ते च परिणमन्ति च गुणा, न द्रव्याणि ।
द्रव्यप्रभवाश्च गुणा, न गुणप्रभवाणि द्रव्याणि ॥ १०६ ॥
यद् यद् यान् यान् भावान् परिणमति प्रयोग-विस्रसातो[1] द्रव्यम् ।
तत् तथा जानाति जिनोऽपर्यवे ज्ञान नास्ति ॥ १०७ ॥
सामायिक च त्रिविध सम्यक्त्व श्रुत तथा चारित्रं च ।
द्विविधमेव चारित्रमागारिकमनागारिकं चैव ॥ १०८ ॥
अध्ययनमपि च त्रिविध सूत्रऽर्थे तदुभये चैव ।
शेषेष्वपि अध्ययनेषु भवति एवमेव निर्युक्ति ॥ १०९
यस्य सामानिकं आत्मा सयमे नियमे तपसि ।
तस्य सामायिक भवतीति केवलिभाषितम् ॥ ११० ॥
य सम सर्वभूतेषु त्रसेषु स्थावरेषु च ।
तस्य सामायिक भवतीति केवलिभाषितम् ॥ १११ ॥

---

१ विस्रसा स्वभाव ।

सावज्जजोगपरिवज्जणट्ठा
सामाइअ केवलिअ पसत्थं।
गिहत्थधम्मा परमं ति नच्चा
कुज्जा बुहो आयहिअ परत्था ॥ ११२ ॥
सव्वं ति भाणिऊण विरई खलु जस्स सव्विआ नत्थि।
सो सव्वविरइवाई चुक्कइ देस च सव्व च ॥ ११३ ॥
सामाइअम्मि उ कए समणो इव सावओ हवइ जम्हा।
एएण कारणेण बहुसो सामाइअ कुज्जा ॥ ११४ ॥
जीवो पमायबहुलो बहुसो वि अ बहुविहेसु अत्थेसु।
एएण कारणेणं बहुसो सामाइअं कुज्जा ॥ ११५ ॥
जो न वि वट्टइ रागे न वि दोसे दुण्ह मज्झयारम्मि।
सो होइ उ मज्जत्थे सेसा सव्वे अमज्झत्था ॥ ११६ ॥
खित्त दिसा काल गई भविअ सन्नि ऊसास दिट्ठि आहारे।
पज्जत्त पसुत्त जम्म ठिइ वेअ सन्ना कसाया-ऽऽउ ॥ ११७ ॥

---

सावद्ययोगपरिवर्जनार्थ
सामायिक कैवलिक[1] प्रशस्तम्।
गृहस्थधर्मात् परममिति ज्ञात्वा।
कुर्याद् बुध आत्महित परार्थम्[2] ॥ ११३ ॥
सर्वमिति भणित्वा विरति॰ खलु यस्य सर्विका नास्ति।
स सर्वविरतिवादी भ्रश्यति देश च सर्व च ॥ ११३ ॥
सामायिके तु कृते श्रमण इव श्रावको भवति यस्मात्।
एतेन कारणेन बहुश सामायिक कुर्यात् ॥ ११४ ॥
जीव प्रमादबहुलो बहुशोऽपि च बहुविधेष्वर्थेषु।
एतेन कारणेन बहुश सामायिक कुर्यात् ॥ ११५ ॥
यो नाऽपि वर्तते रागे नाऽपि द्वेषे द्वयोर्मध्यकारे।
स भवति तु मध्यस्थ शेषा सर्वेऽमध्यस्था ॥ ११६ ॥
क्षेत्र दिशा कालो गतिर्भव्य सञ्ज्ञी उच्छ्वासो दृष्टिराहारक।
पर्याप्त प्रसुप्तो जन्म स्थितिर्वेद॰ सञ्ज्ञा कषाया-ऽऽयुषी ॥ ११७ ॥

---

१ केवलिभि प्रोक्तम्। २ मोक्षार्थम्।

नाणे जोगुवओगे सरीर संठाण संघयण-माणे ।
लेसा परिणामे वेअणा समुग्घाय कम्मे य ॥ ११८ ॥
निव्विट्ठणमुव्वट्टे आसवकरणे तहा अलकारे ।
सयणासणठाणत्थे चकमते अ किं कहिअ [२] ॥ ११९ ॥
सम्म-सुआण लभो उड्ढ च अहे अ तिरिअलोए य ।
विरई मणुस्सलोए विरयाविरई अ तिरिएसु ॥ १२० ॥
पुव्वपडिवन्नया पुण तीसवि लोएसु नियमओ तिण्ह ।
चरणस्स दोसु नियमा भयणिज्जा उड्ढलोगम्मि ॥ १२१ ॥
नाम ठवणा दविए खित्तदिसा तावखित्त पन्नवए ।
सत्तमिआ भावदिसा सा होइ अट्ठारसविहा ओ ॥ १२२ ॥
तेरसपएसिअं खलु तावइएसुं भवे पएसेसु ।
जं दव्वं ओगाढ जहन्नग त दसादिसाग ॥ १२३ ॥

---

ज्ञान योगो-पयोगौ शरीर सस्थान सहनन-माने ।
लेश्या परिणामो वेदना समुद्धात कर्म च ॥ ११८ ॥
निवेष्टनोद्वर्तौ आश्रवकरण तथा अलङ्कारा ।
शयना-सन-स्थानस्थाश्चङ्क्रमतश्च किं क [२] ॥ ११९ ॥
सम्यक् श्रुतयोर्लाभ ऊर्ध्वं चाधश्च तिर्यग्लोके च ।
विरतिर्मनुष्यलोके विरताविरतिश्च तिर्यक्षु ॥ १२० ॥
पूर्वप्रतिपन्नका पुनस्त्रिष्वपि लोकेषु नियमतस्त्रयाणाम् ।
चरणस्य द्वयोर्[३]नियमाद् भजनीया ऊर्ध्वलोके ॥ १२१ ॥
नाम स्थापना द्रव्यं क्षेत्रदिक् तापक्षेत्रं प्रज्ञापक ।
सप्तमी भावदिक् सा भवति अष्टादशविधा तु ॥ १२२ ॥
[४]त्रयोदशप्रदेशिक खलु तावत्सु भवेत् प्रदेशेषु ।
यद् द्रव्यमवगाढं जघन्यक तद् दशादिशागं ॥ १२३ ॥

---

१ देशविरतिसामायिकम् । २ सामायिकानाम् । ३ अधोलोक-तिर्यग्लोकयो ।
४ इय च स्थापना–

| | | | | |
|---|---|---|---|---|
| | | ० | | |
| | ० | ० | ० | |
| ० | ० | ० | ० | ० |
| | ० | ० | ० | |
| | | ० | | |

अट्ठपएसो रुअगो तिरिअलोगस्स मज्झयारम्मि।
एस पभवो दिसाणं एसेव भवे अणुदिसाण ॥ १२४ ॥
दुपएसाइ दुरुत्तर एगपएसा अणुत्तरा चेव।
चउरो चउरो य दिसा चउरा इ अणुत्तरा दुन्नि ॥ १२५ ॥
सगडुद्धिसंठिआओ महादिसाओ हवन्ति चत्तारि।
मुत्तावली अ चउरो दो चेव य हुन्ति रुअगनिभा ॥ १२६ ॥
इन्दग्गेई जम्मा य नेरई वारुणी अ वायव्वा।
सोमा ईसाणा वि अ विमला तमा य बोधव्वा ॥ १२७ ॥
इंदा य विजयद्दाराणुसारओ सेसया पयाहिणओ।
अट्ठय तिरिअदिसाओ उड्ढ विमला तमा वाऽहो ॥ १२८ ॥
जेसि जुत्तो सूरो उदेइ तेसिं तई हवइ पुव्वा।

---

अष्टप्रदेशो रुचकस्तिर्यग्लोकस्य मध्यक रे।
एष प्रभवो दिशा एष एव भवेदनुदिशाम् ॥ १२४ ॥
[1]द्वौ प्रदेशावादौ द्वावुत्तरे एकप्रदेशा अनुत्तराश्चैव।
चत्वारश्चत्वारश्च दिक्षु चत्वारोऽनुत्तरौ द्वौ ॥ १२५ ॥
शकटाद्रिसस्थितास्तु महादिशो भवन्ति चतस्र ।
मुक्तावली च चत्वारो द्वौ चैव च भवतो रुचकनिभौ ॥ १२६ ॥
ऐन्द्री आग्नेयी याम्या च नैर्ऋती वारुणी वायव्या।
सौमी ऐशानी अपि च विमला तमा च बोद्धव्या ॥ १२७ ॥
ऐन्द्री च विजयद्वारानुसारत शेषा प्रदक्षिणत.।
अष्टौ च तिर्यग्दिश ऊर्ध्व विमला तमा वाऽध ॥ १२८ ॥
येषा युक्त सूरे उदति तेषा तदा भवति पूर्वा।

---

१ एषा स्थापना–

| | | | | | | |
|---|---|---|---|---|---|---|
| ० | | | | | | ० |
| | ० | | | | ० | |
| | | ० | | ० | | |
| | | | ० | | | |
| | | ० | | ० | | |
| | ० | | | | ० | |
| ० | | | | | | ० |

तावखित्तदिसाओ पयाहिणं सेसयाओ सिं ॥ १२९ ॥
जे मदरस्स पुव्वेण माणुसा दाहिणेण अवरेण ।
जे आवि उत्तरेण सव्वेसि उत्तरो मेरू ॥ १३० ॥
पन्नवओ जयभिमुहो सा पुव्वा सेसिआ पयाहिणओ ।
तस्सेवणुगन्तव्वा अग्गेआई दिसा नियमा ॥ १३१ ॥
पुढवि-जल-जलण-वाया मूलखंधग्गपोरबीआ य ।
बि-ति-चउ-पंचिदिय तिरिय नारया देवसघाया ॥ १३२ ॥
समुच्छिम कम्माऽम्मभूमिग नरा तहतरदीवा ।
भावदिसा दिस्सइ जं ससारी निययमेआहि ॥ १३३ ॥
पुव्वाइआसु महादिसासु पडिवज्जमाणओ होइ ।
पुव्वपडिवन्नओ पुण अन्नयरीए दिसाए ॥ ३४४ ॥
छिन्नावलिरुअगागिइदिसासु सामाइअ न ज तासु ।
सुद्धासु नावगाहइ जीवो ताओ पुण फुसिज्जा ॥ १३५ ॥
अट्ठसु चउण्ह नियमा पुव्वपवन्नो उ दोसु दुण्ह वा ।

तापक्षेत्रदिश प्रदक्षिण शेषिका एतस्या ॥ १२९ ॥
ये मन्दरस्य पूर्वेण मानुष्याद् दक्षिणेनाऽपरेण ।
ये चाऽपि उत्तरेण सर्वेषामुत्तरो मेरु ॥ १३० ॥
प्रज्ञापको यदभिमुख सा पूर्वा शेषिका प्रदक्षिणत ।
तस्यैवानुगन्तव्या आग्नेय्यादिदिशो नियमात् ॥ १३१ ॥
पृथ्वी-जल ज्वलन वाता मूल स्कन्धाऽग्र पूर्व-बीजानि च ।
द्वि त्रि-चतुष्-पञ्चेन्द्रियास्तिर्यञ्चो नारका देवसघाता ॥ १३२ ॥
समूर्च्छिम-कर्माऽकर्मभूमिगा नरा तथान्तर्द्वीपजा ।
भावदिशा दिश्यते यत् ससारी नियतमेताभि ॥ १३३ ॥
पूर्वाद्यासु महादिक्षु प्रतिपद्यमानको भवति ।
पूर्वप्रतिपन्न पुनरन्यतरस्या दिशि ॥ १३४ ॥
छिन्नावलिरुचकाकृतिदिक्षु सामायिक न यत् तासु ।
शुद्धासु नावगाहते जीवस्ता पुन स्पृशेत् ॥ १३५ ॥
अष्टसु चतुर्णां नियमात् पूर्वप्रतिपन्नस्तु द्वयोर्द्वयोर्वा ।

दुण्ह उ पुव्वपडिवन्नो सिअ नन्नो तावपन्नवए ॥ १३६ ॥
उभयाभावो पुढयाइएसु विगलेसु हुज्ज उववन्नो ।
पञ्चिदिअतिरिएसु नियमा तिण्हं सिअ पवज्जे ॥ १३७ ॥
नारगदेवा कम्मगअतरदीवेसु दुण्ह भयणा ओ ।
कम्मगनरेसु चउसुं मुच्छेसु य उभयपडिसेहो ॥ १३६ ॥
सम्मत्तस्स सुअस्स य पडिवत्ती छव्विहम्मि कालम्मि ।
विरई विरयाविरई पडिवज्जइ दोसु तिसु वा वि ॥ १३७ ॥
चउसु वि गईसु नियमा सम्मत्त-सुअस्स होइ पडिवत्ती ।
मणुअेसु होइ विरई विरयाविरइ अ तिरिअेसु ॥ १३८ ॥
भवसिद्धिओ उ जीवो पडिवज्जइ सो चउण्हमन्नयर ।
पडिसेहो पुण असन्निमीसए सनि पडिवज्जे ॥ १२९ ॥
ऊसासग नीसासग मीसय पडिसेह दुविह पडिवन्नो ।
दिट्ठीइ दो नया खलु ववहारो निच्छओ चेव ॥ १४० ॥
आहारओ उ जीवो पडिवज्जइ सो चउण्हमन्नयरं ।

---

द्वयोस्तु पूर्वप्रतिपन्न स्याद् नान्यस्तापप्रज्ञापक ॥ १३६ ॥
उभयाभाव पृथिव्यादिकेषु विकलेषु भवेदुपपन्न ।
पञ्चेन्द्रिय-तिर्यक्षु नियमात् त्रयाणा स्यात् प्रपद्यते ॥ १३७ ॥
नारकदेवयोरकर्मकाऽन्तर्द्वीपेषु द्वयोर्भजना तु ।
कर्मक नरेषु चतुर्षु समूर्छिमेषु च उभयप्रतिषेध ॥ १३८ ॥
सम्यक्त्वस्य श्रुतस्य च प्रतिपत्ति षड्विधे काले ।
विरति विरताविरतिं प्रतिपद्यते द्वयोस्त्रिषु वापि ॥ १३९ ॥
चतसृष्वपि गतिषु नियमात् सम्यक्त्व-श्रुतस्य भवति प्रतिपत्ति ।
मनुजेषु भवति विरतिर्विरताविरतिश्च तिर्यक्षु ॥ १४० ॥
भवसिद्धिकस्तु जीव' प्रतिपद्यते स चतुर्णामन्यतरत् ।
प्रतिषेध पुनरसञ्ज्ञिमिश्रके सञ्ज्ञी प्रतिपद्यते ॥ १४१ ॥
उच्छ्वासको नि श्वासको मिश्रक प्रतिषेधो द्विविध प्रतिपन्न ।
दृष्टौ द्वौ नयौ खलु व्यवहारो निश्चयश्चैव ॥ १४२ ॥
आहारकस्तु जीव प्रतिपद्यते स चतुर्णामन्यतरत् ।

एमेव य पज्जत्तो सम्मत्तसुए सिया इअरो ॥ १४१ ॥
निद्दाइ भावओ विअ जागरमाणो चउण्हमन्नयरं ।
अण्डय-पोअ-जराऊय दु तिअ चउरो भवे कमसो ॥ १४२ ॥
उक्कोसगठिइए पडिवज्जन्ते अ नत्थि पडिवन्ने ।
अजहन्नमणुक्कोसे पडिवज्जन्ते अ पडिवन्ने ॥ १४३ ॥
चउरो वि तिविहवेए चउसु होइ पडिवत्ती ।
हिट्ठा जहा कसाए सुवन्निअ तह इहयं पि ॥ १४४ ॥
संखिज्जाउ चउरो भयणा सम्मसुअ संखवासीणं ।
ओहेण विभागेण य नाणी पडिवज्जइ चउरो ॥ १४५ ॥
चउरो वि तिविहे जोए उवओगदुगम्मि चउर पडिवज्जे ।
ओरालिए चउक्क सम्मसुअ विउव्विए भयणा ॥ १४६ ॥
सव्वेसु वि सठाणेसु लहइ एमेव सव्वसंघयणो ।
उक्कोसजहन्नं वज्जिऊण माणं लभे मणुओ ॥ १४७ ॥

एवमेव च पर्याप्त सम्यक्त्व-श्रुते स्यादितर ॥ १४३ ॥
निद्रया भावतोऽपि च जाग्रच्चतुर्णामन्यतरत् ।
अण्डज पोतज-जरायुजौ-पपातिका द्वे त्रीणि चत्वारि भवेयु क्रमशः १४४
उत्कृष्टस्थितौ प्रतिपद्यन्ते च न सन्ति प्रतिपन्ना ।
अजघन्यानुत्कृष्टे प्रतिपद्यन्ते च प्रतिपन्ना ॥ १४५ ॥
चत्वार्यपि त्रिविधवेदे चतसृष्वपि संज्ञासु भवति प्रतिपत्ति ।
अधो यथा कषाया. सुवर्णितं तथेहापि ॥ १४६ ॥
सख्येयायुश्चत्वारि भजना सम्यक्त्व-श्रुतयोरसंख्यवार्षिणाम् ।
ओघेन विभागेन च ज्ञानी प्रतिपद्यते चत्वारि ॥ १४७ ॥
चत्वार्यपि त्रिविधे योगे उपयोगद्विके चत्वारि प्रतिपद्यते ।
औदारिके चतुष्कं सम्यक्त्व-श्रुतयोर्वैक्रिये भजना ॥ १४८ ॥
सर्वेष्वपि संस्थानेषु लभते एवमेव सर्वसंहननः ।
उत्कृष्टजघन्य वर्जयित्वा मान[1] लभते मनुज ॥ १४९ ॥

1 शरीरमानमुत्कृष्ट गव्यूतत्रयम्, जघन्यमङ्गुलासख्येयभागम्, तद् द्वयं वर्जयित्वा ।

सम्मत्तसुअं सव्वासु लहइ सुद्धासु तीसु अ चरित्त ।
पुव्वपडिवन्नओ पुण अन्नयराए उ लेसाए ॥ १५० ॥
वड्ढन्ते परिणामे पडिवज्जइ सो चउण्हमन्नयर ।
एमेवऽवड्ढिअम्मि वि हायंति न किंचि पडिवज्जे ॥ १५१ ॥
दुविहाइ वेअणाए पडिवज्जइ सो चउण्हमन्नयर ।
असमोहओ वि एमेव पुव्वपडिवन्नए भयणा ॥ १५२ ॥
दव्वेण य भावेण य निव्वेड्ढिन्तो चउण्हमन्नयरं ।
नरएसु अणुवट्टे दुगं चउक्कं सिआ य उव्वट्टे ॥ १५३ ॥
तिरिएसु अणुव्वट्टे तिग चउक्क सिआ उ उव्वट्टे ।
मणुएसु अणुवट्टे चउरो ति दुग तु उव्वट्टे ॥ १५४ ॥
देवेसु अणुवट्टे दुग चउक्कं सिआ य उव्वट्टे ।
उव्वट्टमाणओ पुण सव्वो वि न किंचि पडिवज्जे ॥ १५५ ॥
नीसवमाणो जीवो पडिवज्जइ सो चउण्हमन्नयर ।
पुव्वपडिवन्नओ पुण सिअ आसवओ वनीसवओ ॥ १५६ ॥

---

सम्यक्त्वश्रुत सर्वासु लभते एवमेव शुद्धासु तिसृषु च चरित्रम् ।
पूर्वप्रतिपन्नक पुनरन्यतरस्या तु लेश्यायाम् ॥ १५० ॥
वर्धमाने परिणामे प्रतिपद्यते स चतुर्णामन्यतरत् ।
एवमेववार्धितेऽपि हीयमाने न किञ्चित् प्रतिपद्यते ॥ १५१ ॥
द्विविधाया वेदनाया प्रतिपद्यते स चतुर्णामन्यतरत् ।
असमवहतोऽप्येवमेव पूर्वप्रतिपन्नके भजना ॥ १५२ ॥
द्रव्येण च भावेन च निर्वेष्टयश्चतुर्णामन्यतरत् ।
नरकेष्वनुवर्तयन् द्विक चतुष्क स्याच उद्वृत्त ॥ १५३ ॥
तिर्यक्ष्वनुवर्तयन् त्रिकं चतुष्क स्यात्तूद्वृत्त ।
मनुजेष्वनुवर्तयश्चत्वारि त्रीणि द्विक तु उद्वृत्त ॥ १५४ ॥
देवेष्वनुवर्तयन् द्विक चतुष्कं स्याच्चोद्वृत्त ।
उद्वर्तमान पुन सर्वोऽपि न किंचित् प्रतिपद्यते ॥ १५५ ॥
नि श्रावयन् जीव प्रतिपद्यते स चतुर्णामन्यतरत् ।
पूर्वप्रतिपन्नक. पुन स्यादाश्रावकश्च निश्रावक ॥ १५६ ॥

उम्मुक्कमणुम्मुक्के उम्मुंचते य केसलंकारे ।
पडिवज्जिज्जन्नयरं सयणाईसुं पि एमेव ॥ १५७ ॥
सव्वगयं सम्मत्त सुए चरित्ते न पज्जवा सव्वे ।
देसविरइं पडुच्चा दुण्ह वि पडिसेहणं कुज्जा ॥ १५८ ॥
माणुस्स खित्त जाई कुल रूवारोगमाउअ बुद्धी ।
सवणुग्गह सद्धा संजमो अ लोगम्मि दुलहाइं ॥ १५९ ॥
इन्दिअलद्धी निव्वत्तणा य पज्जत्ति निरुवहयखेम ।
धायारोगं सद्धा गाहग उवओग अट्ठो य ॥ १६० ॥
चुल्लग पासग धन्ने जूए रयणे अ सुमिण चक्के अ ।
चम्मजुगे परमाणु दस दिट्ठन्ता मणुअलभे ॥ १६१ ॥
जह समिला पब्भट्ठा सागरसलिले अणोरपारम्मि ।
पविसिज्ज जुगच्छिद्दं कह वि भमन्ती भमतम्मि ॥ १६२ ॥
पुव्वन्ते हुज्ज जुगं अवरंते तस्स हुज्ज समिला ओ ।
जुगच्छिद्दम्मि पवेसो इअ ससयओ मणुअलम्भे ॥ १६३ ॥

उन्मुक्तेऽनुन्मुक्ते उन्मुञ्चश्च केशाऽलङ्कारान् ।
प्रतिपद्येताऽन्यतरत् शयनादिष्वपि एवमेव ॥ १५७ ॥
सर्वगतं सम्यक्त्व श्रुत चरित्र न पर्यवाः सर्वे ।
देशविरतिं प्रतीत्य द्वयोरपि प्रतिषेधन कुर्यात् ॥ १५८ ॥
मानुष्य क्षेत्रं जाति कुल रूपमारोग्यमायुर्बुद्धि ।
श्रवणाऽवग्रहौ श्रद्धा संयमश्च लोके दुर्लभानि ॥ १५९ ॥
इन्द्रियलब्धिर्निर्वर्तना च पर्याप्तिर्निरुपहतक्षेमम् ।
ध्रातं[1]ऽऽरोग्य श्रद्धा ग्राहक उपयोगोऽर्थश्च ॥ १६० ॥
चोल्लक पाशको धान्यं द्यूत रत्न च स्वप्नश्चक्र च ।
चर्मयुग परमाणुर्दश दृष्टान्ता मनुजलाभे ॥ १६१ ॥
यथा शमिला प्रभ्रष्टा सागरसलिले अनवरपारे ।
प्रविशेद् युगच्छिद्र कथमपि भ्राम्यन्ती भ्रमति ॥ १६२ ॥
पूर्वान्ते भवेद् युगमपरान्ते तस्य भवेत् शमिला तु ।
युगच्छिद्रे प्रवेश इति सशयतो मनुजलाभ ॥ १६३ ॥

१ ध्रात सुभिक्षम् ।

सा चण्डवायवीइपणुल्लिआ अवि लहिज्ज जुगच्छिड्डं ।
न य माणूसाउ भट्ठो जीवो पडिमाणूस लहइ ॥ १६४ ॥
इअ दुल्लहलभ माणूसत्तणं पाविऊण जो जीवो ।
न कुणइ पारत्तहिअं सो सोअइ संकमणकाले ॥ १६५ ॥
जह वारिमज्झच्छूढ व्व गयवरो मच्छउ व्व गलगहिओ ।
वग्गुरपडिउ व्व मओ संवट्टिओ जह व पक्खी ॥ १६६ ॥
सो सोअइ मच्चुजरासंमुच्छिओ तुरिअनिद्दपक्खित्तो ।
तायारमविदंतो कम्मभरपणुल्लिओ जीवो ॥ १६७ ॥
काऊणमणेगाइ जम्मणमरणपरिअट्टणसयाइ ।
दुक्खेण माणुसत्त जइ लहइ जहिच्छिअं जीवो ॥ १६८ ॥
त तह दुल्लहलभ विज्जुलयाचचल माणूअसत्तं ।
लद्धूण जो पमायइ सो काउरिसो न सप्पुरिसो ॥ १६९ ॥
आलस्स मोह वन्ना थंभा कोहा पमायकिविणत्ता ।
भय सोगा अन्नाणा वक्खेव य कोकुऊहला रमणा ॥ १७० ॥

---

सा चण्डवातवीचिप्रणोदिताऽपि लभेत युगच्छिद्रम् ।
न च मानुष्याद् भ्रष्टो जीव प्रतिमानुष्य लभते ॥ १६४ ॥
इति दुर्लभलाभ मानुष्य प्राप्य यो जीव ।
न करोति परात्महित स शोचति सक्रमणकाले[1] ॥ १६५ ॥
यथा वारिमध्याक्षिप्त इव गजवर , मत्स्यक इव गलगृहीत ।
वागुरापतित इव मृग , सवर्त्तितो यथा वा पक्षी ॥ १६६ ॥
स शोचति मृत्युजरासम्मूर्छितस्त्वरितनिद्राप्रक्षिप्त ।
त्रातारमविन्दमान कर्मभरप्रणोदितो जीव ॥ १६७ ॥
कृत्वाऽनेकानि जनन-मरण-परिवर्तनशतानि ।
दु खेन मानुष्य यदि लभते यथेप्सित जीव ॥ १६८ ॥
तत् तथा दुर्लभलाभ विद्युल्लताचञ्चल मानुष्यम् ।
लब्ध्वा य प्रमाद्यति स कापुरुषो न सत्पुरुष ॥ १६९ ॥
आलस्याद् मोहादवज्ञानात् स्तम्भात् क्रोधात् प्रमाद-कृपणत्वाभ्याम् ।
भयात् शोकादज्ञानाद् व्याक्षेपाच्च कुतूहलाद् रमणात् ॥ १७० ॥

---

१ मरणकाले ।

एएहिं कारणेहिं लद्‌धूण सुदुल्लह पि माणुस्स ।
न लहइ सुइ हिअकरिं ससारुत्तारणि जीवो ॥ १७१ ॥
जाणावरण पहरणे जुद्धे कुसलत्तणं च नीई अ ।
दक्खत्त ववसाओ सरीरमारोगया चेव ॥ १७२ ॥
जीवो जोहो जाणं वयाणि आवरणमुत्तमा खन्ती ।
झाणं पहरणमिट्ठं गीअत्थत्त च कोसल्लं ॥ १७३ ॥
दव्वाइजहोवायाणुरूवपडिवत्तिवत्तिआ णीई ।
दक्खत्तं किरिआण ज करणमहीणकालम्मि ॥ १७४ ॥
करण सहण च तवोवसग्गादुग्गावईइ ववसाओ ।
एएहिं सुनीरोगो कम्मरिउ जिणइ सव्वेहिं ॥ १७५ ॥
दिट्ठे सुए मणुभूए कम्माण खए कए उवसमे य ।
मण-वयण-कायजोगे अ पसत्थए लब्भए बोही ॥ १७६ ॥
अणुकम्प कामनिज्जर बालतवे दाणविणयविब्भगे ।
संजोगविप्पओगे वसणूसव इड्ढिसक्कारे ॥ १७७ ॥

---

एतै कारणैर्लब्ध्वा सुदुर्लभमपि मनुष्यत्वम् ।
न लभते श्रुति हितकरी ससारोत्तारणी जीव ॥ १७१ ॥
यानावरणे प्रहरणं युद्धे कुशलत्वं च नीतिश्च ।
दक्षत्व व्यवसाय शरीरमारोग्य चैव ॥ १७२ ॥
जीवो योधो यान व्रतानि आवरणमुत्तमा क्षान्ति ।
ध्यानं प्रहरणमिष्ट गीतार्थत्व च कौशल्यम् ॥ १७३ ॥
द्रव्यादियथोपायानुरूपप्रतिपत्तिवर्तिता नीति ।
दक्षत्वं क्रियाणा यत्करणमहीनकाले ॥ १७४ ॥
करण सहन च तप-उपसर्गदुर्गापदि व्यवसाय ।
एतै सुनीरोग कर्मरिपुं जयति सर्वै ॥ १७५ ॥
दृष्टे श्रुतेऽनुभूते कर्मणा क्षये कृते उपशमे च ।
मनो वचन-काययोगे च प्रशस्ते लभ्यते बोधि ॥ १७६ ॥
अनुकम्पाऽकामनिर्जरा-बालतपोभिर्दान विनय-विभङ्गे ।
संयोगविप्रयोगौ व्यसनोत्सव ऋद्धि-सत्कारौ ॥ १७७ ॥

विज्जे मिठे तह इन्दनाग कयपुन्न पुप्फसालसुए ।
सिव दु महुरवाणि भाउग आभीर दसन्नि इलापुत्ते ॥ १७८ ॥
सो वानरजूहवई कंतारेसु विहिआणुकम्पाए ।
भासुरवरबुदि्धरो देवो वेमाणिओ जाओ ॥ १७९ ॥
अब्भुट्टाणे विणए परक्कमे साहुसेवणाए य ।
सम्मद्दसणलम्भो विरयाविरई य विरई य ॥ १८० ॥
सम्मत्तस्स सुअस्स य छावट्ठीसागरोवमाइ ठिई ।
सेसाण पुव्वकोडी देभूणा होइ उक्कोसा ॥ १८१ ॥
दो वारे विजयाइसु गयस्स तिन्नच्चुए अहव ताई ।
अइरेग नरभविअ नाणाजीवाण सव्वद्धा ॥ १८२ ॥
सम्मत्तदेसविरआ पलिअस्स असखभागमित्ता ओ ।
सेढीअसखभागो सुए सहस्सग्गसो विरई ॥ १८३ ॥
समत्तदेसविरया पडिवन्ना सपइ असखिज्जा ।
सखिज्जा य चरित्ते तीसु वि पडिआ अणतगुणा ॥ १८४ ॥

---

वैद्यो हस्तिपकस्तथेन्द्रनाग कृतपुण्य पुष्पशालसुत ।
शिवो द्वौ माथुरवणिजौ भ्रातृक आभीरो दशार्ण इलापुत्र ॥ १७८ ॥
स वानरयूथपति कान्तारेषु विहितानुकम्पया ।
भासुरवरशरीरधरो देवो वैमानिको जात ॥ १७९ ॥
अभ्युत्थाने विनये पराक्रमे साधुसेवनया च ।
सम्यग्दर्शनलाभो विरताविरतिश्च विरातिश्च ॥ १८० ॥
सम्यक्त्वस्य श्रुतस्य च षट्षष्टिसागरोपमाणि स्थिति. ।
शेषाणा पूर्वकोटिर्देशोना भवति उत्कृष्टा ॥ १८१ ॥
द्वौ वारौ विजयादिषु गतस्य त्रीण्युच्च्युतेऽथवा तानि ।
अतिरेक नरभविक नाना जीवाना सर्वाद्धा ॥ १८२ ॥
सम्यक्त्वदेशविरता पल्यस्य असख्यभागमात्रास्तु ।
श्रेण्यसख्यभाग श्रुते सहस्राग्रशो विरति ॥ १८३ ॥
सम्यक्त्वदेशविरता प्रतिपन्ना सप्रति असख्येया ।
सख्येयाश्च चारित्रे त्रिष्वपि पतिता अनतगुणा ॥ १८४ ॥

सुअपडिवन्ना सपइ पयरस्स असंखभागमित्ता ओ ।
सेसा ससारत्था सुअपरिवडिआ हु ते सव्वे ॥ १८५ ॥
कालमणत च सुए अद्धापरिअट्टओ य देसूणो ।
आसायणबहुलाण उक्कोसमन्तर होइ ॥ १८६ ॥
सम्मसुअमगारीणं आवलिअ असखभागमित्ता ओ ।
अट्ठ समया चरित्ते सव्वेसिं जहन्न दो समया ॥ १८७ ॥
सुअसम्म सत्तगं खलु विरयाविरईइ होइ बारसगं ।
विरईइ पन्नरसगं विरहिअकालो अहोरत्तो ॥ १८८ ॥
समत्तदेसविरया पलिअस्स असखभागमित्ताओ ।
अट्ठ भवा ओ चरित्ते अणंतकालं च सुअसमए ॥ १८९ ॥
तिण्हं सहस्सपुहत्त सयपुहत्तं च होइ विरईए ।
एगभवे आगरिसा एवइआ हुन्ति नायव्वा ॥ १९० ॥
तिण्ह सहस्समसखा सहस्सपुहत्त च होइ विरईए ।
नाणभवे आगरिसा एवइआ हुति नायव्वा ॥ १९१ ॥

---

श्रुतप्रतिपन्ना सप्रति प्रतरस्य असख्यभागमात्रास्तु ।
शेषा ससारस्था श्रुतपरिपातिता खलु ते सर्वे ॥ १८५ ॥
कालमनन्त च श्रुतेऽर्धपरावर्तकस्तु देशोन ।
आशातनाबहुलाना उत्कृष्टमन्तर भवति ॥ १८६ ॥
सम्यक्श्रुतागारिणामावलिका असंख्यभागमात्रास्तु ।
अष्टौ समयाश्चारित्रे सर्वेषा जघन्यौ द्वौ समयौ ॥ १८७ ॥
श्रुत-सम्यक्त्वयो सप्तक खलु विरताविरतौ भवति द्वादशकम् ।
विरतौ पञ्चदशक विरहितकालोऽहोरात्राणाम् ॥ १८८ ॥
सम्यक्त्वदेशविरता पल्यस्य असंख्यभागमात्रा ।
अष्टौ भवास्तु चारित्रेऽनन्तकालं च श्रुतसमये ॥ १८९ ॥
त्रयाणां सहस्रपृथक्त्वं शतपृथक्त्व च भवति विरतौ ।
एकभवे आकर्षा एतावन्तो भवन्ति ज्ञातव्या ॥ १९० ॥
त्रयाणा सहस्राण्यसंख्यानि सहस्रपृथक्त्वं च भवति विरतौ ।
नानाभवे आकर्षा एतावन्तो भवन्ति ज्ञातव्या. ॥ १९१ ॥

सम्मत्तचरणसहिआ सव्व लोग फुसे निरवसेस ।
सत्त य चउदसभागे पच य सुअदेसविरईए ॥ १९२ ॥
सव्वजीवेहि सुअ सम्मचरित्ताइ सव्वसिद्धेहिं ।
भागेहि असखिज्जेहि फासिआ देसविरई ओ ॥ १९३ ॥
सम्मद्दिट्ठि अमोहो सोही सब्भावदसण बोही ।
अविवज्जओ सुदिट्ठित्ति एवमाइ निरुत्ताइ ॥ १९४ ॥
[1]अक्खर सन्नी सम्म– ॥ १९५ ॥
विरयाविरईसवुडे बाल पण्डिअे चेव ।
देसिक्कदेसविरई अणुधम्मो अगारधम्मो अ ॥ १९६ ॥
सामाइअ समइअ सम्मावाओ समाससखेवो ।
अणवज्ज च परिन्ना पच्चक्खाणे अ ते अट्ठ ॥ १९७ ॥
दमदन्ते मेअज्जे कालगपुच्छा चिलायपुत्ते अ ।
धम्मरुई इला तेयलि सामाइए अट्ठ उदाहरणा ॥ १९८ ॥
निक्खन्तो हत्थिसीसाओ दमदन्तो कामभोगमवहाय ।

---

सम्यक्त्वचरणसहिता सर्व लोकं स्पृशन्ति निरवशेषम् ।
सप्त च चतुर्दशभागान् पञ्च च श्रुतदेशविरतौ ॥ १९२ ॥
सर्वजीवै श्रुत सम्यक्चारित्रे सर्वसिद्धै ।
भागैरसख्येयै स्पृष्टा देशविरतयस्तु ॥ १९३ ॥
सम्यग्दृष्टिरमोह शुद्धि सद्भावदर्शनं बोधि ।
अविपर्यय सुदृष्टिरिति एवमादीनि निरुक्तानि ॥ १९४ ॥
विरता विरतिसवृता बाला पण्डिताश्चैव ।
देशैकदेशविरतयोऽणुधर्मोऽगारधर्मश्च ॥ १९६ ॥
सामायिक समयिक सम्यग्वाद समास सक्षेपौ ।
अनवद्य च परिज्ञा प्रत्याख्यान च तेऽष्टौ ॥ १९७ ॥
दमदन्तो मेतार्य कालकपृच्छा चिलातिपुत्रश्च ।
धर्मरुचिरिलाचि तैतलीसामायिकेऽष्टावुदाहरणानि ॥ १९८ ॥
निष्क्रान्तो हस्तिशीर्षाद् दमदान्त कामभोगमपहाय ।

---

१ पीठिकायां गाथा १९ ।

न वि रज्जइ रत्तेसु दुट्ठेसु न दोससावज्जे ॥ १९९ ॥

वदिज्जमाणा न समुक्कसन्ति
हीलिज्जमाणा न समुज्जलन्ति ।
दन्तेण चित्तेण चरति धीरा
मुणी समुग्घाइअरागदोसा ॥ २०० ॥

तो समणो जइ सुमणो भावेण य, जइ न होइ पावमणो ।
सयणे य जाणे अ समो समो अ माणावमाणेसु ॥ २०१ ॥
नत्थि अ से कोइ वेसो पिओ अ सव्वेसु चेव जीवेसु ।
एएण होइ समणो एसो अन्नो वि पज्जाओ ॥ २०२ ॥
जो कुचगावराहे पाणिदया कुचगं तु नाइक्खे ।
जीविअमणुपेहत मेअज्जरिसिं नमसामि ॥ २०३ ॥
निप्फेडिआणि दुन्न वि सीसावेढेण जस्स अच्छीणि ।
न य सजमाओ चलिओ मेअज्जो मदरगिरिव्व ॥ २०४ ॥

---

नाऽपि रज्यति रक्तेषु दुष्टेषु न दोषसावद्य ॥ १९९ ॥

वन्द्यमाना न समुत्कर्षन्ति
हेल्यमाना न समुज्ज्वलन्ति ।
दान्तेन चित्तेन चरन्ति धीरा
मुनय समुद्घातितरागद्वेषा ॥ २०० ॥

तत श्रमणो यदि सुमना भावेन च यदि न भवति पापमना ।
शयने च याने च सम समश्च मानाऽवमानेषु ॥ २०१ ॥
नास्ति च तस्य कोऽपि द्वेष्य , प्रियश्च सर्वेषु चैव जीवेषु ।
एतेन भवति श्रमण एष्य अन्योऽपि पर्याय ॥ २०२ ॥
य क्रौञ्चकापराधे प्राणिदयात क्रौञ्चकं तु नाचष्टे ।
जीवितमनपेक्षमाण मेतार्यऋषि नमस्यामि ॥ २०३ ॥
निस्फेटिते द्वे अपि शीर्षावेष्टेन यस्याक्षिणी ।
न च संयमाच्चलितो मेतार्यो मन्दरगिरिरिव ॥ २०४ ॥

ग्रन्थगौरवभयान्नोक्ता , ते त्वमी आत्मनेपदिनां धातूनां ज्ञेयाः, यथा कुडुङ् दाहे "उदित स्वरान्नोऽन्तः" ॥ ४।४।९८ ॥ इति नागमे ततो व० ए, शवि "लुगस्यादेत्यपदे" ॥ २।१।११३ ॥ इत्यकारलोपे कुण्डे इति सिद्धम् । एवं हुडुङ् पिडुङ् संघाते हुण्डे पिण्डे, मुडुङ् उद्यमे मुण्डे, तुडुङ् तोडने तुण्डे, चडुङ् कोपे चण्डे, तडुङ् ताडने तण्डे, खडुङ् मन्थे खण्डे । एते सप्तम्येकवचनप्रतिरूपका, प्रथमाद्वितीया-द्विवचनै सदृशा वा । याक् प्रापणे इत्यस्य व० मसि सस्य रुत्वे विसर्गे च यामः इति सिद्धम्, प्रहरवाची स्नन्तः। रांक् आदाने इत्यस्य शेष पूर्ववद् रामः इति सिद्धम् । एवमन्येऽपि वाच्याः ॥ अनस् इति णसि कौटिल्ये "पाठे धात्वादेर्णो नः" ॥ २।३।९७ ॥ इति णस्य ने शेषमरये इतिवत् अनसे इति सिद्धम् । शकटपर्यायोऽनस्शब्दश्चतुर्थ्यन्त-सदृशी क्रिया ॥ गवे इति उङ् कुङ् गुङ् घुङ् ङुङ् शब्दे व० ए शवि "नामिनो गुणोऽक्ङिति" ॥ ४।३।१ ॥ इति गुणे "ओदौतोऽवाव्" ॥ १।२।२४ ॥ इत्यवादेशे "लुगस्यादेत्यपदे" ॥ २। १ । ११३ ॥ इत्यकारलोपे गवे इति क्रिया चतुर्थ्यन्तगोशब्दसदृशी । वृक्षे इति, 'वृक्षि वरणे' इत्यस्य गवेवत् । अहयः इति, हयशब्दाद् नञ्पूर्वात् प्रथमैक-वचने, अहिशब्दाद् वा जसि । क्रिया तु 'हय हर्य क्लान्तौ च' ह्य० सिवि, शवि, अडागमे, सस्य रुत्वे विसर्गे च अहय. इति सिद्धम् । अकवे इति कविशब्दादामन्त्र्ये सौ नञ्पूर्वात् कुशब्दाद् वा चतुर्थ्य-न्तम्, क्रिया तु 'उङ् कुङ् दण्डकधातु' शेषमनसे इतिवत्, गुणकृतस्तु विशेष । अयसे इति, अयो लोहम्, चतुर्थ्येकवचनान्तम्, क्रिया तु 'अयि वयि दण्डकधातु' शेष वयसे इतिवत् सिद्धम् । रेखे, लेखे इति द्विवचनान्तौ पङ्क्तिपर्यायौ, क्रिया तु 'उख नख णखेत्यादौ रख-लखौ गत्यर्थौ, परोक्षा-ए, "अनादेशादेरेक–" ॥४।१।२४॥ इत्या-दिनोपान्त्यस्य अकारस्य एत्वे रेखे, लेखे इति प्रयोगौ सिद्धौ । रजसि सप्तम्येकवचनान्त रजस्-शब्दस्य, क्रिया तु 'रञ्जी रागे' व० सिवि,

---

१ भावे कर्मणि वा ।

शवि, "अकट्घिनोश्च रञ्जे:" ॥ ४ । २ । ५० ॥ इत्यनेन नकारलोपे सिद्धं रजसीति । रेजेऽलि, लिट्-इति परोक्षाया. संज्ञाऽन्येषा[1] मते, रेजे इति परोक्षा न भवतीत्यर्थ, तथाहि- 'ऋजि गतिस्थानार्जनेषु' अमु कश्चिद् 'रिजि' इति व्यञ्जनादि पठति, तन्मतमाश्रित्य प्रयोग. साध्यते, व० ए, शवि, "लघोरुपान्त्यस्य" ॥ ४ । । ३ । ४ ॥ इति गुणे "लुगस्यादेत्यपदे" ॥ २ । १ । ११३ ॥ इत्यकारलोपे रेजे इति सिद्धम् । तथा 'ज्यांश वयोहानौ' नञ्पूर्वक', प० आनिवि "क्र्यादे" ॥ ३ । ४ । ७९ ॥ इति श्रा, "ज्याव्यध. क्ङिति" ॥४।१।८१॥ इति य्वृति, समानदीर्घत्वे "त्यादौ क्षेपे" ॥ ३ । २ । १२६ ॥ इति नकारस्य अकारे च अजिनानि इति क्रिया, चर्मपर्यायाऽजिनशब्दस्य जसन्तस्य, शसन्तस्य वा सदृशी प्रकृतिः । आवे, जाये 'उङ् कुङ् गुङ् घुङ् ङुङ् शब्दे' इत्यस्याङ्पूर्वस्य व० ए, शेष गवेवत्। जाये इति 'जनैचि प्रादुर्भावे' व० ए, श्ये, "ये नवा" ॥४।२।६२॥ इति नकारस्य आकारे "लुगस्यादेत्यपदे" ॥ २ । १ । ११३ ॥ इत्यलोपे जाये इति सिद्धम् । एवमन्येऽप्यनुसर्तव्या. ॥ १७ ॥

**अद्यौर्नञ्समासोऽयं सर्वैषामिति चैकता ।**
**अन्येषामपरेषां च केषां कासां तथा दश ॥ १८ ॥**

न द्यौरद्यौरिति नञ्समासे, क्रिया तु 'द्युक् अभिगमने' द्य० सिवि, "उत और्विति व्यञ्जनेऽद्वेः" ॥ ४ । ३ । ५९ ॥ इति उकारस्यौकारऽडागमे सस्य रुत्वे अद्यौः इति सिद्धम् ॥ सर्वैषामिति चैकता इति, ईषा हलदण्डक. सर्वा चासावीषा चेति कर्मधारये "अवर्णस्येवर्णादिना" ॥१।२।६॥ इति अकारस्य एकार., कर्मविवक्षाया समानदीर्घत्वे च सिद्धं सर्वैषाम् इति ॥ च. समुच्चये, तेन चक्रेत्यामन्त्र्यैकवचनान्तम्, बहुवचनान्त ब्रूम.- डुकृंग् करणे परोक्षा "द्विर्धातुपरोक्षा" ॥४।१।१॥ इत्यादिना द्वित्वे "ऋतोऽत्" ॥४।१।३८॥

---

1 पाणिनीयादीनाम् ।

इति ऋकारस्याऽकारे "कङश्चञ्" ॥ ४।१।४६ ॥ इति कस्य चे "इवर्णादे-" ॥ १।२।२१ ॥ इत्यादिना रत्वे **चक्र** इति सिद्धम् ॥ तथा-**ऽवस्था** इत्येकवचनान्तम्, कथम्, वसिक् आच्छादने द्य०थास् अडागमे सस्य रुत्वे विसर्गे च सिद्धम् अवस्था इति। इदानीं प्रकृतमुच्यते-अन्येषामपरेषा चेति अन्या चासावीषा चेति समासे शेष पूर्ववत्। ईष गतिहिंसादानेषु ईषणमीषा "क्तेटो गुरोर्व्यञ्जनात्" ॥५।३।१०६॥ इत्यप्रत्ययः "आत्" ॥२।४।१८॥ इत्याप्, को ब्रह्मा तस्येषा केषेति षष्ठीसमासे द्वितीयैकवचनं **केषाम्** इति सिद्धम् ॥ **कासाम्** इति कासृङ् शब्दकुत्सायां पूर्ववदप्रत्यये "आत्" ॥ २।४।१८ ॥ इत्यापि द्वितीयैकवचने कासामिति सिद्धम् ॥ **दश** इति जसन्तं शसन्त वा। एकवचनान्तं कथ तत्, उच्यते- दंशं दशने प० हि, शवि "दंशसञ्जः शवि" ॥४।२।४९॥ इत्युपान्त्यनकारलोपे च दशेति सिद्धम् ॥ १८ ॥

अगारं द्वे पदे स्यातां प्रथमान्तं शुनस्तथा।
कर्तृरूपे कथं स्यातां दीयते धीयते तथा? ॥१९॥

अगार गृहं तदेकपदम्, पदद्वय ब्रूम – अग अकवत् पं०हि शवि "अत प्रत्ययाल्लुक्" ॥ ४।२।८५ ॥ इति हेर्लोपे **अग** इति सिद्धम्। अरमिति शीघ्रमत्यर्थ वाऽगाकारस्याऽरमकारेण सह दीर्घत्वे **अगारम्** इति पदद्वय सिद्धम् ॥ **प्रथमान्तं शुनस्तथा** शुन शुनत् गताविलस्य शुनतीति "नाम्युपान्त्य-" ॥ ५।१।५४ ॥ इत्यादिना के प्रथमैकवचने सस्य रुत्वे विसर्गे च **शुनः** इति सिद्धम् ॥ **कर्तृरूपे कथं स्यातां दीयते धीयते तथा** इति डुदांगक् दाने डुधांगक् धारणे च "क्य. शिति" ॥३।४।७०॥ इति क्ये "ईर्व्यञ्जने यपि" ॥४।३।९७॥ इतीकारे **दीयते धीयते** इति कर्मणि, कर्तरि च दीङ्च् क्षये, धीङ्च् अनादरे व० ते श्ये दीयते धीयते कर्तरि सिद्धौ ॥१९॥॥

त्याद्यन्तमालयं प्रोक्तमसमस्तमजापयः।
अन्यान्यश्चालयं चैव ह्यनालयमशालयः ॥२०॥

**त्याद्यन्तमालयं प्रोक्तमिति** आलयं गृहं द्वितीयैकवचनान्तं चैतत्, क्रिया तु अलि भूषणपर्याप्तिवारणेषु अलन्तमलमान प्रयुङ्क्ते "प्रयोक्तृव्यापारे णिग्" ॥३।४।२०॥ इति णिग् "ञ्णिति" ॥४।३।५०॥ इत्युपान्त्याकारस्य वृद्धि' ह्य० अम्व् शव् गुण. "एदैतोऽयाय्" ॥ १।२।२३ ॥ इत्ययादेशः "स्वरादेस्तासु-" ॥ ४।४।३१ ॥ इत्यादि-वृद्धौ **आलयम्** इति सिद्धम्। यदा "ईंगित" ॥३।३।९५॥ फलवत्-कर्तयात्मनेपदं तदा आलये इति ह्य०इप्रत्यये शवि "अवर्णस्य-" ॥१।२।६॥ इत्यादिना, अस्येकारेण सह एकारे, सप्तम्यन्तनामप्र-तिरूपिका क्रिया। **असमस्तमजा पयः** इति, समासे तु अजाया इति षष्ठीसमासः, क्रिया तु जप मानसे इत्यस्य णिगि पूर्ववदुपान्त्यस्य वृद्धौ ह्यस्तनीसिवि शवि अडागमे गुणेऽयादेशे सस्य रुत्वे विसर्गे च **अजापयः** इति सिद्धम्। अथवा 'जिञि अभिभवे' इत्यस्य जयन्त प्रयुङ्क्ते णिगि "णौ क्रीजीङ." ॥ ४।२।१० ॥ इत्यिकारस्याकार. "अर्तिरी-" ॥ ४।१।२१॥ इत्यादिना पोऽन्त. शेषं पूर्ववत् ॥ **अन्यान्यश्चालयं चैव** इति अपराण्यप्येव द्रष्टव्यानीत्यर्थ, तानि चोच्यन्ते-अव रक्षणेत्यादि-दण्डकधातु' व० सि शवि अवसीति सिद्धम्। 'जि ञि अभिभवे' इत्यस्य जयन्त प्रयुङ्क्ते णिगि "णौ क्रीजीङ."॥४।२।१०॥ इत्यिकारस्या-कारः' तथा वसिक् आच्छादने ह्य० इप्रत्ययेऽडागमे अवसि इति सि-द्धम् ॥ अवेत्युपसर्ग., अवत. प० हि क्रिया वा। **एवमशुभम्** इति उ-भयत्र त्याद्यन्तं ह्य०अमि अद्यतन्यां 'वा शुभ 'दीप्तौ' इत्यस्य "द्युद्भ्योऽद्यत-न्याम्" ॥ ३।३।४४ ॥ इत्यात्मनेपदविकल्पनात् पक्षे "शेषात्परस्मै" ॥३।३।१००॥ इति परस्मैपदेऽद्य० अमि 'लृदिद्द्युतादि-" ॥३।४।६४॥ इत्यादिनाऽङि अडागमे "लुगस्यादेत्यपदे" ॥ २।१।११३ ॥ इत्य-लोपे **अशुभम्** इति सिद्धम्, अथवा शुभ शुम्भत् शोभार्थे ह्य० अम्व् शे "नो व्यञ्जनस्याऽनुदित" ॥ ४।२।४५ ॥ इति नलोपे शेषं पूर्व-वत् ॥'धुक्षि धिक्षि संदीपनक्लेशनजीवनेषु' ह्य० त शवि अडागमे **अधुक्षत् अधिक्षत्** इति रूपे सिद्धे ॥ दुहिक् क्षरणे दिहिक् लेपे अस्य अद्य०

"हशिटो नाम्युपान्त्य-" ॥३।४।५५॥ इत्यादिना सकि "दुह-" ॥४।३।७४॥ इत्यादिना सकूलुकि **अदुग्ध अदिग्ध** इति रूपे सिद्धे ॥ अपुरिति 'पांक् रक्षणे'-ह्य० अनि "वा द्विषातोऽनः पुस्" ॥ ४।२।९१ ॥ इति पुसादेशे "इडेत्पुसि चातो लुक्" ॥ ४।३।९४ ॥ इत्याकारलोपेऽडागमे **अपुः** इति ॥ अद्य० आनि "पिबैति-" ॥ ४।३।६६ ॥ इत्यादिना सिचो लुक् "सिज्विदो भुव." ॥ ४।२।९२ ॥ इति पुसादेशे शेष पूर्ववत् । एव 'दांक् लवने' इत्यस्य शेष पातिना तुल्यम्, ततोऽदुरिति रूपम्, दासञ्ज्ञानां तु 'डुदांग्क् दाने' अद्य० अनि शेषं पिबतिवत्, ततोऽदुरिति सिद्धम् । तथा 'लिहिक् आस्वादने' लिशं ऋष गतौ, अद्य० सि "हशिटो नाम्युपान्त्य-"॥३।४।५५॥ इत्यादिना सक् "हो धुट्पदान्ते" ॥२।१।८२॥ ढत्वं "यजसृज-" ॥ २।१।८७ ॥ इत्यादिना षत्व "षढोः कः सि" ॥ २।१।६२ ॥ इति षढयोः कत्वे "सो रुः" ॥ २।१।७२ ॥ इति रुत्वे विसर्गे च **अलिक्षम्** इति सिद्धम् । यदा त्वत्र पूर्वत्र च "शिट्याद्यस्य द्वितीयो वा" ॥ १।२।५९ ॥ इति द्वितीयः क्रियते, **अलिख्षं** इति भवति ॥ 'विष्लृकी व्याप्तौ' अद्य० सि अडागमे "लृदिद्युता-" ॥ ३।४।६४ ॥ इत्यादिनाऽङि सस्य रुत्वे विसर्गे **अविषः** इति सिद्धम् ॥ अथवा न विद्यते विषमस्य अविष', यद्वा 'अव रक्षणे' इति दण्डकधातु' "मह्यविभ्या टित्" ॥(उणा-५४७)॥ इत्यनेन इषप्रत्ययः "अधातुविभक्ति-" ॥ १।१।५९ ॥ इत्यादिना नामत्वे प्रथमैकवचनं सि सस्य रुत्वे विसर्गे **अविषः** इति सिद्धम् ॥ **अश्वालयं चैवेति** अश्वानामालय , शुनामलय इति वा नञ्समासे द्वितीयायाम् **अश्वालयम्** इति, समासे चैतत् । असमासे तु 'श्वल श्वल्ल आशुगतौ' पूर्ववद् णिगि वृद्धौ च ह्य० मवि अडागमे शवि गुणेऽयादेशे **अश्वालयम्** इति सिद्धम् ॥ हिश्छन्द'पूरणे । **अनालयम्** इति न विद्यते आलयोऽस्येत्यनालयमिति सामासिकम्, असमासे तु 'णल गन्धे' इत्यस्य "पाठे धात्वादेर्णो नः" ॥ २।३।९७ ॥ इति णस्य नत्वे शेषं णिगाद्यश्वालयवत् ॥ **अशालयः** इति शालिशब्दस्य नञा सह

समासे ततो जस्। क्रिया तु 'पल फल शल गतौ' इत्यस्य शलन्तं प्रयुङ्क्ते णिग् ह्य० शवि शेष वृद्ध्यादि पूर्ववत् ॥ २० ॥

**अव्याधयोऽसमस्तं स्याद् येयेषांचक्रिरे पदम् ।**
**अक्षेपयस्तथा चान्यदक्षेवयममीवयम् ॥ २१ ॥**

अव्याधयः इति न विद्यते व्याधिर्येषां तेऽव्याधय इति जस्, समासपदम्। असमासपदं तु 'व्यधंक् ताडने' इत्यस्य णिगि ह्य० सि शेषं वृद्ध्यादि पूर्ववत्। यदा तु "ईगित" ॥ ३।३।९५ ॥ इति फलवत्कर्तर्यात्मनेपदोत्तमत्रिकैकवचनेप्रत्यय', तदा चतुर्थ्यन्तसदृशमव्याधये इति सिद्धम् ॥ येयेषांचक्रिरे पदम् इति पदत्रयसदृशम्। कथमित्युच्यते-'येषृङ् प्रयत्ने' "व्यञ्जनादे— " ॥ ३।४।९ ॥ इत्यादिना यङि "सन्यङश्च" ॥ ४। १। ३ ॥ इति द्वित्वे "व्यञ्जनस्यानादेः ॥ ४।१।४४ ॥ इत्यादिना व्यञ्जनलोपे "ह्रस्व." ॥ ४।१।३९ ॥ इति ह्रस्वत्वे परोक्षा–इरे, धातोरनेकस्वर–" ॥ ३।४।४६ ॥ इत्यादिना परोक्षाया. स्थाने आमादेशे "अत:" ॥ ४।३।८२ ॥ इत्यलोपे "योऽशिति" ॥ ४।३।८० ॥ इति यलोपः, ततः परोक्षान्ते कृभ्वस्तीति कृगनुप्रयोगे, द्वित्वे कृते, "ऋतोऽत्" ॥ ४।१।३८ ॥ इति पूर्वस्य ऋकारस्य अकारे, "कङश्चञ्" ॥ ४।१।४६ ॥ इति कश्चत्वे, "तौ मुमो व्यञ्जने स्वौ" ॥ १।३।१४ ॥ इति मकारस्य अनुस्वारे, ऋकारस्य रत्वे येयेषांचक्रिरे पदमिति सिद्धम्। अक्षेपयस्तथाचान्यत् इति पदद्वयसदृशम्। एकं तु 'क्षिपीत् प्रेरणे' णिगि, उपान्त्यस्य गुणे, ह्यस्तनीसिवि शेषं पूर्ववत्, सिद्धमक्षेपय इति । चः समुच्चये। तेन 'घटिष् चेष्टायाम्' इत्यस्य यङि, तस्य लोपे, अनादिलोपे, "द्वितीयतुर्ययो'–" ॥ ४।१।४२ ॥ घस्य गे "गहोर्जः" ॥ ४।१।४० ॥ इति जे, "आगुणाव–" ॥ ४।१।४८ ॥ इति आकारे, ह्यस्तनी अम्वि, अडागमे अजाघटमिति सिद्धम्। आपः इति च जलपर्यायात् जसि च द्रव्यवाची। क्रियां तु ब्रूमः— 'आप्लृट् व्याप्तौ' (सिद्धौ)

एकत्र अद्यतन्यादिः, अपरत्र सिः, "लृदिद्द्युतादि-" ॥ ३।४।६४ ॥ इत्यादिना अङि, अडागमे एकत्र "विरामे वा" ॥ १।३।५१ ॥ इति दस्य प्रथमत्वे, अपरत्र सस्य रुत्वे विसर्गे आप इति सिद्धम् । 'आप्लृण् लम्भने, इत्यस्य तु युजादित्वात् णिजभावपक्षे ह्यस्तन्यामद्यतन्यां वा साधारण रूपम् । यदा ह्यस्तनी तदा शव्, यदा अद्यतनी, अङ्, तत । ततश्च आपत् आप इति रूपद्वय सिद्धम् । कः ब्रह्मा, अः कृष्णः, स इवाचरतीति "कर्तु-" ॥ ३ । ४ ।२५ ॥ क्विपि, तस्य लोपे ततस्त्याद्युत्पत्तौ शवि "लुगस्यादेत्यपदे" ॥२।१।११३॥ इत्यलोपे कति कतः कन्ति, कासि कथः कथ, कमि कावः कामः "मव्यस्या.-" ॥ ४।२।११३ ॥ इत्याकार इति । कानिचिद् द्रव्यशब्दसदृशान्यपि, अति अतः अन्ति, असि अथः अथ, अमि आवः आम. । शतरि कन् कन्तौ कन्त इत्यादि सप्तस्वपि स्यादिषु विभक्तिषु योज्यम् । पं० आनिवि कानीति नपुंसके वर्तमानस्य किशब्दस्य जसन्तस्य शसन्तस्य वा प्रतिरूपिका क्रिया । एवं 'राजृग् भ्राजि दीप्तौ' इत्यस्य शतरि, राजन्नित्यामन्त्र्यसदृशम् । तथा 'उक्ष सेचने' 'युक् मिश्रणे' 'पूर्व पर्व मर्व यर्व पूरणे' 'उर्वै तुर्वै इत्याद्यर्व हिंसायाम्' 'पूष वृद्धौ' एषां शतरि आमन्त्र्यान्तशत्रन्तानि 'उक्षन्, युवन्, पूर्वन्, पूषन्, अर्वन्' "नामन्त्र्ये" ॥ २।१।९२ ॥ इति नलोपप्रतिषेधः । आमन्त्र्यादन्यत्र तु तस्य स्थानिवत्त्वाद् नलोपप्राप्तिरेव नास्ति । 'अक्षेवयम्' इति पदद्वयसदृशम् । 'ष्ठिवू क्षिवूच् निरसने' णिग् उपान्त्यस्य गुणे ह्य० अम्वि शवि गुणे अमादेशे "लुगस्यादेत्यपदे" ॥ २।१।११३ ॥ इत्यलोपेऽडागमेऽक्षेवयमिति । अमीवयमिति 'पीव मीव स्थौल्ये' शेषं पूर्ववत् । ह्य० अम्वि गुणाभावस्तु विशेषः । चः समुच्चयार्थः सर्वत्रानुसरणीय. । तेन शेषे इति सप्तम्यन्तं वर्तमानान्तम् । सप्तम्यन्तं सुबोधम् । क्रिया तु 'शीङ्क् स्वप्ने' व० सेः "शीङ ए शिति" ॥ ४।३।१०४ ॥ इत्येकार. 'शेषे' इति सिद्धम् । देवते इति आमन्त्र्यस्यन्तम् । त्याद्यन्त तु 'तेवृङ् देवृङ्

देवने' इत्यस्य ते शवि देवते इति सिद्धम् । **नस्यात्** इति स्याद्यन्तं त्याद्यन्तं च। तत्र स्याद्यन्त नस्यशब्दात् पञ्चम्येकवचने सुबोधम्। त्याद्यन्त त्वस्तेर्नञ्पूर्वात् सप्तम्या याति सुगममेव । **देवतां** इति देवताशब्दाद् द्वितीयान्तस्याद्यन्तम्, त्याद्यन्तं तु 'तेवृङ् देवृङ् देवने' इत्यस्य पं०ताम् शवि देवतामिति त्याद्यन्त सिद्धम् । तथा भुवादितुदादिदिवादीना व०तिवि यानि रूपाणि तान्येव शत्रन्तात् सप्तम्याम्, तथा पूर्वेषामेव धातूनां यानि वर्तमानायास्तसि तान्येव षष्ठीषञ्चम्योरेकवचनेऽपि, तथा पूर्वाभिहितान्येव पञ्चमीप्रथमत्रिकद्विवचनान्तानि तान्येव षष्ठीबहुवचनान्यपि, तथा यानि वर्तमानाप्रथमत्रिकबहुवचनान्तानि तान्येव नपुसके जासि शसि च ।। ङयां च "श्यशव"।।२।१।११६।। अतो अन्तादेशकरणादामन्त्र्ये सौ वर्तमानाप्रथमत्रिकबहुवचनान्तसदृशानि रूपाणि । भुवादितुदादिदिवादीनां तु शतरि ततः षष्ठीबहुवचने यानि सेटामनिटा च परस्मैपदप्रथमत्रिकद्विवचनान्तानि तान्येव पञ्चम्यामात्मनेपदप्रथमत्रिकैकवचनेऽपि, परमुभयपदिनामिति । दिवादेर्भावकर्मणोरपि प्रयोगे परस्मैपदप्रथमत्रिकद्विवचनसदृशमेवेति । एवमुत्तरेष्वपि प्रयोगेषु । तथा यानि कानिचिद् रूपाणि ह्य० परस्मैपदते तान्येवात्मनेपदतेऽपि । तत्राऽप्युभयपदिनामेवाऽऽत्मनेपदप्रथमत्रिकैकवचनेऽपि रूपम् । क्रमेस्तु वृत्त्याद्यर्थेष्वात्मनेपदत्वान्नायं प्रकारः । तथा नित्यानिटां सेटां च सामान्यं यच्च श्वतनीपरस्मैपदप्रथमात्रिकवचने तदेवात्मनेपदे प्रथमत्रिकवचनेऽपि । तदमुना प्रकारेण विषमप्रयोगात् पर्यनुयुज्यमाना अननुसृतप्रस्तुतग्रन्थसरणय कतिपये प्रतिहतप्रतिभावशेषत्वेनानुत्तरमुत्तरमलभमाना सन्त. प्रस्रवन्ति प्रस्वेदबिन्दून्, स्वीकुर्वन्ति जृम्भाम्, नेदन्ति निद्रामुद्राम्, जल्पन्ति किञ्चित्तथाविधाभिधेयशून्यम्, निरीक्षन्ते हरितः, पश्यन्त्यन्तरिक्षम्, विलोकयन्ति च भूयो भूयः सर्वसहावलयमिति; तथाचोक्तं सुगृहीतनामधेयै. श्रीसिद्धसेनदिवाकरपादै —

"स्वेद समुद्वहति जृम्भणमातनोति
निद्रायते किमपि जल्पति वस्तुशून्यम् ।

आशा विलोकयति खं पुनरेव धात्रीं
भूताभिभूत इव दुर्वदकः सभायाम् ॥ १ ॥"

इति ज्ञात्वा एतदनुसारि चेतो विधेयमित्यलं प्रसङ्गेन ॥

अकारि गुणचन्द्रेण वृत्ति स्वपरहेतवे ।
देवसूरिक्रमाम्भोजचञ्चरीकेण सर्वदा ॥ १ ॥
कृत्वेत्थं रचनापुण्यं यद् मयाप्त सुनिर्मलम् ।
पारं शब्दोदधेस्तेन सर्वदाऽत्र जन. प्रियात् ॥ २ ॥
मयात्र मतिमान्द्याद् , यत्किञ्चिदूचेऽयथातथम् ।
प्रसादबुद्धिमाधाय शोध्यं तच्छब्दवार्धिभिः ॥ ३ ॥
षट्तर्ककर्कशमति कविचक्रवर्ती
शब्दानुशासनमहाम्बुधिपारदृश्वा ।
शिष्याम्बुजप्रकरजृम्भणचित्रभानु.
कक्कल्ल एव सुकृती जयति स्थिरायाम् ॥ ५ ॥

॥ इति पण्डितपुण्डरीकेण श्रीकक्कल्लोपदेशेन तत्त्वप्रकाशिका वृत्तिः श्रीदेवसूरिपादपद्मोपजीविना गुणचन्द्रेण स्वपरोपकारार्थं श्रीहेमचन्द्रव्याकरणाभिप्रायेण प्राणायि ॥



आकरो मकराद् रत्नाज्जलाद् निधि-धि-राशयः।

पारमापिपर्ति पारापार, जपादित्वाद् वत्वे पारावार', पारमिव अवारमर्वाक् कूलमस्य वा, पारमावृणोतीति वा ॥ १ ॥ सगरपुत्राणामयं तै खातत्वात् सागर ॥ २ ॥ अवारमिव पार परतटमस्याऽवारपार ॥ ३ ॥ मर्यादास्थितत्वाद् न कु पिपर्ति अकुपार, बाहुलकाद् दीर्घे, जपादित्वाद् वत्वेऽकूवारोऽपि ॥ ४ ॥ उदक धीयतेऽस्मिन् उदधि "व्याप्यादाधारे" ॥ ५ । ३ । ८८ ॥ इति कि "उदकस्योद पेषधि" ॥३।२।१०४॥ इत्युदादेश ॥ ५ ॥ अणासि सन्त्यस्य अर्णव "तमिस्रार्णवज्योत्स्ना" ॥ ७। २ । ५२ ॥ इति साधु ॥ ६ ॥ वीचीर्मलते धारयति वीचिमाली ॥ ७ ॥ यादसा स्रोतसा वारा नदीना च ईश यादईश, स्रोतईश, वारीश, नदीश, यौगिकत्वाद् याद पतिरित्यादय ॥ ८ ॥ ९ ॥ १० ॥ ॥ ११ ॥ सरासि जलप्रसरणानि सन्त्यस्य सरस्वान् ॥ १२ ॥ स्यन्दते सिन्धु पुस्त्रीलिङ्ग " स्यन्दिसृजिभ्या-" ॥ ( उणा ७१७) ॥ इत्यु, सिन्धादेशश्च ॥१३॥ उदकानि सन्त्यस्य उदन्वान् " उदन्वानब्धौ च " ॥ २ । १ । ९७ ॥ इति मतौ निपात्यते ॥ १४ ॥ मित समर्याद द्रवति मितद्रु पुलिङ्ग " हरिपीतमित-" ॥ (उणा-७४५) ॥ इति डिदु ॥ १५ ॥ समुन्दन्ति आर्द्रीभवन्ति वर्षाकालनद्योऽस्मात् समुद्र "ऋज्यजि-" ॥ (उणा-३८८) ॥ इति किद् र, सह मुद्रया मर्यादया वर्तते वा ॥ १६ ।। १३९ ॥ मकरशब्दाद् रत्नशब्दाच्च पर आकर, मकराणामाकरो मकराकर, मकरालयोऽपि, एव रत्नाकर, रत्नराशिरपि ॥१७॥१८॥ जलशब्दात् परे निध्यादय जलस्य निधिर्जलनिधि, जल धीयतेऽस्मिन् जलधि, जलाना राशिर्जलराशि, यौगिकत्वाद् वारिनिधि, वारिधि, वारिराशिरित्यादय ॥ १९ ॥ ॥ २० ॥ २१ ॥

शेषश्चात्र—

समुद्रे तु महाकच्छो दारदो धरणीप्लव ॥
महीप्रावार उर्वङ्गस्तिमिकोशो महाशय ॥ १ ॥

द्वीपान्तरा असङ्ख्यास्ते

ते समुद्रा, द्वीपानि अन्तरे येषा ते द्वीपान्तरा असंख्या सख्यारहिता असख्याता इत्यर्थ, यदाहु —"असख्याना द्वीपसमुद्रा" इति ॥

सप्तैवेति तु लौकिकाः ॥ १४० ॥

प्राहुरिति शेष । लौकिका मिथ्यादृष्टयो गतानुगतिका सप्तैव समुद्रा इति प्राहु ॥ १४० ॥

तानाह—

लवणक्षीरदध्याज्यसुरेक्षुस्वादुवारयः।

लवण, क्षीर, दधि, आज्य, सुरा, इक्षुरस, स्वादु च वारि येषा ते तथा लवणवारिर्लवणोद ॥ १ ॥ क्षीरवारि क्षीरोद ॥ २ ॥ दधिवारिर्दध्युद ॥ ३ ॥ आज्यवारिराज्योद ॥ ५ ॥ सुरावारि सुरोद ॥ ६ ॥ इक्षुवारिरिक्षूद ॥ ६ ॥ स्वादुवारि स्वादूद, यदाहु —

" लावणो रसमय सुरोदक सार्पिषो दधिजल पय पया ।

स्वादुवारिरुदधिश्च सप्तमस्तान् परीत्य त इमे व्यवस्थिता ॥ १ ॥" इति ।

**तरङ्गे भङ्गवीच्यूर्म्युत्कालिकाः**

तरति तरङ्ग " पतितमि-" ॥ ( उणा- ९८ ) ॥ इत्यङ्ग, तर· सन् गच्छतीति वा " नाम्नो गम " ॥ ५ । १ । १३१ ॥ इति खड्, तत्र ॥ १ ॥ भज्यते वायुना भङ्ग ॥ २ ॥ ऊयते जलैर्वीचि स्त्रीलिङ्ग "वेगो डित्" ॥ ( उणा- ६२८ ) ॥ इतीचि ॥ ३ ॥ इयर्त्यूर्मि· पुस्त्रीलिङ्ग " स्रर्तेरूच्चात " ॥ ( उणा-६८९ ) ॥ इति मि ॥ ४ ॥ उत्कलते उत्कालिका " क्रीकलि-" ॥ ( उणा ३८ ) ॥ इतीक ॥ ५ ॥

**महति त्विह ॥ १४१ ॥**

**लहर्युल्लोलकल्लोलाः**

इह तरङ्गे महति ॥ १४१ ॥ जल हरति लहरिः, पृषोदरादित्वात्, ङ्या लहरी ॥ १ ॥ ऊर्ध्वं लोलत्युल्लोल ॥ २ ॥ कल्यते कल्लते वा कल्लोल "पिञ्छोल-" ॥ [ उणा-४९५ ] ॥ इत्योले निपात्यते, कुत्सितो लोल इत्येके ॥ ३ ॥

**आवर्त्तः पयसां भ्रमः ।**

**तालूरो वोलकश्चासौ**

आवर्त्तते मण्डलेन भ्रमति आवर्त्त अम्भसा भ्रम· ॥ १ ॥ तलति तालूर "महिकाणि-" ॥ ( उणा ४२८ ) ॥ इति णिदूर ॥ २ ॥ वोलयत्यन्तर्निमज्जयति वोलक ॥ ३ ॥

**वेला स्याद् वृद्धिरम्भसः ॥ १४२ ॥**

वेलति वलति वेला ॥ १ ॥ १४२ ॥

**डिण्डीरोऽब्धिकफः फेनः**

डयते जलाघातैर्डिण्डीर "जम्बीर-" ॥ ( उणा-४२२ ) ॥ इतीरे निपात्यते, डिंडीति शब्दमीरयति राति वा ॥ १ ॥ अब्धे कफ इवाधिक्ये बहि प्रसरादब्धिकफ सागरमलाख्य, नद्यादौ तूपचारात् ॥ २ ॥ स्फायते फेन "दिननग्न-" ॥ ( उणा-२६८ ) ॥ इति ने निपात्यते ॥ ३ ॥

बुद्बुदस्थासकौ समौ ।

बुन्दति बुद्बुद. जलस्फोट "कुमुद-" ॥ ( उणा-२४४ ) ॥ इत्युदे निपात्यते ॥ १ ॥ तिष्ठति स्थासक "कीचक-" ॥ ( उणा ३३ ) ॥ इत्यके निपात्यते ॥ २ ॥

मर्यादा कूलभूः

मर्येति सीमार्थेऽव्ययम्, मर्या ददाति मर्यादा कूलस्य समुद्रतटस्य भू कूलभू ॥ १ ॥

कूल प्रपातः कच्छरोधसी ॥ १४३ ॥

तट तीर प्रतीर च

कूलत्यात्रृणोति कूलम् ॥ १ ॥ प्रपतन्त्यस्मिन् प्रपात ॥ २ ॥ कच्यते कच्छ "तुदिमदि-" ॥ ( उणा १२४ ) ॥ इति छक् ॥ ३ ॥ रुणद्धीति रोध क्लीबलिङ्ग "अस्" ॥ ( उणा-९५२ ) ॥ इत्यस् ॥ ४ ॥ १४३ ॥ तन्यते तट त्रिलिङ्ग "नमितनि-" ॥ [ उणा-१३९ ] ॥ इति टोऽन्तलुक्च, तटत्युच्छ्रयते वा ॥ ५ ॥ तीर्यते तीरम् ॥ ६ ॥ प्रतीर प्रदीपवत् ॥ ७ ॥

पुलिन तज्जलोज्झितम् ।

सैकतं च

तत् कूल च जलेन परित्यक्त पोलति पुलिनम्, पुंक्लीबलिङ्ग "वृजितुहि-" ॥ ( उणा २८३ ) ॥ इति किदिन ॥ १ ॥ सिकता सन्त्यस्मिन् सैकतम्, "सिकताशर्करात्" ॥ ७ । २ । ३५ ॥ इत्यण् ॥ २ ॥

अन्तरीप तु द्वीपमन्तर्जले तटम् ॥ १४४ ॥

अन्तर्गता आपोऽस्मिन्नन्तरीपम् ॥१॥ द्विवा गता आपोऽत्र द्वीप पुंक्लीबलिङ्ग "द्व्यन्तरनवर्णोपसर्गाद्-" ॥ ३ । २ । १०९ ॥ इति समासान्ते सतीपादेश, जलस्यान्तर्जल तत्र यत्तटम् ॥ २ ॥ १४४ ॥

तत्परं पार

समुद्रस्य तत्तटं परत्र स्थितं पार्यते समाप्यतेऽत्रेति पारं पुंक्लीबलिङ्ग ॥ १ ॥

अवारं त्वर्वाक्

समुद्रादेरर्वाक् पार्श्वे तट न वार्वियतेऽस्य अवार पुंक्लीबलिङ्ग, न व्रियत इति वा ॥ १ ॥

पात्रं तदन्तरम् ।

प्रीयते पात्र प्रवाह त्रिलिङ्ग तयो पारावारयोरन्तर मध्यं तदन्तरम् ॥ १ ॥

नदी हिरण्यवर्णा स्याद् रोधोवक्रा तरङ्गिणी ॥ १४५ ॥

सिन्धुः शैवलिनी वहा च ह्रदिनी स्रोतस्विनी निम्नगा
स्रोतो निर्झरिणी सरिच्च तटिनी कूलङ्कषा वाहिनी ।
कर्षूर्द्वीपवती समुद्रदयिताधुन्यौ स्रवन्तीसर-
स्वन्त्यौ पर्वतजाऽऽपगा जलधिगा कुल्या च जम्बालिनी॥१४६॥

नदति श्रोतस्तरसा नदी गोरादित्वात् ङी ॥ १ ॥ हिरण्येन वर्ण्यते पूज्यते हिरण्यवर्णा ॥ २ ॥ रोधोभिर्वक्रा कुटिला रोधोवक्रा ॥ ३ ॥ तरङ्गा सन्त्यस्या तरङ्गिणी ॥ ४ ॥ स्यन्दते सिन्धु पुम्स्त्रीलिङ्ग ॥५॥ शैवलमस्त्यस्या शैवलिनी ॥ ६ ॥ वहति वहा ॥ ७ ॥ ह्रदा सन्त्यस्या ह्रदिनी, ह्रादोऽस्त्यस्या ह्रादिनीत्येके ॥ ८ ॥ श्रोतासि सन्त्यस्या श्रोतस्विनी ॥ ९ ॥ निम्न गच्छति निम्नगा ॥ १० ॥ श्रवति श्रोत. क्लीबलिङ्ग "स्नरी-याम्" ॥ ( उणा–९७८ ) ॥ इति तस् ॥ ११ ॥ निर्झरोऽस्त्यस्या निर्झरिणी ॥ १२ ॥ सरते सरित् स्त्रीलिङ्ग "हसरुहि-" ॥ ( उणा–८८७) ॥ इति इत् ॥ १३ ॥ तटानि सन्त्यस्या तटिनी ॥ १४ ॥ कूल कषति भिनत्ति कूलकषा "कूलाभ्रकरीष-" ॥ ५ । १ । ११० ॥ इति ख ॥१५॥ वहत्यवश्य वाहिनी ॥ १६ ॥ कर्षति रोधसी कर्षू स्त्रीलिङ्ग "कृषिचमि-" ॥ (उणा ८२९) ॥ इत्यूः ॥ १७ ॥ द्वीपमस्त्यस्या द्वीपवती ॥ १८ ॥ समुद्रस्य दयिता समुद्रदयिता ॥१९॥ धुनाति तटतरून् धुनि "धूशाशीङो ह्रस्वश्च" ॥(उणा-६७८)॥ इति नि , ङया धुनी ॥ २० ॥ स्रवति स्रवन्ती ॥ २१ ॥ सर. प्रसरणमस्या सरस्वती ॥ २२ ॥ पर्वताज्जाता पर्वतजा ॥ २३ ॥ आ अपगच्छति आपमब्धि गच्छतीति वा, अप्सम्बन्धिना वेगेन आपेन वेगेन गच्छतीति वा "नाम्नो गम -" ॥ ५।१।१३१ ॥ इति ड ॥ २४ ॥ जलधिं गच्छति जलधिगा ॥ २५ ॥ कोलति जलै सस्त्यायति कुल्या "कुलेर्ड् च वा" ॥ ( उणा–३६२ ) ॥ इति किद् यः ॥ २६ ॥ जम्बालोऽस्त्यस्या जम्बालिनी ॥ २७॥१४६ ॥

गङ्गा त्रिपथगा भागीरथी त्रिदशदीर्घिका ।
त्रिस्रोता जाह्नवी मन्दाकिनी भीष्मकुमारसूः ॥ १४७ ॥
सरिद्वरा विष्णुपदी सिद्ध-स्वः स्वार्गि-स्वापगा ।
ऋषिकुल्या हैमवती स्ववापी हरशेखरा ॥ १४८ ॥

गच्छति समुद्र गङ्गा "गम्यामि-" ॥ ( उणा-९२ ) ॥ इति ग , गामगं वा गच्छतीति वा पृषोदरादित्वात् ॥ १ ॥ त्रिपथेन गच्छति त्रिपथगा, त्रिमार्गगाऽपि ॥ २ ॥ भगीरथस्येयं भागीरथी, भगीरथेन मार्गेऽवतारितत्वात् ॥ ३ ॥ त्रिदशाना

दीर्घिका ॥ ४ ॥ त्रीणि श्रोतास्यस्या त्रिश्रोता' स्त्रीलिङ्ग' ॥ ५ ॥ जह्नुना सगरात्मजेनावतारितत्वात् जह्नोरियं जाह्नवी, जह्नुना पीता श्रोत्रेण मुक्ता चेति जाह्नवीति लौकिका , जह्नुकन्याऽपि ॥ ६ ॥ मन्दमकति मन्दाकिनी मन्दाका औषधिविशेषा सन्त्यस्यामिति वा ॥ ७ ॥ भीष्म कुमार च सूते भीष्मसू कुमारसू , स्त्रीलिङ्गाविमौ ॥ ८ ॥ ९ ॥ १४७ ॥ सरिता वरा सरिद्वरा ॥१०॥ विष्णो पादौ हेतुरस्या विष्णुपदी, विष्णुपादाग्रोत्थितत्वात् "कुम्भपद्यादि" ॥ ७ । ३ । १४९ ॥ इति साधु ॥ ११ ॥ सिद्धाना स्वर्गस्य स्वर्गिणा खस्य च आपगा सिद्धापगा, स्वरापगा, स्वर्ग्यापगा, खापगा ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ ऋषीणा कुल्या ऋषिकुल्या ॥ १६ ॥ हिमवत प्रभवति हैमवती "प्रभवति" ॥ ६ । ३ । १५७ ॥ इत्यण् ॥ १७ ॥ स्वर्गे वापी स्ववापी ॥ १८ ॥ हरस्य शेखरोऽनया हरशेखरा ॥ १९ ॥ ॥ १४८ ॥

## यमुना यमभगिनी कालिन्दी सूर्यजा यमी ।

यम्यते यमुना "यम्यजि-" ॥ ( उणा-२८८ ) ॥ इत्युन' ॥ १ ॥ यमस्य भगिनी यमभगिनी ॥ २ ॥ कलिन्दाद्रेरिय कालिन्दी कलिन्दतनयाऽपि ॥ ३ ॥ सूर्याज्जाता सूर्यजा ॥ ४ ॥ यमेन यमलजातत्वाद् यमी ॥ ५ ॥

## रेवेन्दुजा पूर्वगङ्गा नर्मदा मेखलाद्रिजा ॥ १४९ ॥

रेवते वेगेन गच्छति रेवा ॥ १ ॥ इन्दोर्जाता इन्दुजा ॥ २ ॥ पूर्व गङ्गा पूर्वगङ्गा ॥३॥ नर्म ददाति नर्मदा, नर्मार्थं सोमवश्येन पुरूरवसाऽवतारितत्वात् ॥४॥ मेकलाद्रेर्जाता मेकलाद्रिजा मेकलकन्याऽपि ॥ ५ ॥ १४९ ॥

## गोदा गोदावरी

गा द्यति गोदा, गोदन्ते क्रीडन्त्यस्यामिति वा ॥ १ ॥ पय पूरेण गा पृथ्वी द्यति गोदावरी "मनूवन्-" ॥ ५ । १ । १४७ ॥ इति वन् "णस्वराघोषाद्वनो रश्च" ॥ २ । ४ । ४ ॥ इति ङ्या साधु ॥ २ ॥

## तापी तपनी तपनात्मजा ।

तापयति तापि "स्वरेभ्य इ" ॥ ( उणा-६०६ ) ॥ ङ्या तापी ॥ १ ॥ तपति तपनी ॥ २ ॥ तपनस्यात्मजा तपनात्मजा ॥ ३ ॥

## शुतुद्रिस्तु शतद्रुः स्यात्

शु पूजितमाशु वा तुदति शुतुद्रि "शिग्रुगेरुनमेर्वादय" ॥ ( उणा-८११ ) ॥ इति रौ निपात्यते ॥ १ ॥ वसिष्ठशापभयेन शतधा द्रुतेति शतद्रु , स्त्रीलिङ्गाविमौ "हरिपीत-" ॥ ( उणा-७४५ ) ॥ इति डिद्रु ॥ २ ॥

## कावेरी त्वर्द्धजाह्नवी ॥ १५० ॥

कवेरस्य जलदेहस्येयं कावेरी ॥ १ ॥ अर्वे जाह्नवी अर्धजाह्नवी ॥ २ ॥१५०॥

करतोया सदानीरा

गौरीविवाहे हरहस्तात् प्रदानतो या जाता करतोया ॥ १ ॥ सदा नीरमस्या सदानीरा ॥ २ ॥

चन्द्रभागा तु चन्द्रका ।

चन्द्रेण भागतो न्यस्ता चन्द्रभागा । 'चन्द्र-भागाभ्या गिरिभ्या प्रभवति चान्द्र-भागा' इत्येके ॥ १ ॥ चन्द्र कायति चन्द्रका ॥ २ ॥

वासिष्ठी गोमती तुल्ये

वसिष्ठस्येय वासिष्ठी, गौतमीत्यपि ॥१॥ गावो जलानि सन्त्यस्या गोमती ॥२॥

ब्रह्मपुत्री सरस्वती ॥ १५१ ॥

ब्रह्मण. पुत्री ब्रह्मपुत्री ॥१॥ सर प्रसरणमस्त्यस्या सरस्वती ॥२॥ १५१ ॥

विपाड् विपाशा

वशिष्ठ विपाशितवती विपाट् , स्त्रीलिङ्ग ॥ १ ॥ विपाशयति संसारपाशान मोचयति स्नानेन विपाशा ॥ २ ॥

आर्जुनी तु बाहुदा सैतवाहिनी ।

अर्जुनस्येयमार्जुनी ॥ १ ॥ बाहुभिर्दीर्यते तीर्यते बाहुदा "क्वचित्" ॥ ५ । १ । १७१ ॥ इति ड., बाहुदेन कार्तवीर्यार्ज्जुनेनावतारितेत्यन्ये ॥ २ ॥ सितैव सैती सा चासौ वाहिनी च सैतवाहिनी ॥ ३ ॥

वैतरणी नरकस्था

विगततरणौ व्यर्के पाताले भवा वैतरणी "भवे" ॥ ६ । ३ । १२३ ॥ इत्यण् विगततरणिर्वितरणिर्विनौका तत स्वार्थेऽण्वा ॥ १ ॥ नरके तिष्ठति नरकस्था नदीविशेष ॥ २ ॥

शेषश्चात्र–

मुरुदला तु मुरला सुरवेला सुनन्दिनी ।
चर्मण्वती रतिनन्दी संभेद सिन्धुसङ्गम ॥ १ ॥

स्रोतोऽम्भःसरण स्वतः ॥ १५२ ॥

स्रवति स्रोत क्लीबलिङ्गः, स्वतोऽकृत्रिममम्भ सरणम् ॥ १ ॥ ॥ १५२ ॥

प्रवाहः पुनरोघः स्याद् वेणी धारा रयश्च सः ।

प्रवहन्त्यनेन प्रवाह ॥ १ ॥ वहत्योघ , न्यङ्क्वादित्वादविकृतघत्वो निपा-

त्यते ॥ २ ॥ वेति वेणि ङया वेणी ॥ ३ ॥ ध्रियते जलमनया धारा, भिदादित्वा-दङि साधु ॥ ४ ॥ रीयते गच्छति रय. ॥ ५ ॥

घट्टस्तीर्थोऽवतारे

घट्टन्ते चलन्त्यनेन घट्ट ॥ १ ॥ तरन्त्यनेन तीर्थं, पुंक्लीबलिङ्ग "नीनू-रमि-" ॥ ( उणा-२२७ ) ॥ इति कित् थ ॥२॥ अवतरन्त्यनेनास्मिन्वाऽवतार नद्यादीनामवतरणमार्ग तत्र, "अवात् तृस्तृभ्याम्" ॥ ५ । ३ । १३३ ॥ इति घञ् ॥ ३ ॥

अम्बुवृद्धौ पूरः प्लवोऽपि च ॥ १५३ ॥

अम्बुनो वृद्धिराधिक्यमम्बुवृद्धिस्तत्र, पूरयति कूलयोर्मध्य पूर ॥ १ ॥ प्लवन्तेऽस्मिन् प्लव ॥ २ ॥ ॥ १५३ ॥

पुटभेदास्तु वक्राणि

पुटं तृणादिसघात भिन्दन्ति पुटभेदा ॥ १ ॥ वञ्चन्ति कुटिलं गच्छन्ति वक्राणि "ऋज्यजि-" ॥ ( उणा- ३८८ )॥ इति किद् रः । चक्राणीत्यन्य. ॥२॥

भ्रमास्तु जलनिर्गमाः ।

भ्राम्यन्ति भ्रमा , जल निर्गच्छत्येभिरिति निर्गमा जलपथा ॥ १ ॥

परिवाहा जलोच्छ्वासाः

जलं प्रवृद्धं परिवहति यैर्निर्गममार्गैस्ते परिवाहा "घञ्युपसर्गस्य-" ॥ ३ । २ । ८६ ॥ इति दीर्घत्वे परीवाहा ॥ १ ॥ जल प्रवृद्धमुच्छ्वसिति यैस्ते जलोच्छवासा ॥ २ ॥

कूपकास्तु विदारका· ॥ १५४ ॥

कूपप्रतिकृतय कूपका , शुष्कनद्यादौ हि जलार्थं गर्त्ता क्रियन्ते, यत् काल्य – विवरान् कूपकानाहु ॥ १ ॥ विदारयन्ति क्ष्मा विदारका ॥ २ ॥ १५४ ॥

प्रणाली जलमार्गे

प्रणलन्त्यम्भोऽनया प्रणाली त्रिलिङ्ग , जलनिर्गममार्गो मकरमुखादिस्तत्र॥१॥

अथ पानं कुल्या च सारणिः ।

पीयते वृक्षादिभिरनेन पानम् ॥ १ ॥ कोलति सस्त्यायत्यम्भसा कुल्या ॥ २ ॥ सरति जलमनया सरणि "ऋहृसृ-" ॥ ( उणा- ६३८ ) ॥ इत्यणि , बाहुल-काद्दीर्घत्वे सारणि स्त्रीलिङ्ग ॥ ३ ॥

शेषश्चात्र- नौका तु सारणौ ॥

सिकता वालुकाः

'सिकि सौत्र' सिक्यन्ते सिकता "पृषिरञ्जि-" ॥ ( उणा- २०८ ) ॥ इति किदत, स्त्रीलिङ्गो वा बहुवचनान्तोऽय यदवोचाम- "वा तु जलौकाप्सरस सिकता-सुमन समा" (लिङ्गा० २६) इति ॥ १ ॥ वलन्ते वालुका "कञ्चुक-" ॥ (उणा- ५७) ॥ इत्युके निपात्यते । सिकताना पृथ्वीकायिकत्वेऽपि नद्यङ्गभूतत्वादप्कायमध्ये पाठ ॥ २ ॥

बिन्दौ पृषत् पृषतविप्रुषः ॥ १५५ ॥

'बिदु अवयवे' बिन्दति बिन्दु, पुलिङ्ग "भृमृतृ-" ॥ ( उणा- ७१६ ) ॥ इत्यु, तत्र ॥ १ ॥ पर्षति सिञ्चति पृषत् क्लीबलिङ्ग "द्रुहिवृहि-" ॥ ( उणा- ८८४) ॥ इति किदत् ॥ २ ॥ "पृषिरञ्जि-" ॥ ( उणा- २०८ ) इति किदते पृषत ॥ ३ ॥ विरुद्ध प्रुष्यतेऽनया विप्रुट् "क्रुत्सम्पदादि-" ५ । ३ । ११४ ॥ इति क्विप्, विगत प्रोषोऽस्या इति वा ॥ ४ ॥ ॥ १५५ ॥

जम्बाले चिकिलौ पङ्कः कर्दमश्च निषद्वरः ।

शादः

जायते जमति ग्रसते वा जम्बाल, पुंक्लीबलिङ्ग "चात्वाल-" ॥ ( उणा- ४८० ) ॥ इत्याले निपात्यते ॥ १ ॥ अञ्चतीति चिकिल "स्थण्डिल-" ( उणा- ४८४ ) ॥ इतीले निपात्यते ॥ २ ॥ पञ्च्यते विस्तार्यते जालेन पङ्क पुंक्लीबलिङ्ग, घञि न्यङ्क्वादित्वात् कत्वम् ॥ ३ ॥ कर्दति निष्पीडित कर्दम "सृपृप्रथि-" ॥ ( उणा- ३४७ ) ॥ इत्यम ॥ ४ ॥ निषीदन्त्यस्मिन्निषद्वर "कृगृशॄ-" ॥ ( उणा- ४४१ ) ॥ इति रट् ॥ ५ ॥ शीर्यतेऽस्मिन् शाद विस्कल्लो देश्या सस्कृतेऽपि ॥ ६ ॥

हिरण्यबाहुस्तु शोणः

हिरण्य वहति हिरण्यबाहु "मिवहि-" ॥ ( उणा- ७२६ ) ॥ इत्युण् ॥ १ ॥ शोणजलत्वात् शोण ॥ २ ॥

नदे पुनर्वहः ॥ १५६ ॥

भिद्य उद्ध्यः सरस्वांश्च

नदति नद, तत्र ॥ १ ॥ वहति वह ॥ २ ॥ ॥ १५६ ॥ भिनत्ति कूलानीति भिद्यः ॥ ३ ॥ उज्झत्युदकमुद्ध्य "कुप्यभिद्योद्ध्य-" ॥ ५ । १ । ३९ ॥ इति क्यपि साधु ॥ ४ ॥ सर प्रसरणमस्त्यस्य सरस्वान् ॥ ५ ॥

द्रहोऽगाधजलो ह्रदः ।

द्रुह्यति द्रह, पृषोदरादित्वात् ॥ १ ॥ अगाध जलमस्मिन् अगाधजल. ॥ २ ॥ ह्रादति ह्रदः, पृषोदरादित्वाद् ह्रस्व ॥ ३ ॥

कूप स्यादुदपानोऽन्धु. प्रहि·

कौति प्रतिशब्देन कूप पुस्त्रीलिङ्ग "युसुकु-" ॥ (उणा-२९७)॥ इति प ऊत्व च, कुत्सिता कोर्वा आपोऽत्रेति वा, पृषोदरादित्वात् ॥१॥ उदक पीयतेऽस्मिन् उदपान पुक्लीबलिङ्ग "नाम्न्युत्तरपदस्य च" ॥ ३ । २ । १०७ ॥ इत्युदादेश ॥ २ ॥ अन्धयत्यन्धु "भृमृतृ-" ॥ ( उणा- ७१६ ) ॥ इत्यु ॥ ३ ॥ प्रहरति प्रहि "नीवीप्रहृभ्यो डित्" ॥ ( उणा- ६१६ ) ॥ इति इ , पुलिङ्गावेतौ ॥ ४ ॥

नेमी तु तन्त्रिका ॥ १५७ ॥

नीयते जलमनया नेमि स्त्रीलिङ्ग ॥ १ ॥ तस्य कूपस्यान्ते रज्ज्वादिधारणार्थं त्र्यस्र दारु त्रिका तान्त्रिका ॥ २ ॥ ॥ १५७ ॥

नान्दीमुखो नान्दीपटो वीनाहो मुखबन्धने ।

नान्द्या इव मुखमस्य नान्दीमुख ॥ १ ॥ नान्दीव पटति नान्दीपट ॥ २ ॥ कूपस्योर्ध्व इष्टकाभिर्विनह्यते वीनाह पुक्लीबलिङ्ग , यद्वैजयन्ती- 'वीनाहमस्त्रियाम्' । "घञ्युपसर्गस्य-" ॥ ३ । २ । ८६ ॥ इति दीर्घ ॥ ३ ॥ कूपस्य मुख बध्यतेऽनेन मुखबन्धन, तत्र ॥

आहावस्तु निपानं स्यादुपकूपे

आहूयन्ते पशव पानाय अस्मिन्नित्याहाव "आहावो निपानम्"॥ ५ । ३ । ४४॥ इत्यलि निपात्यते ॥ १ ॥ नितरा पिबन्त्यत्र निपानं पुक्लीबलिङ्ग । कूपस्य समीपे शिलादिबद्ध पशुपानार्थं कूपोद्धृताम्बुस्थानम्, तत्र ॥ २ ॥

अथ दीर्घिका ॥ १५८ ॥

वापी स्यात्

दीर्घैव दीर्घिका ॥ १ ॥ ॥ १५८ ॥ उप्यतेऽस्या पद्मादि वापि "कमि· वमि-" ॥ ( उणा-६१८ ) ॥ इति णिदिः, ङ्या वापी ॥ २ ॥

क्षुद्रकूपे तु चुरी चुण्ढी च चूतक· ।

चोरति चुरि "नाम्युपान्त्य-"॥५ । १ । ५४ ॥ इति क , ङ्या चुरी ॥१॥ चमन्त्याचमन्त्यस्या चुण्ढि " चमेरुच्चात " ( उणा- ६३२ ) ॥ इति ढि , ङ्या चुण्ढी ॥ २ ॥ श्चोतति चूतक "कीचक-" ॥ ( उणा- ३३ )॥ इत्यके निपात्यते ॥ ३ ॥

उद्घाटक घटीयन्त्रं

उद्घाटयति प्रकाशयत्यम्भ उद्घाटकम्, उद्घाटनमपि । ऊर्ध्वं हन्यतेऽनेनेत्युद्घाट-

नमिति कौटिल्य ॥ १ ॥ घटीना यन्त्र घट्यो यन्त्र्यन्तेऽत्रेति वा घटीयन्त्रं माला-
ख्य येन कूपादेर्जलमूर्ध्वं वाह्यते ॥ २ ॥

पादावर्तोऽरघट्टकः ॥ १५९ ॥

पादाभ्यामावर्त्यते भ्रम्यते पादावर्तं ॥ १ ॥ अरान् घट्टयति, अरा घट्टयन्ते-
ऽत्रेति वा अरघट्ट, केऽरघट्टक ॥ २ ॥ १५९ ॥

अखात तु देवखात

न खातमखातं नागादिकुण्डमकृत्रिमम् ॥ १ ॥ देवैरिव खातं देवखातम् ॥२॥

पुष्करिण्यां तु खातकम् ।

पुष्करमस्त्यस्या पुष्करिणी तडागिका "पुष्करादेर्देशे" ॥ ७ । २ । ७० ॥
इतीन्, तत्र ॥ १ ॥ खन्यते खात ह्रस्व खात खातकम् ॥ २ ॥

पद्माकरस्तडागः स्यात् कासारः सरसी सरः ॥ १६० ॥

पद्मानामाकरः पद्माकर, योग्यत्वात् ॥ १ ॥ ताड्यते जलमस्मिस्तडाग । तडे-
राग तडाग इत्यपर । तटान्यकति तटाक इत्यपरे । 'कासृङ् शब्दकुत्सायाम्'
इति दन्त्यान्त', कासन्ते बकादयोऽत्र कासार पुक्लीबलिङ्गौ "अग्यङ्गि–" ॥
(उणा– ४०५) ॥ इत्यार कमासरत्यत्रेति वा ॥ २ ॥३॥ सरतिर्जलमत्र "अस्" ॥
(उणा–९५२) इत्यसि स्त्रीलिङ्गे गौरादित्वात् ङ्या सरसी, क्लीबे तु सर । वा-
चस्पतिस्तु–'कासारस्त्वल्पसरसि सरसी तु महासर ' इति विशेषमाह ॥४॥५॥१६०॥

वेशन्तः पल्वलोऽल्पं

विशन्ति मज्जन्त्यस्मिन् वेशन्त "जॄविशिभ्याम्-" ॥ ( उणा– २१९ ) ॥
इत्यन्त ॥ १ ॥ 'पल गतौ' पल्यते पल्वल पुक्लीबलिङ्ग "शमिकमि–" ॥
( उणा– ४९९ ) ॥ इति वल । तल्लो देश्या सस्कृतेऽपि ॥ २ ॥

परिखा खेयखातिके ।

परिखन्यते परिखा "क्वचित्" ॥ ५ । १ । १७१ ॥ इति ड ॥ १ ॥
खन्यते खेयम् "खेयमृषोद्ये" ॥ ५ । १ । ३८ ॥ इति साधु ॥ २ ॥ खातैव खा-
तिका दुर्गवेष्टनहेतु ॥ ३ ॥

स्यादालवालमावालमावापः स्थानकं च सः ॥ १६१ ॥

आलूयते खन्यते आलवाल पुंक्लीबलिङ्ग "चात्वाल–" ॥ ( उणा– ४८० ) ॥
इत्याले निपात्यते ॥ १ ॥ आवलते बहिर्निर्गमादम्भोऽत्र आवाल क्लीबलिङ्ग । व्या-
डिस्तु–"आवालो जलपिण्डिल" इति पुलिङ्गमाह ॥ २ ॥ आ उप्यतेऽम्भोऽस्मिन्ना-
वाप ॥३॥ वृक्षसेकार्थ द्रवतोऽम्भस स्थान स्थानकम्, यदाहु – आलवालं विदुर्धीरा
धारण द्रवतोऽम्भस. ॥ ४ ॥ १६१ ॥

आधारस्त्वम्भसा बन्धः

आध्रियन्तेऽम्भांसि अस्मिन्नाधार. क्षेत्रादिसेकार्थं यत्राम्भ संचीयते सोऽम्भसा बन्ध ॥ १ ॥

निर्झरस्तु झर सरि ।

उत्स. स्रव प्रस्रवणं

निर्झीर्यति झीर्यति च जलमत्र निर्झर , झर· ॥१॥२॥ सरति सरि स्त्रीलिङ्गः 'स्रेरि+य इ"॥ (उणा–६०६) ॥ ३ ॥ उनत्ति उत्स "ऋजिरिषि-" ॥ (उणा–१६७)॥ इति कित् स , पुस्ययम्। वाचस्पतिस्तु 'सार स्त्री निर्झरो झर उत्सस्त्वस्त्री' इति क्लीबेऽप्याह ॥ ४ ॥ स्रवति स्रव ॥ ५ ॥ प्रस्रवन्त्यनेन गिरय. प्रस्रवणम् ॥६॥

जलाधारा जलाशयाः ॥ १६२ ॥

जलानामाधारा जलाधारा सामान्येन वाप्यादय ॥ १ ॥ जलानामाशयो ह्रदयमेषा जलाशया , जलमाशेते एषु वा ॥ २ ॥ १६२ ॥

॥ समाप्तोऽयमप्काय ॥

तेज कायमाह—

वह्निर्बृहद्भानु-हिरण्यरेतसौ
धनञ्जयो हव्यहविर्हुताशन ।
कृपीटयोनिर्दमुना विरोचना-
ऽऽशुशुक्षणी छागरथस्तनूनपात् ॥ १६३ ॥
कृशानु-वैश्वानर-वीतिहोत्रा·
वृषाकपि पावक-चित्रभानू ।
अप्पित्त-धूमध्वज-कृष्णवर्त्मा-
ऽर्चिष्मत्-शमीगर्भ-तमोघ्न-शुक्रा· ॥ १६४ ॥
शोचिष्केशः शुचि-हुतवहो-षर्बुधा· सप्तमन्त्र-
ज्वालाजिह्वो ज्वलन-शिखिनौ जागृविर्जातवेदा· ।
बर्हि शुष्मा-ऽनिलसख-वसू रोहिताश्वा-ऽऽश्रयाशौ
बर्हिर्ज्योतिर्दहन-बहुलौ हव्यवाहोऽनलोऽग्नि. ॥ १६५ ॥
विभावसु सप्तो-दर्चिचः

वहति तेजो वह्नि· " वीयुसुवह्यगिभ्य – " ॥ ( उणा–६७७ ) ॥ इति नि.

॥ १ ॥ बृहन्तो भानवो रश्मयोऽस्य बृहद्भानु ॥ २ ॥ हिरण्यं रेतोऽस्य हिरण्य-रेताः, यत् स्मृति – "अग्नेरपत्य प्रथम सुवर्णम्" इति ॥३॥ धन जयति धनञ्जय ॥ ४ ॥ हव्य हविर्हुत चाऽश्नाति हव्याशन, हविरशन, हुताशन, नन्द्या-दित्वादन, यौगिकत्वाद् हव्यभुग् इत्यादय ॥ ५ ॥ ६ ॥ ७ ॥ कूपीटस्याम्भसो योनिर्धूमजत्वाद् मेघाना, कूपीटयोनि । 'कूपीट योनिरस्य' इत्येके, यदाहु –"अद्भ्यो ऽग्निर्ब्रह्मण क्षत्रमश्मभ्यो लोहमुत्थितम्" ॥८॥ दाम्यति दमुना, दमेरुनसूनसौ, दमूना अपि ॥ ९ ॥ विरोचते विरोचन ॥ १० ॥ आशोष्टुमिच्छति आशुशुक्षणि " आङ क्रूदृशुषे. सन " ॥ ( उणा–६४३ ) ॥ इत्यणौ साधु ॥ ११ ॥ छागो रथोऽस्य च्छागरथ. ॥१२॥ तनू न पातयति तनूनपात्, देहधर्तृत्वात्, नखादित्वात् साधु ॥ १३ ॥ ॥ १६३ ॥ कृश्यति दाह्याभावे कृशानु. " कृशेरानुक् " ॥ ( उणा–७९४ ) ॥ १४ ॥ विश्वानरस्यापत्य वैश्वानर, विदादित्वादञ् ॥ १५ ॥ वीतयोऽश्वा होत्र हव्यमस्य वीतिहोत्र ॥ १६ ॥ वृषेण धर्मेण अकति वृषाकपि, वृषेण तेजसा आकम्पते वा ॥ १७ ॥ पुनाति पावक ॥१८॥ चित्रा नाना भानव कान्तयोऽस्य चित्रभानु ॥ १९ ॥ अपा पित्तं सारमपित्तम् ॥ २० ॥ धूमो ध्वजो-ऽस्य धूमध्वज ॥ २१ ॥ कृष्णो धूमो वर्त्माऽस्य कृष्णवर्त्मा ॥ २२ ॥ अर्चींषि विद्यन्तेऽस्यार्चिष्मान् ॥ २३ ॥ शम्या गर्भ शमीगर्भ, यत् कालिदास –"शमी-मिवाभ्यन्तरलीनपावकाम्" इति ॥२४॥ तमो हन्ति तमोघ्न. ॥ २५ ॥ शुक्र तेजो-ऽस्त्यस्य शुक्र, अभ्रादित्वाद ॥ २६ ॥ १६४ ॥ शोचींषि ज्वाला केशा अस्य- शोचिष्केश ॥ २७ ॥ शुचि, शोधकत्वात् ॥ २८ ॥ हुत वहति हुतवह, लिहा-दित्वादच् ॥ २९ ॥ उषसि रात्रौ बुध्यते उषर्बुध "वाऽहर्पत्यादय" ॥ १ । ३ । ५८ ॥ इति साधु ॥ ३० ॥ सप्त-मन्त्र-ज्वालशब्देभ्य परो जिह्व सप्त-जिह्वा अस्य सप्तजिह्व, यदाहु.—

"भवति हिरण्या कनका रक्ताकृष्णा वसुप्रभा कन्या ।
रक्ता बहुरूपेति सप्त सप्तार्चिषा जिह्वा ॥ १ ॥"

मन्त्र एव जिह्वा अस्य मन्त्रजिह्व, ज्वाला जिह्वाऽस्य ज्वालाजिह्व ॥३१॥३२॥ ॥ ३३ ॥ ज्वलति इत्येवशीलो ज्वलन "भूषाक्रोधार्थ–" ॥ ५ । २ । ४२ ॥ इत्यन ॥ ३४ ॥ शिखा सन्त्यस्य शिखी ॥ ३५ ॥ जागर्त्ति वायुना जागृवि, "जृशॄस्तॄ–" ॥ ( उणा– ७०५ ) ॥ इति ङिद् वि ॥ ३६ ॥ जाते विद्यते जातवेदा "अस्" ॥(उणा–९५२)॥ इत्यस्, ज्ञाता वेदा अस्मादिति वा पृषोदरादि-त्वात् ॥३७॥ बर्हिर्दर्भ शुष्म बलमस्य बर्हि शुष्मा । बर्हते वर्धते बर्हिरिरि व्यस्तम्, यथा 'बर्हिर्मुखा दवा' शुष्यत्यनेन शुष्मा यथा–'शुष्मणि प्रणयनाभिसंस्कृते' इति बर्हिरुत्क इत्यमरमाला, यथा 'दशा बर्हिणो बर्हिरुत्क' इति ॥३८॥ अनिल सखाऽस्य अनिलसखा ॥ ३९ ॥ वसन्ति देवा अस्मिन् वसु ॥ ४० ॥ रोहिताख्यो मृगोऽश्वो

वाहनमस्य रोहिताश्वः ॥ ४१ ॥ आश्रयमात्मस्थानमश्नाति आश्रयाशः. आश्रय-माधारमश्नात्याश्रयाश इत्येके ॥ ४२ ॥ बर्हिषो दर्भा ज्योतिरस्य बर्हिर्ज्योतिः ॥ ४३ ॥ दहति दहनः ॥ ४४ ॥ बहते वर्धते बहुलः "स्थार्वाङ्क–" ॥ ( उणा– ४८६ ) ॥ इत्युलो नलुक् च ॥ ४५ ॥ हव्यं वहात हव्यवाहः ॥ ४६ ॥ अनित्यनेन लोक इत्यनलः "मृदिकान्दि–" ॥ ( उणा– ४६५ ) ॥ इत्यलः ॥ ४७ ॥ अगत्यूर्ध्वं याति अग्निः "वीयु–" ॥ ( उणा– ६७७ ) ॥ इति निः ॥ ४८ ॥ ॥ १६५ ॥ विभेव वसु धनमस्य विभावसुः ॥ ४९ ॥ सप्त ऊर्ध्वाश्च आर्चिषोऽस्य सप्तार्चिः, उदर्चिः ॥५०॥५१॥ एते पुलिङ्गाः । अप्पित्तं नपुंसकम् ।

शेषश्चात्र–

अग्नौ वर्मिद् दीप्रः समन्तभुक् ।
पर्प्पेरीकः पविघासिः पृथुघसुरिराशिरः ॥
जुहुराणः पृदाकुश्च कुषाकुर्हवना हविः ।
घृताचिर्नाचिकेतश्च प्रष्ठो वश्वतिरश्वतिः ॥
भुजिर्भरथपीयौचा स्वनिः पवनवाहनः ॥

स्वाहाऽग्नायी प्रियाऽस्य च ।

अस्य वह्नेः प्रिया, सुष्ठु आहूयन्ते देवा अनया स्वाहा, पृषोदरादित्वात्, सुष्ठु आह ब्रूते देवान् ऋत्विगनयेति वा, स्वाहेत्यव्ययमपि ॥ १ ॥ अग्नेर्भार्याऽग्नायी "पूतक्रतुवृषाकप्यग्नि –" ॥ २ । ४ । ६० ॥ इति ङी, ऐकारश्चान्तस्य ॥ २ ॥

और्वः संवर्त्तकोऽब्ध्यग्निर्वाडवो वडवामुखः ॥ १६६ ॥

ऊर्वस्यापत्यमौर्वः, विदादित्वादञ्, दधीचिसूनोः पिप्पलादस्य उरूद्भवत्वादिति वा । वरुणभयान्मात्रा ऊर्वोर्गोपितत्वादित्येके ॥ १ ॥ संवर्त्तयति संवर्त्तकः ॥ २ ॥ अब्धेरग्निरब्ध्यग्निः ॥ ३ ॥ वडवाया अपत्यं वाडवः "वाडवेयो वृषे" ॥ ६ । १ । ८५ ॥ इत्यत्र नियमादेयण् न भवति ॥ ४ ॥ वडवाया इव मुखमस्य वडवामुखः ॥ ५ ॥ १६६ ॥

दवो दावो वनवह्निः

दुनोति वन्यान् दवः, अच्, "वा ज्वलादि-" ॥ ५ । १ । ६३ ॥ इति णे दावः ॥ २ ॥ वनस्य वह्निर्वनवह्निः ॥ ३ ॥

मेघवह्निरिरम्मदः ।

मेघस्य वह्निर्मेघवह्निः ॥ १ ॥ इरया जलेन माद्यतीरम्मदः. "इरम्मदः ॥ ५ । १ । १२७ ॥ इति खशि निपात्यते ॥ २ ॥

छागणस्तु करीषाग्निः

छगणस्याय छागण ॥ १ ॥ करीषस्याग्नि· करीषाग्नि ॥ २ ॥

कुकूलस्तु तुषानल. ॥ १६७ ॥

कूयते कुकूलः पुक्लीबलिङ्ग "दुकूलकुकूल-" ॥ ( उणा– ४९१ ) ॥ इति साधु ॥ १ ॥ तुषाणामनलस्तुषानल ॥ २ ॥ १६७ ॥

सतापः सज्वरः

सन्तापयति सन्ताप ॥ १ ॥ सज्वरयति सज्वर ॥ २ ॥

बाष्प ऊष्मा

बाधते बाष्प पुक्लीबलिङ्ग "शादिबाधि-" ॥ ( उणा–२९९) ॥ इति प, षत्व च ॥ १ ॥ ऊषति रुजत्यूष्मा पुलिङ्ग " मन् " ॥ ( उणा– ९११ ) ॥ इति मन् ॥ २ ॥

जिह्वाः स्युरर्चिषः ।

अग्नेरार्चिष , लेढि हव्यमाभिर्जिह्वा ॥ १ ॥

हेति· कीला शिखा ज्वालार्चिः

हिनोत्यनया हेति " सातेहेति–" ॥ ५ । ३ । ९४ ॥ इति क्तौ निपात्यते ॥ १ ॥ कीलति कीला पुस्त्रीलिङ्ग ॥ २ ॥ श्यति शीखा ॥ ३ ॥ ज्वलति ज्वाला पुस्त्रीलिङ्ग , ज्वलादित्वात् ण ॥ ४ ॥ अर्च्यतेऽर्चि. स्त्रीक्लीबलिङ्ग "रुच्यर्चि–" ॥ ( उणा– ९८९ ) ॥ इतीस् ॥ ५ ॥

उलक्का महत्यसौ ॥ १६८ ॥

असौ ज्वाला महती उलक्कायति, ज्वलतीति वा " निष्कतुरुष्क" ॥ ( उणा– २६ ) ॥ इति के निपात्यते ॥ १ ॥ ॥ १६८ ॥

स्फुलिङ्गोऽग्निकणः

स्फुलति सचिनोति स्फुलिङ्ग , त्रिलिङ्ग "स्फुलिकलि–" ॥ (उणा–१०२) ॥ इतीङ्गक् । जातावपि स्त्रिया न ङी, कन्दरावत् ॥ १ ॥

अलातज्वालोल्का

अलातस्य ज्वाला अलातज्वाला 'उल दाहे' सौत्रस्य, ज्वलतेर्वा "निष्क-तुरुष्क–" ॥ ( उणा– २६ ) ॥ इति के निपातनादुल्का ॥ १ ॥

अलातमुल्मुकम् ।

अलति दीप्त्या मण्डयत्यलातं "कृत्रकलि–" ॥ ( उणा– २०९ ) ॥ इत्यातक् ॥ १ ॥ ज्वलत्युल्मुक "कञ्चुक–" ॥ ( उणा– ५७ ) ॥ इत्युके निपात्यते ॥२॥

धूमः स्याद्वायुवाहोऽग्निवाहो दहनकेतनम् ॥ १६९ ॥
अम्भ सू करमालश्च स्तरीर्जीमूतवाह्यपि ।

धुनाति धूम "विलिभिलि–" ॥ ( उणा– ३४० ) ॥ इति किद् म ॥ १ ॥ वायुना उह्यते वाह्यते वायुवाह ॥२॥ अग्निना उह्यतेऽग्निवाह ॥३॥ दहनस्य केतन ध्वजो दहनकेतनम् ॥ ४ ॥ १६९ ॥ अम्भ सूते धूमजत्वाद् मेघानामम्भ सू ॥ ५ ॥ कार्यते वायुना करमाल "चात्वाल–" ॥ ( उणा– ४८० ) ॥ इत्याले निपात्यते ॥ ६ ॥ स्तृणाति ख स्तरी स्त्रीलिङ्ग "तृस्तृतन्द्रि–" ॥ ( उणा– ७११ ) ॥ इति ई ॥ ७ ॥ जीमूत वहति जीमूतवाही ॥ ८ ॥

तडिदैरवती विद्युच्चला शम्पाऽचिरप्रभा ॥ १७० ॥
आकालिकी शतह्रदा चञ्चला चपलाऽशनि ।
सौदामनी क्षणिका च ह्रदिनी जलवालिका ॥ १७१ ॥

ताडयति तडित् "हृसृरुहि-" ॥ ( उणा–" ८८७ ) ॥ इतीत्, स्त्रीलिङ्गोऽयम् ॥१॥ ऐरावतोऽभ्रगो गजस्तस्य स्त्री ऐरावती, इरावति मेघे समुद्रे वा भवेति वा ॥२॥ विद्योतते विद्युत् स्त्रीलिङ्ग ॥ ३ ॥ चलति चला ॥ ४ ॥ शाम्यति शम्पा "भापाचणि–" ॥ ( उणा– २९६ ) ॥ इति प, श पिबतीति वा। दन्त्यादिरयमिति प्राच्या स पिबति नायन तेज इति व्याख्यन् ॥ ५ ॥ न चिर प्रभाऽस्य अचिरप्रभा, क्षणप्रभाऽपि ॥ ६ ॥ १७० ॥ आकालमुत्पत्तिकाल यावद् भवति आकालिकी क्षणिकत्वात् " आकालिकमिकश्चाद्यन्ते"। ६ । ४ । १२८ ॥ इति इकण् ॥ ७ ॥ शतह्रदोऽब्धिरस्त्यस्या शतह्रदा वाडवज्योतिष्ट्वात् अभ्रादित्वाद , शतधा ह्रादते वा पृषोदरादित्वात् ह्रस्व ॥ ८ ॥ चञ्चला, चपला, अस्थैर्यात् ॥ ९ ॥ ॥ १० ॥ अश्नुतेऽशनि· पुस्त्रीलिङ्ग "सदिवृति–" ॥ ( उणा– ६८० ) ॥ इत्यनि ॥ ११ ॥ सुदाम्ना पर्वतेन एकदिक् सौदामनी "टस्तुल्यदिशि" ॥ ६ । । ३ । २१० ॥ इत्यण् ॥ १२ ॥ क्षणोऽस्त्यस्या क्षणिका ॥ १३ ॥ ह्रादतेऽवश्य ह्रादिनी ॥ १४ ॥ जलेन वलति प्राणिति जलवालिका ॥ १५ ॥ १७१ ॥

॥ समाप्तोऽय तेज काय ॥

वायुकायमाह—

वायु समीर-समिरौ पवना-ऽऽशुगौ नभः-
श्वासो नभस्वद्-ऽनिल-श्वसनाः समीरण. ।
वातोऽहिकान्त-पवमान-मरुत्-प्रकम्पनाः
कम्पाक-नित्यगति-गन्धवहः-प्रभञ्जनाः ॥ १७२ ॥
मातरिश्वा जगत्प्राणः पृषदश्वो महाबलः ।

मारुत· स्पर्शनो दैत्यदेव·

वाति वायति वा द्रव्याणि वायुः "कृवापाजि-" ॥ ( उणा- १ ) ॥ इत्युण् ॥ १ ॥ समीरयति समीर ॥ २ ॥ समेति समिर " इणूधाग्भ्या वा " ॥ ( उणा-३८९ ) ॥ इति किद् र ॥ ३ ॥ पवते पवन ॥ ४ ॥ आशु गच्छति आशुग ॥ ५ ॥ नभस श्वास इव नभ श्वास ॥ ६ ॥ नभोऽस्त्यस्य नभस्वान् ॥ ७ ॥ अनन्त्यनेन अनिल "कल्यनि" ॥ ( उणा-४८१ ) ॥ इतील , न निलति इति वा ॥ ८ ॥ श्वसन्त्यनेन श्वसन ॥ ९ ॥ समीरयति समीरण ॥ १० ॥ वाति वायति वा वात "दम्यमि-" ॥ ( उणा- २०० ) ॥ इति त ॥११॥ अहिभि· काम्यते अहिकान्त ॥ १२ ॥ पवते पवमान ॥१३॥ म्रियन्ते क्षुद्रजन्तवोऽनेन मरुत् , म्रे उत् ॥ १४ ॥ प्रकम्पयति प्रकम्पन ॥१५॥ कम्पाकश्चिह्नमस्य कम्पाक ॥१६॥ नित्य गतिरस्य नित्यगति , सदागतिरपि ॥१७॥ गन्धस्य वहो गन्धवहा , गन्धवहोऽपि ॥ १८ ॥ प्रभनक्ति प्रभञ्जन ॥ १९ ॥ १७२ ॥ मातरि खे श्वयति मातरिश्वा "श्वन्मातरिश्वन्-" ( उणा- ९०२ ) इत्यनि निपात्यते ॥ २० ॥ जगता प्राणो जगत्प्राण ॥ २१ ॥ पृषद् मृगविशेषोऽश्वोऽस्य पृषदश्वः । पृषन्त्यम्बुकणा अश्वा अस्य इत्यन्ये ॥ २२ ॥ महद् बलमस्य महाबल ॥ २३ ॥ मरुदेव मारुत , प्रज्ञादित्वादण् ॥ २४ ॥ स्पृशति स्पर्शन ॥ २५ ॥ दैत्याना देवो दैत्यदेव ॥ २६ ॥ एते पुलिङ्गा ॥

शेषश्चात्र-

वायौ सुरालय प्राण सभृतो जलभूषण ।
शुचिर्वहो लोलपट पश्चिमोत्तरदिक्पति ॥ १ ॥
अङ्कति क्षिपणुर्माकर्यो ध्वजप्रहरणश्चल ।
शीतलो जलकान्तारो मेघारि स्मरोऽपि च ॥ २ ॥

झञ्झा स वृष्टियुक् ॥ १७३ ॥

स वायु वृष्ट्या युक्त 'झमू अदने' झमतीव झञ्झा, "झमेर्झ " ॥(उणा१३७) ॥ १ ॥ १७३ ॥

प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठान्तगोचरः ।

प्रकर्षेणानयति प्राण "क्वचित्" ॥ ५ । १ । १७१ ॥ इति ड , प्रसरणेन अनित्यनेन वा नासाग्रं हृदय नाभि पादाङ्गुष्ठान्तश्च गोचरो यस्य स तथा ॥ १ ॥

अपानः पवनो मन्थापृष्ठपृष्ठान्तपार्ष्णिगः ॥ १७४ ॥

मूत्रपुरीषगर्भादीनपानयत्यपान , अपसरणेन अनित्यनेन वा । मन्थे ग्रीवापश्चाद्भागौ, पृष्ठं तदधोभाग , पृष्ठान्तो गुद , पार्ष्णी पादपश्चाद्भागौ तेषु गच्छति य स तथा ॥ १ ॥ ॥ १७४ ॥

भृङ्गवद् राजते भृङ्गराज ॥ १ ॥ भृङ्गवद् रञ्जयति कृष्णीकरोति भृङ्गरज, अचि पृषोदरादित्वाद् नलोप ॥ २ ॥ मर्कति सपृच्यते मार्कव "कैरवभैरव–" ॥ ( उणा– ५१९ ) ॥ इति साधु ॥ ३ ॥ केशान् रञ्जयति केशरञ्जनम् ॥ ४ ॥ २५३ ॥

काकमाची वायसी स्यात् ।

काकवद् मचते वर्णेन सपृच्यते काकमाची ॥१॥ वायसवर्णत्वाद् वायसी ॥२॥

कारवेल्ल कटिल्लकः ।

कारेण वल्लति कारवेल्ल ॥ १ ॥ कटत्यावृणोति कटिल्ल "भिल्लाच्छभल्ल–" ॥ ( उणा– ४६४ ) ॥ इति ल्ले निपात्यते, कटि लातीति वा, पृषोदरादित्वाद् द्वित्वम् ॥ २ ॥

कूष्माण्डकस्तु कर्कारुः

कुष्यते कूष्माण्ड "पिचण्ड–" ॥ ( उणा– १७६ ) ॥ इत्यण्डे निपात्यते, कोरुष्मणाऽनितीति वा, कुत्सितमुष्मा अण्डेषु बीजेष्वस्य वा, पित्तकारित्वात् ॥ १ ॥ कर्कि सौत्र, कर्कति कर्कारु पुलिङ्ग "कर्केरारु" ॥ ( उणा–८१३ ) ॥ करोति तृप्तिं कर्क, इयर्त्ति अरुर्बस्तिशोधनसरत्वात्, कर्कश्चासावरुश्चेति वा ॥२॥

कोशातकी पटोलिका ॥ २५४ ॥

कुश्यति कोशातकी "श्लेष्मातक–" ॥ ( उणा– ८३ ) ॥ इति निपात्यते, कोशाकाराणि फलान्यतनि वा ॥ १ ॥ पटति पटोली "कटिपटि–" ॥ ( उणा– ४९३ ) ॥ इत्योल. ॥ २ ॥ २५४ ॥

चिर्भिटी कर्कटी वालुङ्क्येर्वारुस्त्रपुसी च सा ।

चिरि सौत्र स्वादौ, चिरणोति चिर्भिटी "चिरेरिटो भ् च–" ॥ ( उणा– १४९ ) ॥ इति साधु ॥ १ ॥ कर्कति कर्कटी "दिव्यवि–" ॥ ( उणा– १४२ ) ॥ इत्यट, ह्रस्व कर्क इति वा, ग्रामटीवत् ॥ १ ॥ वलति वालुङ्की "कञ्चुक–" ॥ ( उणा– ५७) ॥ इति निपात्यते ॥ ३ ॥ ऊर्वति हिनस्त्यार्त्तिमेर्वारु पुस्त्रीलिङ्ग "उर्वेरादेरूदेतौ च" ॥ ( उणा– ८१४ ) ॥ इत्यारु. ॥ ४ ॥ त्रपत इव त्रपुसी "त्रपेरुस." ॥ ( उणा– ५७८ ) ॥ ५ ॥

अर्शोघ्न. सूरणः कन्दः

अर्शांसि हन्ति अर्शोघ्न· ॥ १ ॥ सूर्यते प्रेर्यते वा सूरण "चिक्कण–" ॥ ( उणा– १९० ) ॥ इत्यणे निपात्यते ॥ २ ॥ कन्द्यते कन्द. पुक्लीबलिङ्ग, मूलविशेष ॥ ३ ॥

शृङ्गवेरकमार्द्रकम् ॥ २५५ ॥

शृणोति रसाना शृङ्गवेर "शतेरादय" ॥ ( उणा- ४३२ ) ॥ इति निपात्यने, शृङ्गोपलक्षित बेर देहोऽस्येति वा ॥ १ ॥ आर्द्रमेव आर्द्रक पुक्लीबलिङ्ग ॥ २ ॥ २५५ ॥

कर्कोटक. किलासघ्नस्तिक्तपत्र· सुगन्धकः

करोति किलासहिसा कर्कोट· "कपोटबकोट-" ॥ ( उणा- १६१ ) ॥ इत्योटे निपात्यते, के कर्कोटक ॥ १ ॥ किलास हन्ति किलासघ्न ॥ २ ॥ तिक्त पत्रमस्य तिक्तपत्र ॥ ३ ॥ सुष्ठु गन्धयते सुगन्धक ॥ ४ ॥

मूलकं तु हरिपर्ण सेकिम हस्तिदन्तकम् ॥ २५६ ॥

मूलमेव मूलक पुक्लीबलिङ्ग ॥ १ ॥ हरि नील पर्णमस्य हरिपर्णम् ॥ २ ॥ सेकेन निर्वृत्त सेकिमं "भावादिम" ॥ ६।४।२१ ॥ इतीम ॥ ३ ॥ हस्तिदन्त- प्रतिकृति हस्तिदन्तकम् ॥ ४ ॥ २५६ ॥

तृण नडादि नीवारादि च

तृण तृणजातियिमित्यर्थ ॥ १ ॥ नडादि नडप्रकार नीवारादि नीवारप्रकार- मित्यर्थ ॥ २ ॥

शष्प तु तद् नवम् ।

तत् तृण नवोद्भिन्नं बालमिति यावत्, शषिते शष्पं पुक्लीबलिङ्ग "शादिबाधि" ॥ ( उणा- २९९ ) ॥ इति प, षश्चान्तस्य ॥ १ ॥

सौगन्धिकं देवजग्ध पौर कत्तृण-रौहिषे ॥ २५७ ॥

सुगन्ध प्रयोजनमस्य सौगन्धिकम् ॥१॥ देवैर्जग्धमिवान्त शुषिरत्वाद् देव- जग्धम् ॥ २ ॥ पुरे भव पौरम् ॥ ३ ॥ कुत्सित तृण कत्तृण "तृणे जातौ" ॥ ३।२। १३२ ॥ इति को कदादेश. ॥ ४ ॥ रोहति यत्र तत्र रौहिषं, पुक्लीबलिङ्ग "रुहे- र्वृद्धिश्च" ॥ ( उणा- ५४८ ) ॥ इतीष ॥ ५ ॥ २५७ ॥

दर्भ कुश· कुथो बर्हि. पवित्रं

दृणाति पारुष्याद् दर्भ "गृदृरमि-" ॥ (उणा- ३२७) ॥ इति भ , दृश्यते ऽसाविति वा ॥ १ ॥ कौ शेते कुश पुक्लीबलिङ्ग "क्वचित्" ॥ ५ । १ । १७१ ॥ इति ड ॥ २ ॥ कुं धाति कुथ· ॥३॥ बृंहति बर्हि , पुक्लीबलिङ्ग , "बर्हिबृहेर्नलुक् च" ॥ (उणा ९९०) ॥ इतीस् ॥ ४ ॥ पूयतेऽनेन पवित्र "ऋषिनाम्नो करणे" ॥ ५।२।८६ ॥ इतीत्र ॥ ५ ॥

अथ तेजनः ।

गुन्द्रो मुञ्जः शरः

तेजयति शिनोति वा तेजनः ॥ १ ॥ गुणैर्दीप्या द्रान्त्यस्मिन् गुन्द्रः, पृषोदरादित्वात् ॥ २ ॥ मुञ्जति वायुना मुञ्जः ॥ ३ ॥ शृणाति पारुष्यात् शरः ॥ ४ ॥

दूर्वा त्वनन्ता शतपर्विका ॥ २५८ ॥

हरिताली रुहा

दूर्व्यते पशुभिः, दूरे वाति वा, पृषोदरादित्वात् ॥१॥ अनन्ता, दूरप्रसरणात् ॥ २ ॥ शतं बहूनि पर्वाण्यस्याः शतपर्विका ॥ ३ ॥ २५८ ॥ हरिता नलित्वमलति हरिताली ॥ ४ ॥ रोहति रुहा ॥ ५ ॥

पोटगलस्तु धमनो नडः ।

पोटेन संश्लेषेण गलति पोटगलः ॥१॥ 'धमि सौत्रः' धमत्यन्तः शुषिरत्वाद् धमनः ॥ २ ॥ नडत्यर्दयति डलयोरैक्ये नडः पुल्लिङ्गः ॥ ३ ॥

कुरुविन्दो मेघनामा मुस्ता

कुरून् देशं विन्दति कुरुविन्दः ॥ १ ॥ मेघस्य नामाऽस्य मेघनामा मेघपर्यायः, अम्बुचरत्वात् ॥ २ ॥ मुस्यति खण्डयति मुस्ता त्रिलिङ्गः "शीरी-" ॥ ( उणा- २०१ ) ॥ इति कित्, मुस्तकोऽपि ॥ ३ ॥

गुन्द्रा तु सोत्तमा ॥ २५९ ॥

सा मुस्ता उत्तमा गोदन्तेऽनया गुन्द्रा "खुरक्षुर-" ( उणा- ३९६ ) ॥ इति रे निपात्यते, गुणैर्दीप्ता द्रान्त्यस्यामिति वा ॥ १ ॥ २५९ ॥

वल्वजा उलपः

वलन्ति वल्वजाः पुंसि बहुवचनान्तः "वलेर्वोन्तश्च वा" ॥ ( उणा- १३३ ) ॥ इत्यजः ॥ १ ॥ दलते उलपः "विष्टपोलप-" ॥ ( उणा- ३०७ ) ॥ इत्यपे निपात्यते ॥ २ ॥

अथेक्षुः स्याद् रसालोऽसिपत्रकः ।

इष्यते इक्षुः पुंलिङ्गः 'मस्जीष्यशिभ्यः सुक्' ॥ ( उणा- ८२६ ) ॥ ॥ १ ॥ रसमलत्यालाति वा रसालः ॥ २ ॥ अस्याकाराणि पत्राण्यस्य असिपत्रकः ॥ ३ ॥

भेदाः कान्तार-पुण्ड्राद्यास्तस्य

तस्य इक्षोर्भेदा जातय एकादश, काम्यते कान्तार·, कान्तमूषमियर्तीति वा, कान्ता आरा भागा अस्येति वा ॥ १ ॥ पुणति पुण्ड्र्यते वा पुण्ड्र "खुरक्षुर-" ॥ (उणा- ३९६) ॥ इति रे निपात्यते। आदिशब्दात् कोषकाराद्या, यद्वाचस्पति -

"पुण्ड्रेक्षौ पुण्ड्रक सेव्य पौण्ड्रकोऽतिरसो मधु ।
श्वेतकाण्डो भीरुकस्तु हरितो मधुरो महान् ॥ १ ॥
शून्येश्वरस्तु कान्तार· कोषकारस्तु वंशक ।
शतघोरस्त्वीषत्क्षार पीतच्छायोऽथ तापस· ॥ २ ॥
सितनीलोऽथ नेपालो वशप्रायो महाबल ।
अन्वर्थस्तु दीर्घपत्रो दीर्घपर्वा कषायवान् ॥ ३ ॥
काष्ठेक्षुस्तु ह्रस्वकाण्डो धनग्रन्थिर्वनोद्भव ।
नीलघोरस्तु सुरसो नीलपीतलराजिवान् ॥ ४ ॥
अनूपसभव प्राय खर्नटी त्विक्षुबालिका ।
करङ्कशालि शाकेक्षु सूचिपत्रो गुडेक्षव· ॥ ५ ॥" इति ॥ २ ॥

मूलं तु मोरटम् ॥ २६० ॥

इक्षोर्मूल मुरति सवेष्टयति मोरट "कपट-" ॥ (उणा- १४४) ॥ इत्यटे निपात्यते ॥ १ ॥ २६० ॥

काशस्त्विषीका

काशते काश पुंक्लीबलिङ्ग· ॥१॥ इष्यते इषीक "ऋच्यृजि-" ॥ (उणा- ४८) ॥ इति किदीक ॥ २ ॥

घासस्तु यवसं

अद्यते पशुभिर्घास ॥ १ ॥ यूयते यवस "वहियुभ्या वा" ॥ (उणा- ५७१) ॥ इत्यस, क्लीबलिङ्गोऽयम्। वाचस्पतिस्तु-'अथाऽस्त्री यवसो घास' इति पुंस्यप्याह ॥ २ ॥

तृणमर्ज्जुनम् ।

तरत्यम्भसि तृणं पुंक्लीबलिङ्ग, तृण्यतेऽद्यते पशुभिरिति वा ॥ १ ॥ अर्ज्यतेऽर्जुनम्। 'सर्वं च तृणमर्जुनम्' इति भागुरि ॥ २ ॥

विषः क्ष्वेडो रसस्तीक्ष्णं गरलः

वेवेष्टि विषः पुंक्लीबलिङ्ग, स च द्वेधा, स्थावर-जगमभेदात्, यदाह-

"कन्दज कालकूटादि पुष्पजं दालवादिकम् ।
फालमङ्कोलसारादि दष्ट्रादिजं तु जगमम् ॥ १ ॥" इति ॥ १ ॥

'क्ष्विडाद् सौत्र ' क्ष्वेडते मोहयति क्ष्वेड ॥ २ ॥ रसयति रस पुंक्लीब-लिङ्ग ॥ ३ ॥ तेजयति तीक्ष्णम् ॥ ४ ॥ गीर्यते रागिभिर्गरल "मुरलोरल-" ॥ (उणा-४७४) ॥ इति साधु , गर लातीति वा, पुक्लीबलिङ्ग. ॥ ५ ॥

अथ हलाहलः ॥ २६१ ॥
वत्सनाभः कालकूटो ब्रह्मपुत्र. प्रदीपनः ।
सौराष्ट्रिकः शौल्किकेयः काकोलो दारदोऽपि च ॥२६२॥
अहिच्छत्रो मेषशृङ्ग' कुष्ठ-वालूक-नन्दनाः ।
कैराटको हैमवतो मर्कटः करवीरकः ॥ २६३ ॥
सर्षपो मूलको गौरार्द्रक. सक्तुक-कर्दमौ ।
अङ्कोलसारः कालिङ्ग' शृङ्गिको मधुसिक्थकः ॥ २६४ ॥
इन्द्रो लाङ्गुलिको विस्फुलिङ्ग पिङ्गल-गौतमाः ।
मुस्तको दालवश्चेति स्थावरा विषजातयः ॥ २६५ ॥

हलति विलिखति जठरं न हलति चेति हलाहल , यथा-'कस्य सद्यो हलाहलः' हालेव हलतीति लक्ष्ये हालाहल , यथा-

"स्निग्ध भवत्यमृतकल्पमहो कलत्रं
हालाहल विषमिवापगुण तदेव ।"

हालहलोऽपि यथा-'काममपायि मयेन्द्रियकुण्डैर्यदपि दुष्कृतहालहलौघ ' । एते पुक्लाबलिङ्गा ॥ १ ॥ २६१ ॥ वत्सस्येव नाभिरस्य वत्सनाभ. ॥ २ ॥ कालस्य वर्णस्य कूटोऽत्र कालकूट , पुंक्लीबलिङ्ग., कालसम्बन्धी कूटो व्याजो वा ॥ ३ ॥ ब्रह्मण पुत्रो ब्रह्मपुत्र , यद् याज्ञवल्क्य -' त्व विष ! ब्रह्मण. पुत्र सत्ये धर्मे व्यवस्थित ' ॥ ४ ॥ प्रदीपयति प्रदीपन ॥ ५ ॥ सुराष्ट्रदेशे भव सौराष्ट्रिक , अध्यात्मादित्वादिकण् ॥६॥ शुल्किकादेशे भव शौल्किकेय , नद्यादित्वा देयण् ॥ ७ ॥ ईषत् कोलति सस्त्यायति काकोल. पुक्लीबलिङ्ग', काकोल काकस्तद्वन्मेचको वा ॥ ८ ॥ दरदि सिन्धुदेशे भवो दारद ॥ ९ ॥ २६२ ॥ अहिच्छत्रदेशे भवत्वादहिच्छत्र ॥ १० ॥ मेषशृङ्गाकारत्वाद् मेषशृङ्ग , यद्वाचस्पति - मेषशृङ्ग त्वविशृङ्गाकृति ॥११॥ कुष्णाति कुष्ठ , कुष्ठसदृशत्वाद् वा यदाह-

"कुष्ठं तु कुष्ठसदृशमुग्रगन्धं भ्रमिप्रदम् ॥" ॥ १२ ॥

वालुकाभो वालूक ॥१३॥ नन्दयति नन्दन ॥१४॥ किराटके म्लेच्छदेशे भव. कैराटक ॥ १५ ॥ हिमवति भवो हैमवत ॥ १६ ॥ मर्कटाभो मर्कट ॥ १७ ॥ करवीरमूलजत्वात् करवीर', यदाह- 'करवीर त्वश्वसारमूलज सर्वतो भवम्' ॥१८॥

॥ २६३ ॥ सर्षपवत् पीतवर्ण. सर्षप ॥ १९ ॥ मूलकाभो मूलक ॥ २० ॥ गौरश्चार्द्रककन्दाभश्च गौरार्द्रक ॥ २१ ॥ सक्तुप्रतिकृति सक्तुक, सक्तुवच्चूर्णीभवनत्वात् ॥ २२ ॥ कर्दमसभवत्वात् कर्दम ॥ २३॥ अङ्कोल्लफलाभोऽङ्गोल्लसार, पृषोदरादित्वात् ॥ २४ ॥ कलिङ्गदेशे भव कालिङ्ग, अजस्तनाकृतित्वात् ॥ २५ ॥ शृङ्गमस्त्यस्य शृङ्गिक, यदाह– 'शृङ्गिकं तु कृष्णवर्णमजनस्तनसमाकृति' ॥ २६ ॥ मधुसिक्थ मधूच्छिष्ट तत्सदृशत्वाद् मधुसिक्थक ॥ २७ ॥ २६४ ॥ इन्दति इन्द्र, इन्द्रशैलभवत्वाद्वा ॥ २८ ॥ लाङ्गुली प्रयोजनमस्य लाङ्गुलिक, यदाह– 'लाङ्गुलिक तूपविष लाङ्गुलीमूलमेव तत्' ॥ २९ ॥ विरुद्धा स्फुलिङ्गा अस्य विस्फुलिङ्ग ॥ ३० ॥ बहिरन्तश्च पिङ्गलत्वात् पिङ्गल ॥ ३१ ॥ गोतमस्यायं गौतम ॥ ३२ ॥ मुस्तकाभो मुस्तक. ॥ ३३ ॥ दलति दालव "कैरव–" ॥ ( उणा– ५१९ ) ॥ इत्यवे निपात्यते ॥ ३४ ॥ एते सर्वेऽपि स्थावरवनस्पतिभवत्वात् स्थावरा विषस्य जातयो भेदा इति ॥ १ ॥ 'एते सर्वेऽपि पुक्लीबलिङ्गा.' इति वाचस्पति ॥ २६५ ॥

**कुरण्टाद्या अग्रबीजा**

अग्रभागो बीजमुत्पत्तिकारणमेषा अग्रबीजा., आदिशब्दात्पारिभद्राद्या. ॥१॥

**मूलजास्तूत्पलादय. ।**

मूलत कन्दाज्जायन्ते मूलजा, आदिशब्दात् सूरणाद्या ॥ २ ॥

**पर्वयोनय इक्ष्वाद्याः**

पर्व योनिरेषा पर्वयोनय, आदिग्रहणात् तृणवशाद्या. ॥ ३ ॥

**स्कन्धजा. सल्लकीमुखाः ॥ २६६ ॥**

स्कन्धाज्जायन्ते स्कन्धजा', मुखग्रहणाद् वटाद्या ॥ ४ ॥ २६६ ॥

**शाल्यादयो बीजरुहाः**

बीजात् सस्याद् रोहन्ति बीजरुहा, आदिग्रहणात् षष्टिकमुद्गादय ॥ ५ ॥

**संमूर्च्छजास्तृणादय' ।**

समूर्च्छनाज्जायन्ते समूर्छजा., आदिग्रहणाद् भूच्छत्राद्या. ॥ ६ ॥
उपसहारमाह—

**स्युर्वनस्पतिकायस्य षडेता मूलजातयः ॥ २६७ ॥**

स्पष्टम् ॥ २६७ ॥

॥ समाप्तोऽय वनस्पतिकाय ॥

पिप्पलादिवृक्षजातीना तु नामशेषोऽस्मदुपज्ञानिघण्टोरवसेय ॥

पृथिव्यादीनेकेन्द्रियानभिधाय द्वीन्द्रियानाह—

नीलङ्गुः कृमिरन्तर्जः

शरीरस्यान्तर्भवः कृमि , नीलति नीलङ्गु , पुलिङ्ग " प्रीकैपै- " ॥ ( उणा-७६१ ) ॥ इत्यङ्गुक् ॥ २१ ॥

क्षुद्रकीटो बहिर्भव ।

बहिर्भव क्षुद्रो ह्रस्व कृमि , कीट्यति कीट , पुस्त्रीलिङ्ग ॥ १ ॥

पुलकास्तूभयेऽपि स्युः

उभयेऽन्तर्भवा बहिर्भवाश्च कृमय पोलन्ति पुलका ॥ १ ॥

कीकसाः कृमयोऽणवः ॥ २६८ ॥

अणव सूक्ष्मा कृमय , कुत्सित कसन्ति कीकसा , पृषोदरादित्वात् ॥१॥२६८॥

काष्ठकीटो घुण .

काष्ठोद्भव कीट काष्ठकीट ॥ १ ॥ घुणति घुण. ॥ २ ॥

गण्डूपदः किञ्चुलकः कुसू : ।

भूलता

गण्डा ग्रन्थय पदान्यस्य गण्डूपद ॥ १ ॥ किञ्चित् चुलुम्पति किञ्चुलकः "कीचक-" ॥ ( उणा-३३ ) ॥ इति अके निपात्यते । किञ्चुलुकोऽपि ॥ २ ॥ कोर्भूमेः सूते कुसू , कु मृद सूते वा, मृदुत्सर्गात् ॥ ३ ॥ भुवो लतेव भूलता ॥ ४ ॥

गण्डूपदी तु शिली

गण्डू पदान्यस्या गण्डूपदी ॥ १ ॥ शिलति शिली, शिल्याकृतिर्वा ॥ २ ॥

अस्रपा जलौकसः ॥ २६९ ॥

जलालोका जलूका च जलौका जलसर्पिणी ।

अस्र पिबत्यस्रपा 'विचका' इत्येके ॥ १ ॥ जलमोक आसा जलौकस स्त्रियां वाबहुवचनान्तोऽयम् ॥ २ ॥ २६९ ॥ जले आलोक्यते जलालोका, जले आलोकोऽस्या इति वा ॥ ३ ॥ जलति जलूका "मृमन्यञ्जि-" ॥ (उणा- ५८) ॥ इत्यूक ॥ ४ ॥ ओकशब्दोऽकारान्तोऽप्यस्ति, जले ओकोऽस्या जलौका. ॥ ५ ॥ जले सर्पति जलसर्पिणी ॥ ६ ॥

मुक्तास्फोटोऽब्धिमण्डूकी शुक्तिः

मुक्ता स्फुटन्त्यत्र मुक्तास्फोट ॥ १ ॥ अब्धेर्मण्डूकीवाब्धिमण्डूकी ॥२॥ शोचति शुक्ति स्त्रीलिङ्ग "दृमुषि-" ॥ ( उणा–६५१ ) ॥ इति कित् ति ॥३॥

कम्बुस्तु वारिज ॥ २७० ॥

त्रिरेख. षोडशावर्तः शङ्खः

काम्यते कम्बु पुंक्लीबलिङ्ग "कम्यमिभ्या–" ॥ ( उणा–७९९ ) ॥ इति बु ॥ १ ॥ वारिणो जातो वारिज ॥ २ ॥ २७० ॥ तिस्रो रेखा अस्य त्रिरेखः ॥ ३ ॥ षोडश आवर्ता अस्य षोडशावर्त ॥ ४ ॥ शाम्यति शङ्ख पुंक्लीबलिङ्ग "शमिमनिभ्याम्–" ॥ ( उणा–८४ ) ॥ इति ख, श सुख खनति, श्रेयो जनयतीति वा "क्वचित्" ॥५।१।१७१॥ इति ड ॥ ५ ॥

अथ क्षुद्रकम्बवः ।

शङ्खनकाः क्षुल्लकाश्च

क्षुद्रा कम्बव क्षुद्रकम्बव सूक्ष्मा नद्यादिजा कृमय ॥ १ ॥ शं खनन्ति शङ्खनका ॥ २ ॥ क्षुद्यन्ते क्षुल्लका "कीचक–" ॥ ( उणा– ३३ ) ॥ इत्यके निपात्यते ॥ ३ ॥

शम्बूकास्त्वम्बुमात्रजाः ॥२७१ ॥

शाम्यन्ति शम्बूका "शम्बूक–" ॥ ( उणा– ६९ ) ॥ इत्यूके निपात्यते । शम्बुकोऽपि ॥ १ ॥ अम्बुमात्रे जायन्तेऽम्बुमात्रजा ॥ २ ॥ २७१ ॥

कपर्दस्तु हिरण्यः स्यात् पणास्थिक-वराटकौ ।

के पर्दते कपर्द ॥ १ ॥ ह्रियते हिरण्य पुंक्लीबलिङ्ग ॥ २ ॥ पणाय व्यवहारायास्थ्यस्य पणास्थिक ॥ ३ ॥ वरमटति वराटः, व्रियते वा "अनिशृ–" ॥ ( उणा– १४५ ) ॥ इत्याट के वराटक ॥ ४ ॥

शेषश्चात्र– स्यात्तु श्वेत कपर्दक ॥

दुर्नामा तु दीर्घकोशा

दुष्टो नामो नमनमस्या दुर्नामा 'दु संज्ञा' इत्येके ॥ १ ॥ दीर्घ कोशोऽस्या जलूकाकारत्वाद् दीर्घकोशा, दीर्घा कुश्यतीति वा ॥ २ ॥

॥ उक्ता द्वीन्द्रिया ॥

त्रीन्द्रियानाह—

पिपीलकस्तु पीलकः ॥ २७२ ॥

अपिपीलति पिपीलक., पृषोदरादित्वादपे. पि ॥ १ ॥ पीलति पीलक ॥ २ ॥ २७२ ॥

पिपीलिका तु हीनाङ्गी

पीलति पिपीलिका "कुशिक-" ॥ ( उणा- ४५ ) ॥ इतीके निपात्यते ॥ १ ॥ हीनमङ्गमस्या हीनाङ्गी ॥ २ ॥

ब्राह्मणी स्थूलशीर्षिका ।

बृहति ब्राह्मणी "चिक्कण-" ॥ ( उणा- १९० ) ॥ इत्यणे निपात्यते ॥ १ ॥ स्थूल शीर्षमस्या स्थूलशीर्षिका ॥ २ ॥

घृतेली पिङ्गकापिशा

घृतेन ईर्य्यते प्रेर्य्यते घृतेली ॥ १ ॥ पिङ्गं ह्रीबेर तद्वत् कापिशा पिङ्गकापिशा ॥ २ ॥

अथोपजिह्वोपदेहिका ॥ २७३ ॥

वम्र्युपदीका

उपलेढि उपजिह्वा, उप समीपे जहातीति वा "प्रह्वाह्वा-" ॥ ( उणा- ५१४ ) ॥ इति वे निपात्यते ॥ १ ॥ उपदिह्यते मृदनया उपदेहिका ॥ २ ॥ ॥ २७३ ॥ वमति मृद वम्री "भीवृधि-" ॥ ( उणा- ३८७ ) ॥ इति र ॥ ३ ॥ उप समीपे ददाति उपदीका "सृणीक-" ॥ ( उणा- ५० ) ॥ इतीके निपात्यते ॥ ४ ॥

रिक्षा तु लिक्षा

रेषति रिक्षा "ऋजिरिषि-" ॥ ( उणा- ५६७ ) ॥ इति कित् स ॥ १ ॥ लत्वे लिक्षा ॥ २ ॥

यूका तु षट्पदी ।

यौति यूका "युयुहि-" ॥ ( उणा- २४ ) ॥ इति को दीर्घत्वं च ॥ १ ॥ षट् पादा अस्या षट्पदी "सुसङ्ख्यात्" ॥ ७ । ३ । १५० ॥ इति पाद्भावे "वा पाद" ॥ २ । ४ । ६ ॥ इति ङी ॥ २ ॥

गोपालिका महाभीरु

गा पलति गच्छति गोपालिका ॥ १ ॥ अतिशयेन भीरुर्महाभीरु ॥ २ ॥

गोमयोत्था तु गर्द्भी ॥ २७४ ॥

गोमयादुत्तिष्ठति गोमयोत्था ॥ १ ॥ गर्द्भवर्णत्वाद् गर्द्भी ॥२॥२७४॥

मत्कुणस्तु कोलकुण उद्दंशः किटिभो-त्कुणौ ।

मायति शोणितेन मत्कुण "भ्रूणतृण-" ॥ ( उणा- १८६ ) ॥ इति णे निपात्यते ॥ १ ॥ कोल इव कुणाति विदारयति कोलकुण ॥ २ ॥ उद्दशत्युद्दश ॥ ३ ॥ केटति किटिभ , बाहुलकात् किदिभ , किटिं त्रास बिभर्त्ति वा "क्वचित्" ॥ ५।१।१७१ ॥ इति ड ॥ ४ ॥ उत्कुणति उत्कुण ॥ ५ ॥

इन्द्रगोपस्त्वग्निरजो वैराटस्तित्तिभोऽग्निक ॥ २७५ ॥

इन्द्रेण गुप्यते इन्द्रगोप ॥ १ ॥ अग्निवद् रज्यति अग्निरज , पृषोदरादित्वात् ॥ २ ॥ वैरेण अटति वैराट ॥ ३ ॥ तित्तीवद् भाति तित्तिभ "ङ्यापो बहुलम्-" ॥ २।४।९९ ॥ इति ह्रस्व ॥ ४ ॥ अग्नेस्तुल्योऽग्निक ॥ ५ ॥ २७५ ॥

॥ उक्तास्त्रीन्द्रिया ॥

चतुरिन्द्रियानाह—

ऊर्णनाभस्तन्त्रवायो जालिको जालकारकः ।
कृमिर्मर्कटको लूता लालास्रावोऽष्टपाच्च स. ॥ २७६ ॥

ऊर्णा नाभावस्य ऊर्णनाभ ॥ १ ॥ तन्त्र तन्तून् वयति तन्त्रवाय ॥ २ ॥ [ जा]लमस्त्यस्य जालक ॥ ३ ॥ जाल करोति जालकारक ॥४॥ करोति जाल कृमि "कृभूभ्या किन्" ॥ ( उणा- ६९० ) ॥ इति मि । क्रिमिरपि ॥ ५ ॥ मर्कट इव आरोहावरोहणाद् मर्कटक ॥ ६ ॥ लूयते लूता "लूस्रो वा" ॥ ( उणा-२०२ ) ॥ इति कित् त ॥ ७ ॥ लाला स्रवति लालास्राव ॥ ८ ॥ अष्टौ पादा अस्य अष्टपाद् ॥ ९ ॥ २७६ ॥

कर्णजलौका तु कर्णकीटा शतपदी च सा ।

कर्णस्य जलौकेव कर्णजलौका ॥ १ ॥ कर्णं कीटयति कर्णकीटा ॥ २ ॥ शत पादा अस्या शतपदी ॥ ३ ॥

वृश्चिको द्रुण आल्यालिः

वृश्चति वृश्चिक पुन्त्रीलिङ्ग "पापुलि-" ॥ ( उणा- ४१ ) ॥ इति किदिक ॥ १ ॥ द्रुणति द्रुण । द्रुतोऽपि ॥ २ ॥ आलमनर्थोऽत्रास्ति आली ॥ ३ ॥ अलत्यालि. "कृशृकुटि-" ॥ ( उणा- ६१९ ) ॥ इति णिदिः ॥ ४ ॥

अलं तत् पुच्छकण्टक. ॥ २७७ ॥

अलत्यलम्, तस्य वृश्चिकस्य पुच्छकण्टकस्तत्पुच्छकण्टक ॥ १ ॥ २७७ ॥

भ्रमरो मधुकृद् भृङ्गश्चञ्चरीक· शिलीमुख. ।
इन्दिन्दिरोऽली रोलम्बो द्विरेफ.

भ्राम्यति पुष्पेषु भ्रमर "ऋच्छिचटि-" ॥ ( उणा- ३९७ ) ॥ इत्यर, भ्रमन् रौति वा, पृषोदरादित्वात् ॥ १ ॥ मधु करोति मधुकृत्, मधुकरोऽपि ॥२॥ बिभर्ति भृङ्ग "भृमृभ्या नोऽन्तश्च" ॥ ( उणा- ९४ ) ॥ इति किद् ग ॥ ३ ॥ चञ्चति चञ्चूर्यते वा चञ्चरीक ,"सृणीक-" ॥(उणा-५०)॥ इतीके निपात्यते ॥४॥ शिला शाल्य मुखेऽस्य शिलीमुख, शिला मुखमस्य वा ॥ ५ ॥ इन्दति कुसुमैरिन्दिदिर "स्थविर-" ॥ ( उणा-४१७) ॥ इतीरे निपात्यते ॥६॥ अलत्यलि "कृशॄकुटि-" ॥ ( उणा- ६१९ ) ॥ इति णिदि । अली नकारान्तो वा ॥ ७ ॥ रुदन् लम्बते रोलम्ब, पृषोदरादित्वात् ॥८॥ द्वौ रेफौ नाम्न्यस्य द्विरेफ ॥९॥ एते स्त्रीपुसलिङ्गा । भसलो देश्याम्, सस्कृतेऽपि दृश्यते ॥

अस्य षडह्रय' ॥ २७८ ॥

अस्य भ्रमरस्य षट् अह्र्यश्चरणा, तेन षडङ्घ्रि, षट्पद, षट्चरण इत्यादि सिद्धम् ॥ १ ॥ २७८ ॥

भोज्य तु पुष्प-मधुनी

अस्य भ्रमरस्य भोज्य पुष्प मधु च, तेन पुष्पलिट्, पुष्पन्धय, मधुलिट्, मधुप, मधुव्रत इत्यादि सिद्धम् ॥ १ ॥ २ ॥

खद्योतो ज्योतिरिङ्गण ।

खे द्योतते खद्योत ॥ १ ॥ ज्योतिर्भिरिङ्गति ज्योतिरिङ्गण "चिक्कण-" ॥ ( उणा- १९० ) ॥ इत्यणे निपात्यते ॥ २ ॥

शेषश्चात्र—

खद्योते तु कटिमणिर्ज्योतिर्मालो तमोमणि ।
परार्बुदो निमेषद्युद् ध्वान्तचित्र ॥

पतङ्ग. शलभः

पतो गच्छति पतङ्ग "नाम्नो गम -"॥५।२।१३१॥ इति खड् ड', पततीति वा "पतितमि-" ॥ (उणा- ९८) ॥ इत्यङ्ग ॥ १ ॥ शलति शलभ "कृशॄगॄ" ॥ ( उणा- ३२९ ) ॥ इत्यभ ॥ २ ॥

क्षुद्रा सरघा मधुमक्षिका ॥ २७९ ॥

क्षुणत्यङ्ग क्षुद्रा ॥ १ ॥ सरति सरघा "सर्तेरघ" ॥ ( उणा- १११ ) ॥ सरति घातयति वा, पृषोदरादित्वात् ॥ २ ॥ मधुनो मक्षिका मधुमक्षिका ॥ ३ ॥ ॥ २७९ ॥

माक्षिकादि तु मधु स्यात्

मक्षिकाभि कृत माक्षिकं "नाम्नि मक्षिकादिभ्य" ॥६।३।१९३॥ इत्यण्, आदिग्रहणात् पौत्तिकादि, यद्वाचस्पति —

"पौत्तिक-भ्रामर-क्षौद्र-दालौ द्दालक माक्षिकम् ।
अर्घ्य छात्रकमित्यष्टौ जातयोऽस्य पृथग्गुणा ॥ १ ॥
तत्र पौत्तिकमुत्तप्तघृताभ विषकीटजम् ।
भ्रामर तु भ्रमरज पाण्डुर गुरुशीतलम् ॥ २ ॥
क्षौद्र तु कपिल दाहि क्षुद्रानीत मलावहम् ।
दाल तु दलज सेव्य दुर्लभ रूक्षवालकम् ॥ ३ ॥
उद्दालक तु शालाक विषजिद् मधुराम्लकम् ।
माक्षिक तु मधु ज्येष्ठ विरूक्ष तैलवर्णकम् ॥ ४ ॥
अर्घ्य तु पूज्यमापाण्डु मनाक् तिक्त सवालकम् ।
छात्र त्वेकान्तमधुरं सर्वार्घ्य राजसेवितम् ॥ ५ ॥" इति ॥

मन्यतेऽभिलष्यते मधु क्लीबलिङ्ग, पुस्यपि वैजयन्ती, यदाह– 'मधुल तु मधुनाऽस्त्री मधुक तत्पुरातनम्' इति ॥ १ ॥

मधूच्छिष्ट तु सिक्थकम् ।

मधुनोच्छिष्ट कत्को मधूच्छिष्ट मदनाख्यम् ॥ १ ॥ सिच्यते सिक्थ "नी-नूरमि–" ॥ ( उणा– २२७ ) ॥ इति कित् थ ॥ २ ॥

चर्वणा मक्षिका नीला

नीलवर्णा मक्षिका चर्वति चर्वणा, नन्द्यादित्वादन, वृणोतीति वा "चिव कुक्कण–" ॥ ( उणा– १९० ) ॥ इति साधु ॥ १ ॥

पुत्तिका तु पतङ्गिका ॥ २८० ॥

पुत कुत्सितं तनोति पुत्तिका "कुशिक–" ॥ ( उणा– ४५ ) ॥ इतीके निपात्यते, पुतेर्वा सौत्रस्य "कृतिपुतिलति–" ॥ ( उणा– ७६ ) ॥ इति कित् तिक ॥ १ ॥ पतङ्गप्रतिकृति पतङ्गिका, अपत गच्छतीति वा, पृषोदरादित्वात् ॥ २ ॥ २८० ॥

वनमक्षिका तु दंश·

मक्षति माक्षिका, वनस्य मक्षिका वनमक्षिका ॥ १ ॥ दशति दश ॥ २ ॥

दंशी तज्जातिरल्पिका

तज्जातिर्दंशजातीयाऽल्पिका दशति दशी ॥ १ ॥

तैलाटी वरटा गन्धोली स्यात्

तैलमटति तैलाटी ॥ १ ॥ वृणोति वरटा पुस्त्रीलिङ्ग· "दिव्यवि-" ॥(उणा-१४२ ) ॥ इत्यट ॥ २ ॥ गन्धयति अर्दयते गन्धोली "पिञ्छाल-" ॥ ( उणा-४९५ ) ॥ इत्योले निपात्यते ॥ ३ ॥

चीरी तु चीरुका ॥ २८१ ॥

झिल्लीका झिल्लिका वर्षकरी भृङ्गारिका च सा ।

चिनोति स्वर चीरी "चिजि-" ॥ ( उणा- ३९२ ) ॥ इति रो दीर्घत्व च, चीति रिणातीति वा "क्वचित्" ॥ ५।१।१७१ ॥ इति ड ॥ १ ॥ चीति रौति चीरुका "निष्कतुरुष्क-" ॥ ( उणा- २६ ) ॥ इति के निपात्यते ॥ २ ॥ ॥ २८१ ॥ झिल्ली वाद्यभेद , तद्वत् कायति शब्दायते झिल्लीका, बाहुलकाद् ह्रस्वत्वे झिल्लिका ॥ ३ ॥ ४ ॥ वर्ष वृष्टिं करोति सूचयति वर्षकरी ॥५॥ आकुल्या भृङ्गमियर्ति भृङ्गारी ॥ ६ ॥

॥ उक्ताश्चतुरिन्द्रिया ॥

पञ्चेन्द्रियान् स्थलचर-खचर-जलचरभेदभिन्नान् क्रमेणाह—

पशुस्तिर्यङ् चरिः

स्पशि सौत्रस्तालव्यान्त , स्पशति बाधते पशु "स्पाशिभ्रस्जे स्लुक् च" ॥ ( उणा- ७३१ ) ॥ इत्यु ॥ १ ॥ तिरोऽञ्चति तिर्यङ् " तिरसस्तिर्यति" ॥३॥२।१२४ ॥ इति रि ॥ २ ॥ चरति चरि कृशॄकुटि-" ॥ ( उणा- ६१९ ) ॥ इति इ· ॥ ३ ॥ एते पुलिङ्गा ॥

हिंस्रेऽस्मिन् व्यालः श्वापदोऽपि च ॥ २८२ ॥

अस्मिन् पशौ व्याघ्रादिके हिंस्रे हिंसनशीले विशेषेण आ समन्तादडति व्याड , लत्वे व्याल , विविधमालमनर्थोऽस्माद्वा ॥ १ ॥ शुन पदमिव पदमस्य श्वापद "शुन" ॥३।२।९०॥ इति दीर्घत्वम् ॥२॥२८२॥

हस्ती मतङ्गज-गज-द्वीप-कर्य-ऽनेकपा

मातङ्ग-वारण-महामृग-सामयोनयः ।

स्तेम्बरम-द्विरद-सिन्धुर-नाग-दन्तिनो

दन्तावलः करटि-कुञ्जर-कुम्भि-पीलवः ॥ २८३ ॥

इभः करेणुर्गज.

हस्त शुण्डाऽस्त्यस्य हस्ती "हस्तदन्तकराज्जातौ ॥ ७ ।२। ६८ ॥ इतीन् ॥ १ ॥ मतङ्गात् ऋषेजातो मतङ्गज ॥ २ ॥ गजति माद्यति गर्जति वा गज ॥ ३ ॥ द्वाभ्या पिबति द्विप. "स्थापास्नात्र.-" ॥५।१।१४२॥ इति क ॥ ४ ॥

करोऽस्त्यस्य करी ॥ ५ ॥ न एकेन पिबति अनेकप ॥ ६ ॥ मन्यते मातङ्ग "मनेर्मत्-मातौ च" ॥ (उणा– ३००) ॥ इत्यङ्ग , मतङ्गस्यायमिति वा, माततीति वा, मतङ्ग एव वा स्वार्थेऽण् ॥ ७ ॥ वारयत्यरीन् वारण ॥ ८ ॥ महाश्चासौ मृगश्च महामृग ॥ ९ ॥ साम वेदो योनि कारणमस्य सामयोनि ॥ १० ॥ स्तम्बे तृणे रमते स्तम्बेरम "शोकापनुद–" ॥ ५ । १ । १४३ ॥ इति के साधु ॥ ११ ॥ द्वौ रदावस्य द्विरद. ॥ १२ ॥ स्यन्दते मदेन सिन्धुर "श्वशुर– ॥ (उणा– ४२६ ) ॥ इत्युरे निपात्यते, सिन्धुर्मदोऽस्यास्तीति वा मध्वादित्वाद् र ॥ १३ ॥ नगे भवो नाग , न न गच्छति वा ॥ १४ ॥ दन्तावस्य स्तो दन्ती, कृष्यादित्वाद् बलचि दन्ताबल "बलच्यपित्रादे" ॥ ३ । २ । ८२ ॥ इति दीर्घ ॥ १५ ॥ १६ ॥ करट· कपोलोऽस्त्यस्य करटी ॥ १७ ॥ कुजति कुञ्जर पुक्लीब-लिङ्ग "जठर–" ॥ (उणा–४०३) इत्यरे निपात्यते, कुञ्जौ हनू दन्तौ वा अस्य स्त इति वा मध्वादित्वाद् र , कौ जार्यतीति वा, पृषोदरादित्वात् ॥ १८ ॥ कुम्भावस्य स्त कुम्भी ॥ १९ ॥ पीयते पीलु "पीङ कित्" ॥ ( उणा– ८२१ ) ॥ इति लु ॥ २० ॥ ॥ २८३ ॥ एति इभ "इण कित्" ॥ ( उणा– ३२८ ) ॥ इति भः ॥ २१ ॥ करोति प्रमोद करेणु , स्त्रीध्वजोऽपि पुस्त्रीलिङ्ग "कृहभू–" ॥ ( उणा– ७७२ ) ॥ इत्येणु , करेणु सिन्दूररजोऽस्य वा ॥ २२ ॥ गर्जति गर्ज ॥ २३ ॥

शेषश्चात्र–

अथ कुञ्जरे ।

पेचकी पुष्करी पद्मी पेचिल सूचिकाधर ।
विलोमजिह्वोऽन्त स्वेदो महाकायो महामद ॥
सूर्पकर्णो जलाकाङ्क्षो जटी च षष्टिहायन ।
असुरो दीर्घपवन. शुण्डाल कपिरित्यपि ॥

**अस्य स्त्री धेनुका वशाऽपि च ।**

अस्य हस्तिन. स्त्री हस्तिनीत्यर्थ., धयन्त्येना धेनु , के धेनुका ॥१॥ वष्टि कामयते वशा ॥ २ ॥

शेषश्चात्र–

वशाया वासिता कर्णधारिणी कणिकाऽपि च ॥

**भद्रो मन्दो मृगो मिश्रश्चतस्रो गजजातयः ॥ २८४ ॥**

भद्र सर्वलक्षणकल्याणत्वात् ॥ १ ॥ मन्दो मन्दसत्त्वात् ॥ २ ॥ मृगो मृग इव हीनसत्त्वत्वात् ॥ ३ ॥ मिश्र सकीर्णजातिः ॥ ४ ॥ २८४ ॥

**कालेऽप्यजातदन्तश्च स्वल्पाङ्गश्चापि मत्कुणौ ।**

माधन् कुणति मत्कुण , द्वयोरेकशेषे मत्कुणौ ॥ १ ॥

तुमर्थे क्रन्तुं क्रान्तुं च क्षन्तुं क्षान्तुं सेमे मते ॥११६॥
गन्तुं गान्तुं दीर्घादीनि गतौ कौ पन्थिके क्रमात् ।
अभिनय-व्याहरणे ईम् कीम् शीम् सीम् निरूपितम् ११७
अव्यक्ते ईम् शीम्, मर्षे पादपूर्तौ च, सीमिति ।
भार्यायां क्षम् गम् ऊम्, त्रीण्यूर्यादावङ्गीकृतौ भृशे ११८॥
विस्तारेऽनुकरणे च प्रशंसायामुरर्युरी ।
उररी उरी चत्वारि, हिंसायां कथिता अमी ॥११९॥
भ्रंशकला ध्वंसकला स्रंसकला समःकला ।
ससकला समकलाऽपि मसमसा च मस्मसा ॥१२०॥
गुलुगुधा गुलुगुला पार्दाली च वार्दाल्यपि ।
विचारे आक्की च विक्की च तद्विडूराऽऽकुलीकृतौ ॥१२१॥
ताली विताली आताली क्रियासंपादने फली ।
फल्यू च साक्षादादौ स्यात् सामर्थ्योत्साहयोरमी ॥१२२॥
असहने प्रसहने विसहने त्रयी त्वियम् ।
एदन्ताऽथ च वैरूप्येऽन्ये संतापे बधे क्रमात् ॥१२३॥
प्रकम्पने विकम्पने एदन्तौ रोहशोभयोः ।
प्राजरुहा बीजरुहा जरणे कथितावि‍मौ ॥ १२४ ॥
प्राजर्या वीयर्जा तुल्यौ चिता चित्ता च चेतने ।
इत्यूर्यादौ कतिचिदव्ययाः कुम्भसंभुजः स्मृताः ॥१२५॥
अदस् स्पर्शे स्थाने युक्तौ विभक्तिप्रतिरुपकम् ।
षष्ठीतृतीयार्थे तव ते मम मे च क्रमाद् मतौ ॥१२६॥

अधोऽर्थे त्वध अदन्तं हैमादर्शेषु दृश्यते ।
अथ सान्तमथ अथो एष्वर्थेषु त्रयोऽप्यमी ॥१२७॥
कथिताः संशया-ऽऽरम्भ-साकल्येषु समुच्चये ।
अनन्तरार्थे च तथा प्रतिज्ञाप्रश्नयोरपि ॥ १२८ ॥
अन्वादेशेऽधिकारार्थे मङ्गले शं च सं सुखे ॥१२९॥

इति श्रीवादीन्द्रश्रीसाधुकीर्त्युपाध्यायमिश्राणां शिष्यलेशेन वाचनाचार्यसाधुसुन्दरगणिना विरचितायां शब्दरत्नाकरनामशब्दप्रभेदनाममालायां सामान्यः काण्डः षष्ठः ।



# अथ शब्दरत्नाकरस्थशब्दानामकारादिक्रमेण सूचीपत्रम् ।

| श० | का० | श्लो० | श० | का० | श्लो० |
|---|---|---|---|---|---|
| दद्रु | ३ | ८९ | दव | ४ | १२१ |
| दद्र् | ३ | ९० | दवर | ३ | ३५१ |
| दधिमण्ड | ३ | ३९ | दविष्ठ | ६ | ५० |
| दधिपाज्य | ३ | ३०४ | दवीयस् | ६ | ५० |
| दन्तावल | ४ | २८९ | दशन | ३ | १६४ |
| दन्तिन् | ४ | २८९ | दशन | ३ | २६९ |
| दन्दुभ | ४ | ३४१ | दशपुर | ४ | २४१ |
| दन्द्व | ६ | ३१ | दशपूर | ४ | २४१ |
| दभ्र | ४ | २७२ | दशमिन | ३ | ४ |
| दम | ४ | १०८ | दशमीस्थ | ३ | ५ |
| दमथ | ४ | ३०५ | दशाङ्गुल | ४ | २६८ |
| दमुनस् | ४ | ११२ | दस्यती | ३ | १२२ |
| दमूनस् | ४ | ११२ | दहर | ३ | २ |
| दम्पति | ३ | १२२ | दह्र | ३ | २ |
| दर | ४ | ७२ | दाक्षाय्य | ४ | ३५९ |
| दर | ४ | ९० | दाडिम | ४ | १६६ |
| दर | ५ | ४ | दाडिम्ब | ४ | १६६ |
| दरि | ४ | ७१ | दाढिका | ३ | १६४ |
| दरुट | ४ | ३३७ | दाण्डाजनिक | ३ | २६ |
| दरुड | ४ | ३३७ | दात्यूह | ४ | ३५८ |
| दरोदर | ३ | ९९ | दात्योह | ४ | ३५८ |
| दर्दू | ३ | ९० | दाप्यत | ३ | ७१ |
| दद्रु | ३ | ८९ | दाम | ४ | ३१३ |
| दर्द्रू | ३ | ८९ | दामन् | ४ | ३१३ |
| दर्भ | ४ | २७३ | दामलिप्त | ४ | २७ |
| दर्वि | ३ | ३०५ | दामा | ४ | ३१३ |
| दर्वि | ४ | ३४२ | दाय | ३ | १२३ |
| दर्वी | ३ | ३०५ | दायित | ३ | ७१ |
| दर्वी | ४ | ३४३ | दार | ३ | ११८ |
| दर्शक | ३ | २४८ | दारा | ३ | ११८ |
| दर्शनिश् | २ | ३७ | दालिम | ४ | १६७ |
| दल्मि | २ | ५९ | दाव | ४ | १२१ |

## फ.

— ० —

## भ.

| श० | का० | श्लो० |
|---|---|---|
| मर्कट | ४ | २८४ |
| मर्कट | ४ | ३२५ |
| मर्कटक | ४ | २८४ |
| मर्जिता | ३ | ४८ |
| मर्त | ३ | १ |
| मर्त्य | ३ | १ |
| मर्ष | २ | १२७ |
| मलयु | ४ | १४२ |
| मलयू | ४ | १४२ |
| मलिन | ६ | ३८ |
| मलिना | ३ | ९८ |
| मल्ल | ३ | १६४ |
| मल्लक | ३ | १६४ |
| मल्लि | ४ | १७६ |
| मल्लिका | ४ | १७६ |
| मषी | ३ | ९८ |
| मसी | ३ | ९८ |
| मसुर | ४ | २५१ |
| मसुरा | ४ | २५२ |
| मसूर | ४ | २५१ |
| मसूरा | ४ | २५२ |
| मस्तक | ३ | १५४ |
| मस्तिक | ३ | १५४ |
| मस्तिष्क | ३ | १८९ |
| मस्तुलुङ्गक | ३ | १८९ |
| मह | २ | ११ |
| मह | ४ | ३१८ |
| मह | ६ | ८४ |
| महत्पथ | ४ | ९७ |
| महस् | २ | ११ |
| महस् | ६ | ८४ |
| महाकाली | २ | ८३ |
| महाकुल | ३ | ११३ |
| महाकुलीन | ३ | ११३ |
| महाजया | २ | ८५ |
| महानील | ४ | ८७ |
| महाबला | ४ | २४१ |
| महाबोधि | २ | ९९ |
| महारजत | ४ | ७३ |
| महारौद्री | २ | ८४ |
| महावीर | १ | ७ |
| महास्थली | ४ | ३ |
| महि | ४ | २ |
| महिन | ३ | २३८ |
| महिर | २ | ६ |
| महिला | ३ | ११४ |
| महिष | ४ | ३१८ |
| महिष्य | ३ | ३३५ |
| मही | ४ | २ |
| महेन्द्राणी | २ | ६२ |
| महेला | ३ | ११४ |
| महेलिका | ३ | ११४ |
| महेश्वर | २ | ८० |
| मा | ६ | १०७ |
| मांसल | ३ | ७३ |
| माकिर् | ६ | ११४ |
| माकिस् | ६ | ११४ |
| मागध | ३ | २८८ |
| माङ्गल्य | १ | १७ |
| माठा | ३ | २६९ |
| माठि | ३ | २६९ |
| माणव | ३ | २९७ |
| माणवक | ३ | २९७ |
| माणिक्य | ४ | ८६ |

## ल.

## श.

इति शब्दरत्नाकरस्थशब्दानामकाराद्यनुक्रमणिका समाप्ता।






अर्हम्

श्रीयशोविजयजैनग्रन्थमाला [३६]



वाचनाचार्यश्रीसाधुसुन्दरगणिविरचितः

# श्रीशब्दरत्नाकरः ।

शब्दानामकाराद्यनुक्रमणिकासहितः

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिपादा-
म्भोजचञ्चरीकायमाणाभ्यां
श्रावकपं–हरगोविन्ददास–बेचरदासाभ्यां संशोधितः ।

स च

रङ्गूननगरवास्तव्यश्रीजैनश्वेताम्बर-
सङ्घसाहाय्येन

वाराणस्यां
श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण गङ्गाप्रसादगुप्तस्य आर्टप्रिन्टींग
वर्कसाख्ययन्त्रालयेमुद्रयित्वा प्रकाशितः ।

वीरसंवत् २४३९ ।

मूल्यं पादोनरूप्यकम् ।

सामान्यवेदनेन तदप्रामाण्यप्रसङ्गाच्च । तत्तद्ग्रहणस्वभावता-तदङ्गीकरणे च विकल्पज्ञानेऽपि तुल्यः परिहारः, तस्यापि तद्ग्रहणस्वभावताऽभ्युपगमात् । तथाविधग्राह्याभावादस्य कुतस्तद्ग्रहणस्वभावतेति चेत् । न, तथाविधग्राह्याभावे प्रमाणाभावात्, प्रत्यक्षस्य स्वलक्षणविषयत्वेन तत्राप्रवृत्तेः, अनुमानस्याप्युपलब्धिलक्षणप्राप्तार्थविषयत्वात्, तस्य च तदभावाभ्युपगमात् । न हि साधारणं रूपमुपलब्धिलक्षणप्राप्तमिष्यते भवद्भिः, तदवस्तुत्वप्रतिज्ञानात्; अनीदृशानुपलब्धेश्चाभावनिश्चायकत्वानुपपत्तेः। एतेन तद्बाधकप्रमाणप्रवृत्तिः प्रत्युक्ता, उक्तवत्प्रत्यक्षादेस्तद्बाधकत्वायोगात् । युक्त्या तदयोगो बाधक इति चेत्। न, विकल्पानुपपत्तेः । युक्तिर्हि प्रमाणमप्रमाणं वा स्यात्?। प्रमाणं चेत् । न प्रत्यक्षादेरन्यदिति, अत्र चोक्तो दोषः। अप्रमाणत्वे तु तद्बाधकत्वानुपपत्तिः, अतिप्रसङ्गात् ॥

स्यादेतद् न तत्त्वतो गृहीतग्राहित्वेन हेतुना, अस्य विकल्पस्याप्रामाण्यम्, अपि त्वविषयत्वेनेति । एतदाशङ्क्याह— **कथमयं विकल्पोऽविषय इति वाच्यम्?।** यदनेन वेद्यते विकल्पेन न तदस्तीति अविषय इति चेत् । एतदाशङ्क्याह— **क्व तद् नास्ति यदनेन वेद्यते, किं तत्रैव विकल्पे, उत बहिरिति?।** यदि तत्रैव विकल्प एव नास्ति, कथं तेन वेद्यते ?, वेद्यमानं वा कथं न तत्र विकल्पे ? इति चिन्त्यम् । द्वितीय विकल्पमधिकृत्याह— **अथ बहिः यदनेन वेद्यते न तदस्तीति ।** एतदाशङ्क्याह— **अविकल्पकेऽपि समानः प्रसङ्गोऽविषयत्वप्रसङ्गः।** कथमित्याह— **तेनापि** अविकल्पकेन वेद्यमानस्य बहिरभावात्, अभावश्च स्वरूपस्यैव वेदनात्। **तदित्यादि** । तदविकल्पक वेद्यमानबहिःस्थतुल्यरूप विषयतुल्यरूपम्, इत्यस्माददोष इति चेत । एतदाशङ्क्याह— **केयं तत्तुल्यरूपता बहिःस्थतुल्यरूपता? इति वाच्यम् ।** किं तत्साधारणरूपभावो बहिःस्थसामान्यरूपभावोऽविकल्पकस्य, उत तद्ग्रहणस्वभावता बहिःस्थग्रहणस्वभावतेति ?। किञ्चातः ? उभय-

थापि दोष, तथा चाह— **न तावत् साधारणरूपभावः** तत्तुल्यरूपता । कुत इत्याह— **चेतनाचेतनत्वेन** हेतुना **तद्वैलक्षण्यसिद्धे** – तयोरविकल्पक-बहिःस्थयोर्वैलक्षण्यसिद्धे । दोषान्तरमाह– **सामान्यवेदनेन** हेतुना साधारणरूपभावत **तदप्रामाण्यप्रसङ्गाच्च**– अविकल्पकस्याप्रामाण्यप्रसङ्गाच्च न तत्साधारणरूपभावस्तत्तुल्यरूपतेति । **तत्तद्ग्रहणस्वभावतातदङ्गीकरणे च**– तस्याविकल्पकस्य तद्ग्रहणस्वभावता बहिःस्थग्रहणस्वभावता तस्यास्तदङ्गीकरणं तत्तुल्यरूपताङ्गीकरणमिति विग्रहः, तस्मिन् । किम् ? इत्याह– **विकल्पज्ञानेऽपि तुल्यः परिहारः** तत्तद्बहिःस्थतुल्यरूपमित्ययम् । कुतः ? इत्याह– **तस्यापि** विकल्पज्ञानस्य **तद्ग्रहणस्वभावताभ्युपगमाद्** बहिःस्थग्रहणस्वभावताभ्युपगमात् । **तथाविधेत्यादि** तथाविधग्राह्याभावाद् विकल्पज्ञानग्राह्याभावादस्य विकल्पज्ञानस्य कुतस्तद्ग्रहणस्वभावता बहिःस्थग्रहणस्वभावतेति चेत् । एतदाशङ्कयाह– **न, तथाविधग्राह्याभावे** विकल्पज्ञानग्राह्याभावे **प्रमाणाभावात्** । अभावश्च प्रत्यक्षस्य तावत् स्वलक्षणविषयत्वेन हेतुना तत्र तथाविधग्राह्याभावेऽप्रवृत्तेः, अनुमानस्याप्यनुपलब्धिरूपस्योपलब्धिलक्षणप्राप्तार्थविषयत्वात् । ततः किम् ? इत्याह– **तस्य** तथाविधग्राह्यस्य **तदभावाभ्युपगमादुपलब्धिलक्षणप्राप्तार्थविषयत्वाभावाभ्युपगमात्** । एतद्भावनायैवाह– **न हि साधारणं रूपं** विकल्पग्राह्यमुपलब्धिलक्षणप्राप्तमिष्यते भवद्भिः । कुत इत्याह– **तदवस्तुत्वप्रतिज्ञानात्** तस्य साधारणरूपस्यावस्तुत्वप्रतिज्ञानात्, अनीदृशानुपलब्धेश्चानुपलब्धिलक्षणप्राप्तानुपलब्धेश्च । किमित्याह– **अभावनिश्चायकत्वानुपपत्तेः** तथाभ्युपगमात् । **एतेनेत्यादि** एतेनानन्तरोदितेन तथाविधग्राह्याभावे प्रमाणाभावेन । किमित्याह– **तद्बाधकप्रमाणप्रवृत्तिः प्रत्युक्ता** तस्मिंस्तथाविधग्राह्ये बाधकप्रमाणवृत्तिर्निराकृता । कुत इत्याह– **उक्तवत्** यथोक्तं तथा प्रत्यक्षादे प्रत्यक्षानुमानद्वयस्य तद्बाधकत्वायोगात् तथाविधग्राह्यबाधकत्वायोगात् । युक्त्या तदयोगस्तथाविधग्राह्यायोग

साधारणरूपायोग इत्यर्थ, बाधक इति चेत् । एतदाशङ्क्याह– **न, विकल्पानुपपत्तेः** । अनुपपत्तिश्च– युक्तिर्हि प्रमाणमप्रमाणं वा स्यात् ? । किञ्चात ?, उभयथापि दोष इत्याह– **प्रमाणं चेत् । न प्रत्यक्षादेरन्यदिति, अत्र चोक्तो दोषः,** प्रत्यक्षस्य स्वलक्षणविषयत्वेन तत्राप्रवृत्तेरित्यादि । अप्रमाणत्वे तु युक्तं, किमित्याह– **तद्बाधकत्वानुपपत्तिः** तथाविधग्राह्यबाधकत्वानुपपत्ति । कुत इत्याह– **अतिप्रसङ्गात्** स्वलक्षणस्यापि युक्तिबाधितत्वोपपत्ते, अविषयेऽपीय प्रवर्तत इति भावना । एव विकल्पज्ञानस्यापि कस्यचित् प्रामाण्यमङ्गीकर्तव्यमित्यैदंपर्यम् ।

**अखिलविकल्पज्ञानभ्रान्ततावादिनश्च तत्सामर्थ्योत्थं वचनमपि तादृगेवेति सुस्थिता तत्त्वनीतिः । न हि भ्रान्तमात्मनो भ्रान्ततामवैति, द्विचन्द्रज्ञानादावात्मनि भ्रान्तताधिगमव्यपोहेन चन्द्रद्वयाद्यधिगतिदर्शनात्, तत्स्थामोपजातवचसोऽपि स्वभ्रान्तताभिधानपरित्यागेन चन्द्रद्वयाद्यभिधानात्, इति सकलमेव शास्त्रज्ञानाभिधानं भ्रान्तिमात्रम्, इति कथं ततस्तत्त्वनिश्चय इति चिन्त्यम् ?, तथाहि–अस्य नित्या-ऽऽत्मादिविकल्पवत् कृतकत्वादिलिङ्गद्वारायाता अनित्या-ऽनात्मादिविकल्पा अपि भ्रान्ता एव, इति कथं तेभ्यस्तन्निश्चितिः ? । निश्चितौ वा कथं न नित्यादावपि, तद्विकल्पानामपि ततो भावात् ? ॥**

इत्थमनभ्युपगमे दोषमाह–**अखिलेत्यादि** । अखिलविकल्पज्ञानभ्रान्ततावादिनश्च, किमित्याह— **तत्सामर्थ्योत्थं** निःशेषविकल्पज्ञानभ्रान्ततासामर्थ्योत्थं वचनमपि तादृगेव भ्रान्तमेव, इति–एव सुस्थिता तत्तत्त्वनीतिस्ताभ्यां भ्रान्तविकल्पज्ञान–वचनाभ्यां तत्त्वनीतिरित्युपहसति, न सुस्थितेत्यर्थ । कथमित्याह— **न हीत्यादि** न यस्माद् भ्रान्त ज्ञानमिति प्रक्रमः, आत्मनो भ्रान्ततामवैति । कुत इत्याह– **द्विचन्द्रज्ञानादौ** आदिशब्दाद् मायाजलज्ञानग्रहः, आत्मनि स्वरूपे भ्रान्तताधिगमव्यपोहेन चन्द्रद्वयाद्यधिगतिदर्शनात्, आदि-

शब्दाद् मायाजलग्रह, तत्स्थामोपजातवचसोऽपि भ्रान्तज्ञानसामर्थ्योपजातवचनस्यापि स्वभ्रान्तताभिधानपरित्यागेन चन्द्रद्वयाद्यभिधानात्, इत्येव सकलमेव शास्त्रज्ञानाभिधान भ्रान्तिमात्रमिति कृत्वा कथ तत शास्त्रज्ञानाभिधानात् तत्त्वनिश्चय इति चिन्त्यम् ?– नैव तत्त्वनिश्चय इति। एतद्भावनायैवाह– **तथाहीत्यादि** तथाह्यस्याखिलविकल्पज्ञानभ्रान्ततावादिनो नित्या-ऽऽत्मादिविकल्पवदिति निदर्शनम्, कृतकत्वादिलिङ्गद्वारायाताऽनित्या-ऽनात्मादिविकल्पा अपि भ्रान्ता एव, नाभ्रान्ता', इत्येव कथं तेभ्यो भ्रान्तविकल्पेभ्यस्तन्निश्चितिरनित्या-ऽनात्मादिनिश्चिति ?। निश्चितौ वा तेभ्योऽनित्या-ऽनात्मादे कथ न नित्यादावपि निश्चिति ?। कुत इत्याह– तद्विकल्पानामपि नित्या-ऽत्मादिविकल्पानामपि ततो वस्तुनो भावात् ॥

**स्यादेतत्स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपाः सर्व एव विकल्पाः, तथापि केषाञ्चिदेव तत्प्रतिबद्धजन्मनां विकल्पानामतत्प्रतिभासित्वेऽपि वस्तुन्यविसंवादः, मणिप्रभायामिव मणिभ्रान्तेः, नान्येषाम्, तद्भेदप्रसवे सत्यपि यथादृष्टविशेषानुसरणं परित्यज्य किञ्चित्सामान्यग्रहणेन विशेषान्तरसमारोपात्, दीपप्रभायामिव मणिबुद्धेः, इति संवादिभ्य एव तन्निश्चितिर्नासंवादिभ्यः ॥**

**स्यादेतदित्यादि** स्यादेतदथैवं मन्यसे– स्वलक्षणदर्शनेनाहिता या वासना तया कृतं विप्लवरूप येषां ते तथाविधाः सर्व एव विकल्पा सामान्येन, तथाप्येवमपि व्यवस्थिते सति केषाञ्चिदेवानित्या-ऽनात्मादिरूपाणां तत्प्रतिबद्धजन्मना वस्तुप्रतिबद्धजन्मना विकल्पानामतत्प्रतिभासित्वेऽपि वस्त्वप्रतिभासित्वेऽपीत्यर्थ, किमित्याह– **वस्तुन्यविसंवादः**। निदर्शनमाह– **मणिप्रभायामिव** विषयभूतायां **मणिभ्रान्तेः** कुञ्चिकादिविवरोपलम्भेन, **नान्येषा** नित्या-ऽऽत्मादिविकल्पानाम्, **तद्भेदप्रसवे सत्यपि** वस्तुभेदादुत्पादे सत्यपीत्यर्थ, **यथादृष्टविशेषानुसरणं परित्यज्य**, कथमित्याह– **किञ्चित्सामान्यग्रहणेन** सदृशापरा-

परहेतुना विशेषान्तरसमारोपाद् हेतो, 'नान्येषां' इति वर्तते। निदर्शनमाह—दीपप्रभायामिव विषयभूताया मणिबुद्धेः कुञ्चिकादिविवरोपलम्भेनेव, इत्येवं सवादिभ्य एव विकल्पेभ्यस्तन्निश्चितिरभिप्रेततत्त्वनिश्चितिर्नासंवादिभ्य ॥

एतदप्यसत्, अविचारितरमणीयत्वात्। तत्र यत्तावदुक्तम्—'स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपाः सर्व एव विकल्पाः' इति। अत्र किमिदं स्वलक्षणदर्शनं नाम?, का वा तदाहिता वासना, यत्कृतविप्लवरूपाः सर्व एव विकल्पाः? इति। वस्त्वनुभवः स्वलक्षणदर्शनम्, तदाहितवासना तु तथाविधविकल्पजननशक्तिः। यद्येवम्, कथं निरंशवस्तुविषयाद् निरंशानुभवात् तथाविधविकल्पजननशक्तीनां प्रभूतानां सम्भवः?, कथं वैकस्या एवानेकविकल्पजन्म?। समुत्पद्यन्ते च स्वलक्षणदर्शनानन्तरं नित्यानित्यादिविकल्पाः, क्रमेणैकस्य, अक्रमेण चानेकप्रमातॄणाम्। न चैते शक्तिभेदैकानेकजनकत्वे विना। न च भूयसामपि निरंशवस्तुविषयनिरंशानुभवानां तत्त्वतस्तत्त्वे विशेषः, रूपादिस्वलक्षणानामिव। तन्न तेषामिवैकस्य बहूनां वानन्तरं पारम्पर्येण वा तथाविधफलभेदोऽमीषां न्याय्य इति भाव्यमेतत्। का चेयं तथाविधविकल्पजननशक्तिः, किं तदुत्तरं मानसम्, उतान्यैव काचित्?। यदि मानसम्, कथं स्वलक्षणादस्वलक्षणजन्म?। अस्वलक्षणं च विकल्पः, असदाकाररूपत्वात्। न स्वसंवित्तिस्तत्रास्वलक्षणम्, अपि तु बहिर्मुखावभास एवेति चेत्। न खलु सा ततोऽन्या, इति कथं नास्वलक्षणम्?। असन्नसौ, सा तु सती, स्वसंविदितत्वादेवेति चेत्। कथमसौ तन्मात्रतत्त्वा विकल्प इति चिन्त्यम्?। असदाकारानुवेधादिति चेत्। कथमसताऽनुवेधो नाम?। स निर्विषयत्वादसन्, न तु तथाप्रतिभासेनेति चेत्। न स्वसंवित्तिस्तथाप्रतिभासनादन्या, इत्यस्वलक्षणत्वमेव ॥

एवं पूर्वपक्षमाशङ्क्याह- **एतदप्यसत्** अशोभनम्। कुत इत्याह **अविचारितरमणीयत्वात्** कारणात्। एतदेवाह- **तत्रेत्यादिना।** तत्र यत्तावदुक्तमादौ 'स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपा सर्व एव विकल्पा' इति-एतत्। अत्र किमिद स्वलक्षणदर्शन नाम ?। का वा तदाहिता स्वलक्षणदर्शनाहिता वासना, यत्कृतविप्लवरूपा सर्व एव विकल्पा इति ?। अत्राह- **वस्त्वनुभवः** शुद्ध स्वलक्षणदर्शनम्, तदाहितवासना तु तथाविधविकल्पजननशक्ति, तथाविधस्य सवादिनोऽसवादिनश्च। एतदाशङ्क्याह-**यद्येवम्, कथं निरंशवस्तुविषयाद् निरंशाशानुभवात् तथाविधविकल्पजननशक्तीनां प्रभूतानां संभवः** सामान्येन ?। कथं वैकस्या एव शक्तेरनेकविकल्पजन्म ?। को वा किमाह ? न चैतदेवम्, इत्याशङ्कानिरासायाह- **समुत्पद्यन्ते च स्वलक्षणदर्शनानन्तरं नित्यानित्यादिविकल्पाः क्रमेणैकस्य** प्रमातु सांख्यादेर्बौद्धादिमतप्रतिपत्त्या, अक्रमेण चानेकप्रमातृणा सांख्यबौद्धादीना नित्यानित्यादिविकल्पाः। शक्तिभेदश्चैकानेकजनकत्व चेति विग्रह, ते चैते, एते विना, क्रमाक्रमपक्षद्वयेऽपीति। एतदेवाह- **न चेत्यादि।** न च भूयसामपि क्रमपक्षे। केषामित्याह- **निरंशवस्तुविषयनिरंशानुभवानां** तुल्यस्वलक्षणानुभवानामित्यर्थ। किमित्याह- **तत्त्वतः** परमार्थेन, तत्त्वे तद्भावे रूपादिस्वलक्षणानुभवत्व इत्यर्थ, विशेषो भेद। किं तर्हि ? सर्व एवैते रूपादिस्वलक्षणानुभवा एवेति। इहैव निदर्शनमाह- **रूपादिस्वलक्षणानामिव** 'एकस्य प्रमातु.' इति प्रक्रम, तथाविधानुभवनिबन्धनानामिति, तथाहि- क्रमेणापि रूपादिस्वलक्षणानि स्वाकारमनुभवं कुर्वाणानि न रूपादिस्वलक्षणत्वेन विशिष्यन्त इति। प्रकृतयोजनामाह- **तत्** तस्माद् न तेषामिव रूपादिस्वलक्षणानामिव 'एकस्य प्रमातु' इति प्रक्रमः, बहूनां वा प्रमातृणामनन्तर बहूना पारम्पर्येण वैकस्य तथाविधफलभेदो भिन्नजातीयविज्ञानादिकार्यभेदोऽमीषां निरंशवस्तुविषयनिरंशानुभवानां न्याय्य इति भाव्यमेतद् भावनीयमेतत्। एतदुक्त भवति- यथा तेषां

रूपादिस्वलक्षणानां न रसादिफलभेदो न्याय्य , एवमनित्या-ऽनात्मकव-स्त्वनुभवानामपि न नित्या-ऽऽत्मादिविकल्पजननशक्त्याख्य फलभेदो न्याय्य । इहैवाभ्युच्चयमाह- **का चेयमित्यादिना** । का चेय तथाविधविकल्पजननशक्तिर्भवतोऽभिप्रेता ? । किं तदुत्तर प्रक्रमादविकल्पप्रत्यक्षोत्तरं मानसं स्वविषयानन्तरेत्यादिलक्षणम्, उतान्यैव काचिदालयगता ? । उभयथापि दोषमाह- **यदि मानसम्** , कथ स्वलक्षणाद् मानसादस्वलक्षणजन्म विकल्पोत्पाद ? । विकल्पास्वलक्षणत्वमाह- **अस्वलक्षणं च विकल्पो** भवन्नीत्या । कुत इत्याह- **असदाकाररूपत्वात्**- असदाकारो विकल्पबुद्धिप्रतिभासोऽस्वलक्षणत्वाभ्युपगमात् स एव रूप यस्य स तथा तद्भावस्तस्मात् । न स्वसंवित्तिस्तत्र विकल्पेऽस्वलक्षणम्, अपि तु बहिर्मुखावभास एवास्वलक्षणमिति चेत् । एतदाशङ्क्याह- **न खलु सा स्वसंवित्तिस्ततो** बहिर्मुखावभासादन्या, इत्येव कथ नास्वलक्षणम् ?-अस्वलक्षणमेव । असन्नसौ बहिर्मुखावभास , सा तु स्वसंवित्ति सती विद्यमाना, स्वसंविदितत्वादेव कारणादिति चेत् । एतदाशङ्क्याह- **कथमसौ** स्वसंवित्तिस्तन्मात्रतत्त्वा स्वसंवित्तिमात्रतद्भावा विकल्प इति चिन्त्यम्, न तत्र स्वलक्षणातिरिक्तोऽश इति कृत्वा । असदाकारानुवेधादसौ विकल्प इति चेत् । एतदाशङ्क्याह- **कथमसता** आकारेणानुवेधो नाम स्वसंविद. ?- नैवेत्यर्थ । स आकारो निर्विषयत्वात् कारणादसस्तुच्छ , न तु तथाप्रतिभासनेन न पुनर्बहिर्मुखावभासप्रतिभासनेनासन्निति चेत् । एतदाशङ्क्याह- **न स्वसंवित्तिरधिकृता** तथाप्रतिभासनाद् बहिर्मुखावभासप्रतिभासनादन्या-ऽर्थान्तरभूतेति कृत्वाऽस्वलक्षणत्वमेव स्वसंविद ॥

**तस्य विभ्रमरूपत्वात् तदन्या-ऽनन्यत्वकल्पनैवायुक्तेति चेत् । कोऽयं विभ्रम इति कथनीयम् ? । अनिरूप्यस्वरूपस्तत्त्वतोऽसद्रूप इति चेत् । कथमयं स्वसंवित्तिभेदक इति वाच्यम् ? । न तत्त्वत इति चेत् । उत्सन्नो विकल्पः । अस्त्विति चेत् । प्रतीत्यादिबाधा । चेतनैव तथाभूता विकल्प इति चेत् । किंभूतेति**

चिन्त्यम् ? असदाकारेति चेत् । अस्वलक्षणमेवेयम्, असदाकारत्वात् । न स्वसंवित्तिस्तत्रास्वलक्षणम्, अपि तु बहिर्मुखावभास एवेति चेत् । न खलु सा ततोऽन्येति समानं पूर्वेण, इति यदि मानसं कथं स्वलक्षणादस्वलक्षणजन्म साधीयः ? इति । कथं वा निर्विकल्पकत्वेनाभिन्नाद् भिन्नविकल्पसम्भवः ? । न हि नीलादिमात्रात् क्वचिद्रसादिभावः, तथाऽदर्शनात् । न चात्र किञ्चिद्भेदकम्, अनभ्युपगमात् । अभ्युपगमेऽपि ततोऽतिशयासिद्धेरिति निवेदयिष्यामः ॥

तस्य बहिर्मुखावभासप्रतिभासस्य विभ्रमरूपत्वात्कारणात् तदन्या-ऽनन्यत्वकल्पनैव तया स्वसंवित्त्याऽन्यानन्यत्वकल्पनैवायुक्तेति चेत् । एतदाशङ्क्याह- **कोऽयं विभ्रमो** यद्रूपत्वादन्या-ऽनन्यत्वकल्पनाऽयोग इति कथनीयम् ? । अनिरूप्य स्वरूप यस्य वैतथ्येन स तथा तत्त्वत परमार्थतोऽसद्रूप इति चेत् । एतदाशङ्क्याह- **कथमयं** विभ्रमोऽसद्रूपः सन् स्वसंवित्तिभेदक इत्येतद् वाच्यम् ? । न तत्त्वत इति चेत् स्वसंवित्तिभेदकः । एतदाशङ्क्याह- **उत्सन्नो विकल्पः** अविशिष्टस्वसंवित्तिमात्रभावेन । अस्त्विति चेद् विकल्पाभाव । एतदाशङ्क्याह- **प्रतीत्यादिबाधा** आदिशब्दाद् भावेतरभेदबाधाग्रह. । चेतनैव तथाभूता विशिष्टा विकल्प इति चेत् । एतदाशङ्क्याह- **किंभूता तथाभूतेति चिन्त्यम्** ?। असदाकारा असन्नाकारो यस्या सा तथेति चेत् । एतदाशङ्क्याह- **अस्वलक्षणमेवेयं** चेतना, असदाकारत्वात् । न स्वसंवित्तिस्तत्र चेतनायामस्वलक्षणम्, अपि तु बहिर्मुखावभास एवास्वलक्षणमिति चेत् । एतदाशङ्क्याह- **न खलु** नैव सा चेतना स्वसंवित्तिस्ततो बहिर्मुखावभासादन्येति समान पूर्वेण 'कथ नास्वलक्षणम्' इत्यादिनोक्तेन । इत्येवं यदि मानस कथ स्वलक्षणादस्वलक्षणजन्म साधीयः शोभनतरम् ?- नैवेत्यर्थ. । **कथं वेत्यादि** कथ वा निर्विकल्पकत्वेनाभिन्नाद् मानसाद् भिन्नविकल्पसंभवो विकल्पकत्वेन । कथं च न स्यादित्याह- **न हि नीलादिमात्राद्** वस्तुनोऽन्यरहितात् क्वचिद्

रसादिभाव । आदिशब्दाद् गन्धादिग्रह । कथ न रसादिभाव इत्याह– तथाऽदर्शनात् । न चात्र मानसाद् विकल्पजन्मनि किञ्चिद् भेदकमस्ति । कुत इत्याह– अनभ्युपगमात् । अभ्युपगमेऽपि सति भेदकस्य वासनादे, ततो भेदकादतिशयासिद्धेरिति निवेदयिष्याम ऊर्ध्वम् । गतो मानसपक्ष ॥

अथान्यैव काचित् । काऽसाविति वाच्यम् ? । अनादिमदालयगतशक्तेः स्वलक्षणदर्शनसहकारिभावतो विशेषकरणम्, तथाहि– सा तदनुभवं प्राप्याक्षेपेण तथाविधविकल्पजननस्वभावोपजायत इति स्वलक्षणदर्शनाहितेत्युच्यते । अत एव न भिन्नविकल्पसम्भवाभावः, तथाविधशक्तिसहकारित्वेन तदनुभवस्य तदविरोधादिति । एतदपि यत्किञ्चित्, तस्य तत्सहकारित्वासिद्धेः, ततस्तस्या उपकाराभावात्, अनुपकार्योपकारकयोश्च सहकारित्वायोगात् । द्विविधो हि वः सहकारार्थः परस्परातिशयाधानेन सन्ताने विशिष्टक्षणोत्पादनलक्षणः, पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणश्च । न चानयोरेकोऽपि सम्भवति, क्षणिकत्वेन परस्परातिशयाधानायोगात् । अतिशय उपकार इत्यनर्थान्तरम् । न चासावन्यतोऽन्यस्य, विकल्पायोगात् ॥

द्वितीयं विकल्पमधिकृत्याह– अथान्यैव काचित् तथाविधविकल्पजननशक्ति । एतदुररीकृत्याह– काऽसाविति वाच्यम् ? । अनादिमती चासावालयगतशक्तिश्चेति विग्रह, तस्या स्वलक्षणदर्शनसहकारिभावत प्रवृत्तिविज्ञानसहकारिभावत इत्यर्थ, विशेषकरणमतिशयकरण सा । एतदेव भावयति– तथाहीत्यादिना । तथाहि साऽनादिमदालयगतशक्तिस्तदनुभव प्राप्य स्वलक्षणदर्शनमासाद्य, अक्षेपेणाव्यवधानेन, तथाविधविकल्पजननस्वभावा– अनित्यादिविकल्पजननस्वभावोपजायत इति कृत्वा स्वलक्षणदर्शनाहितेत्युच्यते । अत एव कारणाद् न भिन्नविकल्पसंभवाभाव, कि तर्हि ? सभव एव । कुत इत्याह–

तथाविधशक्तिसहकारित्वेन हेतुना तदनुभवस्य स्वलक्षणानुभवस्य प्रवृत्तिविज्ञानस्येत्यर्थ तदविरोधादिति प्रक्रमाद् भिन्नविकल्पसभवाविरोधात् शक्तिरस्योपादानमित्यभिप्राय इति । एतदाशङ्क्याह— एतदपि यत् किञ्चित् । कथमित्याह— तस्य स्वलक्षणानुभवस्य तत्सहकारित्वासिद्धे प्रस्तुतशक्तिसहकारित्वासिद्धे । असिद्धिश्च ततोऽधिकृतानुभवात् तस्या. शक्ते, किमित्याह— उपकाराभावात् । यदि नामैवं तत किमित्याह— अनुपकार्योपकारकयोश्च भावयो सहकारित्वायोगात् । एनमेवाह— द्विविधो हि वो युष्माक सहकारार्थ । द्वैविध्यमाह— परस्परातिशयाधानेन क्षणपरम्परया सताने प्रबन्धे विशिष्टक्षणोत्पादनलक्षणो विवक्षितकार्ययोग्यताकारीत्यर्थ, तथा पूर्वस्वहेतोरेवोपादानादे. समग्रोत्पन्नैककार्यक्रियालक्षणश्च समग्रोत्पन्नानामेककार्यक्रियाऽन्त्यानां विवक्षितकार्योत्पत्ति सैव लक्षण यस्य सहकारार्थस्य स तथेति समास । न चेत्यादि न चानयो सहकारार्थयोरेकोऽपि सभवति । कुत इत्याह— क्षणिकत्वेन हेतुना परस्परातिशयाधानायोगात् । एतदेव भावयति— अतिशय उपकार इत्यनर्थान्तरम् । न चासावतिशयोऽन्यत. सकाशादन्यस्य । कथ नेत्याह— विकल्पायोगात् ॥

तदनुभवो हि तच्छक्तेरनुत्पन्नायाः, उत्पन्नायाः, निरुद्धाया एव वोपकुर्यात् ? । न तावदनुत्पन्नायाः, तस्या एवासत्त्वात्, असतश्चोपकाराकरणात् । नाप्युत्पन्नायाः, तस्या अनाधेयातिशयत्वात्, क्षणादूर्ध्वमनवस्थितेः । द्वाभ्यामप्येकीभूय तदन्यकरणमेवातिशयाधानम्, तदेव चोपकार इति चेत् । न, उपादानकारणविशेषाधानमन्तरेण ततः कार्यविशेषासिद्धेः । न चैककालभाविनाऽन्यतो भवन्त्या अन्यत एव भवता तस्या अतिशयाधानम्, तन्निबन्धनस्य तत्कृतविशेषासिद्धेः । तदभ्युपगमे च तत्राप्ययमेव वृत्तान्तः, एवं निबन्धनपरम्परायामपि वाच्यम्, इत्यत्राणं निबन्धनपरम्परा ॥

एनमेवाह– **तदनुभवो हीत्यादिना**। तदनुभवोऽधिकृतस्वलक्षणानुभवो यस्माच्छक्तेरनादिमदालयगतशक्तेरनुत्पन्नाया उत्पन्नाया निरुद्धाया एव वोपकुर्यादिति सम्भविनो विकल्पाः। न तावदनुत्पन्नाया उपकरोति तदनुभव। कुत इत्याह– **तस्या एव** शक्तेरसत्त्वात्। न चासावनुत्पन्नाऽस्ति। यदि नामैव तत किमित्याह– **असतश्च** सामान्येनोपकाराकरणात्। नाप्युत्पन्नाया उपकरोति तदनुभव। कुत इत्याह– **तस्या** उत्पन्नाया निष्पन्नत्वेनानाधेयातिशयत्वात्। एतच्च क्षणादूर्ध्वमनवस्थिते कारणात्। द्वाभ्यामपि शक्त्य ऽनुभवाभ्यामेकीभूय तदन्यकरणमेव विशिष्टशक्तिकरणमेवातिशयाधानम्, तदेव चान्यकरणमुपकार इति चेत्। एतदाशङ्क्याह– **नेत्यादि** न नैतदेवम्। कुत इति युक्तिमाह– **उपादानकारणविशेषाधानमन्तरेण** इह तावदधिकृतशक्तिविशेषाधान विना, ततो विवक्षितानुभवात्, कार्यविशेषासिद्धे' प्रस्तुतविकल्पकार्यभेदासिद्धेरित्यर्थ। न चैककालभाविना शक्त्या सहानुभवेनान्यतो भवन्त्याः शक्तेरन्यत एव स्वहेतोर्भवताऽनुभवेन तस्याः शक्तेरतिशयाधान 'न्याय्यम्' इति शेष। कुत इत्याह– **तन्निबन्धनस्य** अधिकृतशक्त्युपादानस्य तत्कृतविशेषासिद्धेर्विवक्षितानुभवकृतविशेषासिद्धे। तदभ्युपगमे च सामान्येन तन्निबन्धनस्य तत्कृतविशेषाभ्युपगमे च तत्रापि तन्निबन्धनेऽयमेवानन्तरोदितो 'नोपादानकारणविशेषाधानमन्तरेण तत कार्यविशेषासिद्धेः' इत्यादिर्वृत्तान्त। एवमुक्तनीत्या निबन्धनपराम्परायामपि वाच्यम्। इति– एवम्, अत्राणं निबन्धनपरम्परा, अनादावपि ससारे कस्यापि निबन्धनस्योक्तनीत्या विशेषाधानायोगादिति भावनीयम्॥

**स्वहेतुपरम्परात एव सा शक्तिस्तथास्वभावोत्पन्ना याऽनुपकारिणमपि तदनुभवं सहकारिणमपेक्ष्य विशिष्टं कार्यं जनयत्यतो न दोष इति चेत्। न, अनुपकारिणोऽपेक्षाऽयोगात्। तदभ्युपगमेऽतिप्रसङ्गात्, तत्तथाविधस्वभावाधायकहेतोरप्यस्थानपक्षपातित्वापत्तेः, स्वभावापर्यनुयोगस्य च प्रमाणोपपन्नस्वभावविषय-**

त्वात्। स्वपरिकल्पनागर्भवाङ्मात्रोदितस्वभावविषयत्वे तु तत्त्वव्यवस्थानुपपत्तिः, अतथाविधस्वभावानामपि तथाविधस्वभावत्वाभिधानाविरोधात्। एवं च सहेतुकनाशापत्तिः,'स्वहेतुपरम्परातस्तथास्वभाव एवासावुत्पन्नो भावो योऽकिञ्चित्करमपि नाशहेतुमपेक्ष्य नश्यति' इत्यपि वक्तुं शक्यत्वात्, स्वभावपर्यनुयोगासिद्धेः, अचिन्त्यशक्तित्वात्; अन्यथा त्वत्पक्षेऽपि तुल्यत्वादिति। नापि निरुद्धायाः, तस्या एवासत्त्वात्, असतश्चोपकाराकरणात्। न च प्रकारान्तरेणोपकारकरणं संभवति। एवं तावदाद्यपक्षे सहकारार्थाभाव इति॥

**स्वहेत्वित्यादि** स्वहेतुपरम्परात एव सा शक्तिरधिकृता तथास्वभावोत्पन्ना, याऽनुपकारिणमपि तदनुभवमविकृतस्वलक्षणानुभवं सहकारिणमपेक्ष्य विशिष्ट कार्यं जनयत्यविकृतविकल्पाख्यम्, अतो न दोष इति चेत् अधिकृत। एतदाशङ्कयाह— **न, अनुपकारिणः** तदनुभवस्य। किमित्याह— **अपेक्षाऽयोगात्**। तदभ्युपगमेऽनुपकारिणोऽपेक्षाऽभ्युपगमेऽतिप्रसङ्गात्, तद्वद् विश्वापेक्षापत्ते। **तत्तथाविधेत्यादि** तस्याः शक्तेस्तथाविधस्वभावाधायकोऽनुपकारिणमपि तदनुभव सहकारिणमपेक्ष्य विशिष्ट कार्यं जनयतीत्येवंविधस्वभावाधायकश्चासौ हेतुश्चेति समास, तस्यापि, किमित्याह— **अस्थानपक्षपातित्वापत्तेः** नेति क्रियायोग। उक्त च—

"अस्थानपक्षपातश्च हेतोरनुपकारिणि।
अपेक्षाया नियुङ्क्ते यत् कार्यमन्याविशेषत॥ १॥"

इत्यादि। स्वभावापर्यनुयोगस्य च 'न स्वभाव पर्यनुयोगमर्हति' इत्यस्य। किमित्याह— **प्रमाणोपपन्नस्वभावविषयत्वात्** प्रतीतिसचिवस्वभावविषयत्वादित्यर्थ, स्वपरिकल्पनागर्भश्चासौ वाङ्मात्रोदितस्वभावश्चेति समास' स एव विषयो यस्य स्वभावापर्यनुयोगस्य स स्वपरिकल्पनागर्भवाङ्मात्रोदितस्वभावविषयस्तस्य भावस्तस्मिन् पुनरस्याभ्युपगम्यमाने, किमित्याह— **तत्त्वव्यवस्थानुपपत्तिः**। कुत इत्याह—

अतथाविधस्वभावानामपि भावाना तथाविधस्वभावत्वाभिधानाविरोधात् । तत किमित्याह– **एवं च सहेतुकनाशापत्तिः** । कथमित्याह– '**स्वहेतुपरम्परातः** सकाशात् तथास्वभाव एवासावुत्पन्नो भाव पदार्थो योऽकिञ्चित्करमपि नाशहेतुमपेक्ष्य नश्यति' इत्यपि वक्तु शक्यत्वात् तथास्वभावपर्यनुयोगासिद्धेरुक्तनीत्या । असिद्धिश्चाचिन्त्यशक्तित्वात् स्वभावस्य । इत्थ चैतदङ्गीकर्तव्यमित्याह– **अन्यथा त्वत्पक्षेऽपि स्वहेतुपरम्परात एव सा शक्तिस्तथास्वभावोत्पन्नेत्यस्मिन्नपि, तुल्यत्वात् पर्यनुयोगस्य** । इति सर्वत्र न, अनुपकारिणोऽपेक्षाऽयोगात्' इत्यतो यथायोग 'न' इति क्रिया योजनीया । नापि निरुद्धाया 'शक्तेरुपकरोति तदनुभव' इति प्रक्रम । कुत इत्याह– **तस्या एव** निरुद्धाया शक्तेरसत्त्वात्, असतश्च तुच्छस्य चोपकाराकरणात् । **न चेत्यादि** न च प्रकारान्तरेणोक्तप्रकारत्रयातिरिक्तेनोपकारकरण सभवति, वस्तुतस्तस्यैवाभावात् । एव तावदाद्यपक्षे– उपन्यासक्रमप्राधान्यात् 'परस्परातिशयाधानेन सताने विशिष्टक्षणोत्पादनलक्षण' इत्यस्मिन्, सहकारार्थाभाव इति ॥

**एतेन पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणोऽपि सहकारार्थो निषिद्धः, तत्त्वतः प्रथमसहकारार्थाविशेषात् 'स्वहेतुपरम्परात एव सा शक्तिस्तथास्वभावोत्पन्ना' इत्यादिना तु सुतरामभेदात्, प्रत्येकं तत्तथाविधकार्यजननसमर्थस्वभावेतरविकल्पदोषापत्तेश्च– प्रथमपक्षे किमन्योन्यापेक्षया?, एकत एव तत्सिद्धेः । द्वितीयपक्षे चापेक्षायामपि तदसिद्धेः, प्रत्येकमतत्स्वभावत्वात् ॥**

**एतेनेत्यादि** । एतेनानन्तरोदितेन, पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणोऽपि सहकारार्थ प्राग निदर्शितस्वरूपो निषिद्ध. । कुत इत्याह– **तत्त्वतः** परमार्थेन, **प्रथमसहकारार्थाविशेषात्** । अस्य सहकारार्थस्य परस्परातिशयाधानेन संताने विशिष्टक्षणोत्पादनलक्षणः प्रथम., तदयमपि पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षण. सदा

सन्तानापेक्षयैवभूत एव, तस्य तस्य कार्यस्य विशिष्टक्षणोत्पादजलक्षणत्वादिति भावनीयम् । 'स्वहेतुपरम्परात एव सा शक्तिस्तथास्वभावोत्पन्ना' इत्यादिना त्वनन्तरोदितग्रन्थेन सुतरामभेदात्– द्वयोरपि सहकारार्थयो फलाभेदादिति गर्भ । दोषान्तरमाह– **प्रत्येकमित्यादिना ।** प्रत्येकमेकमेक प्रति, तेषा समग्रोत्पन्नाना तथाविध विशिष्ट यद् विवक्षित विज्ञानादि कार्य तज्जननसमर्थस्वभावश्चेतरश्चातज्जननसमर्थस्वभावश्चेति विकल्पाभ्यां दोषास्तदापत्तेश्च कारणाद् 'द्वितीयोऽपि सहकारार्थो निषिद्ध ' इति क्रिया । एतदुक्त भवति– पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणो द्वितीय सहकारार्थ । तत्र ये समग्रा उत्पन्नास्ते प्रत्येक तथाविधकार्यजननसमर्थस्वभावा स्यु , न वा तथाविधकार्यजननसमर्थस्वभावा इति द्वयी गति । तत्र प्रथमपक्षे– प्रत्येक ते तथाविधकार्यजननसमर्थस्वभावा इत्यस्मिन्, किमन्योन्यापेक्षया ?, एकत एव तथाविधकार्यजननसमर्थस्वभावात् समग्रात्, तत्सिद्धेस्तथाविधकार्यससिद्धे , अन्यथा तत्तत्स्वभावत्वानुपपत्तिरिति हृदयम् । द्वितीयपक्षे च– प्रत्येकं ते न तथाविधकार्यजननसमर्थस्वभावा इत्यस्मिन् । किम्मित्याह– **अपेक्षायामपि** सत्या, तदसिद्धे – विवक्षितकार्यासिद्धे । असिद्धिश्च प्रत्येकमतत्स्वभावत्वात् समग्राणाम् । न हि प्रत्येक तैलाजननस्वभावा· सिकताणव· परस्परापेक्षयापि तैल जनयन्ति, तदतत्स्वभावत्वविरोधादिति ॥

**तेषामत एव प्रत्येकत्वाभावादप्रत्येकत्वत एव तत्स्वभावत्वाददोष इति चेत् । न, अनेकतः सर्वथैकभवनासिद्धेः, तद्भिन्नस्वभावत्वात्; अन्यथाऽनेकत्वायोगात् । एवं चेतरेतरस्वभाववैकल्येन तत्रानुपयोगात् । तत्स्वभावविकलस्तद्रूपो न स्याद् नातत्कार्य इति चेत् । न, तत्स्वभावविकलस्य तत्कार्यत्वविरोधात्, तज्जननैकस्वभावादेव ततस्तदुत्पत्तेः, अन्यतस्तदभावात्, तस्यापि तत्त्वेऽन्यत्वाभाव इति निरूप्यतां सम्यग्; अन्यथा कार्यैकत्वानुपपत्तिः, समग्रस्यैव तस्योत्पत्तेः, अनेक-**

जन्यत्वे च तदयोगात्, सर्वेषां तज्जनकत्वात्, एकभाविनोऽपरभावासिद्धेः, तद्वैयर्थ्यप्रसङ्गात्, समग्रजनकत्वेऽप्येकस्यापि जनकत्वात्, अन्यथा समग्रजनकत्वविरोधात्, भेदशस्तद्भावापत्तेः, अन्यतज्जनकत्वे च कुतस्तत्स्वभाववैकल्यम्? इति यत्किञ्चिदेतत्॥

तेषामित्यादि। तेषा समग्रोत्पन्नाना समग्राणाम्, किमित्याह— अत एव हेतो, प्रत्येकत्वाभावात् कारणात्, अप्रत्येकत्वत एव— अप्रत्येकत्वेनैव समग्रतयेत्यर्थ, तत्स्वभावत्वात् तथाविधकार्यजननसमर्थस्वभावत्वादोष इति चेदनन्तरविकल्पयुगलकोपनीत। एतदाशङ्क्याह— नानेकेत्यादिना। न नैतदेवम्। कुत इत्याह— अनेकतोऽनेकेभ्य समग्रेभ्य, सर्वथैकभवनासिद्धेर्निरशभवनासिद्धेरित्यर्थ। असिद्धिश्च तद्भिन्नस्वभावत्वात् तेषामनेकेषा भिन्नस्वभावत्वात्। इत्थ चैतदङ्गीकर्तव्यमित्याह— अन्यथा एवमनभ्युपगमेऽभिन्नस्वभावत्वादनेकत्वायोगात्। एवं चेत्यादि। एवं चानेकत्वे सति, इतरेतरस्वभाववैकल्येन— न य एवैकस्य स्वभाव स एवापरस्य, तदभेदप्रसङ्गादितीतरेतरस्वभाववैकल्य तेन, तत्र सर्वथैकभवने, अनुपयोगाद् नानेकत सर्वथैकभवनमिति। तत्स्वभावविकलस्तस्य विवक्षितस्य कस्यचित् तथाविधकार्यजननसमर्थस्य समग्रस्य स्वभावस्तत्स्वभावस्तेन विकलो रहितोऽपर समग्र एव तत्स्वभावविकल स, तद्रूपोऽधिकृतसमग्रान्तररूप, न स्याद् न भवेत् तद्वैकल्येन, नातत्कार्यो न समग्रान्तराकार्यः, किन्तु तत्कार्य एव, समग्रान्तरवत्, तस्यापि तज्जननस्वभावत्वादिति चेत्। एतदाशङ्क्याह— नेत्यादि। न नैतदेवम्। कुत इत्याह— तत्स्वभावविकलस्य विवक्षितसमग्रतथाविधकार्यजननसमर्थस्वभावविकलस्य समग्रान्तरस्येति प्रक्रम। किमित्याह— तत्कार्यत्वविरोधात् समग्रान्तरकार्यत्वविरोधात्। विरोधश्च तज्जननैकस्वभावादेव तथाविधकार्यजननैकस्वभावादेव, तत प्रथमसमग्रात्, तदुत्पत्तेस्तथाविधकार्योत्पत्ते., अन्यत. समग्रान्तरात्, तद-

भावादन्योत्पन्नकार्याभावात्, तत एवोत्पन्न तदिति किमन्यस्मादुत्पादेन ?। सोऽपि तज्जननस्वभाव इत्येव तज्जनयतीत्याशङ्कानिरासायाह- **तस्यापि** अन्यस्य समग्रान्तरस्य, तत्त्वे तज्जननैकस्वभावत्वे । किमित्याह- **अन्यत्वाभावः** तत्स्वभावस्य तत्त्वादिति निरूप्यता सम्यक्। अन्यथैवमनभ्युपगमे, किमित्याह- **कार्यैकत्वानुपपत्तिः**। कुत इत्याह- **समग्रस्यैव** अखण्डस्यैव, तस्य कार्यस्योत्पत्ते । यदि नामैव तत किमित्याह- **अनेकजन्यत्वे च** सति कार्यस्य, तदयोगात् समग्रोत्पत्त्ययोगात्। अयोगश्च सर्वेषा समग्राणा तज्जनकत्वाद् विवक्षितैककार्यजनकत्वात्। किमेवं न समग्रोत्पत्तिरित्याह- **एकभाविनः** इति, एकस्माद् भवितु शीलमस्येत्येकभावि कार्य गृह्यते तस्य, किमित्याह- अपरस्माद् भावोऽपरभाव, भवन भाव उत्पाद, तदसिद्धे । असिद्धिश्च तद्वैयर्थ्यप्रसङ्गादपरवैयर्थ्यप्रसङ्गात्। नैको जनक समग्रा एव जनका इत्यसद्ग्रहव्यपोहायाह- **समग्रजनकत्वेऽपि** सति, किमित्याह- **एकस्यापि जनकत्वात्** । इत्थ चैतदङ्गीकर्तव्यमित्याह- **अन्यथा** एवमनभ्युपगमे, समग्रजनकत्वविरोधात्, नैकाद्यभावे सामग्र्यमिति भावनीयम्। यदि नामैवं तत. किमित्याह- **भेदशः** भेदै, तद्भावापत्ते कार्यभावापत्ते, न तत्रैकोऽप्यजनक, न चांशजनक इति कृत्वा। अथान्योऽपि तदेव जनयति यदेकेन जनितमित्यत्राह- **अन्यतज्जनकत्वे च** अन्यस्यापि समग्रस्य तज्जनकत्वे समग्रान्तरजनकत्वे चाभ्युपगम्यमाने। किमित्याह- **कुतस्तत्स्वभाववैकल्यं** समग्रान्तरस्वभाववैकल्यम् ?- नैव, तज्जन्यजनकत्वान्यथानुपपत्ते, उक्तं च—

"उत्पद्यते यदेकस्मादनश नान्यतोऽपि तत्।
समग्रभावे सामग्र्या नैक कार्य सुनीतित ॥ १ ॥"

इति यत् किञ्चिदेतत्- 'तत्स्वभावविकलस्तद्रूपो न स्याद् नातत्कार्य.' इति.॥

**हेतुभेदात् फलभेद इति चापन्यायः । तथा च सत्ययमेव**

अविषयत्वापत्तिः अविगानेन तथाऽनुभवादेराधिकृतबुद्ध्याकारेऽपि भावात्, तस्य च निर्विषयत्वात्, न चैतदेवम्। इति-एवम्, समानपरिणाम एव सामान्यमिति महानिगमनम्॥

यतश्चैवम्, अतो न य एवासावेकस्मिन् विशेषे स एव विशेषान्तरे। किं तर्हि?। समानः। इति कुतः सामान्यवृत्तिविचारोदितभेदद्वयसमुत्थापराधावकाशः? इति। न चैवं सति परस्परविलक्षणत्वाद् विशेषाणां समानबुद्धि-शब्दद्वयप्रवृत्त्यभावः, सत्यपि वैलक्षण्ये समानपरिणामसामर्थ्यतः प्रवृत्तेः, असमानपरिणामनिबन्धना च विशेषबुद्धिरिह। इति यथोदितबुद्धि-शब्दद्वयप्रवृत्तिः। तथा चोक्तम्-

"वस्तुन एव समानः परिणामो यः स एव सामान्यम्।
असमानस्तु विशेषो, वस्त्वेकमनेकरूपं तु॥ १॥"

ततश्च तद् यत एव सामान्यरूपमत एव विशेषरूपम्, समानपरिणामस्याऽसमानपरिणामाऽविनाभूतत्वात्, यत एव च विशेषरूपमत एव सामान्यरूपम्, असमानपरिणामस्यापि समानपरिणामाविनाभावादिति। न चानयोर्विरोधः, अन्योऽन्यव्याप्तिव्यतिरेकेणोभयोरसत्त्वापत्तेः, उभयोरपि स्वसंवेदनसिद्धत्वात्, संवेदनस्योभयरूपत्वात्, उभयरूपतायाश्च व्यवस्थापितत्वात्॥

यतश्चेत्यादि यतश्चैवम्, अतो न य एवासौ समानपरिणामः, एकस्मिन् विशेषे घटादौ, स एव विशेषान्तरे शरावादौ। कि तर्हि?। समान। इति-एवम्, कुतः सामान्यवृत्तिविचारोदितं तद्भेदद्वयं च देशकार्त्स्न्यरूपं विकल्पद्वयमिति विग्रह, तत्समुत्थाश्च तेऽपराधाश्च सदेशत्वप्रसङ्गादयस्तेषामवकाश कुत.?- नैव, समानपरिणामस्य तद्विलक्षणत्वादिति। न चैवमित्यादि न चैवं सति, परस्परविलक्षणत्वाद् विशेषाणां घट-शरावादीनाम्, समानबुद्धि-शब्दद्वयप्रवृत्त्यभावः, हि-

माङ्गारादीनामिव । कुत इत्याह—**सत्यपि वैलक्षण्ये समानपरिणामसामर्थ्यतः प्रवृत्तेः** कारणात्, समानबुद्धि-शब्दद्वयस्येति । व्यतिरेकमाह— **असमानपरिणामनिबन्धना च विशेषबुद्धिरिह** प्रक्रमे घट-शरावादिबुद्धिवत् । इति—एवम्, यथोदितबुद्धि-शब्दद्वयप्रवृत्तिः समानबुद्धि-शब्दद्वयप्रवृत्तिरित्यर्थ । **तथा चोक्तमिति** अधिकृतार्थप्रसाधक ज्ञापकमाह— **वस्तुन एव** घटादे समान. परिणामो यो मृदादिः, स एव सामान्यम् । असमानस्तु विशेष ऊर्ध्वतादि । वस्त्वेकमनेकरूप तु सामान्य-विशेषोभयरूपमपि तदनेकत्वतोऽनेकरूपमित्यर्थ ॥ १ ॥

**ततश्चेत्यादिना** मूलपूर्वपक्षग्रन्थं परिहरति— ततश्च तद् वस्तु घटादि, यत एव सामान्यरूप मृदाद्यात्मकतया, अत एव कारणात्, विशेषरूपमूर्ध्वादिरूपापेक्षया । कुत इत्याह— **समानपरिणामस्य** प्रस्तुतस्य, असमानपरिणामाविनाभूतत्वाद् विशेषपरिणामाविनाभूतत्वादित्यर्थ । यत एव च कारणात्, विशेषरूपमूर्ध्वाद्यपेक्षया, अत एव सामान्यरूप मृदाद्यात्मकतया । भावनामाह— **असमानपरिणामस्यापि** ऊर्ध्वादिरूपस्य, समानपरिणामाविनाभावाद् मृदादिपरिणामाविनाभावादिति । न चानयो समाना-ऽसमानपरिणामयो, विरोध । कुत इत्याह— **अन्योन्यव्याप्तिव्यतिरेकेण** उभयोः समाना-ऽसमानपरिणामयो, असत्त्वापत्ते, आपत्तिः प्राक् प्रदर्शितैव, तथा, उभयोरपि स्वसवेदनसिद्धत्वात् तथानुभवभावेन । अत एवाह— **संवेदनस्योभयरूपत्वात्** सामान्य-विशेषोभयापेक्षया, उभयरूपतायाश्च सवेदनस्य, व्यवस्थापितत्वादध. 'न चानयोर्विरोध ' इति क्रियायोग ॥

**यच्चोक्तम्—'सामान्यविशेषोभयरूपत्वे सति वस्तुनः सकललोकप्रसिद्धसंव्यवहारनियमोच्छेदप्रसङ्गः' इत्यादि । तदपि जिनमतानभिज्ञतासूचकमेव केवलम्, न पुनरिष्टार्थप्रसाधकमिति । न हि 'मधुरक-लड्डुकादिविशेषानर्थान्तरं सर्वथैकस्वभावमेकम-**

नवयवं सामान्यम्' इत्यभिदधति जैनाः । अतः किमुच्यते-'न विषं विषमेव मोदकाद्यभिन्नसामान्याव्यतिरेकात्' इत्यादि ? । किं तर्हि ? । समानपरिणामः । स च भेदाविनाभूतत्वाद् न य एव विषादभिन्नः स एव मोदकादिभ्योऽपि, सर्वथा तदेकत्वे समानत्वायोगात् ॥

यच्चोक्तं पूर्वपक्षग्रन्थे, 'सामान्यविशेषोभयरूपत्वे सति, वस्तुनो घटादेः, सकललोकप्रसिद्धसंव्यवहारनियमोच्छेदप्रसङ्ग.' इत्यादि, तदपि; किमित्याह- जिनमतानभिज्ञतासूचकमेव केवलम्, न पुनरिष्टार्थप्रसाधकं वस्त्वनुपपत्तिरिष्टोऽर्थ इति न तत्प्रसाधकम् । कथमित्याह- न हीत्यादि न यस्माद् मधुरक-लड्डुकादिविशेषानर्थान्तरमाभिन्नम्, सर्वथैकस्वभावमेकमनवयवं सामान्यमित्यभिदधति जैना भणन्त्यार्हताः । अतः किमुच्यतेऽनभ्युपगतोपालम्भप्रायम्, यदुत- 'न विष विषमेव, मोदकाद्यभिन्नसामान्याव्यतिरेकात्' इत्यादि ?। किं तर्हि ? । समानपरिणामः सामान्यमित्यभिदधति जैना इति । स च समानपरिणाम'; किमित्याह- भेदाविनाभूतत्वात् कारणात्, न य एव विषादभिन्न' स एव मोदकादिभ्योऽपि । कथं नेत्याह- सर्वथा तदेकत्वे समानपरिणामैकत्वे, समानत्वायोगात् । न ह्येक समानमिति भावना ॥

स्यादेतत् समानपरिणामस्यापि प्रतिविशेषमन्यत्वादसमानपरिणामवत् तद्भावानुपपत्तिरिति । एतदप्ययुक्तम्, सत्यप्यन्यत्वे समानासमानपरिणामयोर्भिन्नस्वभावत्वात्; तथाहि-समानधिषणा-ध्वनिनिबन्धनस्वभावः समानपरिणामः, तथा विशिष्टबुद्ध्यभिधानजननस्वभावस्त्वितर इति । यथोक्तसंवेदनाभिधानसंवेद्याभिधेया एव च विषादय इति प्रतीतमेतत्; अन्यथा यथोक्तसंवेदनाद्यभावप्रसङ्गात् । अतो यद्यपि द्वयमप्युभयरूपम्, तथापि विषार्थी विष एव प्रवर्तते, तद्विशेषपरिणामस्यैव तत्समानपरिणामाविनाभूतत्वात्; न तु मोदके, तत्समानपरि-

**णामाविनाभावाभावात् तद्विशेषपरिणामस्येति । अतः प्रयासमात्रफला प्रवृत्तिनियमोच्छेदचोदनेति ॥**

**स्यादेतदित्यादि** स्यादेतदथैवं मन्यसे, समानपरिणामस्यापि मृदाद्यात्मकस्य, प्रतिविशेषं विशेषं विशेषं प्रति घट-शरावादिलक्षणम्, अन्यत्वात् कारणात्, असमानपरिणामवदिति निदर्शनम्, तद्भावानुपपत्ति समानपरिणामभावानुपपत्तिरिति । एतदाशङ्क्याह– **एतदप्ययुक्तम्** । कथमित्याह– **सत्यप्यन्यत्वे** समानपरिणामस्य प्रतिविशेषम्, समाना-ऽसमानपरिणामयोरुक्तलक्षणयो , भिन्नस्वभावत्वात् । भिन्नस्वभावत्वमेवाह– **तथाहीत्यादिना** । तथाहीत्युपप्रदर्शने । समानधिषणा-ध्वनिनिबन्धनस्वभावस्तुल्यबुद्धि-शब्दहेतुस्वभाव:, समानपरिणाम', यत' खलु घट-शरावादिषु 'मृद् मृद्' इत्यविशेषेण भवतो धिषणा-ध्वनी, तथा विशिष्टबुद्ध्यऽभिधानजननस्वभावस्त्वितरोऽसमानपरिणाम:, यत' खलु घटादिष्वेव 'घट' शरावम्' इत्यादिविशेषेण भवतो बुद्ध्य-ऽभिधाने इति । एवमधिकृतोदाहरणापेक्षया भावार्थमभिधाय पूर्वपक्षोपन्यस्तभेदापेक्षया प्रक्रान्तनिगमनायाह– **यथोक्तसंवेदनेत्यादि** यथोक्ते च ते संवेदना-ऽभिधाने च तयो. संवेद्याभिधेया इति विग्रह', एवंभूता एव च विषादय., तथाहि–'सत् सत्' इति विषादय: संवेद्यन्ते, अभिधीयन्ते च, तथा 'विषमोदक:' इत्येवं चेति प्रतीतमेतत् । अन्यथा यथोक्तसवेदनाभिधानसंवेद्याभिधेयत्वाभावे, यथोक्तसंवेदनाद्यभावप्रसङ्गात्, आदिशब्दाद् यथोक्ताभिधानग्रह' । अतो यद्यपि द्वयमपि विष मोदकश्चेति, उभयरूपं सामान्यविशेषरूपम्, तथापि विषार्थी प्रमाता विष एव प्रवर्तते । कुत इत्याह– **तद्विशेषपरिणामस्यैव** विषविशेषपरिणामस्यैव, तत्समानपरिणामाविनाभूतत्वाद् विषसमानपरिणामाविनाभूतत्वात्, न तु मोदके न पुनर्मोदके । कुत इत्याह– **तत्समानपरिणामाविनाभावाभावात्** मोदकसमानपरिणामाविनाभावाभावात्, तद्विशेषपरिणामस्येति विषविशेषपरिणामस्येति । अत उक्तन्यायात्, प्रयासमात्रफला प्रवृत्तिनियमोच्छेदचोदना पूर्वपक्ष-

संबन्धिनीति ॥

एतेन 'विषे भक्षिते मोदकोऽपि भक्षितः स्यात्' इत्याद्य-पि प्रतिक्षिप्तमवगन्तव्यम्, तुल्ययोग-क्षेमत्वादिति । यच्चा-परेणाप्युक्तम्- 'सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः' इत्यादि । तदपि कूटनटनृत्तमिवाविभावितानुष्ठानं न विदुषां मनोहरमि-त्यपकर्णयितव्यम्, वस्तुनः प्रदत्तोत्तरत्वात्, सामान्यविशेष-रूपस्य वस्तुनः सम्यग्व्यवस्थापितत्वात्, अन्यत्र च प्रपञ्चेन निराकृतत्वात्; तथा चोक्तम्—

"समानेतरबुद्धिश्च प्रतिवस्तूपजायते ।
सन्नुष्ट्रः सद्दधीत्यादिरूपा तन्निश्चयात्मिका ॥ १ ॥
नौष्ट्र्यादि सत्त्वभिन्नं चेत्, ननु तत् केन चेष्यते ।
अभेदेन विगानं चेत्, धियां तत् किंकृतं ननु ? ॥ २ ॥
भेदे तु तदसत्त्वं चेत्, कः किमाहात्र वस्तुनि ? ।
कथं तद्भाव इष्टश्चेत्, भेदा-ऽभेदविकल्पतः ॥ ३ ॥
अन्योऽन्यव्याप्तितश्चायं सत्त्वौ-ष्ट्रत्वादिधर्मयोः ।
सिद्ध एकान्तभेदादित्यागाज्जात्यन्तरात्मकः ॥ ४ ॥
न सत्त्वं किञ्चिदौष्ट्र्यादिधर्मान्तरविवर्जितम् ।
तद् वा सत्त्वविनिर्मुक्तं केवलं गम्यते क्वचित् ॥ ५ ॥
ततोऽसत् तत् तथान्यायादेकं चोभयसिद्धितः ।
अन्यत्रातो विरोधस्तदभावापत्तिलक्षणः ॥ ६ ॥
एवं चोभयरूपत्वे तद्विशेषनिराकृतिः ।
असिद्धा नान्यतोऽभिन्नं यदन्यत्रापि वर्तते ॥ ७ ॥
प्रवृत्तिनियमोऽप्येवं दधि खादेति युज्यते ।
चोदितस्येह दध्न्येव यद्विशेषेण चोदना ॥ ८ ॥
अतोऽस्त्यतिशयस्तत्र येन भेदेन वर्तते ।
स दध्येवेत्यदो नेति सद्द्रव्यत्वानुवेधतः ॥ ९ ॥
ततः सोऽस्ति न चान्यत्र न चाप्यनुभयं परम् ।

एवं तत्त्वव्यवस्थायामवद्यं नास्ति किञ्चन ॥ १० ॥
सर्वथा क्षणिकत्वे च प्रतीत्योत्पादवादिनः ।
सर्वस्य सर्वकार्यत्वप्राप्त्याऽभेदो भवेदपि ॥ ११ ॥
क्षीरोष्ट्रानन्तरं भूतेर्न्यायाद् दध्यु-ष्ट्रयोर्यतः ।
द्वयकार्यत्वयोगेन नियमात् तुल्यरूपता ॥ १२ ॥
न चेत् तत्तत्स्वभावत्वाद् न तत् ताभ्यां पृथग् मतम् ।
तच्चाविशिष्टं सर्वेषामसतामिति भाव्यताम् ॥ १३ ॥
विशिष्टतत्स्वभावत्वकल्पना च न युज्यते ।
विशिष्टोपाध्यभावेन भावे चास्यान्वयो ध्रुवः ॥ १४ ॥
अभिन्नदेशरूपादिभावेऽप्येषोऽनिवारितः ।
न चैकान्तिक एवायं धूमादावन्यथेक्षणात् ॥ १५ ॥
एवं सन्न्यायतः सिद्धे द्वितयेऽप्युभयोद्भवे ।
चोदनेऽन्यतरस्येह प्रवृत्तौ नियमः कुतः ? ॥ १६ ॥
उभयोस्तुल्यरूपत्वाद् निरंशत्वाच्च सर्वथा ।
विशेषासंभवाद् ध्वान्तमवधूय विचिन्त्यताम् ॥ १७ ॥
एवं सर्वत्र संयोज्यः प्रवृत्त्यानियमो बुधैः ।
प्रक्रान्तार्थानुसारेण लेशतस्तु निदर्शितः ॥१८॥" इत्यादि ॥

**एतेनेत्यादि** एतेनानन्तरोदितेन ग्रन्थेन, 'विषे भक्षिते मोदकोऽपि भक्षित' स्यात्' इत्याद्यपि पूर्वपक्षोक्तं प्रतिक्षिप्तमवगन्तव्यम्, तुल्ययोग क्षेमत्वादिति । यच्चापरेणाप्युक्तम्- 'सर्वस्योभयरूपत्वे तद्विशेषनिराकृते' इत्यादि । तदपि कुटनटनृत्तमिवेति निदर्शनम्, अविभावितानुष्ठान दर्शनभावार्थपरिज्ञानशून्यत्वेन, न विदुषां मनोहरमिति कृत्वा, अपकर्णयितव्य न श्रोतव्यम् । कुत इत्याह- **वस्तुतः प्रदत्तोत्तरत्वात्** । तथा, सामान्यविशेषरूपस्य वस्तुन सम्यग्व्यवस्थापितत्वात्, अन्यत्र स्याद्वादकुचोद्यपरिहारादौ प्रपञ्चेन निराकृतत्वादपरस्योक्तस्य । **तथा चोक्तमिति** ज्ञापकमाह- **समानेतरबुद्धिश्च** समान-विशेषबुद्धिश्च, प्रतिवस्तु वस्तु वस्तु प्रति प्रतिवस्तु, उप-

जायते । किंविशिष्टेत्याह- सन्नुष्ट्रः सद्धीत्यादिरूपा तन्निश्चयात्मिका उष्ट्रादिनिश्चयात्मिका ॥ १ ॥ नौष्ट्र्यादि सत्त्वभिन्नं चेत्, औष्ट्र्यमुष्ट्रत्वम्, आदिशब्दाद् द्रव्यत्वादिग्रह, सत्त्वभिन्नं चेत्, ततश्च सन्मात्रमेवैतदित्यभिप्राय । एतदाशङ्क्याह- ननु तत् केन चेष्यते नौष्ट्र्यादि सत्त्वभिन्नमिति ? । अभेदेन विगानं चेदौष्ट्र्यादि-सत्त्वयो. सन्मात्रमेवैतदेवमिति भावः । एतदाशङ्क्याह- धियां बुद्धीनाम्, तद् विगानम्, किंकृतं ननु ?, अस्ति चैतदासामुष्ट्र-द्रव्य-सद्बुद्धीनां मिथो वैलक्षण्येन ॥ २ ॥ भेद इत्यादि भेदे पुनरौष्ट्र्यादि-सत्त्वयो, तदसत्त्वं चेदौष्ट्र्याद्यसत्त्वं सत्त्वादन्यत्वेन । एतदाशङ्क्याह- कः किमाहात्र वस्तुनि ? भेदे सति तदसत्त्वमेव भवतीत्यर्थः । कथ तद्भाव औष्ट्र्यादिसत्तालक्षण:, इष्टश्चेत् । एतदाशङ्क्याह- भेदाऽभेदविकल्पतः भेदाऽभेदात्मको विकल्पः, विकल्पो भेदस्ततः, सत्त्वात् कथञ्चिद् भेदेनेति योऽर्थः ॥ ३ ॥ अन्योन्यव्याप्तितश्च कारणात्, अय भेदा-ऽभेदविकल्प. सत्त्वौष्ट्र्यादिधर्मयोः, सिद्धः प्रतिष्ठित, एकान्तभेदादित्यागान् सर्वथा भेदा-ऽभेदत्यागात्, जात्यन्तरात्मक इति । एतद्भावनायैवाह- न सत्त्वमित्यादि न सत्त्व किञ्चिदौष्ट्र्यादिधर्मान्तरविवर्जितं, तदौष्ट्र्यादि वा सत्त्वविनिर्मुक्तं केवल गम्यते क्वचित् ॥५॥ यदि नामैवं तत. किमित्याह- ततोऽसत् तत् सत्त्वादि, तस्येतरेतरभेदेन, न्यायाद् न्यायेन केवलानवगमात, एकं चासत्, तदुभयसिद्धितः सत्त्वौ-ष्ट्र्याद्युभयोपलब्धेः, अन्यत्र- एकान्तभेदादौ, अतो विरोधस्तदभावापत्तिलक्षणः-तयोः सत्त्वौ-ष्ट्रत्वाद्ययोरभावापत्तिः सैव लक्षणं यस्य स तथा ॥६॥ एवं चेत्यादि एवं चोक्तनीत्या, उभयरूपत्वे सति, उष्ट्रादे, किमित्याह- तद्विशेषनिराकृतिः उष्ट्रत्वादिविशेषनिराकृति, असिद्धा । कथमित्याह- नान्यतो दध्न, अभिन्न सत्त्वम्, यद् यस्मात्, अन्यत्रापि- उष्ट्रादौ, वर्तते, किं तर्हि ?, आत्मीयमेव ॥७॥ ततश्च प्रवृत्तिनियमोऽप्येवं 'दधि खाद' इति- एवम्, युज्यते चोदितस्येह दध्न्येव । कुत इत्याशङ्क्याह- यद्विशेषेण चोदना 'दधि खाद'

इत्येवम्, न पुन' 'उष्ट्रं धावति' ॥८॥ **अत इत्यादि** । अतोऽतिशयो विशेषपरिणाम, तत्र दध्नि, येन कारणेन, भेदेन प्रवर्तते तथा चोदितः पुरुषः । न चैवमपि परेष्टसिद्धिरित्याह– **स दध्येवेत्यदो न** एतदेकान्तेन । कुत इत्याह– **सद्द्रव्यत्वानुवेधतः** कारणात्, केवलस्य दधिपर्यायस्याभावादित्यर्थ ॥ ९ ॥ **तत इत्यादि** तत सोऽस्त्यातिशयो दध्नि, न चान्यत्रोष्ट्रेऽसौ, तन्नियतत्वात् । न चाप्यनुभय पर तत्त्वम्, उक्तवत् समाना-ऽसमानोभयपरिणामरूपत्वेन । एवं तत्त्वव्यवस्थायां सत्याम्, अवद्य पाप, नास्ति किञ्चन ॥ १० ॥ परपक्षे त्वय दोष एवेत्याह– **सर्वथेत्यादि** सर्वथा क्षणिकत्वे च निरन्वयक्षणिक इत्यर्थ'; प्रतीत्योत्पादवादिन' परस्य, सर्वस्य दध्यादेः, 'वस्तुन' इति प्रक्रम, सर्वकार्यत्वप्राप्त्योष्ट्रादिकार्यत्वप्राप्त्या हेतुभूतया, अभेदो दूषणमेतत्, भवेदपि ॥ ११ ॥ एतदेवाह– **क्षीरोष्ट्रानन्तरं भूतेः** उत्पत्ते, न्यायाज्जगति सदा तद्भावेन दध्यु-ष्ट्र्योः, यतो द्वयोरपीह प्रक्रमे, द्वयकार्यत्वयोगेन हेतुना, नियमात् तुल्यरूपता, परनीत्या द्वयोरपि तद्द्वयादुत्पत्तेरित्यर्थ. ॥१२॥ **न चेदित्यादि** न चेत् तुल्यरूपता, तत्तत्स्वभावत्वात्– तयोर्दध्युष्ट्रजननस्वभावत्वात् । एतदाशङ्क्याह– **न तत्** तत्स्वभावत्वम्, ताभ्यां दध्युष्ट्राभ्या, पृथग् मतमर्थान्तरभूतमिष्टम् । किं तर्हि ? । दध्युष्ट्रावेव द्वावपि तत्स्वभावत्वम् । तच्च तत्स्वभावत्व च तत्स्वरूपमेव, अविशिष्टं तुल्यं सर्वेषामसतां खरविषाणादीनाम्, इति भाव्यतामेतत् । ततश्च तयोर्दध्युष्ट्रजननस्वभावत्वादित्येतदेवासत् किन्तु तयोरसज्जननस्वभावत्वादिति न्याय्यमिति ॥ १३ ॥ तथा चाह– **विशिष्टेत्यादि** विशिष्टतत्स्वभावत्वकल्पना च दध्युष्ट्रजननस्वभावत्वकल्पना च, न युज्यते । केन हेतुनेत्याह– **विशिष्टोपाध्यभावेन** तदा सर्वथा दध्याद्यभावेनेत्यर्थः, भावे चास्य विशिष्टस्योपाधे', किमित्याह– **अन्वयो ध्रुवः** भाविकार्यार्थाशून्यतया, तस्यैव तथोपाधित्वयोगादिति ॥ १४ ॥ **अभिन्नेत्यादि** अभिन्नदेश-रूपादिभावेऽपि दध्यादेः, एषोऽन्वयः, अनिवारितः परस्य । न चैकान्तिक एवायमभिन्नदेश-

रूपादिभाव । कुत इत्याह धूमादावन्यथेक्षणाद् भिन्नदेशरूपादिभावेक्षणात् ॥ १५ ॥ **एवमित्यादि** एव सन्न्यायत सिद्धे सति, उभयेऽपि दध्युष्ट्रोभये, उभयोद्भवे दध्युष्ट्रोभयोद्भवे, उभयमुभयजननस्वभावमिति तुल्यात् स्वभावद्वयादुपजायमानमुभयमप्येतत् तुल्यमेव भवतीति, एवं चोदनेऽन्यतरस्येह 'दधि खाद', प्रवृत्तौ नियमः कुत ?, उभयोस्तदुभयस्वभावजन्यत्वेन तुल्यत्वादिति ॥१६॥ अत एवाह– **उभयोरित्यादि** उभयोर्दध्युष्ट्र्योः, तुल्यरूपत्वात् तदुभयजनकत्वेन, निरंशत्वाच्च सर्वथैकस्वभावत्वेन, एव विशेषासभवात्, कार्यदध्युष्ट्र्योरिति सामर्थ्यम्, ध्वान्तमवधूय विचिन्त्यतां 'प्रवृत्तिनियम. कुतः ?' इत्येतत् ॥१७॥ **एवमित्यादि** एवमुक्तनीत्या, सर्वत्र विषमोदकादौ, संयोज्यः प्रवृत्त्यनियमो बुधैः पण्डितै प्रक्रान्तार्थानुसारेण । दध्युष्ट्र्यो. परेणोपन्यस्तत्वाल्लेशतस्तु निदर्शित. प्रवृत्त्यनियम ॥ १८ ॥ इत्यादि ॥

यच्चोक्तम्– 'सर्ववस्तुशबलवादिनः क्वचिदन्यासंसृष्टाकारबुद्ध्यसिद्धेः, तथावाचकाभावात् संहारवादानुपपत्तिः, तत्सिद्धौ वा तत एव तत्स्वभावभेदात् तदेकरूपतैव' इति। एतदप्ययुक्तम्, सर्ववस्तुशबलभावेऽपि तथाक्षयोपशमवत्प्रमातुर्गुणप्रधानभावेन क्वचिदन्यासंसृष्टाकाराया बुद्धेः सिद्धेः, सन्निकृष्ट-विप्रकृष्टयोः प्रमात्रोरुष्ट्र एव सदुष्ट्रादिबुद्धिभेददर्शनात् । विप्रकृष्टो हि तत्र प्रमाता तथाप्रतिपत्तिवीर्यतोऽप्रधानगुणभूतमपि भावेन गुणभूतोष्ट्रत्वादिविशेषं पटुप्रतीत्यपेक्षापादितप्रधानभावं सन्मात्रमवैति, यथा विशिष्टवस्त्रादौ रक्तादि; सन्निकृष्टस्त्वन्यथा प्रतिपत्तिबलेनोक्तरूपमपि तत्त्वतस्तथाग्रहणगुणोपनतमुख्यभावमुपसर्जनीकृतसत्तासमानरूपमुष्ट्रत्वादि, रक्तादाविव विशिष्टं वस्त्रादीति । तथाक्षयोपशमवत्त्वं च प्रमातुः प्रभास्वरस्य प्रकृत्या बोधह्रासवृद्ध्युपलब्धेः, आगन्तुककर्ममलभावेन द्रव्याद्यवाप्तितोऽविरुद्धमेव। न चैतद् बुद्धिद्वयमपि न तन्निमित्तम्, तद्भावभावित्वा-

**विशेषात्; एवमप्येकस्या अन्यथाकल्पनेऽतिप्रसङ्ग इति। तथा-वाचकस्यापि भावात्, कथञ्चित्प्रवृत्तिनिमित्तभेदात्, तथासंहारवादोपपत्तिः। शेषं चानभ्युपगमादेव न नः क्षतिमावहति, केवलग्रहणपुरस्सरसंहारवादासिद्धेः, नरसिंह-मेचकवद् वस्तुनो जात्यन्तरात्मकत्वाभ्युपगमात्। एकस्वभावत्वे तु कार्यद्वयायोगेन धी-ध्वन्यभाव एव, हेत्वभेदे फलभेदासिद्धेः॥**

, यच्चोक्त मूलपूर्वपक्षे, 'सर्ववस्तुशबलवादिन' इत्यादि, यावत् 'तत्सिद्धौ वा तत एव तत्स्वभावभेदात् तदेकरूपतैव' इति, एतत् प्राग् व्याख्यातमेवेति न व्याख्यायते । अत्र दूषणमभिधातुमाह— **एतदप्ययुक्तम्** । कथमित्याह— **सर्ववस्तुशबलभावेऽपि** सति, तथा-क्षयोपशमवत्प्रमातुश्चित्रक्षयोपशमवत इत्यर्थ, गुणप्रधानभावेन वक्ष्यमाणोदाहरणगतेन, क्वचिद् वस्तुनि, अन्यासस्पृष्टाकाराया इव बुद्धेः सिद्धेरुपलब्धे । इहैव भावार्थमाह— **संनिकृष्ट-विप्रकृष्टयोः** प्रमात्रो, उष्ट्र एव वस्तुनि, सदुष्ट्रादिबुद्धिभेददर्शनात् । कथमेतदेवमित्याह— **विप्रकृष्टो हि तत्र** उष्ट्रे, प्रमाता तथाप्रतिपत्तिवीर्यत सामान्यप्रतिपत्तिसामर्थ्येन, अप्रधानगुणभूतमपि भावेन परमार्थेन, 'सन्मात्रमवैति' इति योग । किंविशिष्टमित्याह— **गुणभूतोष्ट्रत्वादिविशेषं** गुणभूतोऽप्रधानभूत उष्ट्रत्वादिविशेषो यस्मिस्तत् तथा । एतदेव विशिष्यते— पटुप्रतीत्यपेक्षया निश्चयप्रतीत्यपेक्षयाऽऽपादित प्रधानभावो यस्य तत्तथा । एवभूत सन्मात्रमवैति । निदर्शनमाह— **यथा विशिष्टवस्त्रादौ** पटादिरूपे, रक्तादि 'रक्त किमपि' इति । सनिकृष्टः पुन प्रमाता, अन्यथा प्रतिपत्तिबलेन तथाप्रतिपत्तिवीर्यापेक्षया विशेषप्रतिपत्तिसामर्थ्येनेत्यर्थ, उक्तरूपमपि तत्त्वतोऽप्रधानगुणभूतमपि, परमार्थेन 'उष्ट्रत्वादि' इति योग, 'अवैति' इति क्रियानुवृत्ति । एतदेव विशेष्यते— तथाग्रहणगुणेन विशेषग्रहणोपकारेणोपनतो मुख्यभावो यस्य तत् तथा । एतदेव विशेष्यते— उपसर्जनीकृतं सत्तासमानरूप यस्मिस्तत् तथोष्ट्रत्वाद्यवैति । रक्तादाविव विशिष्टं

वस्त्रादीति निदर्शनम्, 'पटोऽयम्' इति । तथाक्षयोपशमवत्त्वं च चित्रक्षयोपशमवत्त्वं च, प्रमातु', 'अविरुद्धमेवेति योग । प्रभास्वरस्य प्रकृत्या स्वभावेन बोधह्रास-वृद्ध्युपलब्धे. कारणात्, किमित्याह- आगन्तुककर्ममलभावेन हेतुना, द्रव्याद्यन्यापेक्षितो द्रव्य-क्षेत्र-काल-भव-भावावाप्ते, अविरुद्धमेव 'तथाक्षयोपशमवत्त्वम्' इति क्रिया निदर्शितैव । न चैतदित्यादि न चैतद् बुद्धिद्वयमपि सदुष्ट्रादिप्रतिभासम्, न तन्निमित्त नोष्ट्रनिमित्तम्, किं तर्हि ? उष्ट्रनिमित्तमेव । कुत इत्याह- तद्भावभावित्वाविशेषात् तथाहि- यथा सद्बुद्धिरुष्ट्रभावभाविनी, एवमुष्ट्रबुद्धिरपि । एवमप्येकस्य; प्रक्रमात् सद्बुद्धे, अन्यथा कल्पने- अतन्निमित्तत्वकल्पने, अतिप्रसङ्ग., उष्ट्रबुद्धेरप्यतन्निमित्तत्वप्रसङ्गात् । नाविकल्पबुद्धेरभेदे विकल्पभेदो न्याय्य इति । ततश्च स्थितमेतत्- 'एवं सर्ववस्तुशबलभावेऽपि तथाक्षयोपशमवत्प्रमातुर्गुणप्रधानभावेन क्वचिदन्यासंसृष्टाकाराया इव बुद्धे. सिद्धे.' इति । तथावाचकस्यापि भावात् तथा तेन प्रकारेण, क्वचिदन्यासंसृष्टाकारस्येव वाचकस्यापि शब्दस्यापि भावात् । भावश्च कथञ्चित् प्रवृत्तिनिमित्तभेदाद् गुणप्रधानभावेन, 'विप्रकृष्टो हि प्रमाता तत्र तथाप्रतिपत्तिवीर्यतोऽप्रधानगुणभूतमपि भावेन गुणभूतोष्ट्रत्वादिविशेष पटुप्रतीत्यपेक्षापादितप्रधानभावं सन्मात्रमवैति' इत्युक्तमित्यादि । ततश्चास्ति कथञ्चित् प्रवृत्तिनिमित्तभेदो वाचकस्येति भावनीयम् । तथासंहारवादोपपत्ति– तथा प्रधानगुणभावेन, सहारवादोपपत्ति' 'सन्नुष्ट्र:' 'सद् दधि' इति । शेषमित्यादि शेष तु पूर्वपक्षोक्त 'तत्सिद्धौ वा तत एव तत्स्वभावभेदात् तदेकरूपतैव' इत्यादि, अनभ्युपगमादेव कारणात्, न नः क्षतिमावहति– नास्माकं पीडां प्रापयति । एतदेवाह— केवलग्रहणपुरस्सरसंहारवादासिद्धेः असिद्धिश्च नरसिंह-मेचकवदिति निदर्शनम्, वस्तुनो दध्यादे:, जात्यन्तरत्वाभ्युपगमात् । परस्य त्वयं दोष एवेति निदर्शनायाह- एकस्वभावत्वे तु वस्तुनोऽभ्युपगम्यमाने, कार्य-

द्वयायोगेन हेतुना, किमित्याह– धी-ध्वन्यभाव एव द्वयोर्धी-ध्वन्योरभाव एव । कुत इत्याह– हेत्वभेदे फलभेदासिद्धेः कारणात् । ततश्चाज्ञानानभिधानेन सहारवादादिचिन्तानुपपत्तिरिति भावनीयमेतत् ॥

एतेन 'सर्वात्मकत्वे च भावानाम्' इत्याद्यपि प्रत्युक्तम्, तुल्ययोग-क्षेमत्वात्, निरूपितवस्तुन एव तस्य ज्ञापकत्वेनाभिधानात् । एवं चाक्रमेणाप्यनेकधर्मके वस्तुनि पुरःस्थितेऽप्यसंपूर्णज्ञानदोषः क्रमज्ञानदोषश्च प्रत्युक्तः, तथाविधावरणदोषतस्तदुपपत्तेः । न ह्यर्थसंनिधिरित्येवायोगिनां सर्वाकारमेव तदवगमः, तस्यानेकधर्मत्वात्, अवगमस्य च कारणान्तरापेक्षत्वात् । अर्थो हि यथाधर्माभ्यासमवगमं जनयति, यथाङ्गनार्थः सनिधानाविशेषेऽपि परिव्राट्प्रभृतीनां कुणपाद्यवगमम्ः प्रत्यासत्तितो वा, यथा जनकाध्यापकः सुतस्य जनकावगमम्; प्रकरणापेक्षो वा, यथा वैद्यादिस्तत्कथायां प्रस्तुतायां तद्दर्शिनां तत्रानेकधर्मसंभवेऽपि वैद्याद्यवगममिति । न चैकस्यानेकत्वविरोधेन तत्रानेकधर्मत्वासंभवः, एकत्वानभ्युपगमात्, एकानेके च विरोधासिद्धेः, इतरेतरानुवेधात्, जात्यन्तरात्मकत्वोपपत्तेः, तथासंवेदनादित्युक्तप्रायम् ॥

एतेनेत्यादि । एतेनानन्तरोदितेन वस्तुना, 'सर्वात्मकत्वे च भावानाम्' इत्याद्यपि पूर्वपक्षोक्तम्, प्रत्युक्तम् । कुत इत्याह– तुल्ययोग-क्षेमत्वात् अनन्तरोदितेन । अत एवाह– निरूपितवस्तुन एव तस्य 'सर्वात्मकत्वे च भावानाम्' इत्यादेः, ज्ञापकत्वेनाभिधानात् पूर्वपक्षे । एवं चेत्यादि एवं च कृत्वा, अक्रमेणापि युगपदपि, अनेकधर्मके वस्तुनि पुरःस्थितेऽपि सति, असपूर्णज्ञानदोषः, सपूर्णे तदयोगात्, क्रमज्ञानदोषश्चाक्रमे तदयोगादेव, प्रत्युक्तः । कथमित्याह– तथाविधेत्यादि । तथाविधावरणदोषतः– असपूर्ण-क्रमज्ञानहेतुचित्रक्षयोपशमनिबन्धनावरणदोषेण, तद्भावोपपत्तेः– असपूर्ण-क्रमज्ञान-

भावोपपत्ते । एतत्समर्थनायाह- **न हीत्यादिना** । न ह्यर्थसंनिधिरित्येव कृत्वा, अयोगिनां प्रमातृणाम्, सर्वाकारमेव धर्मकालकात्स्न्र्येन, तदवगमाऽर्थावगम । कुत इत्याह- **तस्य** अर्थस्य, अनेकधर्मत्वात् । अवगमस्य च प्रक्रमात् तत्सबन्धिन., कारणान्तरापेक्षत्वात्, तत्तद्धर्माभ्यासादि कारणान्तरमिति । अत एवाह- **अर्थो** यस्माद् यथाधर्माभ्यासमवगमं जनयति, यस्य यथा धर्माभ्यासो यथाधमाभ्यासम् । निदर्शनमाह- **यथाङ्गनार्थः** स्त्र्यर्थ , सनिधानाविशेषेऽपि सति, परिव्राट्प्रभृतीना परिव्राट्-कामुक-शुनामित्यर्थ , कुणपाद्यवगम कुणप-कामिनी-भक्ष्यावगमम् । प्रत्यासत्तितो वाऽर्थो ह्यवगम जनयति । निदर्शनमाह- **यथा जनकाध्यापकः सुतस्य जनकावगमं** नाध्याप्यान्तरस्येवोपाध्यायावगमम्, यतस्तमायान्त दृष्ट्वैक एवमाह- 'तात आगच्छति' अपर पुन 'उपाध्याय आगच्छति' इति । प्रकरणापेक्षो वा, यथा **वैद्यादि** , आदिशब्दाद् दातृत्वादिधर्मग्रह , तत्कथाया प्रस्तुतायां वैद्यादिकथायामित्यर्थ , तद्दर्शिना वैद्यादिदर्शिनां प्रमातृणाम्, तत्र वैद्यादौ, अनेकधर्मसंभवेऽपि दातृत्वादिधर्मापेक्षया, वैद्याद्यवगमामिति, तद्यथा- 'वैद्य आगच्छति' 'दाताऽऽगच्छति' इति । न चैकस्य वस्तुन , अनेकत्वविरोधेन तत्र वस्तुनि, अनेकधर्मत्वासंभव । कुत इत्याह— **एकत्वानभ्युपगमात्** । एकानेक तदभ्युपगम्यत इत्याह- **एकानेके च** जात्यन्तरात्मके वस्तुनि, विरोधासिद्धेरनेकत्वस्य । असिद्धिश्च, इतरेतरानुवेधादेकत्वानेकत्वयोरिति । अधिकृतानुवेधश्च, जात्यन्तरात्मकत्वोपपत्ते', एतच्च तथासवेदनान्- जात्यन्तरात्मकतयैकत्वानेकत्वसवेदनात्, इत्युक्तप्राय प्रायेणोक्तम् ॥

**न च सर्वथा सदृशानुभवनिमित्ताः कुणपादिविकल्पा इति । अतत्कारणातत्कार्यव्यावृत्ताना सदृशत्वाभ्युपगमात्, तदनुभवानां चातत्कार्यव्यावृत्त्यसिद्धेः, भिन्नजातीयविकल्पनिबन्धनत्वात् कुणप-कामिन्यादिविकल्पानां भिन्नजातीयत्वाभ्यु-**

पगमात्, तदनभ्युपगमेऽतिप्रसङ्गः, रूप-रसादिविकल्पानामप्य-भिन्नजातीयत्वापत्तेः, तथा च तदनुभवानां सदृशता; इति रूप-र-सादिभेदाभावः । भिन्नेन्द्रियानुभवनिबन्धनत्वात् तद्विकल्पाना-मयमदोष इति चेत् । एवमपि सिते-तरादिभेदाभावप्रसङ्गः, तद्विकल्पानां भिन्नेन्द्रियानुभवनिबन्धनत्वासिद्धेः, सर्वेषामेव तेषां चाक्षुषत्वादिति ॥

न चेत्यादि न च सर्वथा सदृशानुभवनिमित्ता स्वलक्षणा-नुभवमधिकृत्य, कुणपादिविकल्पा इति । कुत इत्याह– अतत्कारणा-तत्कार्येभ्यो व्यावृत्ता इति विग्रहस्तेषा, सदृशत्वाभ्युपगमादनुभवानां घटानुभवानामिव, तदनुभवाना च कुणपादिविकल्पानुभवानां च, अतत्कार्यव्यावृत्त्यसिद्धे. । असिद्धिश्च, भिन्नजातीयविकल्पनिबन्धनत्वात् तदनुभवानाम् । कथमेतदेवमित्याह– कुणप-कामिन्यादिविकल्पानां भिन्नजातीयत्वाभ्युपगमात् । तदनभ्युपगमे कुणपादिविकल्पानां भिन्नजातीयत्वानभ्युपगमे, अतिप्रसङ्ग । कथमित्याह– रूप-रसा-दिविकल्पानामप्यभिन्नजातीयत्वापत्तेः । तत किमित्याह– तथा-चेत्यादि तथा च तदनुभवाना रूप रसाद्यनुभवानाम्, सदृशतेति कृत्वा, किमित्याह– रूप-रसादिभेदाभावः रूपमात्र रसादिमात्रं वा जगत् स्यादित्यर्थ । भिन्नेन्द्रियानुभवनिबन्धनत्वात्– चक्षू रस-नादीन्द्रियानुभवनिबन्धनत्वात्, तद्विकल्पानां रूप रसादिविकल्पा-नाम, अय रूप रसादिभेदाभावलक्षणो दोष, अदोष इति चेत्– भिन्ने-न्द्रियानुभवजत्वेन भिन्नजातीया एव रूप-रसादिविकल्पा, तन्नि-बन्धनाश्चानुभवा, तद्धेतवो रूपादयश्च, इति न रूप-रसादिभेदाभाव इत्यर्थ । एतदाशङ्क्याह– एवमपीत्यादि एवमपि भिन्नेन्द्रियानुभ-वनिबन्धनत्वेन तद्विकल्पानामुक्तदोषादोषत्वेऽपि, सिते तरादिभेदाभाव-प्रसङ्ग शुक्ल-कृष्णादिभेदाभावप्रसङ्ग । कुत इत्याह– तद्विकल्पानां सिते-तरादिविकल्पानाम्, भिन्नेन्द्रियानुभवनिबन्धनत्वासिद्धे. । असि-द्धिश्च, सर्वेषामेव तेषां तद्विकल्पानाम्, चाक्षुषत्वादिति ॥

न च भिन्नविकल्पोपादानवासनासहकारिभावतस्तदनुभवस्यायमदोषः, सर्वथैकस्वभावत्वे तस्यानेकसहकारित्वानुपपत्तेः, तदन्यतमसहकार्येकस्वभावत्वेनान्यत्र तद्भावविरोधादित्युक्तप्रायमेव। ततः कथञ्चिद्भिन्नधर्मविषया एव कुणपाद्यवगमा इति; तथाहि- भाविजीववियोगयोग्यतालक्षण एव स्त्रीशरीरधर्मः कुणपावगमस्य निमित्तम्, तथाविधेच्छाकामादिमज्जीवसंयोगयोग्यतालक्षणस्तु कामिन्यवगमस्य, क्षुद्रजन्तुपरिभोगक्षुदपनोदयोग्यतालक्षण एव तु भक्ष्यावगमस्येति। न च य एव भाविजीववियोगयोग्यतालक्षणः स्त्रीशरीरधर्मः स एव तथाविधेच्छाकामादिमज्जीवसंयोगयोग्यतादिलक्षणः, फलभेदात्, तथाविधवियोग-रमणयोगादीनां तथोपलब्धेः, लोकानुभवसिद्धत्वात्, अन्यथा भेदव्यवस्थाऽयोगादिति। एवं जनकत्वा-ऽध्यापकत्व-वैद्यत्व-दातृत्वादीनामपि कथञ्चिद्भेदोऽवसेयः, फलभेदान्यथानुपपत्तेः, तस्य चाध्यक्षसिद्धत्वात्, जनकत्वस्यैवाध्यापकत्वे तस्यापि तत्त्वात् पित्रादेरपि पुत्रत्वादिप्रसङ्गः, पुत्रस्यापि क्वचिदध्यापकत्वसिद्धेरिति॥

इहैव प्रस्ताव इति लेशतो योगाचारमतमधिकृत्याह- न चेत्यादि न च भिन्नविकल्पोपादानवासनासहकारिभावतः कारणात्, तदनुभवस्य सिताद्यनुभवस्य, अय तद्विकल्पाना भिन्नेन्द्रियानुभवनिबन्धनत्वासिद्ध्या सितेतरादिभेदाभावप्रसङ्गलक्षणो दोष, अदोष। कुत इत्याह- सर्वथैकस्वभावत्वे सति, तस्य तदनुभवस्य, किमित्याह-अनेकसहकारित्वानुपपत्तेः-अनेकेषा भिन्नविकल्पोपादानवासनादीनां सहकारित्वानुपपत्ते। अनुपपत्तिश्च तदन्यतमसहकार्येकस्वभावत्वेन सितादिविकल्पोपादानान्यतमवासनासहकार्येकस्वभात्वेन हेतुना, अन्यत्र वासनान्तरे, तद्भावविरोधात् सहकारिभावविरोधात्, सिताद्यनुभवस्य ह्यनेकसहकारित्वे सत्यान्तरासितादिभावेनाधिकृतदोषो न दोष इति भवति, न चैतदेवम्; इत्युक्तप्रायमेव। तत इत्यादि ततस्तस्मात्,

कथञ्चिद् भिन्नधर्मविषया एव कुणपादिविकल्पा इति स्थितमेतत् । एतदेव विशेषेणाह– **तथाहीत्यादिना** तथाहीति पूर्ववत्, भावी चासौ जीववियोगश्चेति विग्रह , तस्य योग्यता भाविजीववियोगयोग्यता, सैव लक्षण यस्य स तथा, स एवभूत स्त्रीशरीरधर्मः कुणपावगमस्य निमित्तम् । तथा, तथाविधा अतत्त्वप्रवर्तका , तथाविधाश्च त इच्छाकामादयश्चेति समास., आदिशब्दाद् मदनकामग्रह , तेऽस्य विद्यन्त इति तथाविधेच्छाकामादिमान्, एवभूतश्चासौ जीवश्चेति, तेन सयोगयोग्यता, सयोग सभोग , तस्य योग्यता, सैव लक्षण यस्य स तथोक्त । तुशब्दः पुन शब्दार्थ । एवलक्षण पुनः स्त्रीशरीरधर्म. कामिन्यवगमस्य निमित्तमिति । तथा, क्षुद्रजन्तो' श्वशृगालादे. परिभोगेन भक्षणेन, क्षुदपनोदो बुभुक्षापनयन, तस्य योग्यता, सैव लक्षणं यस्य स तथा, एवभूत. पुन स्त्रीशरीरधर्म , भक्ष्यावगमस्येति भक्ष्यावगमनिमित्तम् । **न चेत्यादि** न च य एव भाविजीववियोगयोग्यतालक्षणः स्त्रीशरीरधर्म स एव तथाविधेच्छाकामादिमज्जीवसयोगयोग्यतालक्षण. 'स्त्रीशरीरधर्म'' इति वर्तते, आदिशब्दात् क्षुद्रजन्तुपरिभोगक्षुदपनोदयोग्यतालक्षणधर्मग्रह. । कुतो न चेत्याह– **फलभेदात्** । फलभेदश्च, तथाविधवियोगश्च रमणयोगादयश्चेति समास , तेषां तथोपलब्धेर्भेदेनोपलब्धे. । तत्र तथाविधवियोगो भाविजीववियोग , रमणयोग सयोग , आदिशब्दात् क्षुद्रजन्तुपरिभोगक्षुदपनोदपरिग्रह , एते च भेदेनोपलभ्यन्ते । कथमित्याह–**लोकानुभवसिद्धत्वात्** । इत्थं चैतदङ्गीकर्तव्यमित्याह– **अन्यथा भेदव्यवस्थाऽयोगादिति** । एव जनकत्वा-ऽध्यापकत्व-वैद्यत्व-दातृत्वादीनामपि धर्माणा, कथञ्चिद् भेदोऽवसेय , कथमित्याह– **फलभेदान्यथानुपपत्तेः** । तस्य च फलभेदस्य जन्या-ऽध्याप्यादेः, अध्यक्षसिद्धत्वात् । विपक्षे बाधामाह– जनकत्वस्यैवाध्यापकत्वेऽभ्युपगम्यमाने, तस्यापि– अध्यापकत्वस्यापि, तत्त्वात् जनकत्वात्; किमित्याह– **पित्रादेरपि** आदिशब्दात् पितामहग्रह , पुत्रत्वादिप्रसङ्ग., आदिशब्दात् पौत्रग्रह. । कुत. प्रसङ्ग इत्याह–

पुत्रस्यापि अपिशब्दात् पौत्रस्यापि, कचिदध्यापकत्वासिद्धेरिति "अध्यापयत पुत्रका !" इत्यादिश्रुतिप्रामाण्यादिति ॥

**इतश्चैतदेवम्- दान-हिंसादिविरतिचेतनायाः स्वसंवेद्यत्वेऽप्यभ्युदयादिसाधनशक्त्यवगमानुपपत्तेः । न च तच्छक्तेरप्य विकल्पकेनावगमः, तथानिश्चयाभावात्। अवगमेऽपि फलस्यानन्तर्याभावादतत्फलसाधर्म्याद् विपर्यस्तस्याविनिश्चय इति चेत् । न, अविचारितरमणीयत्वात्, अतत्फलसाधन्या तत्त्वतः साधर्म्यासिद्धेः, तस्याः पारम्पर्येणाप्यतत्साधकत्वात्, इतरस्यास्तु तथासाधकत्वात्, अन्यथा पारम्पर्येणापि ततस्तदसिद्धेः, इत्थंभूतयोरपि तयोः साधर्म्याभ्युपगमेऽपन्यायः। इति सर्वात्मना तद्ग्रहे तथैव निश्चयापत्तिः, तमन्तरेणापि तत्तथाभ्युपगमेऽतिप्रसङ्गात् ॥**

अभ्युच्चयमाह- इतश्चैतदेवम्-'न ह्यर्थसंनिधिरित्येवायोगिना सर्वाकारमेव तदवगम' इत्येतदित्थम् । उपपत्तिमाह-**दान-हिंसादिविरतिचेतनाया** इति दान च हिसादिविरतिश्च दान-हिसादिविरती, तत्प्रधाना चेतना दान-हिसादिविरतिचेतनास्तस्यास्तथाविधधर्मरूपाया इत्यर्थ, स्वसवेद्यत्वेऽपि सति, अभ्युदयादिसाधन चासौ शक्तिश्चेति विग्रह, स्वर्गादिरभ्युदय, आदिशब्दाद् नि श्रेयसग्रह, तस्यावगमानुपपत्ति परिच्छेदानुपपत्तिरभ्युदयादिसाधनशक्त्यवगमानुपपत्तिस्तत. ।**न चेत्यादि** न च तच्छक्तेरप्यभ्युदयादिसाधनशक्तेरपि, अविकल्पकेनावगम । कुत इत्याह- **तथा** अभ्युदयादिसाधनशक्तित्वेन, निश्चयाभावात् । पराभिप्रायमाह- **अवगमेऽपि** तच्छक्तेरविकल्पकेन, फलस्याभ्युदयादे, आनन्तर्याभावादनन्तरभावाभावात्, अतत्फलया शक्त्या साधर्म्यमतत्फलसाधर्म्य तस्मात्, विपर्यस्तस्य प्रमातु, अविनिश्चय इति चेत् तथाभ्युदयादिसाधनशक्तित्वेन । एतदाशङ्क्याह- **न, अविचारितरमणीयत्वात्** । कथमेतदेवमित्याह- **अतत्फलसाधन्या** शक्त्या, तत्त्वतः साधर्म्यासिद्धे. । असिद्धिश्च,

पञ्चवर्षो गजो बालः

बलति बाल ॥ १ ॥

स्यात् पोतो दशवर्षकः ॥ २८५ ॥

पूयते पुनाति वा पोत ॥ १ ॥ २८५ ॥

विक्को विंशतिवर्ष. स्यात्

विङ्क्ेऽवयवान् विक्क. " विचिपुषि " ॥ ( उणा— २२ ) ॥ इति किन् कः, पिक्कोऽपि ॥ १ ॥

कलभस्त्रिंशदब्दकः ।

कल्यते कलभ पुक्लीबलिङ्ग "कॄगॄगॄ-" ॥ ( उणा— ३२९ ) ॥ इत्यभः, कलो भाति, क लभते वा ॥ १ ॥

यूथनाथो यूथपतिः

स्पष्टम् ॥ १ ॥

मत्ते प्रभिन्न-गर्जितौ ॥ २८६ ॥

माद्यति स्म मत्तस्तत्र ॥ १ ॥ प्रभिद्यते स्म गण्डपाल्या प्रभिन्नः ॥ २ ॥ गर्जा संजाताऽस्य गर्जित ॥ ३ ॥ २८६ ॥

मदोत्कटो मदकलः

मदेन दानाम्बुना उद्भिन्नकटो मदोत्कट ॥ १ ॥ मदेन कलो मनोज्ञो मदकलः ॥ २ ॥

समावुद्भ्रान्त-निर्मदौ

उद्भ्रमति स्म उद्भ्रान्त ॥ १ ॥ निर्गतो मदोऽस्य निर्मद ॥ २ ॥

सज्जितः कल्पितः

युद्धाय सज्ज्यते प्रगुणीक्रियते स्म सज्जित ॥ १ ॥ कल्प्यते स्म कल्पित ॥ २ ॥

तिर्यग्घाती परिणतो गजः ॥२८७ ॥

तिर्यग्घातीति तिर्यग् दत्तप्रहार , परितो नमति स्म परिणत ॥ १ ॥ ॥ २८७ ॥

व्यालो दुष्टगजः

विविधमालमनर्थोऽस्माद् व्याल ॥ १ ॥

**गम्भीरवेद्यवमताङ्कुशः ।**

गाम्भीर्येण वेदयति गम्भीरवेदी, यदाहु –

"त्वग्भेदात् शोणितस्रावादामासं व्यथनादपि ।
संज्ञा न लभते यस्तु गजो गम्भीरवेद्यसौ ॥ १ ॥" ॥ १ ॥

अवमतमवगणितमङ्कुशमेनेन अवमताङ्कुश ॥ २ ॥

**राजवाह्यस्तूपवाह्यः**

राज्ञा वाह्यते आरोहणयोग्यत्वाद् राजवाह्य ॥ १ ॥ उप समीपे वाह्यते उपवाह्य । औपवाह्य इत्यन्ये ॥ २ ॥

**सन्नाह्यः समरोचित· ॥ २८८ ॥**

संनह्यते संनाह्यः, सन्नाहे साधुरिति वा ॥ १ ॥ समरोचित सङ्ग्रामयोग्यः ॥ २ ॥ २८८ ॥

**उदग्रदन्नीषादन्तः**

उदग्रौ दीर्घौ दन्तावस्य उदग्रदन् "वाग्रान्त–" ॥ ७ । ३ । १५४ ॥ इति दन्तस्य दतृः ॥ १ ॥ ईषाकारौ दन्तावस्य ईषादन्तः ॥ २ ॥

**बहूनां घटना घटा ।**

बहूना गजाना घटना रचना घट्यते घटा "षितोऽङ्" ॥ ५ ।३। १०७ ॥१॥

**मदो दानं प्रवृत्तिश्च**

माद्यत्यस्माद् मद "व्यधजप–" ॥ ५।३।४७ ॥ इत्यल् , मदयतीति वा ॥ १ ॥ द्यति खण्डयत्यनेन दानम् ॥ २ ॥ प्रवर्ततेऽनया प्रवृत्ति ॥ ३ ॥

**वमथुः करशीकरः ॥ २८९ ॥**

वम्यते वमथु पुसि, "ट्वितोऽथु" ॥ ५।३।८३ ॥ इत्यथु ॥ १ ॥ करस्य शीकरोऽम्बुकण करशीकर ॥ २ ॥ २८९ ॥

**हस्तिनासा करः शुण्डा हस्तः**

हस्तिनो नासा हस्तिनासा ॥ १ ॥ करोति, किरत्यनेन वा कर ॥ २ ॥ शुनत्यनया शुण्डा "कुगुहु–" ॥ ( उणा– १७० ) ॥ इति कित् ड. ॥ ३ ॥ हस्त·, हस्तक्रियाकारित्वात् ॥ ४ ॥

**अग्रं त्वस्य पुष्करम् ।**

अस्य करस्याग्रभाग पुष्यत्यनेन पुष्करम्, पुष्करसदृशं वा ॥ १ ॥

अङ्गुलिः कर्णिका

गजस्याङ्गुलि, किरत्यनया कर्णिका "कुशिक-" ॥ (उणा-४५) ॥ इतीके निपात्यते, कर्णिकेव वा कर्णिका ॥ १ ॥

दन्तौ विषाणौ

हस्तिनो दन्तौ, वेवष्टि आभ्या विषाणौ त्रिलिङ्ग 'कृपिविषि-" ॥ (उणा-१९१) ॥ इत्याणक् ॥ १ ॥

स्कन्ध आसनम् ॥ २९० ॥

हस्तिन. स्कन्ध, आस्यतेऽस्मिन्नासनम् ॥ १ ॥ २९० ॥

कर्णमूलं चूलिका स्यात्

गजस्य कर्णमूल चोद्यते पार्श्वगमनेऽङ्कुशेनास्या चूलिका, भिदादिनिपातनादङ्, तत स्वार्थे क ॥ १ ॥

ईषिका त्वाक्षिकूटकम् ।

ईषा लाङ्गलकीलिकेव ईषिका ॥ १ ॥

अपाङ्गदेशो निर्याणं

निर्यात्यश्रु अनेन निर्याणम् ॥ १ ॥

गण्डस्तु करटः कटः ॥ २९१ ॥

करोति मद करट "दिव्यवि-" ॥ (उणा-१४२) ॥ इत्यट ॥ १ ॥ कटति वर्षति मद कट ॥ २ ॥ २९१ ॥

अवग्रहो ललाटं स्यात्

अवगृह्यतेऽङ्कुशेनावग्रह ॥ १ ॥ २ ॥

आरक्षः कुम्भयोरधः ।

आरक्ष्यते आरक्ष ॥ १ ॥

कुम्भौ तु शिरस' पिण्डौ

कुम्भाकृती मासपिण्डौ कुम्भौ ॥ १ ॥

कुम्भयोरन्तर विदुः ॥ २९२ ॥

वेत्ति संज्ञामस्मादङ्कुशस्थानाद् विदु, यत् पालकाप्य —

"तत्रारक्षाविताने द्वे विदू द्वौ श्रवणे गतौ ।
प्राक् पश्चाच्च तिर्यक् च षड्भेदाङ्कुशवारणा ॥ १ ॥"

"पृका-" ॥ ( उणा- ७२९ ) ॥ इति किदु, पुलिङ्गोऽयम् ॥ १ ॥ २९२ ॥

वातकुम्भस्तु तस्याधः

तस्य विदोरधो भाग वातपूर्ण. कुम्भ इव वातकुम्भ ॥ १ ॥

वाहित्थं तु ततोऽप्यधः ।

ततोऽपि वातकुम्भादधो भाग, वाह्यतेऽनेनाङ्कुशनोदनया वाहित्थ "पथ-यूथ-" ॥ ( उणा- २३१ ) ॥ इति निपात्यते, मदवाहिनि स्थाने तिष्ठतीति वा पृषोदरादित्वात्, वाह्यस्थापभ्रंशोऽस्य वा ॥ १ ॥

वाहित्थाधः प्रतिमानं

वाहित्थस्याधोभागो दन्तमध्यमित्यर्थ· प्रतिमीयते प्रतिक्षिप्यतेऽनेन प्रति-मानं "मिग्मीगोऽखलचलि" ॥ ४ । २ । ८ ॥ इत्यात्वम् ॥ १ ॥

पुच्छमूलं तु पेचक. ॥ २९३ ॥

पुच्छस्य मूल पुच्छमूलम्, पुच्यते घातेन पेचक "कीचक-" ॥ ( उणा-३३ ) ॥ इत्यके निपात्यते ॥ १ ॥ ॥ २९३ ॥

दन्तभागः पुरोभागः

दन्तयोर्भागो दन्तभाग, गजस्याग्रभागः ॥ १ ॥

पक्षभागस्तु पार्श्वकः ।

पक्षयोर्भागः पक्षभाग, गजस्य पार्श्वप्रदेश ॥ १ ॥

पूर्वस्तु जङ्घादिदेशो गात्रं स्यात्

हस्तिन पूर्वं पादजङ्घादिभाग, गच्छत्यनेन गात्र स्त्रीक्लीबलिङ्ग ॥ १ ॥

पश्चिमोऽपरा ॥ २९४ ॥

गजस्य पश्चाद्भाग, अपरभागभवत्वादपरा स्त्रीक्लीबलिङ्ग, जपादित्वाद् वत्वेऽवराऽपि ॥ १ ॥ २९४ ॥

बिन्दुजालं पुनः पद्मं

बिन्दूना जाल बिन्दुजालम्, तारुण्ये हि हस्तिनो देहे रक्ता बिन्दव स्युरिति, पद्ममिव पद्मं रक्तत्वात् ॥ १ ॥

शृङ्खलो निगडोऽन्दुकः ।

## हिञ्जीरश्च पादपाशः

शृणोति बन्धेन शृङ्खल त्रिलिङ्ग "श्रो नोन्तो ह्रस्वश्च" ॥ (उणा-४९८) ॥ इति खल ॥ १ ॥ निगल्यते बध्यतेऽनेनेति निगड । निगलोऽपि ॥ २ ॥ अन्दति बध्नात्यन्दू "कृषिचमि-" ॥ ( उणा- ८२९ ) ॥ इत्यू, स्वार्थे केऽन्दुक "ङ्याादीदूत के" ॥ २।४।१०४ ॥ इति ह्रस्व ॥ ३ ॥ हिनस्ति हिञ्जीर "जम्बीर-" ॥ ( उणा- ४२२ ) ॥ इतीरे निपात्यते । निगडादय पुंक्लीबलिङ्गा. ॥ ४ ॥ हस्तिन. पादस्य पाशो बन्धन पादपाश ॥ ५ ॥

## वारिस्तु गजबन्धभू·

वार्यतेऽनया वारि स्त्रीलिङ्ग "स्वरेभ्य इ" ॥ ( उणा- ६०६ ) ॥ गजाना बन्धनाय ग्रहणाय भूर्गर्ता गजबन्धभू ॥ १ ॥ २९५ ॥

## त्रिपदी गात्रयोर्बन्ध एकस्मिन्नपरेऽपि च ।

त्रय पादा अस्या त्रिपदी गात्रयोरिति द्वयोरग्रजङ्घयो, एकस्मिन्नपरे इति पश्चिमजङ्घाया च गजस्य बन्धनमित्यर्थ ॥ १ ॥

## तोत्रं वेणुकं

तुद्यतेऽनेन तोत्र "नीदाम्ब्-" ॥ ५।२।८८ ॥ इति त्रट् ॥ १ ॥ वेणुमयं वेणुकम् ॥ २ ॥

## आलानं बन्धस्तम्भ·

आलीयते बध्यतेऽस्मिन्नालानम्, गजस्य बन्धनाय स्तम्भो बन्धस्तम्भ ॥ १ ॥

## अङ्कुशः सृणि. ॥ २९६ ॥

अङ्क्यते दम्यतेऽनेन अङ्कुश पुंक्लीबलिङ्ग "मस्त्यङ्कि्भ्याम्-" ॥ ( उणा- ५३८ ) ॥ इत्युश ॥ १ ॥ सरत्यनया सृणि पुंस्त्रीलिङ्ग "ऋतृघृसृकु-" ॥ ( उणा- ६३५ ) ॥ इति कित् णि ॥ २ ॥ २९६ ॥

## अपष्ठं त्वङ्कुशस्याग्रं

अपकृष्टं तिष्ठत्यपष्ठ "गोऽम्बाऽम्ब-" ॥ २।३।३० ॥ इति षत्वम् ॥ १ ॥

## यातमङ्कुशवारणम् ।

यात्यनेन यात, यततेऽनेन गन्तुमिति वा अङ्कुशेन वारणम् ॥ १ ॥

## निषादिनां पादकर्म यतं

पादयो कर्म पादसञ्ज्ञा यमन यतम् ॥ १ ॥

वीतं तु तद्द्वयम् ॥ २९७ ॥

तद द्वय यात यतं च, अजन्ति प्रेरयन्ति अस्मिन् वीतम्, विशिष्टमितं गमनमत्र वा ॥ १ ॥ २९७ ॥

कक्ष्या दूष्या वरत्रा स्यात्

कक्षाया मध्यप्रदेशे भवा कक्ष्या ॥ १ ॥ दूष्यते दूयतेऽनया दूष्या, बाहुलकात् करणेऽपि घ्यण् ॥२॥ व्रियतेऽनया वरत्रा मध्यबन्धनी चर्मरज्जु ॥३॥

कण्ठबन्ध. कलापकः ।

कण्ठो बध्यतेऽनेन कण्ठबन्ध. ॥१॥ कल्प्यते कलाप , के कलापक , कलामाप्नोतीति वा ॥ २ ॥

घोटकस्तुरगस्ताक्ष्र्यस्तुरङ्गोऽश्वस्तुरङ्गमः ॥ २९८ ॥
गन्धर्वोऽर्वा सप्तिर्वीती वाहो वाजी हयो हरिः ।

घोटते भूमौ परिवर्तते घोटक ॥ १ ॥ तुरस्त्वरमाणो गच्छति तुरग, तुरङ्ग, तुरङ्गम "नाम्नो गम खड्डौ–" ॥ ५ । १ । १३१ ॥ इति साधव ॥२॥ ॥ ३ ॥ ४ ॥ तृक्षस्यापत्य तार्क्ष्य ॥ ५ ॥ अश्नुतेऽध्वानमश्व "लटिखटि–" ॥ ( उणा– ५०५ ) ॥ इति व ॥ ६ ॥ २९९ ॥ गन्ध्यतेऽर्द्यन्ते गन्धर्व "गन्धेरर्चान्ति॰" ॥ ( उणा– ५०८ ) इति व॰ ॥ ७ ॥ इयर्त्ति अर्वा "स्नामदिपदि–" ॥ ( उणा– ९०४) ॥ इति वन् ॥ ८ ॥ सपति समवैति सप्ति "प्लुज्ञायजि–" ॥ ( उणा– ६४६ ) ॥ इति ति ॥ ९ ॥ वेति गच्छति वीति "इमुषि–" ॥ ( उणा– ६५१ ) ॥ इति बहुवचनात् कित् ति, विशिष्टा इतिरस्येति वा ॥ १० ॥ वाह्यते वाह ॥ ११ ॥ वजत्यवश्य वाजी, वाजो वेगोऽस्त्यस्य वा ॥१२॥ हयति हिनोति वा हय ॥ १३ ॥ हरति देशान्तरं प्रापयति हरि ॥१४॥ एते पुलिङ्गा ॥

शेषश्चात्र—

अश्वे तु क्रमण कुण्डी प्रोथी हेषी प्रकीर्णक ।
पालक. परुल किण्वी कुटर. सिंहविक्रम. ॥
माषाशी केसरी हसो मुहुर्भुग् ग्रहभोजन॰ ।
वासुदेव शालिहोत्रो लक्ष्मीपुत्रो मरुद्रथः ।
चामर्येकशफोऽपि स्यात् ।

वडवाऽश्वा प्रसूर्वामी

'वड आग्रहणे' सौत्र, वडति गर्भ वडवा "वडिवटि–" ॥ ( उणा–

५१५ ) ॥ इत्यव , वडं वल हय वा वातीति वा, अश्वोऽस्या वेति नैरुक्ता ॥ १ ॥ अश्वतेऽश्वा "अजादे" ॥ २ । ४ । १६ ॥ इत्याप् ॥ २ ॥ प्रसूते प्रसू स्त्रीलिङ्ग ॥ ३ ॥ वमति गर्भं वामी, ज्वालादित्वात् णे गौरादित्वात् ङी, वातेर्वा "अर्तीरि-" ॥ ( उणा- ३३८ ) ॥ इति म ॥ ४ ॥

शेषश्चात्र– अश्वाया पुनरर्वणी ।

किशोरोऽल्पवया हयः ॥ २९९ ॥

कृश्यति वयसा, केशाति हेषते वा किशोर "कोरचोर-" ॥ ( उणा- ४३४ ) ॥ इत्यारे निपात्यते, अल्पवया बाल ॥ १ ॥ २९९ ॥

जवाधिकस्तु जवनः

जवतीत्येवशीलो जवन ॥ १ ॥

रथ्यो वोढा रथस्य यः ।

रथ वहति रथ्य " वहति रथ-" ॥ ७ । १ । २ ॥ इति य ॥ १ ॥

आजानेयः कुलीनः स्यात्

आजेन क्षेपेण आनीयते वशीक्रियते आजानेय ॥ १ ॥ कुलीन प्रशस्य-कुलोद्भव पारसीकादि ॥ २ ॥

तत्तद्देशास्तु सैन्धवाः ॥ ३०० ॥

वानायुजाः पारसीकाः काम्बोजा वाल्हिकादयः ।

स स देशो जन्मभूमिरेषा तत्तद्देशा सिन्धु वनायुज-पारसीक कम्बोज-वाल्हिकदेशेषु भवा सैन्धवा वानायुजा , पारसीका , काम्बोजा , वाल्हिका । लक्ष्ये तु वाल्हीका । आदिग्रहणात् तुषारादय ॥ १ ॥ ३०० ॥

विनीतस्तु साधुवाही

विनीयते विनीत सुशिक्षित साधु वहति साधुवाही " साधौ" ॥ ५ । १ । १५५ ॥ इति णिन् ॥ १ ॥

दुर्विनीतस्तु शूकलः ॥ ३०१ ॥

दुर्विनीतोऽनात्तशिक्ष· शक्नोति स्वेच्छया गन्तु शूकल ' मुरल-" ॥ ( उणा-४७४ ) ॥ इत्यले निपात्यते ॥ १ ॥

कश्यः कशार्हः

कशामर्हति कश्यः, दण्डादित्वाद् यः ॥ १ ॥

हृद्वक्त्रावर्ती श्रीवृक्षकी हय ।

हृदये वक्त्रे च प्रशस्ता रोमावर्ता सन्त्यस्य हृद्वक्त्रावर्ती, श्रीवृक्षको लाञ्छनमस्त्यस्य श्रीवृक्षकी ॥ २ ॥

पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः ॥ ३०२ ॥

पञ्च हृदयादीनि श्वेतानि भद्राणि कल्याणहेतवोऽस्य पञ्चभद्र ॥१॥३०२॥

पुच्छोरःखुरकेशास्यः सितैः स्यादष्टमङ्गल. ।

अत्र द्वन्द्वगर्भे द्वन्द्वे प्राण्यङ्गसमुदायस्याप्राण्यङ्गत्वात् इतरेतरयोगः पुच्छाद्यैः सितैरष्टभिर्मङ्गल कल्याणोऽष्टमङ्गल ॥ १ ॥

सिते तु कर्क-कोकाहौ

श्वेतवर्णेऽश्वे करोति प्रमोदं कर्क. "कृगो वा" ॥ ( उणा-२३ ) ॥ इति क ॥ १ ॥ कोकवदाहन्ति भुव कोकाह ॥ २ ॥

खोङ्गाहः श्वेतपिङ्गले ॥ ३०३ ॥

खमुद्गाहते खोङ्गाह., पृषोदरादित्वात्, श्वेतश्चासौ पिङ्गलश्च श्वेतपिङ्गलस्तत्र ॥ १ ॥ ३०३ ॥

पीयूषवर्णे सेराहः

पीयूषममृत दुग्ध वा तद्वद् वर्णोऽस्य पीयूषवर्णस्तत्र सीरवदाहन्ति भुवं सेराह ॥ १ ॥

पीते तु हरियो हये ।

हरिं वर्ण याति हरिय ॥ १ ॥

कृष्णवर्णे तु खुङ्गाहः

खुरैर्गाहते खुङ्गाह ॥ १ ॥

क्रियाहो लोहितो हयः ॥ ३०४ ॥

क्रिया न जहाति क्रियाह ॥ १ ॥ ३०४ ॥

आनीलस्तु नीलकः

नील एव नीलक ॥ १ ॥

अथ त्रियूहः कपिलो हयः ।

त्रीन् यूथति त्रियूह ॥ १ ॥

बोल्लाहस्त्वयमेव स्यात् पाण्डुकेशरवालधिः ॥ ३०५ ॥

अथ त्रियूह एव व्योम्नि उल्लङ्घते बोल्लाह ॥ १ ॥ ३०५ ॥

उराहस्तु मनाक् पाण्डुः कृष्णजङ्घो भवेद् यदि ।

उरसा आहन्ति उराह ॥ १ ॥

सुरूहको गर्दभाभः

सुखेन रोहति सुरूहक ॥ १ ॥

वोरुखानस्तु पाटल. ॥ ३०६ ॥

वैरिणः खनति वोरुखान ॥ १ ॥ ३०६ ॥

कुलाहस्तु मनाक् पीतः कृष्णः स्याद्यदि जानुनि ।

कुलमाजिहीते कुलाह ॥ १ ॥

उकनाह. पीतरक्तच्छायः

उच्चैर्नह्यते उकनाह ॥ १ ॥

स एव तु क्वचित् ॥ ३०७ ॥

कृष्णरक्तच्छविः प्रोक्तः

स एव उकनाह ॥ ३०७ ॥ कृष्णरक्तच्छाय सन् क्वचिदुच्यते ॥ १ ॥

शोणः कोकनदच्छवि. ।

शोण शोणवर्ण ॥ १ ॥

हरिक. पीतहरितच्छाय. स एव हालक' ॥ ३०८ ॥

हरिरेव हरिक ॥ १ ॥ हलति क्ष्मा हालक ॥ २ ॥ ३०८ ॥

पङ्गुलः सितकाचाभः

पङ्गून् लाति पङ्गुल ॥ १ ॥

हलाहश्चित्रितो हयः ।

चित्रितो कर्बुरवर्णो हलवदाहन्ति हलाह ॥ १ ॥ खोङ्गाहादय' शब्दा देशीप्राया । व्युत्पत्तिस्त्वेषा वर्णानुपूर्वीनिश्चयार्थम् ।

शेषश्चात्र—

मल्लिकाक्ष सितैर्नेत्रै स्याद् वाजीन्द्रायुधोऽसितै ।
ककुदी ककुदावर्त्तो निर्मुक्तस्त्विन्द्रवृद्धिक ॥

ययुरश्वोऽश्वमेधीय.

याति स्वेच्छया ययु पुलिङ्ग "हनिया-" ( उणा-७३३ ) ॥ इति कि-दुर्द्वित्व च ॥ १ ॥ अश्वमेधाय हितोऽश्वमेधीय ॥ २ ॥

प्रोथमश्वस्य नासिका ॥ ३०९ ॥

प्रोथते चलति प्रोथं वृत्तो नासान्त प्रदेशः "कमिप्रुगार्ति-" ॥ ( उणा-२२५ ) इति थ पुंक्लीबलिङ्गोऽयम् ॥ १ ॥ ३०९ ॥

मध्यं कश्य

अश्वस्य मध्यप्रदेश कशामर्हति कश्यम्, तत्र हि कशाघाताधिकार, दण्डादित्वाद् य. ॥ १ ॥

निगालस्तु गलोद्देशः

निगिलत्यनेन निगाल, गलजत्रुसन्धि "न्युदो ग्रः" ॥ ५ । ३ । ७२ ॥ इति घञ्, गलस्य उद्देश प्रदेशो देवमणेरावर्त्तस्थानम् ॥ १ ॥

खुराः शफाः ।

खुरन्ति विलिखन्ति क्ष्मा खुरा ॥ १ ॥ शायन्ते तक्ष्यन्ते शफा पुंक्लीबलिङ्ग "शफकफ-" ॥ ( उणा-३१६ ) ॥ इति फे निपात्यते ॥ २ ॥

अथ पुच्छं वालहस्तो लाङ्गूलं लूम वालधिः ॥ ३१० ॥

पवते दंशादीनुत्सारयति पुच्छं पुंक्लीबलिङ्ग "पीपूडो ह्रस्वश्च" ॥ ( उणा-१२५ ) ॥ इति छक्, पुतौ छादयतीति पृषोदरादित्वाद्वा ॥ १ ॥ वालाना हस्त इव दशवारणाद् वालहस्त, प्रशस्ता वाला इति वा ॥ २ ॥ लगति चलति लाङ्गूल पुंक्लीबलिङ्ग "दुकूलकुकूल-" ॥ ( उणा-४९१ ) ॥ इत्यूले निपात्यते ॥ ३ ॥ लूयते लूम क्लीबलिङ्ग "सात्मन्नात्मन्-" ॥ ( उणा-९१६ ) इति निपात्यते ॥ ४ ॥ वाला धीयन्तेऽस्मिन् वालधिः पुंलिङ्ग ॥ ५ ॥ ३१० ॥

अपावृत्तपरावृत्तलुठितानि तु वेल्लिते ।

अपावर्त्तनमपावृत्तम् ॥ १ ॥ एव परावृत्तम् ॥ २ ॥ लोठनम् लुठितम् ॥ ३ ॥ वेल्लनं वेल्लितं तत्र ॥ ४ ॥

धोरित वल्गितं प्लुतोत्तेजितोत्तेरितानि च ॥ ३११ ॥

गतयः पञ्च धाराख्यास्तुरङ्गाणां क्रमादिमाः ।

धौरिताद्या वक्ष्यमाणास्तुरङ्गाणा पञ्च गतय, ध्रियते गतौ स्थाप्यत आभिरिति धारा, भिदादित्वादङि निपात्यते ॥ १ ॥ ३११ ॥

तत्र धौरितकं धौर्यं धोरणं धोरितं च तत् ॥ ३१२ ॥
बभ्रुकङ्कशिखिक्रोडगतिवत्

'धोऋ गतेश्चातुर्यें' धोर्यते धोरित स्वार्थेऽणि के च धौरितकम् ॥ १ ॥ ध्याणि धौर्यम् ॥ २ ॥ अनटि धोरणम् ॥ ३ ॥ क्ते धोरितम् ॥ ४ ॥ ३१२ ॥ तत्र नकुलादीना गतिसदृशम् ॥ १ ॥

वल्गितं पुनः ।
अग्रकायसमुल्लासात् कुञ्चितास्यं नतत्रिकम् ॥ ३१३ ॥

वल्गनं वल्गितम् ॥ १ ॥

प्लुत तु लङ्घन पक्षिमृगगत्यनुहारकम् ।

प्लवन प्लुतम् ॥ १ ॥ लङ्घयते लङ्घनम् ॥ २ ॥ पक्षिणा मृगाणा च गत्यनुयायि ॥ ३ ॥

उत्तेजितं रेचित स्याद् मध्यवेगेन या गतिः ॥ ३१४ ॥

उत्तेजनमुत्तेजितम् ॥ १ ॥ रेचन रेचितम् ॥ २ ॥ ३१४ ॥

उत्तेरितमुपकण्ठमास्कन्दितकमित्यपि ।
उत्प्लुत्योत्प्लुत्य गमन कोपादिवाखिलैः पदै ॥ ३१५ ॥

उत्तेरणमुत्तेरितम् ॥ १ ॥ उपनत कण्ठोऽस्मिन्नुपकण्ठम् ॥ २ ॥ आस्कन्दनमास्कन्दितम् ॥ ३ ॥ ३१५ ॥

आश्वीनोऽध्वा स योऽश्वेन दिनेनैकेन गम्यते ।

अश्वेनाह्ना गम्य आश्वीन "अह्ना गम्येऽश्वादीनञ्" ॥७।१।८५॥१॥

कवी खलीनं कविका कवियं मुखयन्त्रणम् ॥ ३१६ ॥
पञ्चाङ्गी

कवते दन्तचर्वणात् शब्दायते कवि "खरेभ्य इ" ॥ ( उणा- ६०६ ) ॥ ङया कवी ॥ १ ॥ खलनि चलति खलीन पुंक्लीबलिङ्ग "खलिहिंसिभ्याम्-" ॥ ( उणा- २८६ ) ॥ इनीन, खे तालुनि लीन वा । खलिनमपि ॥ १ ॥ कवते कविका "कुशिक-" ॥ ( उणा- ४५ ) ॥ इतीके साधु ॥ ३ ॥ कौति कवियं पुक्लीबलिङ्ग "कौतेरिय -" ॥ ( उणा- ३७५ ) ॥ ४ ॥ मुख यन्त्र्यतेऽनेन मुखयन्त्रणम् ॥ ५ ॥ ३१६ ॥ पञ्च अङ्गान्यवयवा यस्या. पञ्चाङ्गी ॥ ६ ॥

वक्त्रपट्टे तु तलिका तलसारकम् ।

वक्त्रस्य चर्ममये पट्टे तलमस्त्यस्यास्तलिका ॥१॥ तले सरति सार्यते वा तलसारकम् ॥ २ ॥

दामाञ्चन पादपाशः

दाम्नेव बद्धोऽञ्चत्यनेन दामाञ्चनम् ॥१॥ पादयो पाश पादपाश ॥ २ ॥

प्रक्षरं प्रखरः समौ ॥ ३१७ ॥

प्रच्छादित क्षराति चलत्यनेन प्रक्षर तुरङ्गसन्नाह "पुनाम्नि" ॥५।३।१३०॥ इति बाहुलकाद् घ ॥१॥ प्राघृत· खरत्यनेन प्रखर "जठर"-॥ ( उणा-४०३ ) ॥ इत्यरे निपात्यते, प्रखरेति कठारो वा, आयुधैरभेद्यत्वात् पुस्ययम्, क्लीबेऽपि वैजयन्ती, यदाह- प्रक्षर प्रखरोऽस्त्रियाम् ॥ २ ॥ ३१७ ॥

चर्मदण्डे कशा

अश्वाना ताडनाय चर्मणो दण्डश्चर्मदण्डस्तत्र ॥ १ ॥ कशति कशा ॥ २ ॥

रश्मौ वल्गाऽवक्षेपणी कुशा ।

अश्नुतेऽनया रश्मि· स्त्रीलिङ्ग "अशो रश्चादि·" ॥ ( उणा-६८८) ॥ इति मि·, तत्र ॥ १ ॥ वल्गत्यनया वल्गा । वल्ग-वागे अपि ॥ २ ॥ अवक्षिप्यतेऽनयाऽवक्षेपणी ॥ ३ ॥ कुश्यति कुशा ॥ ४ ॥

पर्याण तु पल्ययन

परितोऽश्वपृष्ठमेति पर्याण "कल्याणपर्याणादय" ॥ ( उणा- १९३ ) ॥ इति साधु ॥ १ ॥ परितोऽयतेऽनेन पल्ययन "उपसर्गस्यायौ" ॥ २।३।१०० ॥ इति लत्वम् ॥ २ ॥

वीतं फल्गु हयद्विपम् ॥ ३१८ ॥

वीयतेऽसारतया क्षिप्यते वीतम्, फल्गु असारम्, हयाश्च द्विपाश्च हयद्विपं सेनाङ्गभूतम् ॥ १ ॥ ३१८ ॥

वेसरोऽश्वतरो वेगसरश्च

अजन्त्यनेन वेसर "मीज्याजि-" ॥ ( उणा- ४३९ ) ॥ इति सर ॥ १ ॥ अश्वेन अश्वाया जातोऽश्व स गर्दभपितृकतया सजातह्रासोऽश्वतर "वत्सोक्षाश्वर्षभाद् ह्रासे पित्" ॥ ७।३।५१ ॥ इति तरट् ॥२॥ वेगेन सरति वेगसरः ॥३॥

अथ क्रमेलकः

कुलनाशः शिशुनामा शलो भोलिर्मरुप्रियः ॥ ३१९ ॥

**मयो महाङ्गो वासन्तो द्विककुद् दुर्गलङ्घनः ।**
**भूतघ्न उष्ट्रो दाशेरो रवणः कण्टकाशनः ॥ ३२० ॥**
**दीर्घग्रीव. केलिकीर्णः**

क्रामन्त्यनेन क्रमेलक. "क्रमेरेलक" ॥ (उणा–६६) ॥ क्रमानेलयति क्रमेलस्तत स्वार्थे को वा ॥ १ ॥ कुल नाशयति कुलनाश ॥ २ ॥ शिशोर्नामाऽस्य शिशुनामा ॥ ३ ॥ शलति शल ॥ ४ ॥ भूरुहान् लेढि भोलि, पृषोदरादित्वात् ॥५॥ मरु प्रियोऽस्य मरुप्रिय ॥ ६ ॥ ३१९ ॥ मीनात्यहीन् मय, 'मयते गच्छतीति वा मय' इत्येके ॥ ७ ॥ महदङ्गमस्य महाङ्ग ॥ ८ ॥ वसन्ते भवो वासन्त. ॥ ९ ॥ द्वे ककुदी अस्य द्विककुद् ॥१०॥ दुर्ग मार्ग लङ्घयन्ति अनेन दुर्गलङ्घन ॥ ११ ॥ भूतानि हन्ति भूतघ्न ॥ १२ ॥ उष्यते दह्यते मरौ उष्ट्र "सूमूखन्युषिभ्यः कित्" ॥ (उणा–४४९) ॥ इति त्रट् ॥ १३ ॥ दशेरेषु मरुषु भवो दाशेर ॥४॥ रौतीत्येव शीलो रवण ॥ १५ ॥ कण्टका अशनमस्य कण्टकाशन ॥ १६॥३२० ॥ दीर्घा ग्रीवाऽस्य दीर्घग्रीव ॥ १७ ॥ केल्या कीर्यते स्म केलिकीर्ण ॥ १८ ॥

**करभस्तु त्रिहायणः ।**

कीर्यते करभ "कृशॄगॄ–" ॥ (उणा– ३२९) ॥ इत्यभ, क शिरो रभत उन्नमयतीति वा ॥१॥ त्राणि हायनान्यस्य त्रिहायण "चतुस्त्रेर्हायनस्य वयसि" ॥२। ३।७४ ॥ इति णत्वम् ॥ १ ॥

**स तु शृङ्खलकः काष्ठमयैः स्यात् पादबन्धनै. ॥ ३२१ ॥**

स करभो दारुनिर्मितै पादबन्धनैर्युक्त, शृङ्खल बन्धनमस्य शृङ्खलकः "शृङ्खलकः करभे" ॥ ७ । १ । १९१ ॥ इति साधु ॥ १ ॥ ३२१ ॥

**गर्दभस्तु चिरमेही वालेयो रासभः खरः ।**
**चक्रीवान् शङ्कुकर्णः**

गर्दति शब्दायते गर्दभ "कृशॄगॄ–" ॥ (उणा– ३२९) ॥ इत्यभ ॥ १ ॥ चिर मेहति चिरमेही ॥ २ ॥ वाडते आप्लवते वालेय. "गयहृदय–" ॥ (उणा– ३७०) ॥ इति निपात्यते, वालेभ्यो हित इति वा, वाले वलने भवो वा ॥ ३ ॥ रास्यते रासभ "कृशॄगॄ–" ॥ (उणा– ३२९) ॥ इत्यभ ॥ ४ ॥ खनति खुरै खर "जठर–" ॥ (उणा– ४०३) ॥ इत्यरे निपात्यते, खं महत् कण्ठविवरमस्यास्तीति वा मध्वादित्वाद् र, ख शब्दं रातीति वा ॥५॥ चक्रं मण्डल मेहनान्तेऽस्य चक्रीवान् "चर्मण्वत्यष्ठीवच्चक्रीवत्–" ॥ २ । १ । ९६ ॥ इति मतौ साधु ॥ ६ ॥ शङ्क्वाकृती कर्णावस्य शङ्कुकर्ण. ॥ ७ ॥

अथ ऋषभो वृषभो वृषः ॥ ३२२ ॥

वाडवेयः सौरभेयो भद्रः शक्वर-शाक्वरौ ।

उक्षाऽनड्वान् ककुद्मान् गौर्बलीवर्दश्च शाङ्करः ॥ ३२३ ॥

ऋषति गच्छति ऋषभ ॥ १ ॥ वर्षणात् वृषभ "ऋषिवृषि–" ॥ ( उणा– ३३१ ) ॥ इति किदभः ॥ २ ॥ वर्षति वृष ॥ ३ ॥ ३२२ ॥ वडवाया वृषो वाडवेय "वाडवेयो वृषे" ॥ ६ । १ । ८५ ॥ इत्येयण् ॥ ४ ॥ सुरभेरपत्य सौरभेय "चतुष्पाद्भ्य–." ॥ ६ ।१। ८३ ॥ इत्येयण् ॥ ५ ॥ भन्दते भद्र ॥ ६ ॥ शक्नोति वोढु शक्वरः "तीवर–" ( उणा– ४४४ ) ॥ इति वरटि साधु ॥ ७ ॥ शक्वर एव शाक्वर, प्रज्ञादित्वादण् ॥ ८ ॥ उक्षति मूत्रेण भुवमुक्षा "उक्षितक्षि–" ॥ ( उणा– ९०० ) ॥ इत्यन् ॥ ९ ॥ अनो वहति अनड्वान् "अनसो वहे क्विप् सश्च ड " ॥ ( उणा– १००६ ) ॥ इति साधु ॥ १० ॥ ककुदस्यास्ति ककुद्मान्, ऊर्म्यादित्वाद् मतोर्वत्वं न भवति ॥ ११ ॥ गच्छतीति गौ पुम्नालिङ्ग "द्युगमिभ्याम्–" ॥ ( उणा– ८६७ ) इति डो ॥१२॥ बलं वर्धयति बलीवर्द, पृषोदरादित्वात्, बली वृणाति वा ॥ १२ ॥ शङ्करस्याय शाङ्कर ॥ ४ ॥ ३२३ ॥

उक्षा तु जातो जातोक्षः

उत्पन्न उक्षा जातोक्षः "जातमहद्वृद्धादुक्ष्ण कर्मधारयात्" ॥ ७ । ३ । ९५ ॥ इत्यत् समासान्त ॥ १ ॥

स्कन्धिकः स्कन्धवाहकः ।

प्रशस्य स्कन्धोऽस्त्यस्य स्कान्धिक ॥ १ ॥ स्कन्धेन वहति स्कन्धवाहक ॥ २ ॥

महोक्षः स्यादुक्षतरः

महाश्चासावुक्षा च महोक्ष "जातमहद्वृद्ध–" ॥ ७।३।९५ ॥ इत्यत् समासान्तः ॥ १ ॥ ह्रसित उक्षा उक्षतर "वत्सोक्षाश्वर्षभ–" ॥ ७ । ३ । ५१ ॥ इति तरट् ॥ १ ॥

वृद्धोक्षस्तु जरद्गवः ॥ ३२४ ॥

वृद्धश्चासावुक्षा च वृद्धोक्ष. "जातमहद्वृद्ध–" ॥ ७ । ३ । ९५ ॥ इत्यत् समासान्तः ॥ १ ॥ जरश्चासौ गौश्च जरद्गव "गोस्तत्पुरुषात्" ॥ ७ । ३ । १०५ ॥ इत्यट् समासान्त ॥ २ ॥ ३२४ ॥

षण्ढतोचित आर्षभ्यः

षण्ढतोचितोऽण्डाकर्षणयोग्य ऋषभाय अयमार्षभ्य "ऋषभोपानहाञ्ञ." ॥ ७ । १ । ४६ ॥ षण्ढतायोग्य इत्येके ॥ १ ॥

कूटो भग्नविषाणकः ।

कूट्यते कूट ॥ १ ॥ भग्न विषाणमस्य भग्नविषाणक ॥ २ ॥

इट्चरो गोपतिः षण्डो गोवृषो मदकोहलः ॥ ३२५ ॥

एषणमिट्, इषा चरति इट्चर स्वेच्छाचारी 'इत्वर' इत्येके पेढु ॥ १ ॥ गवा पतिर्गोपति ॥ २ ॥ सनोति सनति वा षण्ड. "पञ्चमाड्ड." ( उणा–१६८ ) ॥ इति ड, बाहुलकात् सत्वाभाव । शण्डोऽपि ॥ ३ ॥ वृषोऽनाकृष्टाण्ड गौश्चासौ वृषश्च गोवृष, गवा वृषो बीजनिषेक्तेति वा ॥ ४ ॥ मदेन कोहलो नट इव मदकोहल ॥ ५ ॥ ३२५ ॥

वत्सः शकृत्करिस्तर्णः

वदति मातरं दृष्ट्वा वत्स "मावावदि–" ॥ (५६४) ॥ इति स ॥ १ ॥ शकृत् करोति शकृत्करिः "शकृत्स्तम्बाद्–" ॥ ५ । १ । १०० ॥ इति इ ॥२॥ तरति तर्ण "इणुर्विंशा–" ॥ ( उणा–१८२ ) ॥ इति ण, तृणुते भक्षयति, तृणातीति वा ॥ ३ ॥

दम्य वत्सतरौ समौ ।

दममर्हति दम्य, दण्डादित्वाद् य, दम्यते वा ॥१॥ ह्रसितो वत्सो वत्सतरः "वत्सोक्षाश्वर्षभ–" ॥ ७ । ३ । ५१ ॥ इति तरट्, ह्रासो द्वितीयवय प्राप्ति ॥२॥

नस्योतो नस्तितः

नस्ये नासाकृते रन्ध्रे रज्ज्वादिना उत उम्भितो नस्योतः ॥ १ ॥ नासिकाया नम्र, आद्यादित्वात् तस् "नस् नासिकायास्त क्षुद्रे" ॥ ३ । २ । ९९ ॥ इति नसादेश, ततो नस्तो नासिकाया क्रियते स्म नस्तित, ततो "णिज् बहुलं नाम्न –" ॥ ३ । ४ । ४२ ॥ इति णिचि "त्रन्त्यस्वरादे" ॥ ७ । ४ । ४३ ॥ इत्यन्त्यस्वरादिलोपे च क्तप्रत्यय., नासाया कृतच्छिद्रो गौरित्यर्थ ॥ २ ॥

षष्ठवाद् तु स्याद् युगपार्श्वगः ॥ ३२६ ॥

पञ्चम षष्ठं वा वर्ष वहति षष्ठवाट्, पृषोदरादित्वात् ॥ १ ॥ युगस्य स्कन्धकाण्डस्य पार्श्वं गच्छति युगपार्श्वग, हलवोढेत्यर्थ. । 'दमनाय योजित' इत्येके ॥ २ ॥ ३२६ ॥

युगादीना तु वोढारो युग्य-प्रासङ्ग्य-शाकटाः ।

युग प्रासङ्ग च वहति युग्य, प्रासङ्ग्य, "वहति रथयुगप्रासङ्गात्" ॥ ७ । १ । २ ॥ इति य ॥ १ ॥ २ ॥ शकट वहति शाकट "शकटादण्" ॥ ७ । १ । ७ ॥ ३ ॥

स तु सर्वधुरीणः स्यात् सर्वा वहति यो धुरम् ॥ ३२७ ॥

सर्वा धुर वहति सर्वधुरीण "वामाद्यादेरीन" ॥ ७ । १ । ४ ॥ १ ॥ ॥ ३२७ ॥

एकधुरीणैकधुरावुभावेकधुरावहे ।

एका एकस्य वा धूरेकधुरा ता वहति एकधुरीण एकधुर "अश्वैकादे" ॥ ७ । १ । ५ ॥ इतीनोऽकारश्च प्रत्ययौ ॥ १ ॥ २ ॥

धुरीण-धुर्य-धौरेय-धौरेयक-धुरधराः ॥ ३२८ ॥
धूर्वहे

धुर वहति धुरीण 'परमतमनुमत स्वमत भवति' इति मतान्तरेण ईन ॥१॥ "धुरो यैयण्" ॥ ७ । १ । ३ ॥ इति ये धुर्य ॥ २ ॥ एयणि धौरेयः ॥ ३ ॥ मतान्तरेण एयकणि धौरेयक ॥ ४ ॥ धुरा धारयति धुरधर "धारेर्धर्च" ॥ ५ । १ । ११३ ॥ इति खे साधु ॥ ५ ॥३२८॥ धुरं वहति धूर्वह, लिहादित्वादच्, तत्र ॥ ६ ॥

अथ गलिर्दुष्टवृषः शक्तोऽप्यधूर्वहः ।

गलति भक्षयत्येव गलि. " पदिपठि–" ॥ ( उणा–६०७)॥ इति इः ॥१॥

स्थौरी पृष्ठ्यः पृष्ठवाह्यः

स्थूराणां पश्चाज्जङ्घाभागानामिद स्थौर बलं तदस्यास्ति स्थौरी । 'स्थूरी' इत्यन्ये ॥ १ ॥ पृष्ठे साधु पृष्ठ्य ॥ २ ॥ पृष्ठेन वाह्यते पृष्ठवाह्य ॥ ३ ॥

द्विदन् षोडन् द्वि-षड्रदौ ॥ ३२९ ॥

द्वौ दन्तावस्य द्विदन् "वयसि दन्तस्य दतृ" ॥ ७ । ३ । १५१ ॥ १ ॥ एवं षड् दन्ता अस्य षोडन् " एकादशषोडश–" ॥ ३ । २ । ९१ ॥ इति साधु ॥ २ ॥ ३२९ ॥

वहः स्कन्धः

वृषस्य स्कन्ध', वहन्त्यनेन वहः "गोचरसंचर-" ॥ ५।३।१३१ ॥ इति घ. ॥१॥

अंशकूटं तु ककुदं

अंशयोरुपरिभागे कूटं शिखरमंशकूटम् ॥ १ ॥ ककते ककुदं पुक्लीबलिङ्गः "ककेर्णिद्वा" ॥ ( उणा–२४३ ) ॥ इत्युदः । ककुत्-ककुदावपि ॥ २ ॥

नैचिक शिर ।

नीचैश्चरति नैचिकम् । 'नैचिकी' इत्यन्ये ॥ १ ॥

विषाण कूणिका शृङ्गं

वेवेष्टि विषाणं त्रिलिङ्ग "कृपिविषि-" ॥ (उणा–१९१) ॥ इत्याणक् ॥ १ ॥ कूणयति कूणिः, ङ्या स्वार्थे के च कूणिका ॥ २ ॥ शृणाति शृङ्ग "शृङ्गशार्ङ्ग-" ॥ ( उणा–९६ ) ॥ इति गे निपात्यते, पुक्लीबलिङ्ग ॥ ३ ॥

सास्ना तु गलकम्बलः ॥ ३३० ॥

सस्ति स्वपितीव निष्क्रियत्वात् सास्ना "षसेर्णित्" ॥ ( उणा–२५९ ) ॥ इति नः ॥ १ ॥ गलस्य कम्बल इव लम्बमानत्वाद् गलकम्बल ॥ २ ॥ ३३० ॥

गौः सौरभेयी माहेयी माहा सुरभिरर्जुनी ।

उस्राऽघ्न्या रोहिणी शृङ्गिण्यनड्वाह्यनडुह्युषा ॥ ३३१ ॥

तम्पा निलिम्पिका तंवा

गच्छति गौः पुंस्त्रीलिङ्गः ॥ १ ॥ सुरभ्या अपत्य सौरभेयी ॥ २ ॥ माहाया अपत्य माहेयी, मह्या भवेति वा नद्यादित्वादेयण् ॥ ३ ॥ 'माहृग् माने' माह्यते माहा ॥ ४ ॥ सुष्ठु रमते सुरभि "पदिपठि-" ॥ (उणा–६०७) ॥ इति इः, आगमस्यानित्यत्वात् "रभोऽपरोक्षाशवि" ॥ ४।४।१०२ ॥ इति नागमाभावः ॥५॥ अर्ज्यते अर्जुनी ॥ ६ ॥ वसति क्षीरमस्यामुस्रा "ऋज्यजि-" ॥ (उणा–३८८) ॥ इति किद् र' ॥ ७ ॥ न हन्त्यघ्न्या "सिक्यास्याढ्य-" ॥ ( उणा–३६४ ) ॥ इति ये निपात्यते ॥ ८ ॥ रोहत्यवश्य रोहिणी ॥९॥ शृङ्गमस्त्यस्याः शृङ्गिणी, शृङ्गिण्यादय सामान्या अपि विशेषे वर्तन्ते ॥ १० ॥ अनड्वाही अनडुही, अनडुह्शब्दाद् गौरादिपाठसामर्थ्याद् विकल्पेन कृतवाऽऽदेशात् ङी ॥ ११ ॥ १२ ॥ उषत्यशिवमुषा ॥ १३ ॥ ३३१ ॥ ताम्यति तम्पा " पम्पाशिल्पादय " ॥ (उणा–३००) ॥ इति निपातनात् प ॥ १४ ॥ निलिम्पति निलिम्पा " निगवादेर्नाम्नि " ॥ ५।१।६१ ॥ इति श के निलिम्पिका ॥ १५ ॥ जपादित्वात् पस्य वत्वे तवा ॥ १६ ॥

सा तु वर्णैरनेकधा ।

सा गौः शबलादिभिर्वर्णैरनेकभेदा भवति, यथा शबला, धवलेत्यादि ॥ १ ॥

पष्ठौही गर्भिणी

प्रष्ठं वहति पष्ठौही, गौरादित्वात् ङी ॥ १ ॥ गर्भोऽस्त्यस्या गर्भिणी। 'पष्ठौही बालगर्भिणी' इत्यमरः ॥ २ ॥

वन्ध्या वशा

बध्नाति प्रसूतिं वन्ध्या "स्थाच्छामा-" ॥ (उणा-३५७) ॥ इति यः ॥ १ ॥ वष्टि कामयते परं वशा ॥ २ ॥

वेहद् वृषोपगा ॥ ३३२ ॥

विहन्ति गच्छति वृष वेहत् "संश्चद्वेहत्-" ॥ (उणा-८८२) ॥ इति कति निपात्यते ॥१॥ वृषमुपगच्छति वृषोपगा। विहन्ति गर्भमिति 'वेहद् गर्भोपघातिनी' इत्यमरः ॥ २ ॥ ३३२ ॥

अवतोका स्रवद्गर्भा

अवस्रुतं तोकमपत्यमस्या अवतोका, अपप्रसववती। 'मृतवत्सा स्रवद्गर्भा' इति माला ॥ १ ॥

वृषाक्रान्ता तु सन्धिनी।

वृषेण आक्रम्यते वृषाक्रान्ता, सन्धानं सन्धा गर्भग्रहणमस्त्यस्याः सन्धिनी, शिखादित्वादिन्। 'अदुग्धा दोहकाले तु सन्धिनी' इति काल्यः। 'सन्धिन्यकालदुग्धा गौर्वृषाक्रान्ता च सन्धिनी' इति तु शाश्वतः ॥ १ ॥

प्रौढवत्सा बष्कयिणी

प्रौढो वत्सोऽस्या प्रौढवत्सा चिरप्रसूतेत्यर्थः, बष्कतेऽतिक्रामति बष्कयश्चिरकालः "गयहृदया-" ॥ (उणा-३७०) ॥ इति निपात्यते, सोऽस्त्यस्या बष्कयिणी ॥ १ ॥

धेनुस्तु नवसूतिका ॥ ३३३ ॥

धयन्त्येना धेनुः "धे. शित्" ॥ (उणा-७८७) ॥ इति नुः ॥ १ ॥ नवा प्रत्यग्रा सूतिरस्या नवसूतिका ॥ ३३३ ॥

परेष्टुर्बहुसूतिः स्यात्

परमिच्छति परेष्टु, पृषोदरादित्वात्। बह्वी सूतिरस्या बहुसूतिः ॥ १ ॥

गृष्टिः सकृत्प्रसूतिका।

गिरति गृष्टि. "ग्रो गृष् च" ॥ (उणा-६४९) ॥ इति तिः ॥ ॥ १ ॥

प्रजने काल्योपसर्या

तस्मिन् सहकार्येकस्वभावो यस्य तत् तथा, एतदधिकृतपुरुषवस्तु; इति चेत् । एतदाशङ्कयाह- **न, इत्थंभूतस्य** अनेकजन्मसहकारिण इत्यर्थ, एकत्वायोगात् । कथमयोग इत्याह- **सर्वथैकस्मात्** सहकारितयाऽपि, अनेकजन्मव्याहते । व्याहतिश्च एकान्तैकस्य वस्तुन स्वभावस्य वा, अनेकत्रानुपयोगात् । अनुपयोगश्च, तदन्यतरवत् तत्सहकारिस्वभावपुत्रादिविज्ञानवदित्यर्थ, तदितरस्यापि- अध्याप्यादि-विज्ञानस्यापि, निमित्ताभेदेन पुत्रादिज्ञानसहकारिसहकारित्वेन हेतुना, तत्त्वापत्तेस्तत्सहकारिस्वभावपुत्रादिविज्ञानत्वापत्ते । इत्थ चैतदङ्गी-कर्तव्यम्, अन्यथा अन्यत्राप्यध्याप्यादिविज्ञानसहकारित्वाभ्युपगमे, कात्स्न्येनैकत्र पुत्रादिविज्ञाने, उपयोगायोगादिति भावनीयमेतत्, **न चेत्यादि** न च नास्त्येव तत्र दान-हिंसादिविरतिचेतनायाम्, अधिकृतशक्ति- अभ्युदयादिसाधनशक्ति । किं तर्हि ? । अस्त्येव । कुत इत्याह- **आयत्याम्** आगामिनि काले, फलभावात्- अभ्यु-दयादिफलभावात् । एतत्समर्थनायाह- **व्यवहितानामपि** फलानां क्षणप्रबन्धेन, हेतो सकाशात्, उत्पत्तिदर्शनात्, मूषिकालर्कविषवि-कारवत्- मूषिकालर्कविष ह्यायत्यां विकार दर्शयतीति लौकिकमेतत् ॥

आह- मूषिकाविषादावायत्यां तत्फलदर्शनाद् युक्तं तच्छ-क्त्यनुमानम्, दान-हिंसादिविरतिचेतनायां त्विष्टस्वर्गादिफल-स्यात्यन्तमनुपलम्भादयुक्तमिति । न, अनुपलम्भेऽपि संभवात्, इष्टफलभावे विरोधाभावात् । किमनेन? साधकमत्र प्रमाणं नास्तीति चेत् । बाधकेऽपि समानः प्रसङ्गः । अत एव संश-योऽस्त्विति चेत् । न, भवत्पक्षे तदयोगात् । कथमयोगः ? इति चेत् । तत्कात्स्न्र्यग्रहणतो याथात्म्यनिश्चयापत्तेः । आवर-णदोषादनिश्चय इति चेत् । किं ततस्तस्याः क्षूणम् ? इति वाच्यम् । अस्पष्टग्राह्यतेति चेत् । न, योगिनापि तथाग्रहणा-पत्तेः । न तस्यावरणमिति चेत् । किं तेन ?, अन्यत एव ग्राह्यभेदसिद्धेः । अयोगिन एव सः, न योगिन इति चेत् । न,

**तदेकस्वभावत्वविरोधात् । ग्राहकभेदादविरोध इति चेत् । न, एकस्वभावायास्तद्भेदेऽपि ग्रहणभेदासिद्धेः । न हि नीलसंवेदनमन्यथा स्वनीलत्वमधिगच्छति, अन्यथा च 'तद् योगि' इत्यनेकस्वभावतापत्तेः । अत एकस्वभावस्य वस्तुनः सर्वेषां तुल्यं ग्रहणमग्रहणं चेति सन्न्यायरणस्तम्भः ॥**

आह पर, मूषिकाविषादावायत्यां प्रावृडादौ, तत्फलदर्शनाद् मूषिकाविषादिफलदर्शनात्, युक्त तच्छक्त्यनुमान मूषिकालर्कविषशक्त्यनुमानम्, दान हिंसादिविरतिचेतनायां तु प्रस्तुतायाम्, इष्टस्वर्गादिफलस्यायत्यामनुपलम्भात् कारणात्, अयुक्तमिति । एतदाशङ्क्याह– **न, अनुपलम्भेऽपि** सति, सभवादिष्टफलस्य । सभवश्च, इष्टफलभावे स्वर्गादिभावे, विरोधाभावात् । किमनेन विरोधाभावेन ? साधकमत्र स्वर्गादौ, प्रमाण नास्तीति चेत् । एतदाशङ्क्याह– **बाधकेऽपि समानः प्रसङ्गः** तदपि नास्त्येवेत्यर्थः । अत एव कारणात्, सशयोऽस्त्विति चेत् । एतदाशङ्क्याह– **न, भवत्पक्षे** भवदभ्युपगमे, तदयोगात् सशयायोगात् । कथमयोग ? इति चेत् । एतदाशङ्क्याह– **तत्कात्स्न्यग्रहणतः** दान-हिंसादिविरतिचेतनाकात्स्न्यग्रहणेन, याथात्म्यनिश्चयापत्ते । आवरणदोषादनिश्चय इति चेत् । एतदाशङ्क्याह– **किं तत आवरणात्,** तस्या दान-हिंसादिविरतिचेतनाया, क्षणम् ? इति वाच्यम् । अस्पष्टग्राह्यतेति चेत् । **न, योगिनोऽपि तथा** अस्पष्टग्राह्यतया ग्रहणापत्ते । न तस्य योगिन आवरणमिति चेत् । एतदाशङ्क्याह– **किं तेन आवरणेन ?** अन्यत एव–अन्यसबन्धिन आवरणात्, ग्राह्यभेदसिद्धे, ततस्तस्यास्पष्टग्राह्यतोपगमात् । अयोगिन एव स ग्राह्यभेद, न योगिन इति चेत् । एतदधिकृत्याह– **न, तदेकस्वभावत्वविरोधात्** न तस्या दान-हिंसादिविरतिचेतनाया एकस्वभावत्वविरोधात् । ग्राहकभेदात् कारणात्, अविरोध इति चेत् । एतदाशङ्क्याह– **न, एकस्वभावायाः** दान-हिंसादिविरतिचेतनाया, तद्भेदेऽपि ग्राहकभेदेऽपि, ग्रहणभेदासिद्धे । एतदेव निदर्शनान्तरेण भावयन्नाह– **न हीत्यादि** न हि नीलसवेदनमन्यथा स्वनीलत्वमधिगच्छत्यनीलत्वादि-

त्वेन, अन्यथा च तद् नीलत्व योगीति । कुतो न हीत्याह- **अनेकस्वभावतापत्तेः** । सर्वोपसहारमाह- अत एकस्वभावस्य वस्तुन' पुरुषदानादिचेतनादे , सर्वेषां पुत्रादीनाम्, तुल्य ग्रहणमग्रहण च, इति सन्न्यायरणस्तम्भ ॥

**न च तत्र पारम्पर्येण तत्तत्कार्यसाधनशक्तिनिश्चयः, तथाऽप्रतीतेः, अस्ति च तत्कात्स्न्येंग्रहीतुर्योगिनः; इतरथा योग्य-ऽयोगिनोस्तत्र विशेषाभावप्रसङ्गात्, तथा च दृष्टेष्टविरोधः । इति न ह्यर्थसन्निधिरित्येवायोगिनां सर्वाकारमेव तदवगम इति कृतं प्रसङ्गेन; तथा चोक्तम्-**

"वस्तुनोऽनेकरूपस्य नेन्द्रियात् सर्वथा गतिः ।
चित्रावरणयोगेन प्रमातुः किन्तु देशतः ॥ १ ॥
एवं च विप्रकृष्टस्य सन्निकृष्टस्य चैकदा ।
उष्ट्रादौ बुद्धिभेदेनानेकरूपत्वसंस्थितिः ॥ २ ॥
अप्रधानीकृतौष्ट्र्यादिविशेषं प्रतिपद्यते ।
विप्रकृष्टः पुमान् सत्त्वं वस्त्रादौ रक्ततादिवत् ॥ ३ ॥
सन्निकृष्टोऽपि चौष्ट्र्यादि तूर्णं सत्त्वोपसर्जनम् ।
रक्तादाविव वस्त्रादि विशिष्टं तीव्रवीर्यतः ॥ ४ ॥
अप्रधानं च यत् प्रोक्तमुष्ट्रत्वाद्यत्र तत्तथा ।
प्रतिपत्तारमाश्रित्य न तु तत्त्वव्यपेक्षया ॥ ५ ॥
अन्योऽन्यव्याप्तिरूपेण द्वयोस्तद्भावसिद्धितः ।
अमुख्य-गुणभावेन तत्त्वतस्तूभयात्मकम् ॥ ६ ॥
एकान्तैक्ये तु भावानां कार्याभेदादनिश्चितिः ।
नैकस्मादुत्तरो भावो ज्ञानं चेति सुनीतितः ॥ ७ ॥
हेत्वभेदान्न चाज्ञाते तद्ध्वनिः सम्प्रवर्तते ।
एवमेकस्वभावत्व उपपन्नौ न धी-ध्वनी ॥ ८ ॥"

-इत्यादि कृतं विस्तरेणेति ॥

॥ इति तृतीयोऽधिकारः ॥

**न चेत्यादि** न च तत्रैकस्वभावे वस्तुनि, पारम्पर्येण प्रबन्धवृत्त्या, तत्तत्कार्यसाधनशक्तिनिश्चय – तत्तत्कार्यमुत्तरोत्तरक्षणरूपम्, तस्य साधनशक्तय पारम्पर्येण तत्कार्यसाधनशक्तय', तासु निश्चयो नैव । कुत इत्याह– तथाऽप्रतीतेः । अस्ति च तत्र पारम्पर्येण तत्तत्कार्यसाधनशक्तिनिश्चय । कस्मादित्याह– तत्कार्त्स्न्यग्रहीतु तस्यैकस्वभावत्वाभिमतस्य वस्तुन पुरुषदान-हिंसादविरतिचेतनादे, कार्त्स्न्यं सम्पूर्णत्वम्, तस्य ग्रहीता परिच्छेत्ता, तस्य तत्कार्त्स्न्यग्रहीतुर्योगिन', तथाऽनागतव्याकरणप्रामाण्यात् । इत्थ चैतदङ्गीकर्तव्यमित्याह— **इतरथा योग्य-ऽयोगिनोस्तत्र** वस्तुनि, **विशेषाभावप्रसङ्गात्**, 'परिज्ञान प्रति' इति सामर्थ्यम्, तथा च दृष्टे-ष्टविरोध । इति–एवम्, न ह्यर्थसन्निधिरित्येवायोगिना सर्वाकारमेव तदवगमो वस्त्ववगम इति कृत प्रसङ्गेनेति महानिगमनम् । **तथा चोक्तमित्यादिना** ज्ञापकमाह– **वस्तुनः** दध्यादे, अनेकरूपस्य सद्द्रव्यत्वादिधर्मापेक्षया, नेन्द्रियाच्चक्षुरादे, सर्वथा गति सर्वधर्मात्मत्वेन परिच्छित्ति । कुत इत्याह–**चित्रावरणयोगेन** हेतुना, प्रमातु पुरुषस्य, किन्तु देशतो देशेनेन्द्रियाद् गति ॥ १ ॥ **एवं चेत्यादि** एव च सति, विप्रकृष्टस्य दूरस्थस्य प्रमातु, सन्निकृष्टस्य चासन्नस्य च, एकदैकस्मिन् काले, उष्ट्रादौ विषये, आदिशब्दाद् दधिपरिग्रह, बुद्धिभेदेन सदौष्ट्र्यादिरूपेण हेतुना, किमित्याह– **अनेकरूपत्वसंस्थितिः** सदौष्ट्र्यादिधर्मापेक्षया ॥ २ ॥ एवमनेकरूपे वस्तुनि किमित्याह– 'अप्रधानीकृतौष्ट्र्यादिविशेष प्रतिपद्यते, विप्रकृष्ट पुमान् सत्त्वम्, वस्त्रादौ रक्ततादिवत्, इति निगदसिद्धमेव ॥ ३ ॥ सन्निकृष्टोऽपि चौष्ट्र्यादि तूर्ण शीघ्र, सत्त्वोपसर्जन रक्तादाविव वस्त्रादि विशिष्ट पटादिवत्, तीव्रवीर्यत प्रतिपद्यत इति ॥ ४ ॥ अप्रधान च यत् प्रोक्तमुष्ट्रत्वाद्यत्राधिकारे, तत् तथा प्रतिपत्तारमाश्रित्योक्तलक्षणम्, न तु तत्त्वव्यपेक्षया ॥ ५ ॥ किमिति ?, अत आह– **अन्योन्यव्याप्तिरूपेण** हेतुना, द्वयो. सदौष्ट्र्याद्यो., तद्भावसिद्धित. सदुष्ट्रभावसिद्धे',

अन्यथाऽयोगादित्युक्तप्रायम् । ततश्चामुख्य-गुणभावेन तत्त्वतस्तू-भयात्मक तत् ॥ ६ ॥ परपक्षे दोषमाह- **एकान्तैक्ये तु** एकान्तैक-स्वभावत्वे पुनः, भावानां दध्यादीनाम्, कार्यभेदात् कारणात्, अनि-श्चिति । एतदेवाह- **नैकस्मात्** एकस्वभावात्, उत्तरो भावो ज्ञानं चेति सुनीतित. ॥ ७ ॥ सुनीतिमेवाह- हेत्वभेदात् तदेकस्वभावत्वेन, न चाज्ञाते तस्मिन्, तद्ध्वनिर्दध्यादिध्वनि., सम्प्रवर्तते, अतिप्रसङ्गात् 'ज्ञानं च ततोऽन्यभावे, न न संगतम्' इति भावितमेव । एवमेकस्वभा-वत्वे वस्तुन., उपपन्नौ न धी-ध्वनी, द्वयनिमित्ताभावेन ॥८॥ इत्यादि । ततश्च भेदसहारवादचिन्ताऽभाव एव परमते । इति कृत विस्तरेण ॥

॥ इत्यनेकान्तजयपताकाटीकायां तृतीयोऽधिकार. ॥



शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरीश्वरगुरुभ्यो नमः ।

॥ अर्हम् ॥

श्रीयशोविजयजैनग्रन्थमाला [२०]

श्रीमुनिभद्रसूरिविरचितं

# श्रीशान्तिनाथमहाकाव्यम् ।

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिपादा-
म्भोजचञ्चरीकायमाणाभ्यां
श्रावकपं०—हरगोविन्ददास—बेचरदासाभ्यां संशोधितम् ।

एषोन्नते पथमगाहत शास्त्रमाला
यस्य प्रसादमितमाप्य निमित्तभूयम् ।
भूयो विचक्षणसमाजसमर्चिताङ्घ्रि
सूरिः स धर्मविजयो विजय बिभर्तु ॥ १ ॥

तच्च

वाराणस्यां

श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण निजधर्माभ्युदययन्त्रालये
मुद्रित प्रकाशित च

वीरसवत् २४३७ ।

मूल्य रूप्यकत्रयम् ।

YASHOVIJAYA JAINA GRANTHAMALA, 20

*THE*

# SHANTINATHA MAHAKAVYA

OF

SHREE MUNIBHADRA SURI



EDITED

UNDER THE BENIGN INFLUENCE AND PATRONAGE

OF

SHASTRAVISHARAD JAINACHARYA

**SHREE VIJAYA DHARMA SURI**

BY

HIS HOLINESS' MOST DEVOTED SERVANTS,

**SHRAVAK PANDIT HARGOVINDDAS**

AND

**SHRAVAK PANDIT BECHARDAS.**



PRINTED AND PUBLISHED

BY

HARSHCHAND BHURABHAI

PROPRIETOR OF DHARMABHYUDAYA PRESS,

BENARES



Veer-Era, 2437



Price 3 Rupees.

# प्रस्तावना ।

— ० —

अवनतान् विधातु' समुन्नतान् समुन्नतिपद्धति प्रापयितुश्चावनतान् समयस्य वैचित्र्य, वैलक्षण्य, दुरतिक्रमत्व च सुप्रतीतमेव । एकस्मिन् समयेऽर्हद्धर्मोऽहर्मणि' प्राप्नुवन् समुदयम्, संहरन्नितरदर्शनतेजांसि, प्रतिबध्नन् नास्तिकोलूकेषु हर्षप्रकर्षम्, विनाशयन् जनिष्मता निबिडतराणि तमांसि, प्रकाशयश्च परितः स्याद्वादमहामुद्राव्यवस्थितं यथावस्थित समस्तवस्तुनिकुरम्बम्, प्रमाणप्रकरकरनिकरैर्विश्वस्मिन्नपि विश्वे प्रचुर प्रासरीसरीत् । एतद्दर्शनानुयायिनो निष्प्रतिमप्रतिभाभरमाबिभ्राणाश्चाचार्यवर्या अपि सम्यक् समधिगम्य सकलशास्त्रपारावारपारदृश्वताम्, अक्षुण्णं लक्ष्यीकृत्य दुष्पथप्रवेशनिषेधनेन सत्पथनिवेदनरूपां परोपकारैककर्त्तव्यताम्, युक्तियुक्तमुपपाद्य च तटस्थीभूतभूपभूयिष्ठगोष्ठीषु एकान्तवादापवादपूर्वकं दुस्तर्कसहस्रैरपि दुर्धर्षस्याऽनेकान्तकान्तसिद्धान्तस्यैव निसर्गरमणीयतया सर्वथोपादेयत्वम्, बहुशो परास्थन्त मिथ्यात्वध्वान्ताध्मातस्वान्ता एकान्तवादिन' कुतीर्थ्यान् । उद्घोषयामासुश्च लब्धजयश्रियः प्रतिपक्षसाक्षिणां समक्षमर्हच्छासनस्य न्यायप्राप्त सर्वत्र विजयडिण्डिमम् । कि बहुना ? तत्प्रौढताप्रतापेनैवैकान्तिदर्शनानुयायिभिरपि प्रतिपक्षोपप्रक्षिप्ताक्षुण्णविकल्पानलपदोषप्रतिक्षिप्यमाणैरनिरीक्षमाणैश्चोपायान्तरसद्भावं अक्षरान्तरैर्वा, भङ्ग यन्तरैर्वा, रीत्यन्तरैर्वा शरणीकृत एवाऽस्मत्परमसिद्धान्तो भगवान् स्याद्वादवादः । अत्र च नि संशयं संवदत्सु नैकेषु स्वपराम्नातेष्वनिम्नेष्वाम्नायेषु नास्ति कथंकथिकताया' कथ कथमपि प्रवेशलेशावकाश इति जातेतिहासप्रतिभासाना षट्तर्कीतर्कपरिकर्कशसंपर्काणां चेदानीन्तनानामपि प्राज्ञाना प्रकटमेव प्रज्ञामार्गमवगाहते।

एवं च चातुर्वैद्यमहोदधिभिर्जैनाचार्यवर्यैः ससाधयद्भिः सम्यग्

निजं लक्ष्यम्, अवगणयद्भिर्दुष्टकष्टदाऽरिष्टपटलम्, प्रकाशयद्भिः सर्वत्र जिनेन्द्रोपदिष्टानि शुद्धतत्त्वानि, सुदूरमुत्सारयद्भिश्च दुष्कर्मकर्दमसंगसंगतं मिथ्यात्वसंसर्गम्, बहु बहूपकृतं तात्कालिकेष्वस्तोकलोकेष्वित्यत्र केन किं वक्तव्यम् ? । भविष्यन्त्यपि जनसंहतिर्मा भूदनेन सत्सिद्धान्तपीयूषरसेन वञ्चितेति सद्भावनाभावितान्तःकरणैश्च तैर्महीयांसं समयव्ययमपि गरीयांसं च प्रयासमपि विना संकोचेन विनिर्माय्याऽगण्यानि तत्तद्विषयसुविवेचकानि शास्त्राण्यपि निरमायिषत ।

किन्तु कालवैषम्येण दुर्भाग्यलसितेन वा दूरे तान्याचार्यरत्नानि, तिष्ठतु संपूर्णानां ग्रन्थाना दर्शनदुराशा, नामान्यपि तेषां दुर्ज्ञानानि समजायन्त । तत्तत्समयसमुद्भूतभूपापसदोपद्रवै, अन्यैश्चापि परस्परद्वेषेर्ष्याव्यामोहादिसमुत्थैः कारणैस्तेषां ग्रन्थरत्नाना महानंश प्रणाशं समशिश्रियत् । महाभाग्यवशेनाऽवशिष्टोऽल्पीयानप्यंशस्तादृशी दुर्दशा मा लब्ध, भाण्डागारेष्वेव पतितश्च कृमिभोज्यतां मा प्रापदिति तदर्थो यदि शीघ्रमेव सुयोग्य प्रयत्नः स्यात्, सर्वोऽपि च जनसमूहस्तल्लाभं सुख गृह्णीयात्, किमन्यत् कर्तव्यं शिष्टतामाश्रयेत् ? । परंतु यत्र केचिज्जैननामधेयधारिणोऽपि सारासारादिविचाररहितत्वेन ग्रन्थोद्धारं वा तत्प्रकाशोद्भूतामुन्नति वाऽनिच्छवोऽसहिष्णवो द्विषन्तश्च तदुन्नति कुर्वाणैरपि सज्जनैर्विघ्नसंघातं संघटयन्ति । यत्र च केचन ग्रन्थोन्नतिमनिन्दन्तोऽपि, इच्छन्तोऽपि वाऽऽदर्शपुस्तकादिसाहाय्ये शक्तिमन्तोऽपि कर्मदोषवशीभूतत्वेन स्वशक्त्यामपि सहायतां विधातुं बहु सकुचन्ति । यत्र पुनः कतिपये श्राद्धास्तदुन्नतौ दत्तावधाना महता द्रव्यव्ययेन नातिशुद्धतया पुस्तकप्रकाशं प्रकुर्वन्तोऽपि महामोहापहतात्मानोऽमूल्यमवितीर्य मूल्येनापि चाऽविक्रीय मुद्रितान्यपि पुस्तकानि कपाटसंपुट एव कीटभोज्यतां नयन्तस्तद्विषये गजस्नानमेवाऽनुकुर्वन्ति । तत्र को नाम ग्रन्थोद्धारः ?, का नाम शास्त्रसमुन्नति ?, किं नाम शुभपरिणामित्वम् ?, ग्रहिलवृन्देष्विव यथा तथा चेष्टमानेषु तेषु हतैव शास्त्रोन्नतावस्था, व्यर्थैव पुण्योदर्कसभा-

वना, विनष्टप्रायैव च शासनोदयशुभाशेत्यवसीयते ।

कतिचित्तूद्वहन्तोऽपि ग्रन्थसंशोधनसाहसम्, अदधतस्तद्योग्यज्ञानसद्भावम्, कुर्वन्तोऽशुद्धतया पुस्तकसंपादनम्, प्रकटयन्तस्तत्तत्स्थलेषु ग्रन्थानामसन्त्यपि दूषणानि, अधिक्षिपन्तश्च तद्द्वारा निर्दोषानपि तत्कर्तॄन् महाचार्यान्, ज्ञानमात्रागर्विता इव सत्यापलापेनाऽसत्यप्रकाशेन च भ्रान्तिं नयन्ति जनसमाजम् । संवदति चैतत् श्रीपरिशिष्टपर्वाऽपि । तथाहि–अयं ग्रन्थः कलिकालसर्वज्ञश्रीहेमचन्द्रप्रभुभिः प्रणीतः, येषां व्याकरण–न्याय–साहित्य–काव्य–योग–नीति–स्तुति–च्छन्दः–कोशादिसर्वविषयकस्वतन्त्रशास्त्रविनिर्मातृणा वैयाकरणमुख्यत्वेन, तार्किकसिंहत्वेन, सैद्धान्तिकशिरोरत्नत्वेन, कविचक्रचक्रवर्तित्वेन च परितो विश्रुता सुकीर्तिः समस्तमपि जगत् संव्याप्याऽद्यापि संस्थिता । अधिकृतमत्र श्रीमहावीरदेवानन्तरजातानां श्रीजम्बूस्वामिप्रभृतीनां यथाजातमितिवृत्तम् । प्रकाशितश्चाय कलिकातास्थेन एसियाटिक्समाजेन । संपादकश्चास्य H Jacobi पण्डितः । स च तत्प्रस्तावनायां कर्तृविशिष्टप्रशंसानन्तरमेवमुल्लिखति–

" To the fact that Hemachandra has used Prâkrit originals, must be ascribed his occasional use of Prâkriticisms, e g, अवतृ[1], XII, 320 used in the sense of उत्तृ[2], and I, 67, 136, XIII, 104 उत्तृ, for अवतृ just as in Prâkrit ओयरइ and उत्तरइ are interchangeable The word पदानुसारिन् in XII, 137 is probably a wrong translation of Prâkrit पयाणुसारी which means पदानुस्मारिन्, compare जाइस्सर = जातिस्मर The name वीरमती in II, 82 is a Prâkriticism for वीरवती Unusual, if not against grammar, are the forms मातरपितराभ्या in III, 130, the adjectives चिकीर्ष् in VII, 9 and प्रतिचिकीर्ष् in VIII 453 instead of चिकीर्षु and प्रतिचिकीर्षु, the use of the simplex व्यतिइ instead of the causative Another proof of Hemachandra's careless and hasty composition is his rather too frequent use of mean-

---

१ अवतृ स्यात् । २ उत्तृ युक्तम् ।

ingless words to fill up an otherwise too short verse. His verses frequently bear the marks of rapid versification like those of the Latin poet who

> IN HORA SAEPE DUCENTOS,
> UT MAGNUM, VERSUS DICTABAT STANS PEDE IN UNO

Some verses contain metrical faults in श्रेष्ठिकृपभदत्तस्य, I, 264, किं बहुनार्थपरासुं II, 329, तौ मरुता प्रीणयितुं VI, 49, सम्यगुपलक्षयेहं, XI, 38, कान्दविकानथादिशत्, XI, 110, मालवकैशिकीमुख्य०, XIII, 59 the second and third syllables of the *pāda* are short, though this is expressly forbidden by writers on metrics In I, 288, II, 251, 484, III, 9, VIII, 370, XIII, 73 an enclitical monosyllabic word stands after the caesura against the rule The third *pāda* in III, 214 ललिताङ्गवत्तथाचास्ति consists of nine syllables, such *pādas* of nine syllables are not unfrequent in epical poetry, but classical poets avoid them There are some nicer rules on the Vipulâ form of the 'sloka which though not laid down in native works on metrics are always observed by Mahâkavis Hemachadra's verses set these rules aside nearly as often as they conform to them, e g, in III, 145 the first *pāda* is correct, but the third is bad"

यद्यप्ययं लेख सर्वथा प्रमाणाऽस्पर्शित्वेन विद्वत्सदस्सु कथञ्चिदप्यादरं नैवावहति इत्युपेक्षाक्षेत्रमेव प्रेक्षाणाम्, तथाऽप्यभ्युपगमवादेनापि तस्याऽसत्यता सप्रमाणं प्रदर्श्यमाना॰ सदिग्धाना विदग्धानां संशयापोहकत्वेनाऽवश्यमुपकर्त्री, इति प्रतिपाद्यते–

पूर्वं तावदत्र ग्रन्थे प्रयुक्ताना केषाञ्चिच्छब्दानां प्राकृतप्रयोगसादृश्यदर्शनेन प्राकृतमूलत्वसस्थापनमेव विचारासहम्, अतिप्रसङ्गात् । अतिप्रसङ्गश्च सस्कृतप्राकृतभाषयोः कार्यकारणभावेन बहुषु स्थलेष्वेकतया तत्सादृश्यवतां शब्दानां कुत्रापि सस्कृतग्रन्थेऽनिवार्यत्वेन सर्वेष्वपि सस्कृतपुस्तकेषु प्राकृतमूलत्वापत्ते । क. खलु सख्यावान् प्राकृतेऽपि देवादिशब्दाना समानत्वेन संस्कृते तत्प्रयोगं निषेधति ?, तत्प्र-

प्रोक्तारं च प्राकृतशब्दव्यवहारित्वेन दूषयति ?, दूषयन् वा कथमपहास्यतां न याति ? ।

प्रकृतौ भवं, प्रकृतेरागतं वा प्राकृतम्, प्रकृतिश्चैतस्य संस्कृतमेति सर्वानुमतसिद्धान्तेन प्राकृतस्याऽपि मूलं सस्कृतमेवेति न्याय्यम्, तथा चाऽसति प्रतिबन्धके ( विशेषनियमे ) सस्कृतानुसारिण्येव प्राकृतेऽपि शब्दार्थव्यवस्था, इत्युत्पूर्वकस्यावपूर्वकस्य च तॄधातोर्विशेषनियमं विनापि प्राकृते एकार्थतामङ्गीकुर्वन्, तदन्यथानुपपद्यमानत्वेन संस्कृतेऽपि तत्तत्पूर्वकस्य तॄधातोर्न्यायप्राप्ताया समानार्थतायां प्रयोगं कुर्वन्तं कर्तारं च दूषयन् प्रस्तावकः किञ्चित् पौर्वापर्यमपि न पर्यालोचयतीति चित्रम् । किञ्च, हेमचन्द्राचार्यस्यैव स्वतन्त्रमहाव्याकरणप्रणेतृत्वेन, अनेकाप्रतिमकोशकर्तृत्वेन च सर्वैरप्यङ्गीकृतप्रामाण्यतया तत्प्रयुक्तप्रयोगाणां स्वत सिद्धैव प्रमाणता, इति नात्राऽन्यानि प्रमाणान्यपेक्ष्यन्ते, तथापि 'तुष्यतु दुर्जन.' इति न्यायेनाऽनेकै सुविश्रुतकविवरैर्हेमचन्द्राचार्येणेव बहुश प्रयुक्तयोरेतयोर्विवादास्पदीभूतयो प्रयोगयो कानिचिदुदाहरणानि प्रदर्श्यन्ते—

"वनान्तपर्यन्तमुपेत्य सस्पृह क्रमेण तस्मिन्नवतीर्णदृक्पथे" ।

नैष–१–७५

"स्वर्गिवर्ग इव नाकिविमाना–दुत्ततार भुवि हीरकुमार"

हीरसौ–५–९

"विमानैर्व्योमतस्तूर्णमुत्तीर्णा वर्णिनीवृता." वासु–१–६५३

"खिन्ना इवोत्तेरुरमी अमिश्रमाचन्द्रार्यमस्यन्दनगा नभस्तलात्"

विजय–१०–२०

यदपि 'प्राकृतस्य पयाणुसारीति शब्दस्य पदानुसारीति यत् कर्त्राऽनूदितम्, तदसत्यमेव, किन्तु पदानुस्मारी इत्येव स्यात्, यथा जाईसर=जातिस्मर' इति प्रोक्तम्, तदपि एतस्य प्राकृतानुवादरूपत्वेनाऽस्वीकारादेव निरस्तम् । तदङ्गीकारेऽपि वा नैतत् कथमपि कर्तुर्दूषणमाधातुमलम्, संस्कृतस्य पदानुसारिशब्दस्याऽपि प्राकृते पया-

णुसारीतिरूपनिष्पादनात्, अर्थतोऽपि पादानुसारीति कर्त्रा प्रयुक्तस्यैवाऽत्र संगतत्वात्, अन्यत्राऽपि–

"ससिइव जस्स ताराणुसारिणिग्गयकलङ्कवलएण।"[2]

"गूढोयरतामरसाणुसारिणी भमरमालव्व।"[3]

इत्यादिषु बहुशः कविवरैः प्रयुक्तेषूपलभ्यमानस्य अणुसारिशब्दस्य संस्कृते प्रस्तुतानुसारमनुसारिरूपेणैवाऽनुवादस्य दर्शनाच्च। यथा 'अणुसरेइ=अनुसरति, अहिसारण=अभिसारण' इत्यादीनि। न हि संस्कृतस्याऽनुस्मरतिरूपस्यैव, अभिस्मारणशब्दस्यैव च प्राकृते 'अणुसरेइ, अहिसारणेति भवितुमर्हति, किन्तु प्रस्तावकानभिमत अनुसरति, अभिसारणेत्याद्यपि। तथा च प्राकृतद्व्याश्रयमहाकाव्ये–

"किस्सा तिस्सा जिस्सा सो जुवईए अणुसरेइ।"[4] ४–७४.

गौडवधेऽपि–

"अहिसारणम्मि त रिउसिरीए णिसियासिघडियपडिबिम्बो।"[5]७१२

न चात्र कथमपि अनुस्मरति अभिस्मारण चेति प्रस्तावकानुमत घटामाटीकते, प्रस्तुतासङ्गतत्वात्, तट्टीकाकाराभ्यामपि अनादृतत्वेन तिरस्कृतत्वाच्च। एतेनात्र प्रस्तावकप्रयुक्त जाईसरेत्येकदेशीयमुदाहरणमप्यकिञ्चित्करत्वेन सुतरा प्रत्युक्तम्। इत्यमुमतीव सुज्ञान विषयमजानन्, निर्दोषेऽपि दूषण प्रदर्शयन् प्रस्तावकः कियत् साहस प्रकटयतीति विदुषामेव विचारगोचरः।

यदपि 'वीरवतीति प्रयोज्ये प्राकृतानुसारेण वीरमतीत्यशुद्धरूपं

---

१ "नो णः" (हेम-प्रा–१।२२८) इति नस्य णत्वे "कगचज-" (१।१७७) इति दस्य लुकि "अवर्ण-" (१।१८०) इत्यनेनाकारस्य यत्वे सति। २ गौडवधे १०६४, "शिष्यत इव कथ्यत इव यस्य तारानुसारिनिर्गतकलङ्कवलयेन" इति तट्टीका। ३ गौडवधे १८, "गूढोदरतामरसाणुसारिणी भ्रमरमालेव" इति टीकायाम्। ४ "स कां याता युवतिमनुसरति पृष्ठानुयायी भवतीति भाव" इति टीका। ५ "अभिसारणेऽभिसरणकाले त्वं रिपुश्रियाः निशितासिघटितप्रतिबिम्ब" इति तट्टीकायाम्।

कर्त्रा प्रयुक्तम्' इत्युक्तम्, तदपि भ्रान्तिमूलमेव, ऊर्म्यादिपाठेन वीरशब्दस्य मतोर्मकारस्य वत्वनिषेधेन तस्य ( वीरमतीत्यस्य ) सूपपद्यमानत्वात्, गणपाठस्य चेष्टविषयत्वेन संज्ञायामेव तेन वत्वनिषेधात् "ह्रिणीयते[1] वीरवती न भूमिः" इत्यादौ वत्वस्याऽपि निष्पत्त्या बाधाभावाच्च ।

यदर्थं भिन्नमेव व्याकरणसूत्रम्, न ते महाकविभिरप्रयोज्यतां कदाप्यर्हन्ति, यथाऽमावास्यादि, भिन्नमेव चैतत्सिद्ध्यर्थं "मातरपितरं वा" (३।२।४७) इति सिद्धहेमव्याकरणस्य "मातरपितरमुदीचाम्" (६।३।३२) इति पाणिनीयस्य च सूत्रम्, इति मातरपितरस्य काव्यप्रयोगयोग्यत्वे निर्दोषं निष्पन्नेऽपि,

"पितरौ[2] मातापितरौ मातरपितरौ पिता च माता च"

"मातापितरौ[3] पितरौ मातरपितराविति प्रसूतातौ"

"मातापितरौ[4] पितरौ मातरपितरौ प्रसूजनयितारौ"

इत्यादिषु च बहुषु कोशेष्वपि तत्प्रामाण्य सवदत्सु मातरपितरशब्दस्य कर्त्रा प्रयुक्तस्य प्रयोगानर्हतां प्रजल्पन् प्रस्तावक. कथमिव प्रमाणतामङ्गीकुर्यात् ?, कथं च तस्याऽप्यभिमताना बहुशो दृश्यमानानां धवलार्जुनादिशब्दानामपि प्रयोगानर्हतां वदतो वदावदस्य वक्त्रं वक्रीकुर्यात् ? । एतेन चिकीर्षति प्रतिचिकीर्षतीति कर्त्रर्थे क्विपि सुष्ठु निष्पद्यमानयो ,"हास्यास्पदं[5] काव्यचिकी कवीनाम्" इत्यादिषु चोपलभ्यमानयोश्चिकीर्ष्-प्रतिचिकीर्ष्शब्दयोरप्यप्रयोज्यतादूषणं नितरां निराकारि ।

'व्यतिपूर्वकस्य इधातोः प्रयोक्तृरूपे व्यवहर्तव्ये णिवर्जितमेव तत् कर्त्रा व्यापारि, लघ्व्यामेव च वचनरचनायां कर्तव्यायां गुर्वी साऽकारि' इति निर्भयमुल्लिखंस्तत्स्थलमपि चाऽनिवेदयन् प्रस्तावकः

१ भट्टिकाव्ये द्वितीये सर्गे–३८ । २ अभिधानचिन्तामणौ मर्त्यकाण्डे २२४ । ३ वैजयन्त्या पृ० १७६ पं० ९४ । ४ अमरकोशे मनुष्यवर्गे– ३७ । ५ सम्यक्त्वसंभवमहाकाव्ये १–१४ ।

साहसिक इव विरूपमेवाऽऽचरन कथं प्रतिवचनीय ? । न हि तत्स्थलमात्रस्याऽप्यनिर्णीतौ निर्मूलमेव साधनवचनं वा दूषणाभिधान वा भूषणाय भवति । यदि चेदानीमपि प्रस्तावकस्तत्स्थाननिर्देशपूर्वकं स्वमतमाग्रहीष्यते, बद्धस्पृहेयमस्मल्लेखिनी सयुक्तिकोक्तिक्रमेण सुखमेव योग्योत्तराय प्रयतिष्यते, इत्यास्ता तावत् ।

छन्द शास्त्रसंबन्धे वदता प्रस्तावकेन कर्त्रा प्रयुक्तानि यानि च्छन्दांसि दुष्टत्वेनाऽभिहितानि, तानि निःशेषाण्यप्यत्र श्रीमतो हेमचन्द्राचार्यस्याऽपि स्वयं छन्दोऽनुशासनविनिर्मातुरन्यस्येव स्वतन्त्रप्रमाणत्वेनाऽवश्यादरणीयतया दूषणान्येव न भवन्ति, किमङ्ग ! तद्विवेकप्रयत्नेन ? । तथापि "येन केन प्रकारेण सतोषं जनयेत् सुधी " इत्युक्ति समाश्रित्य प्रस्तावकतोषपोषायाऽन्यैरपि च्छन्द.-शास्त्रैस्तत्सत्यता प्रकटीक्रियते–पूर्व तावद् "श्रेष्ठिऋषभदत्तस्य " इत्यादिषट्के द्वितीयतृतीयाक्षरलघुत्वेन "न प्रथमात् स्नौ" (पि०सू०५।१०) इति नियममालम्ब्य यद् दूषणमुपन्यस्तम्, तच्छन्द शास्त्रानवगाहफलमेव, यतोऽयं नियमोऽनुष्टुब्भेदविशेषे वक्त्रनामन्येव समस्ति, न त्वन्यत्र,"पादस्यानुष्टुब् वक्त्रम्" (पि०सू० ५।९) इत्येतदुत्तरमस्य नियमस्य प्रतिपादनेन तस्यैव तत्रानुवृत्ते. । तथा च तट्टीकाकारः "न प्रथमात् स्नौ" (पि०सू० ५।१०) इत्यस्यैव वृत्तौ– "अत्र वक्त्रजातौ पादस्य प्रथमाद् वर्णादूर्ध्वं सगणनगणौ न कर्तव्यौ" इति। न च कर्त्रा सर्वत्र वक्त्रच्छन्दास्येव व्यवहृतानि, किन्तु तन्नियमरहितान्यन्यान्यपि, महाकाव्यत्वेनाऽपरापरच्छन्दसामुपनिबन्धस्य समुचितत्वात्, इति क्व नाम दूषणदु स्थता ? । न चानुष्टुबिति पदस्येव वक्त्रमिति पदस्यापि "भ्रौ न्तौ च" (पि० सू० ५।१९) इति सूत्रं यावदनुवृत्ते., तदनन्तरं चाष्टाक्षरजातेरभावेन वक्त्र एवाष्टाक्षरजातेः पर्यवसिततया श्रीहेमचन्द्रव्यवहृतानामप्यष्टाक्षरवृत्तानां नितरां वक्त्रत्वापत्तिः, तथा च सिद्धमेव तद्दूषणसिद्धिरूपं समीहितमिति वक्तुं शक्यम्, तदुत्तरत्र तदभावेऽपि तत्पूर्वत्र "ग्लिति समानी " (पि० सू० ५।६) इत्यादिसूत्रविनिर्दिष्टानामष्टाक्षरवृत्तानां भूयसां

सद्भावात् "वितानमन्यत्" (पि०सू० ५।८) इति सूत्रोक्ते च्छन्दसि सुतरां तत्समावेशेनोक्तदूषणस्य दूरोत्सारितत्वात्। अत एव तत्र ( पिङ्गलशास्त्रे) "वितानमन्यत्" इति सूत्रवृत्तौ प्रदर्शितम्–

"अन्यदतो हि वितान श्वेतपटेन यदुक्तम्।
चित्रपदापि च भौ गौ तेन गतार्थमिवेतन्" ॥१॥

इत्युदाहरणमपि सगच्छते, अन्यथाऽत्राऽपि द्वितीयतृतीयाक्षरलघुत्वेनाऽनिवार्यो दूषणप्रसङ्गः, अनिष्ट चैतन् प्रस्तावकस्याऽपि, नियामकाभावेन संपूर्णेऽपि शास्त्रे दुष्टत्वस्य प्रसक्ते । न चैतेन यत्रैव वृत्ते भगणद्वय गुरुद्वय च क्रमेणोपलभ्यते, तत्रैव तद्दूषणाभाव, न त्वन्यत्र, इत्यपि वचनं चारुतामश्चति। "वितानमन्यत्" ( पि०सू० ५।८) इत्यत्र अन्यदिति व्यापकनिर्देशेन समानीप्रमाण्यौ व्यतिरिच्य सर्वस्याऽप्यष्टाक्षरच्छन्दसो ग्रहणात्, इतरथा "वितानं भौ गौ" इत्येव सूत्र कुर्यात्। न चेदमास्माकमेवाऽऽम्नातम्, तट्टीकाकारेणाऽप्येवमेव प्रतिपादनात्, तथाहि–" किं च 'वितानमन्यत्' इति ब्रुवन् सूत्रकारो वितानस्यानेकप्रकारता दर्शयति, अन्यथा 'वितानं भौ गौ' इत्येव विदध्यात्" इति । नन्वेवमप्येकस्मिन्नेव सर्गे क्वचन वक्त्रवृत्तम्, कुत्रचिद् विपुलाच्छन्द, क्वचिच्च वितानमिति भिन्नभिन्नवृत्ताङ्गीकारेऽस्य महाकाव्यत्वक्षति, "पद्य प्राय -" इति महाकाव्यलक्षणे सर्गान्त्यवृत्तसादृश्यप्रतिषेधेन तदतिरिक्ताना सर्गान्त पातिना वृत्तानां समानताया [1] सामर्थ्याल्लाभात्, विशेषनिषेधस्य शेषाभ्यनुज्ञानान्तरीयकत्वात्, इति चेद्। मैवम्, वक्त्रविपुलयोरिव वितानस्याऽप्यनुष्टुबन्तर्भावेन तेषा सर्वेषामप्यनुष्टुप्तया समानत्वेन महाकाव्यलक्षणसंसिद्धे, अन्येष्वपि सर्वेषु महाकाव्येष्वनुष्टुप्सर्गे व्यवहृतवक्त्राद्यनेकभेद एवमेव लक्षणसमन्वयात्। अनुष्टुप्त्व च वितानस्य "पादस्यानुष्टुब् वक्त्रम्" ( पि० सू० ५।९ ) इत्यत सूत्रात् सिंहावलोकितन्यायेनाऽनुष्टुबधिकारात्, इतरथा "ग्लिति समानी" ( पि० सू० ५।६ )

१ श्रीहेमचन्द्रप्रणीतकाव्यानुशासनेऽष्टमा याये पृ० ३३० ।

इत्यस्मिंस्ततोऽपि पूर्वसूत्रेऽष्टाक्षरनियमाभावेन व्यवस्थाहानिप्रसङ्गात्, तट्टीकायामप्यस्याशयस्योपलभ्यमानत्वाच्च[1]।

यच्च ततोऽनन्तर काव्यषट्के चादे. पादादित्वं क्वचन पादान्त्यत्व च दूषणमभ्यधित प्रस्तावक, तदप्ययुक्तम्, पादादौ चाद्यप्रयोगनियमस्य प्रायिकत्वात्। प्रायिकत्व च तस्य "पादादौ[2] न च वक्तव्याश्चादय. प्रायशो बुधै." इत्यादितन्नियमप्रतिपादक एव सूत्रे प्रायश शब्दस्य साक्षाल्लक्ष्यमाणत्वात्[3]। तथापि तन्नियमस्य सार्वत्रिकत्वाङ्गीकारे

"रे राक्षसा[3]! कथयत क्व स रावणो यो रत्नं रवीन्दुकुलयोरपहृत्य नष्ट."

"आ[3]! सर्वत कैरवमापिबन्ति ज्योत्स्नां कषायमधुरा मधुना चकोरा"

मुखाऽर्पितैकाङ्गुलिसञ्ज्ञयैव मा चापलायेति गणान् व्यनैषीत्[4]"

"क्रियासु युक्तैर्नृपचारचक्षुषो न वञ्चनीया. प्रभवोऽनुजीविभि[5]"

"न[6] क्षोणीभङ्गभीरु. कलयति च शिर कम्पनं तत्र विद्म"

"चरणगतसखीवचोऽनुरोधात् किल कथमप्यनुकूलता चकार[7]"

इत्यादावपि दूषणप्रसङ्गात्, तत्प्रसङ्गसङ्गमस्य च प्रस्तावकस्याऽप्यनिष्टत्वात्। किञ्च, "चादय प्रायशो बुधै" इति पादादावेव चादिनिर्देश कुर्वन्नालङ्कारिकशिरोमणि. स्वय ज्ञापयति—चतुर्थपादादौ स्वरादिपदसहिताश्चादयो नैव दोषायेति सहृदयहृदयसंवेद्यमर्थम्, इतरथाऽत्रापि पादादावेव चादिनिर्देशेन दूषणप्रसञ्जनस्य निवारयितुमशक्यतया "प्रायशश्चादयो बुधै" इत्येव वक्तव्यस्योचितत्वात्। इति सूक्ष्मेक्षिकयाऽपि कुतस्तत्र दूषणावकाश.? । पादान्ते प्रयुक्तस्य तु चादेर्दूषणत्वं पूर्वोक्ततन्नियमादौ नैवोपलभ्यत इत्यस्वीकारादेव तिरस्कृतम्। तदुररीकरणेऽपि वा

---

१ तथाहि–"'पादस्यानुष्टुब् वक्त्रम्' (पि० सू० ५।९) इत्यत सूत्रात् सिंहावलोकितन्यायेनाऽनुष्टुब्ग्रहणमनुवर्तते। तेनाऽष्टाक्षर पादो यावद्धि" इत्यादि। २ वाग्भटालङ्कारे १--१७। ३ वाग्भटालङ्कारे तस्यैव श्लोकस्य सिंहदेवगणिरचिताया टीकाया प्रायश.शब्दस्यैव चारितार्थ्यं निदर्शनम्। ४ कु० सं० ३–४१। ५ कि० १–४। ६ नैष० १२--३९। ७ शिशु० ७–११।

" [1]स्वयं तदङ्गेषु गतेषु चारुतां परस्परेणैव विभूषितेषु च "

" [2]हरिराकुमारमखिलाभिधानवित् स्वजनस्य वार्तमयमन्वयुङ्क्त च "

"[3]त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वत "।

"[4]मनस शिखराणां च सदृशी ते समुन्नति "

इत्यादौ प्राय सर्वत्राऽपि महाकविसूक्तेषु तद्दूषणप्रसक्ते केनाऽप्यपहस्तयितुमशक्यत्वात्, इत्युभयतोऽपि पाशारज्जु प्रस्तावकस्य।

यत्पुन. " ललिताङ्गवत् तथा चाऽऽस्ति " इत्यत्रैकस्मिन्नेव पादे नवाक्षरत्वेन तच्छन्दसो दुष्टत्वमभिहितम्, तदप्यनर्हम्, एवजातीयस्याऽपि च्छन्दस सद्भावेनैतस्य नियमभङ्गासङ्गतत्वात्। स्पष्ट चैतद् गणरत्नमहोदधौ। तथा च तत्रोल्लेख.–"अयमप्यस्ति वृत्तप्रभेदो यत्रैक: पादो नवाक्षरोऽन्येऽष्टाक्षरा " इति । अन्यैरप्येतानि बहुशो व्यवहृतानि यथा–

" परिषद्बलाद् महाब्रह्मैराट नैकटिकाश्रमान् "

"प्रधाने कर्मण्यभिधेये लादीनाहुर्द्विकर्मणाम् ।

अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मण: " ॥ १ ॥

न चैतच्छन्दोविशेषस्य बहुप्रसिद्धत्वाभावेन व्यवहृतिर्दोषाय इति वक्तुं योग्यम्, महाकाव्यत्वेन विशिष्टशब्दप्रयोगस्येव विशिष्टच्छन्दोग्रहणस्याऽपि दोषास्पदत्वाभावात्, प्रत्युत शोभावहत्वेन गुणरूपत्वात्।

यदपि " मा साहसमिति मुहु " इत्यत्र नविपुलाया चतुर्थाक्षरस्य लघुत्वेन स्खलितविलसितमिति व्याहृतम्, तदप्यविचारितरमणीयम्, विपुलायां चतुर्थाक्षरेण गुरुणैव भवितव्यमिति निश्चयस्य कुत्रचन च्छन्द शास्त्रेऽनुपलम्भात् । आम्नायस्य तु तादृशस्य च्छन्दोविद्भिरपि प्रायिकत्वेनैव कक्षीकारात्। तथा च पिङ्गलस्यैव टीकाकार – " सर्वासां विपुलानां चतुर्थो वर्ण प्रायेण गुरुर्भवतीत्याम्नाय: " इति। अत एव

" शूर शौरिरशिशिरैराशाशैराशु राशिश " (माघ० १९--१०८)

---

१ नैष० १५--४८ । २ शिशु० १३--६८ । ३ कु० २--१५। ४ कु० ६- ६६ ।

इत्यादयो महाकविव्यवहारा सङ्गच्छन्ते । अन्यथाऽत्रापि सत्यपि चित्रगुणे छन्दसस्तु दुष्टुत्वप्रसङ्ग कथ सङ्गति नेयात् ? । स्पष्टरूपेणैव निष्टङ्कित चैतत् पिङ्गलस्यैव "औ न्तौ" (५।११) इति विपुलाप्रतिपादके सूत्रे तविपुलाप्रसङ्गे तट्टीकाकारेण

" वन्दे देवं सोमेश्वर जटामुकुटमण्डिनम् ।
खट्वाङ्गधर चन्द्रम शिखामणिविभूषितम् " ॥ १ ॥

इत्येतच्चतुर्थाक्षरलघुरूप निदर्शनमुपन्यस्यता हलायुधेन । इत्यलमतिपल्लवितेन ।

एव च तत्सर्वमपि प्रयोगजातं छन्दोजालं च निर्बाधं स्वपरानेकप्रमाणसमिद्ध भवत् तत्प्रणेतॄणा वाऽसत्यप्रयोजकता सूचयति, निर्दूषणं भूषणमेव च दूषयता प्रस्तावकस्य वा उपालम्भयोग्यता ख्यापयतीति स्वय विदाकुर्वन्तु विद्वांसः ।

प्रभूत चात्र विषये वक्तव्यम्, तच्चोक्तमेव प्रस्तावकेन सह पूर्व जाते एतद्विषयके एव पत्रव्यवहारे । प्रकटीभविष्यति चाय स्तोकेनैव कालेन, इति विशेषमभिलाषुकैस्तत्रैव द्रष्टव्यम् । इह तु तत्सर्वमुच्यमानं विस्तराय भवद् न समीचीनता भजेदिति नाभिधीयते ।

तदेवं स्पष्टमेव निजेऽज्ञाने प्रकटीकृतेऽप्येतावताऽसंतुष्यन्नधिकाधिकं तदुद्घोपयितुमिव स एव H Jacobi महाशयः श्रेयस्करमण्डलप्रकाशितस्य श्रीप्रद्युम्नसूरिविरचितसमरादित्यसंक्षेपस्याऽपि प्रस्तावनायामेवमेव तत्कर्तारमाक्षिपति । तथाहि—

* Still his work is not free from faults, even against grammar, the worst of which, a Prakriticism, इमे instead of एभि, occurs VIII 520

बाढमास्माकीनो विश्वास, यदयं प्रस्तावकमहाशयः प्रागेवाऽत्र

* तथापि तेषा प्रद्युम्नसूरीणामयं ग्रन्थो व्याकरणसंबन्धिदूषणै रहितो नास्ति, येषु सर्वतोऽप्यपकृष्टं " एभि " इत्यस्य स्थाने " इमे " इति प्रयोगकरणम्, इद च रूपं प्राकृतानुसारि " इत्यर्थः ।

विषये स्तोकमपि विचार निरमास्यत, न हि कदाप्येतादृशी समालोचना विधातु प्रावर्तिष्यत, विभक्त्यन्तप्रतिरूपकाव्ययत्वेन इमैरिति प्रयोगस्य "विभक्तिथमन्ततसाद्याभा" (सि० हे० १।१।३३) इति व्याकरणसूत्रेणैव ससिद्धेर्व्याकरणातिविरुद्धत्वकथनस्य कथमप्यनिष्पत्ते, ते मे इत्यादिवत्, कथमन्यथा "न मे श्रुता नापि च दृष्टपूर्वा" इत्यस्याऽपि निष्पत्ति ? कर्तृत्वेन षष्ठ्या अघटनात्। यथा त्वत्र विभक्तिप्रतिरूपकाव्ययत्वमेव शरणम्, तथा प्रकृतेऽप्यस्तु, समानत्वाद् न्यायस्य।

"इयन्त इति सख्यान निपातानां न विद्यते।
प्रयोजनवशादेते निपात्यन्ते पदे पदे" ॥ १ ॥

इत्यनेनापि दत्तहस्तावलम्बनेन तस्य सुदृढीकृतत्वाच्च। किञ्च, इदंशब्दव्यतिरिक्तोऽकारान्तोऽपि इमशब्दोऽस्ति, तस्यैव तृतीयाबहुवचने निर्बाध 'इमै' इति प्रयोगस्य ससिद्धि। न चाऽकारान्त इमशब्द कुत्रापि नोपलभ्यत एवेति वाच्यम्, पाणिनिव्याकरणस्यैव "प्रत्नपूर्वविश्व-इमात्-" (५।३।१११) इति सूत्रे तन्निर्देशस्य व्यक्त वीक्ष्यमाणत्वात्। नाप्यय छान्दस एव शब्द, तेन सूत्रेण थाल्प्रत्ययस्यैव च्छन्दसि विधानेन इमथा इति प्रयोगस्यैव च्छान्दसत्वात्, प्रकृतेस्तु इमशब्दरूपाया प्रत्नादिशब्दवच्छुद्धसस्कृतस्वरूपत्वात्। न चैवमपि तत्रार्थासङ्गतत्वप्रसङ्ग, इमशब्दस्याऽपि इदशब्दसमानार्थकत्वेन तदर्थस्य तत्र सुघटत्वात्, तत्सूत्रस्यैव वृत्ति कुर्वता हरदत्तमिश्रेणाऽपि पदमञ्जर्यामेवमेवाभिप्रेतत्वात्, तथा च तत्पाठः"इमशब्द इदमा समानार्थ प्रकृत्यन्तरम्" इति। न चेदं रूपमर्थतोऽप्येतत्सदृशमन्यत्र महाकाव्ये कविभिर्नैव व्यापारीत्यपि वक्तुमुचितम्,

"स्वार्थ तद् वितनोम्यहं किमधुना व्यर्थैर्विकल्पैरिमै" (१६-२९५)

इत्यत्राऽपि[1] तद्व्यवहारदर्शनात्। एतेन तत्प्राकृतत्वप्रतिपादनमपि नितरां निराकृतम्।

---

१ श्रीशान्तिनाथमहाकाव्येऽपि।

एव व्याकरणेन नि शङ्कं निष्पन्नमन्यकविभिरप्यादृतं च 'इमै' इति प्रयोग कुर्वाण सूरिवर्य 'व्याकरणापेक्षयाऽतिविरुद्धत्वेनेद महद् दूपणम्' इति नितान्तमिथ्योल्लेखेनाऽऽक्षिप्यतोऽस्य पाश्चात्यविदुषो लेखिनी कथमिव किञ्चिदपि सङ्कोचं नाकार्षीत् ?, कथ वा स्वय निजे पादे कुठार प्रक्षिपन्तमनुकुर्वता, वस्तुत' स्वस्य जैनाऽज्ञानप्रसारकत्वमेव निर्धारयता, एतत्पुस्तकं प्रकाशयता श्रीजैनज्ञानप्रसारकमण्डलेन सा ( आक्षेपकलेखिनी ) समुत्तेजिता ?, इति नैव विज्ञातुं शक्यते ।

यत्पुन प्रस्तावकमहाशयेन तस्यैव प्रस्तावनायामाक्षेपविवर्जितं तत्तदाचार्येतिहासादिस्वरूप निरूपितम्, तदप्यनालोचितमेव, स्थलाभावेनाऽधिकृताऽसङ्गतत्वेन त्वत्र तदुपेक्ष्य यथावकाशमन्यत्रैव विस्तरेण समालोचयिष्यते, प्रसङ्गवशेनाऽत्रापि किञ्चित् पुरत प्रतिपादयिष्यते चेति ।

इत्थं चेतस्ततश्चक्षु क्षेपेण साक्षाल्लक्ष्यमाणां मिथ्याक्षेपतत्परैः कैश्चिन् पाश्चात्यै , बाह्याडम्बरविडम्बितैश्च स्वय जैनैरपि विधीयमानां केनाऽप्यप्रतिविधीयमाना च परित शास्त्रावनतिमवलोक्य कः सत्याग्रही सहृदय स्वहृदये दु ख नोपलभेत ?, कश्च शासनहितैषी तामुन्नतिरूपेणाऽङ्गीकृत्य सतोषमुद्भावयेत ?, को वा विचारचारुचेतास्तन्निराकरणायोचित प्रयत्नमावश्यक नावबुध्येत ? । इति तत्तद्विषयान् ग्रन्थान् यथातथं प्रकाशयितुं सुविहितसुगृहीतनामधेयै परोपकारैककर्तव्यनिरतैरस्मद्गुरुभिः शास्त्रविशारदजैनाचार्यपदवीमलङ्कुर्वद्भि. श्रीविजयधर्मसूरिभिर्महता परिश्रमेणेयं श्रीयशोविजयजैनग्रन्थमालोदपाद्यत । यस्यामद्यावधि व्याकरण–न्याय–काव्येतिहासादिविविधविषयाणामेकोनविंशतिर्ग्रन्थरत्नानि प्राकाश्यमधिश्रितानि । अद्यैतच्छ्रीशान्तिनाथचरित्रं नाम महाकाव्यरूपं विंशं ग्रन्थरत्नमपि प्रकटीक्रियते, यद् महाकाव्यपरत्वेऽस्यां प्रथमत्वमेवाऽश्नुते ।

विनिर्मातारश्चास्य श्रीतपागच्छगगनाङ्गणगगनाध्वगाः श्रीपेरो-

१ प्रशस्तौ श्लो—९

जराजेन्द्रसभासमासादितसमानना महाकवय श्रीमुनिभद्रसूरयोऽभूवन् । तैर्ग्रन्थस्याऽस्य प्रणयन विक्रमार्काद् १४१० संवत्सरे व्यधायि, इत्येतत्प्रशस्तिप्रान्तप्राप्तेन

"अन्तरिक्षरजनीहृदीश्वरब्रह्मवक्त्रशशिसंख्यवत्सरे ।
वैक्रमे शुचि तपोजयातिथौ शान्तिनाथचरित व्यरच्यत" ॥१७॥

अनेन पद्येन समवगम्यते । विनिर्णीयते चैतेन चतुर्दशशताब्यन्तरूप. पञ्चदशशताब्द्यादिभूतश्चैतेषा ग्रन्थग्रन्थकाना स्फुटमेव सत्तासमयः ।

अधिकृतं चात्र समूलमुन्मूल्य शाश्वतशर्ममर्मभित्कर्ममहामहीरुहसमूहम्, तूर्णमुत्तीर्य विशालासारससारापारपारावारम्, सम्यक् सप्राप्याऽपरप्राणिदुष्प्रापा परां काष्ठामधिष्ठितां परमेष्ठिताम्, ऐकान्तिकाऽऽत्यन्तिकैकसौख्यसौधमध्यमध्यासीनाना धर्मचक्रवर्तिनां श्रीशान्तिनाथभगवता सम्यक्त्वाप्तिभवत प्रारभ्य निर्वाणावधि विविधरसाधायि पवित्रताकरं चरित्रम् । उपनिबद्धानि चान्यान्यपि प्रासङ्गिकानि चेतोऽमन्दानन्दविधायीनि सरसमुपवर्णितानि कथान्तराणि ।

एभिश्च ग्रन्थकर्तृभिर्मुखप्रतिमुखादिसन्धिसौन्दर्य परिपुष्णद्भि, विचित्रा वचनरचनां प्रपञ्चयद्भि, दुष्करयमकालङ्कारमयं सर्गमप्युपन्यस्यद्भि, ऋतुनगरारामविहारपर्वतार्णवादि यथोचितं परिवर्णयद्भि, रसस्वरूपानुरूपसदर्भ च वितन्वद्भि कविपुरन्दरायमाणै सर्वत्रापि रससुधाधाराऽविघातिन्या सहृदयहृदयहृदयङ्गमया सुसंबद्धपद्धत्या निर्वर्तितो ग्रन्थोऽय महाकाव्यपङ्क्तावुत्तमं स्थानमुपलम्भित., आपादितश्चान्येषु महाकाव्येषु भूयो लब्धप्रसरमप्यप्रस्तुतवस्तुविस्तराभिधान दूषणं दूरमुत्सारयद्भिस्ततोऽपि शोभातिरेकम् ।

यद्यप्येतेषा सूरिवराणामेतदतिरिक्तग्रन्थविरचितौ साधकं वा बाधकं वा किञ्चिदपि क्वचिदप्यद्यावधि प्रमाणं नोपलब्धम्, तथापीदमेकमपि सुमनोमनोहर महाकाव्यं स्वान्यथानुपपत्त्या कर्तृणां निसर्गप्रतिभाप्रकर्ष, अन्यान्यशास्त्रसुनिष्णातत्वं च निर्बाधमनुमापयति ।

स्पष्टयन्ति चैतत् तदानीतना श्रीदेवेन्द्रसूरयोऽपि स्वकृतप्रश्नोत्तररत्नमालाया संशोधकत्वेनैतानेव पूज्याचार्यवर्यान् निर्दिशन्तस्तत्प्रशस्तौ–

"तस्यानुजेन देवेन्द्रसूरिणा विक्रमार्कत ।
नन्दयुग्मपयोराशिशशाङ्कप्रमवत्सरे ॥ १७ ॥
प्रश्नोत्तररत्नमाला विवृत्तिर्विदधे मुदा ।
शोधिता च लसद्भद्रैः श्रीमुनिभद्रसूरिभिः" ॥ १८ ॥

एतस्य श्रीमुनिभद्रसूरिविरचितस्य श्रीशान्तिनाथमहाकाव्यस्य मुद्रणावसरे श्रीभावनगरसंघभाण्डागारसंबन्धि प्राचीनं शुद्धतरं चादर्शपुस्तकमेकं प्रापयितुर्महामहिम्नस्तस्य श्रीसंघस्य महोपकारः स्वीक्रियते ।

अन्यान्यपि यान्यपरापराचार्यवर्यविरचितानां श्रीशान्तिनाथचरित्राणां पुस्तकान्यत्रोपयुक्तानि तानि, तदर्पयितॄणां महाशयानां धन्यवादपुरस्सरं नामानि च प्रकटीक्रियन्ते–

१ श्रीशान्तिनाथचरित्रम्, प्राकृतम्, श्रीहेमचन्द्राचार्यगुरुभिः[1] श्रीदेवचन्द्रसूरिभिः प्रणीतम् । श्रेष्ठिवर्यहालाभाईतनुजभोगीलालद्वारा श्रीअणहिल्लपुरपत्तन(पाटन)स्थस्य 'फोफलीयावाडा आगलीशेरी' इत्यस्य भाण्डागारस्य ।

२ ,, संस्कृतम् ( त्रिषष्टिशलाकापुरुषचरित्रान्तर्गतम् ) श्रीहेम-

---

१ यच्छ्रीत्रिषष्टिशलाकापुरुषचरित्रप्रशस्तौ श्रीहेमचन्द्राचार्या एव—

" शिष्यस्तस्य च तीर्थमेकमवनेः पावित्र्यकृज्जङ्गमं
स्याद्वादत्रिदशापगाहिमगिरिर्विश्वप्रबोधार्यमा ।
कृत्वा स्थानकवृत्तिशान्तिचरिते प्राप्तः प्रसिद्धिं परां
सूरिर्भूरितपःप्रभावविवसतिः श्रीदेवचन्द्रोऽभवत् ॥ १४ ॥
आचार्यो हेमचन्द्रोऽभूत् तत्पादाम्भोजषट्पदः ।
तत्प्रसादादधिगत—ज्ञानसंपन्महोदयः" ॥ १५ ॥

एतेन श्रीहेमचन्द्रप्रभूणां समय एवैतेषामपीति सुनिश्चितम् । प्रभुसमयश्च विक्रमार्काद् द्वादशशताब्दीरूपः सुप्रसिद्ध एव ।

चन्द्राचार्यैर्विरचितम् । भावनगरश्रीजैनधर्मप्रसारकसभया मुद्रितम् ।

३ ,, ,, राजगच्छीयश्रीमाणिक्यचन्द्रसूरिरचितम् । पादलिप्त(पालीताणा)नगरस्थवीरबाईपाठशालाभाण्डागारस्य ।

४ ,, ,, श्रीपूर्णिमागच्छीय–अजितप्रभसूरिग्रथितम् । प्रारम्भत एवास्यां ग्रन्थमालायां सर्वथा साहाय्यं वितरीतृभिर्विद्वद्वर्यैर्मुनिराजश्री–इन्द्रविजयमहात्मभिः संपादितम् । कलिकातास्था एसियाटिक्समाजेन प्रकाशितम् ।

५ ,, ,, श्रीमुनिदेवसूरिविनिर्मितम् । अस्मद्गुरुवर्यश्रीशास्त्रविशारदजैनाचार्यविजयधर्मसूरीणाम् ।

---

१ एभिरेव काव्यप्रकाशस्य विद्वत्तापूर्णा सुविख्याता सकेतनाम्नी टीकाऽकारि । एतेषा समयश्च त्रयोदशशताब्द्यात्मक इति तैरेव विहितस्य श्रीपार्श्वनाथमहाकाव्यस्य प्रशस्तिगतेन

"रसर्षिरविसंख्याया सभाया दीपपर्वणि ।
समर्थितमिद वेला—कूले श्रीदेवकूपके" ॥ १ ॥

इति पद्येन व्यक्तं विनिश्चीयते ।

२ एतन्निर्माणसमयस्तु—

"त्रयोदशस्वब्दशतेष्वतिक्रान्तेषु विक्रमात् ।
वर्षे सप्तोत्तरे वैशाखस्य पक्षे च निर्मले" ॥ १ ॥

इति तत्प्रशस्तावेव निर्णीतो ग्रन्थकर्तृभि ।

३ यत्तु प्रद्युम्नसूरिविरचितस्य समरादित्यसंक्षेपस्य प्रस्तावनाया H Jacobi पण्डित "Devasuri his Upamitibhavaprapanchakathasaroddhara (in Samvat 1298) and his Santinathacharita,"– इत्यादिना देवसूरिकृतं उपमितिभवप्रपञ्चाकथासारोद्धारं श्रीशान्तिनाथचरित्र च प्रद्युम्नसूरिर्व्यशोधयत् इति ज्ञापयति, प्रमाणयति चैतन श्लोकेन—

"यो वादीश्वरदेवसूरिसुगुरोर्मूलक्रमे सूरिणा
चक्रे श्रीमदनेन्दुना निजपदे तेनाग्रवृत्तश्रिता ।
काव्ये श्रीमुनिदेवसूरिकविना श्रीशान्तिवृत्ते कृते
श्रीप्रद्युम्नमुनीन्दुधीरुचिशुचि सर्गोऽगमत् सप्तम" ॥ १ ॥

तच्चिन्त्यम् । प्रद्युम्नसूरिसंशोधितस्य शान्तिनाथचरित्रस्य श्रीमुनिदेवसूरि-

६ ,, ,, गद्यात्मकम्, श्रीभावचन्द्रसूरिगुम्फितम्, पंन्यासश्रीकमलविजयानाम् ।

७ ,, गूर्जरभाषानिबद्धं पद्यात्मकम्, पण्डितरामविजयमुनिविहितम् । श्रा०-भीमसिंह-माणेकेन मुद्रितम् ।

तदेवमनेकग्रन्थाधारेण संशोध्य विषमस्थले टिप्पनादिना विशदीकृत्य च महता परिश्रमेण संपादितेऽस्मिश्चित्ताह्लादके पुस्तकेऽङ्गीकुर्वन्तु नयनार्पणप्रयासं विद्वांस, व्यवस्यन्तु सततमभ्यासाय व्युत्पत्तिमिच्छवः, संसृजन्तु भृशमादरं भगवद्गुणैकपक्षपाता, सफलयन्त्वेवमस्मत्परिश्रमम्, विशोधयन्तु च दृष्टिदोषनिबन्धनानि वा, अज्ञानसहभावीनि वा, अक्षरयोजकसंभवीनि वा यत्र कुत्रचन स्थितानि स्खलनानि सौहार्दावदाततहृदया इति

प्रार्थयेते-
हरगोविन्द-बेचरदासौ ।



---

भिरेव विनिर्मितत्वात्, न तु देवसूरिभि, अनेन श्लोकेनापि श्रीमुनिदेवसूरीणामेव तत्कर्तृत्वस्य प्रतिपादनात्,

"पूज्यश्रीमुनिदेवसूरिरचितश्रीशान्तितीर्थेश्वर-" (पृ--३५४)

इत्येवमत्रापि तत्संवादस्य समासादनाच्च । श्रीदेवसूरेस्तु ग्रन्थकर्तृणा मुनिदेवसूरीणा प्रगुरुत्वात्, तेनैव श्लोकेन तदर्थस्याप्युपलभ्यमानत्वात् । एव यदुपमितिभवप्रपञ्चकथासारोद्धारस्यापि कर्तृत्वेन देवसूरे प्रतिपादनम्, तदपि विचारणीयमेव, श्रीदेवेन्द्रसूरीणा तत्प्रणेतृत्वात् (see 6th Report by Peterson page X)

१ "संवत् सत्तर पंचासीआ वर्षे वैशाख मास कहाया ।
शुदि सप्तमी गुरु पुष्य संयोगे पूरण कलश चढाया" ॥ १ ॥

इत्यन्तिमपद्येन तन्निर्माणसमयो विक्रमार्काद् १७८५ इति निर्णीयते ।

विद्योतमानमणिसञ्चयसन्निबद्ध-
सोपानराजिरमणीयमवेक्षणीयम् ।
उद्दण्डहेममयदण्डलसत्पताकं
शब्दायमानमधुरध्वनिकिङ्किणीकम् ॥ ५ ॥
(युग्मम्)

भो भो. ! कुमारतिलकौ ! समर विहाय
वाक्य मदीयमवधारयतां भवन्तौ ।
इत्युद्धतस्वरमुवाच विमानवर्त्ती
विद्याधर. समभिसृत्य रयेण चैक. ॥ ६ ॥

आस्वादित हरति जीवितमाशु काल-
कूटं स्वतन्त्रमयुत माणिमन्त्रतन्त्रै ।
ज्वालाकलापजटिलज्वलनोऽपि देहं
स्पृष्ट परं दहति हव्यनिपातवृद्ध ॥ ७ ॥

कोपप्रवर्त्तिसमवर्त्तिकृपाणिकाभा.
सर्पा दशन्ति सुतरां विहितापराधम् ।
सेव्या कथ नु विषयास्तु विवेकभाजां
यस्मादिमे तदतिरिक्तविकारकारा ॥ ८ ॥

आपातमात्रमधुरा परिणामवृत्त्या
वैरस्य कारणमनन्तरमाश्रयन्त ।
किंपाकपाकिमफलानुकृतं दधाना-
हेया कथ न विषया विदुषामिमे स्यु' ॥ ९ ॥

त्याज्या विशिष्य च भवन्ति भवादृशाना
विज्ञानशास्त्रपरमार्थविशारदानाम् ।
यस्या कृतेऽसमरस समरस्य सौम्या-
वातायते भवति सा भवतोस्तु जामि ॥ १० ॥

जामि कथं कथितवानसि नाविमा त्व
विद्याधरान्वयनभस्तलतिग्मभानो ! ।
युष्मादृश किमविमृश्य निवेदकत्व

सम्भाव्यते कथमपि प्रतिबद्धतापि ॥ ११ ॥
एतन्निशम्य वचन नृपनन्दनाभ्या
सम्भाषित पुनरभाषत खेचरेन्द्र. ।
शुश्रूषुताऽस्ति यदि वा तदिदं विमुच्य
युद्धं युवा च शृणुत विहितावधानम् ॥ १२ ॥
अस्तीह जम्बुतरुविश्रुतनामधेये
द्वीपेऽन्तरीपसुभगेऽपि महाविदेहे ।
क्षेत्रे सनातनजिनेश्वरधर्मपात्रे
सीतामहासरित उत्तरमुत्तरेण ॥ १३ ॥
सौराज्यराजि विजये खलु पुष्कलाव-
त्याख्ये धराधरशिरोमुकुटायमानः ।
वैताढ्य इत्यभिधया सुधयानुलिप्तः
किं श्वेतिमानमिह यो बिभराम्बभूव ? ॥ १४ ॥
विस्तारमावहति विंशतियोजनानि
पञ्चाधिकानि किल तद्द्विगुणोच्चभावम् ।
यो राजत. स्फटिकभूधरवद् विभाति
कूटैर्विभात्यभिनवैर्नवभिर्विचित्रै. ॥ १५ ॥
तत्र प्रवृद्धनयराजिविराजिनामा-
दित्याभमस्ति पुटभेदनमुत्तरस्याः ।
श्रेणेर्विभूषणमदूषणमेव पञ्च
पञ्चाशता वरपुरैरुपशोभितायाः ॥ १६ ॥
यत्रोन्नतानि जिनराजनिकेतनानि
राजन्ति हेमघटितानि सकेतनानि ।
पूजाविधिं विदधतां जिनपुङ्गवानां
मूर्त्ता प्रतापकमलाविमलाशयानाम् ॥ १७ ॥
प्रज्ञप्तिदेव्युपहृतानुपमप्रसादाः
सम्पादिताखिलमनीषितवस्तुजाताः ।
विद्याधराः प्रमदमेदुरचेतसस्स-

द्धर्मक्रियास्वनलसा विलसन्ति यत्र ॥ १८ ॥

कृत्तं निघृष्टमुपतापमपाकरोति
संयोजितं वपुषि यज्जलयोगसत्कम् ।
श्रीखण्डमात्तसदृशान्वयमात्मनैव
यद्वासिभिर्जितमनीदृशवृत्तवृत्तैः ॥ १९ ॥

॥ त्रिभिर्विशेषकम् ॥

लक्ष्मीविलासवसतिः कमनीयकान्ति-
स्तत्राभवत् क्षितिपतिः क्षतशत्रुजातिः ।
यः कुण्डलीतिनिजनामनिवेशनेन
वर्णावलीमपि विभूषयति स्म धीरः ॥ २० ॥

यस्य प्रतापतपनः स तथा कथञ्चि-
दुज्जृम्भते स्म भुवनेषु करैरुदग्रैः ।
प्रत्यर्थिसार्थहृदयाम्बुजकोशदेशा-
भासा मनागपि यथा न विकाशमायु ॥ २१ ॥

धाराधरे स्फुरति सूरकरापिधान-
निर्माणजाग्रदुदये बत यस्य काले ।
सश्रीकमम्बरमपास्य समग्रराज-
हंसा विदेशमगमन् प्रपलाय्य तूर्णम् ॥ २२ ॥

॥ त्रिभिर्विशेषकम् ॥

तस्याजनि प्रियतमाऽजितसेनिकेति
सेना मनोभवनृपस्य जगज्जिगीषोः ।
लावण्यभूमिरपि या मधुराधरत्वा-
दन्यां प्रियां रसवतीं नृपतिर्न्यषेधत् ॥ २३ ॥

शीलं यदीयममलं समवेक्ष्य शङ्के
नेन्दुर्दिवा प्रकटतां भजते त्रपावान् ।
युक्तं परेण महतां हि पराजितानां
न स्वं प्रकाशयितुमुष्णकरप्रकाशे ॥ २४ ॥

सूनुं तदीयमवधारयतं युवां मा-
म॰व्यक्षलक्ष्यकृतलक्षणलक्ष्यमूर्तिम् ।
व्युत्क्रान्तशैशवभर जनकादवाप्त-
ससाधितप्रवरविद्यमनिन्द्यवित्तम् ॥ २५ ॥

अन्येद्युरम्बरविहारविनोदवृत्त्या
श्रीपुण्डरीकिणिपुरीमगम महेच्छः ।
तीर्थङ्करामितयश प्रणिनंसयैव
क श्रेयसे प्रयतते हि न शुद्धबुद्धि. ॥ २६ ॥

दृष्ट्वा ततोऽमितयशोजिनराजमेतं
गीर्वाणनायकनिषेव्यपदारविन्दम् ।
भक्त्या प्रणम्य समुपाविशमन्तिकस्थो-
योग्य प्रदेशमुपगम्य तदेकतान ॥ २७ ॥

ता देशनां व्यधित तीर्थकरस्तदानी
दैतेयनायकनिकायसभाजितांह्रि ।
यस्या श्रुतेर्विपयतामुपलम्भिताया
भव्या. समीहितमशेषमवाप्नुवन्ति ॥ २८ ॥

चिन्तामणि करतल किल सनिविष्ट-
स्तेषां स कामकलश. खलु सन्निविष्ट' ।
सा कामधेनुरपि तद्भवन प्रविष्टा
यद्बुद्धिरुल्लसति धर्मविधौ प्रकृष्टा ॥ २९ ॥

धर्मात्कुले महति जन्म जगत्प्रसिद्धे
सम्पद्यते विभवशालिनि शीलशाले ।
स्वप्नेऽपि मान्त्रिककुलस्थितिवन्न दोषै-
रस्पर्शि यन्निजविनाशमवेक्ष्यमाणे ॥ ३० ॥

लक्ष्मी. समुद्भवति पुण्यत एव पुंसां
भागीरथीव तुहिनाचलशृङ्गमूलात् ।
या वासुदेवपदमस्पृशदात्मनैव
या चोत्तमाङ्गमभजत्परमेश्वरस्य ॥ ३१ ॥

सौभाग्यमुल्लसति भाग्यमिदं च धर्मा-
त्पुष्प फलं च मधुरं च रसालशालात् ।
यच्छ्रूयते धुरि सदालिसमाश्रयत्वा-
त्सारस्वत' परिणतावुपगीयते यत् ॥ ३२ ॥

राजा भवत्यपि भवत्यपि चक्रवर्त्ती
प्रत्यर्द्धचक्रधर एव तथार्द्धचक्री ।
सीरायुधो जगति तीर्थकरोऽपि जन्तु-
स्तत्किं न सम्भवति यत्किल चात्र धर्मात् ? ॥३३॥

आयु. प्रवर्द्धयति पुण्यमहो नराणां
बीजाङ्कुरं सलिलवज्जलभृद्विमुक्तम् ।
उद्भत्वराणि विविधानि विसृत्वराणि
शस्यानि साधयति कर्मफलानि यश्च ॥ ३४ ॥

वृन्दारकत्वमधिगच्छति जन्तुरेष-
वृन्दारकाधिपतितामपि पुण्ययोगात् ।
लोकान्तिकामरविभामहमिन्द्रतां च
सर्वार्थसिद्धिसुखमत्र परत्र चापि ॥ ३५ ॥

दानं सुपात्रविषये प्रतिपादनीयं
शील विशिष्य विशद परिपालनीयम् ।
तप्यं तपश्च शुचिभावनया समेतं
धर्मं चतुर्विधमुदाहृतवाञ्जिनेश ॥ ३६ ॥

सिद्धेर्वशीकरणकर्मणि सन्निदान
जानन्तु ऋद्धिमहिता स्वहिताय दानम् ।
यन्मन्दिरं त्यजति नैव कदाचनापि
सापीन्दिरा खलु तदाचरतां नराणाम् ॥ ३७ ॥

शील कलङ्कपरिवार्जितमेव येन
संसाधित किमपि तस्य न दुर्लभं स्यात् ।
यस्माद्दुरन्तदुरितक्षयहेतुकत्व-
मेतद्विहाय वहतीह न किञ्चिदेव ॥ ३८ ॥

दीपं निवेश्य निजपाणितले यथैकः
पातालमाविशति सिद्धरसाधिगत्यै ।
सन्तोषमाशयशयालुमिमं विधाय
धन्यस्तपस्यति तथा विधुतव्यपेक्षः ॥ ३९ ॥

दुर्वारसवरविरोधिमदप्रचार-
निर्वासने प्रथितविक्रमशक्तिबाढम् ।
निश्शेषवाञ्छितविधाननिरस्तचिन्ता-
रत्नं बुधाः कथमिदं न तपो विदध्वम् ॥ ४० ॥

संसारसागरनिपातुकजन्तुजात-
पोतायितां प्रशमशर्मनिधानभूताम् ।
वल्गत्कषायकरिसंहतिसिंहजायां
तां भावनां भजत किं न बुधाः खतन्त्राम् ? ॥ ४१ ॥

धर्मं चतुर्विधमपीदृशमेव यो वा
निर्माति निर्ममवरैरुपदिष्टमेतम् ।
जन्तुर्भवेद्गतिचतुष्टयविप्रमुक्त
ख्यातिं दधज्जगति मङ्गलकुम्भवत्सः ॥ ४२ ॥

संजज्ञिरे प्रथमतीर्थकरस्य तस्य
पुत्राः शतं भरतचक्रिमुखा नरेन्द्राः ।
ज्ञानत्रयावगतविश्वविशेषकृत्य.
सांसारिकव्यवहृति समदीदृशद्यः ॥ ४३ ॥

तेषु प्रतापभवनं समजायतैकः
श्रीमानवन्तिरिति विश्रुतनामधेयः ।
पुत्रः पवित्रचरितः पितृदत्तदेश-
स्तस्याख्ययैव विषय. प्रथितोऽस्त्यवन्तिः ॥ ४४ ॥

क्षेत्रेषु यत्र विविधैरपि धान्यजातै-
र्जातैः समस्तधरणीतलपूर्तिकारैः ।
स्वस्यावकाशमधिवस्तुमविन्दमानं
दुर्भिक्षमन्यविषयं रभसाद् बभाज ॥ ४५ ॥

तुङ्गेक्षुदण्डविपिनं मिलिताग्रभागं
पार्श्वद्वयेऽपि सरसं समवेक्षमाणाः ।
नैदाघदाघसमयेऽपि पथि प्रवृत्ता
पान्थाः श्रमं किमपि यत्र न जानते स्म ॥ ४६ ॥

श्यामाककोद्रवकुलित्थकराजमाषा-
कङ्ग्वादिक कदशनं समवेक्ष्यते न ।
विज्ञायते न खलु यत्र च नालिकेर-
द्वीपाधिवासिपुरुषैरिव जातवेदाः ॥ ४७ ॥

॥ त्रिभिर्विशेषकम् ॥

तत्रास्ति चैत्यरुचिरा नगरी विशाला
शश्वत्समृद्धिसमुदायमहाविशाला ।
अभ्रंकषोच्चकपिशीर्षकशालिशाला
शुभ्रांशुमण्डलसमुज्ज्वलचित्रशाला ॥ ४८ ॥

यस्या प्रसिद्धममृतं किमु नामृतं त-
न्माधुर्यधुर्यमुपमानविवर्जित यत् ।
अन्यद्भवेद्यदि कुत परिदृश्यते न
तस्मात्तदप्यमृतमेव वितर्कयामः ॥ ४९ ॥

एकाग्रमानसतया महतां जिनेन्द्रान्
साधून् गुरून् प्रणमतां ददतां धनानि ।
साधर्मिकानपि च भोजयतां यथेच्छ
यस्यां दिनानि किल पुण्यवतामगच्छन् ॥ ५० ॥

साद्विद्ययैव विनय कृपयैव धर्म
स्नेह प्रकर्षमतुल कलयन्प्रकृत्या ।
त्याग. श्रिया सह समेत्य कुटुम्बभाव-
मापद्य यत्र वसति स्म नयेशभाजि ॥ ५१ ॥

वाराणसी दिविषदापगया यथैव
पाथोब्जिनीशसुतया मथुरा यथैव ।
श्रीकोशलापि नगरी च यथा सरय्वा

या शिप्रयैव सरिताऽपि तथा विभाति ॥ ५२ ॥

॥ पञ्चभि कुलकम् ॥

लोकप्रशासननिमित्तविधौ नृसिंह

प्रत्यर्थिपार्थिवमहेभविभेदसिंह ।

आसीन्महीपतिरशेषमहीन्द्रसिंह-

स्तत्राभिधानविदित. स तु वैरिसिंह. ॥ ५३ ॥

एकेन येन सकलार्थिसमीहितानि

सम्पादितानि समवेक्ष्य विलज्जमाना ।

ते दुर्गमेरुगिरिगह्वरबद्धवासाः

पञ्चापि नूनमभवन्सुरशाखिनोऽपि ॥ ५४ ॥

॥ युग्मम् ॥

जायापि तस्य समजायत सोमचन्द्रा

स्वाङ्गोत्थगौरिमपराजितसोमचन्द्रा ।

आस्यप्रभाहसितशारदसोमचन्द्रा

सौजन्यवासपरिवर्द्धितसौम्यचन्द्रा ॥ ५५ ॥

सौभाग्यलक्षणगुणेन विचक्षणा या

कात्यायनी पशुपतेर्दयितामजैषीत् ।

उल्लासियौवनविलासमनोहराङ्गी

किं शक्तिरप्रतिहता न हि निर्मिमीते ? ॥ ५६ ॥

॥ युग्मम् ॥

श्रेष्ठी वरिष्ठगुणरत्नमहासमुद्र-

स्तत्राजनिष्ट सुमतिर्धनदत्तनामा ।

राजप्रसादसदन सदनन्तकीर्ति

सङ्ख्यातिगद्रविणनिर्जितराजराज ॥ ५७ ॥

शङ्कां कदापि न चकार विकारहीनो-

नाकाङ्क्षणं क्वचन यो विचिकित्सनं न ।

मिथ्यादृशां स्तवनसंस्तवने न चापि

सम्यक्त्वमात्ररतिरेव विवेकपात्रम् ॥ ५८ ॥

यो वीतरागपदपूजनमाचचार
य श्रद्धया गुरुपदप्रणतिं चकार ।
धर्मं दयासमुदितं हृदि यो बभार
रत्नत्रयं परमभूषणमाश्रयद्य ॥ ५९ ॥
॥ त्रिभिर्विशेषकम् ॥

भार्यापि तस्य समपद्यत सत्यभामा
चन्द्रावदातघनसातगुणाभिरामा ।
पुण्यानुभावपरिपूरितचित्तकामा
शीलश्रियावमतविश्वविवर्तिवामा ॥ ६० ॥

अर्द्धाङ्गदानकपटेन महेश्वरेण
संरक्ष्यमाणनिरवग्रहविभ्रमां यत् ।
गौरीं जहास धनदत्तधनेशपत्नी
व्रीडां वहन्त्यजनि तेन च साऽत्र काली ॥ ६१ ॥
॥ युग्मम् ॥

सार्द्धं तयाप्यनुभवन् विषयोत्थसौख्यं
मासानिवागमयदद्भुतऋद्धिरब्दान् ।
मासान् दिनानिव दिनानिव सोऽपि यामान्
यामान् क्षणानिव विचक्षणमौलिरत्नम् ॥ ६२ ॥

अन्येद्युरात्मसदनं समुपेत्य भूप-
प्रासादतं सुदयया परिवीतमूर्तिं ।
पूजां वितत्य भुवनाधिपते प्रदोषे
सभाव्य विभ्रमवचोभिरसौ स्वजायाम् ॥ ६३ ॥

निद्रासुखं समनुभूय निशावसाने
किञ्चिद्विचिन्तयति स स्म परं प्रबुद्ध ।
मुक्ताफलानि यवनालकराशिवन्मे
हर्म्ये बृहत्कुवलिकाफलमानवन्ति ॥ ६४ ॥
॥ युग्मम् ॥

क्षौमाणि सन्ति विविधानि विचित्रभाञ्जि

गौणीवदङ्गणगतानि पर शतानि ।
मृत्स्नेष्टकावदमिता. कनकेष्टकाश्च
पाषाणवद्रजतखण्डकदम्बकानि ॥ ६५ ॥

बाह्या दिवाकरमहारथवाहवाह-
दर्पापहारपटिमानममी वहन्तः ।
संख्यातिगाः किमिह सन्ति न मन्दुरायां
सप्ताननं प्रथितनामतया हसन्तः ॥ ६६ ॥

ईशानवाहनमहावृषभानुकारा-
भाङ्कारनादजितभाद्रपदाम्बुवाहाः ।
कैलासशैलशिखरोन्नतरप्रमाणा
मद्गोकुलेऽत्र वृषभा बहवोऽपि सन्ति ॥ ६७ ॥

वज्राकरेऽपि न भवन्ति च यानि वज्रा-
ण्यत्रैव तानि बहुधा द्युतिमन्ति सन्ति ।
माणिक्यमुख्यमणिसञ्चय एव सर्व·
सर्वात्मनैव गगने यदिवोडुचक्रम् ॥ ६८ ॥

सर्वं तदेतदफल तनय विना मे
विद्यास्थितर्गुणगणो विनयं विनेव ।
स्फाती रसेशितुरनल्पनय विनेव
चारित्रमुज्ज्वलतर च शम विनेव ॥ ६९ ॥

नेपथ्यजातमखिल तिलकं विनेव
शील विनेव विनय सुभगं कलत्रम् ।
प्रासादसर्जनमिद कलम विनेव
काव्य सुबद्धमपि चारुरम विनेव ॥ ७० ॥

पुत्रं विना न भवन सुषमां दधाति
चन्द्रं विनेव गगन समुदग्रतारम् ।
सिंहं विनेव विपिनं विलसत्प्रतापं
क्षेत्रं स्वरूपकलितं पुरुषं विनेव ॥ ७१ ॥
तत्किं करोमि कमहं शरणं प्रपद्ये ?

कस्माश्रयामि सुगुरोश्चरणाब्जयुग्मम् ।
यस्य प्रसादवशतस्तनयो ममापि
संपद्यते सपदि सम्मदमादधान ॥ ७२ ॥

इत्थं विचिन्तयत एव विभातकृत्य
यावन्न तस्य मनसो विषय बभाज ।
तावत्समेत्य रभसात् सह सभ्रमेण
तत्प्रेयसी प्रियमिद निजगाद वाक्यम् ॥ ७३ ॥

किं द्रव्यहानिरभवद्भवतां कुतश्चि-
त्कि यानपात्रमुदधौ निममज्ज किञ्चित् ? ।
काचिद्रुजा किमुत बाधत एव देहे
दु स्वप्नदर्शनमहो किमथापि जज्ञे ॥ ७४ ॥

राज्ञोऽपमानमथवा हृदये दधध्वे
योषां विशेषसुभगां यदि वापि काञ्चित् ।
चिन्तां यतो वहथ तेन वितर्कयामि
नाकारण किमपि कार्यमवेक्ष्यते हि ॥ ७५ ॥

मत्तो न चेद्हृदयनायक ! गोप्यमस्ति
सद्य प्रसद्य तदिद स्वयमेव वाच्यम् ।
यस्मान्मुखेन्दुवचनामृतमाऽऽप्य पत्यु
स्त्रीणा मनांसि समद प्रमद वहन्ति ॥ ७६ ॥

तस्या निशम्य वचनं गिरमुज्जगार
श्रेष्ठी प्रहृष्टहृदय' सदय स दक्षः ।
कान्ते ! किमेतदनुदीरितपूर्वमीदृ-
ग्निर्व्याजभक्तिपरया जगदे भवत्या ॥ ७७ ॥

गोप्य बहिर्विषयत क्रियतेऽपि धीरै-
श्चित्तान्न किञ्चन विवेचनचारुबुद्धे ! ।
मच्चित्तभित्तिमाधिशय्य विरिञ्चिनापि
पाञ्चालिकेव भवती लिखिता न वा किम् ? ॥ ७८ ॥

नैवार्थहानिरुदधौ न च पोतभङ्गो-

रोगो न कोऽपि शयने न च दुर्निरीक्षा ।
क्ष्मावासवस्य मम कोऽपि न चापमान-
श्चित्त न तापयति काचन पद्मनेत्रा ॥ ७९ ॥

अर्थस्य हानिमुपलभ्य त एव तापं
कुर्वन्ति येऽर्जयितुमर्थमयेऽसमर्था ।
अस्मादृशा पुनरुदारतयाऽर्थहान्या-
जल्पन्त्यमङ्गलमुपागतमाहृत न ॥ ८० ॥

ताम्यन्ति केऽत्र जलधावपि पोतभङ्गे
पूजा यतो भवति सा जलदेवताया ।
तीर्थङ्करस्य हि वरं प्रतिमाप्रतिष्ठा
कालेऽर्हणाप्यभिमता जलदेवताया ॥ ८१ ॥

कश्चिन्न रोगमधिगम्य नरो गतार्थं
सन्तापमाश्रयति विश्रुतबुद्धिधार ।
यस्मादुपार्जितमवश्यमवेदयित्वा
ज्ञानाश्रयैरपि जिनैर्न च कर्म शक्यम् ॥ ८२ ॥

दु स्वप्नमापतति भाविविशेषयोगात्
पुंसां सुषुप्तिसमये नियतेर्नियोगात् ।
दु खं न तत्र विमृशन्ति विवेकभाज-
स्तन्वन्ति शान्तिकविधि खलु तस्य शान्त्यै ॥ ८३ ॥

भूपोऽपमानमपि सुन्दरि ! यत्तनोति
दोष समाश्रयति तत्र निदानभावम् ।
नास्थायि शैशवभरस्य विपर्ययेऽपि
दोषाश्रितस्य सविधेऽपि मया कदाचित् ॥ ८४ ॥

नास्पृक्षदन्यवनितामपि मामकीन
किञ्चिन्मनस्विनि ! मन. सुकृतोपरुद्धम् ।
मिथ्यात्ववृत्तिमिव दुर्गतिपातभीत-
मुच्चैस्तरप्रणयभावनिबद्धकक्षाम् ॥८५॥

किन्तु प्रवर्तयति तापमपारमेष-

त्वत्कुक्षिजाततनयप्रतिपत्त्यभाव' ।
यश्चन्दनेन न च चन्द्रमरीचिचक्रै'
शक्यो निवर्त्तयितुमेव न गाङ्गवार्भि' ॥ ८६ ॥

श्रुत्वेति तत्सहचरी वचन तदस्य
नि श्वस्य गाढमवदद्गदतां वरा सा ।
चिन्तामपास्य कुरु नाथ ! विशिष्य पुण्यं
यत्स्यात्तदेव सकलाभिमतार्थसिद्ध्यै ॥ ८७ ॥

प्रासादमारचय तीर्थकृतां नवानि
विम्बानि तत्र विनिवेशय भावतस्त्वम् ।
पूजां विधापय सुवर्णविचित्रजाति–
मुख्यै सुमैर्भगवतां घनसारसारै. ॥ ८८ ॥

जैनागमं सुभग ! लेखय पुस्तकेषु
दत्त्वा वसून्यगणितानि च लेखकेभ्य. ।
पक्वान्नखण्डघृतपायसमुख्यभोज्यै
साधर्मिकानविरत प्रिय ! भोजय त्वम् ॥ ८९ ॥

साधून् महाव्रतधरान् प्रतिलाभयस्व
वस्त्रान्नपानवरमोदकखादिमाद्यै ।
साध्वीश्च निर्मितविधापितकल्पितादि–
दोषान् विधूय शुचिमानसवृत्तिसक्त ॥ ९० ॥

धर्म समाचरत एवमचिन्तचिन्ता-
रत्नं चिरत्नकृतदुष्कृतभङ्गहेतुम् ।
भावी तवापि तनयस्तदिहापि रम्य
नो चेदमुत्र सुकृताचरण सुखाय ॥ ९१ ॥

शिक्षामिमां तदुदितां विदितां महार्था-
मादाय नैगममहापुरुषस्तथेति ।
सर्वं तदाप्रभृति तत्सुगुरूपदेश-
देशीयमारचयति स्म यथावदेष ॥ ९२ ॥

आहूय मालिकमसौ द्रविण व्यतारी-

दिच्छातिरिक्तमविलम्बपरो महेच्छ' ।
पुष्पाणि मे प्रतिदिन दिवसोदयेऽग्या-
नीयार्पयेरिति पुनर्धनवानुवाच ॥ ९३ ॥

उत्सूरमारचयिता कुसुमावचाय–
मारामिक स विदधन्निदधत्फलानि ।
ध्यात्वेति धार्मिकशिरोमणिरेष शय्यो-
त्थायं वनी स्वयमियाय सलीलगत्या ॥ ९४ ॥

धन्योऽहमस्मि यदुपागमदेष वेष-
सत्कारशोभितसदाकृतिरत्र हर्म्ये ।
इत्यात्मशसनपरेण वनावनेन
तस्मै फलानि ददिरे कुसुमानि चापि ॥ ९५ ॥

लात्वा फलानि विपुलानि स मञ्जुलानि
पुष्पाणि गन्धकलितानि धनेश्वरोऽपि ।
हर्म्ये समेत्य सकल विनिवेश्य पात्रे
स्नात्वा जलै शुचिरुपाक्रमताऽर्हदर्चाम् ॥ ९६ ॥

सद्मस्थिताऽऽर्हतमहाप्रतिमासपर्या
कृत्वा यथावदथ सङ्घजिनालयेऽगात् ।
नैषेधिकीत्रयपुरस्सरमात्मनैव
दक्ष. प्रदक्षिणविधि त्रिविधं विधाय ॥ ९७ ॥

पूजां त्रिधापि विरचय्य विचित्रभक्ति-
र्भूमिप्रमार्जनमपि त्रिविध प्रकुर्वन् ।
तिस्रो वितत्य विनयी प्रणतीर्नयज्ञो-
ऽवस्थात्रयं निजमनो विषयं वितन्वन् ॥ ९८ ॥

आशात्रयेक्षणविवर्जनमादधानो-
विन्यस्तदृष्टियुगलो जिनराजबिम्बे ।
वर्णादिकत्रितयभावनया प्रसक्तो-
मुद्रात्रयं प्रकटयन् प्रतिपत्तिपूर्वम् ॥ ९९ ॥

अत्युत्तमप्रणिहितित्रितयप्रणेता

देवानवन्दत जिनाधिपतीन् सुचेता ।
कस्यानवद्यतमतां न सतां क्रमोऽयं
सपादयत्यविरत हि विधीयमानः ॥१००॥

चैत्यालयादथ निरीय सवेगमिभ्यो
वव्राज धामवसतिर्वसति गुरूणाम् ।
तत्र प्रणम्य गुरुपादपयोजयुग्मं
साधून् यथाक्रममवन्दत वन्द्यवन्द्यान् ॥१०१॥

व्याख्यां निशम्य समभावविधानधुर्या-
माचार्यवर्यसुगुरोरमृतायमानाम् ।
कार्य स्फुरन्सुकृतबुद्धिभिरेषणीया-
हारग्रहाय भगवद्भिरनुग्रहो मे ॥१०२॥

दत्त्वा क्षमाश्रमणमित्यवधानपूर्व
श्रेष्ठी निकेतनमुपेत्य कृतार्हदर्चः ।
साधून् विहार्यपरिहार्यविपर्ययेण
भोक्तु समारभत स स्वजनै समेतः ॥१०३॥

॥ युग्मम् ॥

साधर्मिकानमृतसंनिभभोज्यपेयैः
समानितान्प्रथममभ्यवहार्य मान्यान् ।
यद्भुज्यते स्वरुचिभि प्रतिलाभ्य साधूं-
स्तद्भोजनं जठरपूरणमन्यदाहु ॥१०४॥

दौर्विध्यसंकुचितमानसवृत्तिदीना-
नामन्त्र्य भोज्यनिचयैरुपभोज्य सम्यक् ।
वासांसि निश्वसितहार्यतमाञ्चलानि
दत्त्वा विसर्जयति स स्म निरीश्वरांश्च ॥१०५॥

आह्वाय्य मङ्क्षु लिपिकर्मविधानदक्षा-
न्स स्थूललक्षकुललक्षणलक्षणीय. ।
द्रव्यं वितीर्य जिननायकसंप्रणीत-
सिद्धान्तशास्त्रलिखनानि समादिदेश ॥१०६॥

इत्याग्रहेण महता निहतान्तराय
धर्मं सदा विदधतोऽस्य धनेश्वरस्य ।
तुष्टा कथञ्चिदपि शासनदेवतासौ
पुत्रो भविष्यति तवेति मुदा शशंस ॥१०७॥

देवीश्वरे भवति तुष्टिमुपागतायां
नो दुर्लभं भवति किञ्चन वस्तुवृत्त्या ।
इत्युद्धतस्वरमुदीर्य कृताञ्जलि. स
साधर्मिकप्रणयत प्रणतिं चकार ॥१०८॥

पत्न्यै न्यवेदयत शासनदेवतायाः
पश्चात्स वाक्यमथ निर्भरतोषितायाः ।
प्रागेव वक्त्रकमल प्रभवत्प्रसाद-
मानन्दतुन्दिलमिद प्रकटीचकार ॥१०९॥

गर्भं बभार धनदत्तधनेशभार्या
सा तत्प्रभृत्यपि भृता सुकृतप्रभावै ।
स्वप्ने च पूर्णकलस सलिलै प्रपूर्ण-
माम्रच्छदैरपिहित कलयाम्बभूव ॥११०॥

स्वप्नोपलब्धिसमनन्तरमेव गन्ध-
पुष्पाणि पाणिकमले विनिवेश्य धन्या ।
प्राणप्रिय मृदुवचोभिरुदारबुद्धि-
रुत्थाप्य सा प्रवदति स्म यथार्थमेदम् ॥१११॥

स्वप्ने निरैक्षिपि विशेषविदां स्वराद्य
कल्याणपूर्णकलस जलसभृत च ।
कीदृक् फल मम भविष्यति चास्य नाथ !
तत्त्वं निवेदय मदग्रत एव तत्त्वम् ॥११२॥

एतत्तदुक्तमवधार्य विचार्य बुद्ध्या
प्राह स्म विस्मितमना प्रमना' स चाढ्य' ।
जाने ऽस्मि पूर्णकलसप्रविलोकनेन
सूनुस्तवेन्दुमुखि ! सभवितावचिरेण ॥११३॥

वाचं प्रियस्य परमार्थत एव सत्यां
मत्वा समुत्थितवती फलसयुतानि ।
सा बिभ्रती प्रियतमप्रतिपादितानि
पुष्पाणि वासवसति स्ववशा विवेश ॥११४॥

यान् दोहदान् स्वहृदये बिभराम्बभूव
सा श्रेष्ठिराजदयिता कलिता गुणौघै' ।
पृच्छत्पुरन्ध्रिवदनेरितवाक्यभङ्ग्या
तान् वल्लभ सपदि पूरयति स्म तस्याः ॥११५॥

प्रासूत सा तनयमद्भुतरूपसम्प-
त्सतर्जितामरकुमारकुमाररूपम् ।
विद्योतयन्तमभितस्तदरिष्टदीप-
तेजांसि केन्द्रपतितोच्चशुभग्रहेषु ॥११६॥

दासीजनैर्द्रुतमुपेत्य सुतप्रभूत्या
श्रेष्ठी प्रहृष्टहृदयैरभिवर्द्धितोऽयम् ।
देयं न किञ्चन विवेद न चाप्यदेयं
नादेयमेव परिपूर्णमना प्रमोदै' ॥११७॥

पुत्रा भवन्ति भवने बहवोऽपि यस्य
जाते सुते वितनुतेऽपि महामहं स' ।
प्रापोपयाचितशतैस्तनयं तथा यः
किं नोत्सव स तनुतां तनुताण्डवेन ? ॥११८॥

विज्ञप्य विज्ञतमतावऽमतागण्यजीव
सर्वसहाधिपतिमेष महोपदाभि. ।
काराग्रहस्थितिमत पुरुषान्समस्ता-
न्सत्कृत्य कृत्यविदरं व्यमुचन्महेच्छः ॥११९॥

अध्यापकैर्मुकुरमण्डलमग्रदेशे
वंशस्य शस्यमतिभिस्त्वरितं निधाय ।
छात्रैः समं समुपगत्य पठद्भिरुच्चै-
र्द्वारं समाश्रितममुष्य निकेतनस्य ॥ १२० ॥

भालानि कुङ्कुमविशेषकभूषितानि
तेषां विधाप्य विधिवत्स सुवासिनीभ्यः ।
ताम्बूलमात्मशयतामरसेन दत्त्वा
द्रव्य प्रदाप्य बहुलं विससर्ज धीमान् ॥ १२१ ॥

स्थालानि काञ्चनमयानि निवेश्य पाणौ
कुन्दोज्ज्वलाक्षतभृतानि समन्ततोऽपि ।
पौरस्त्रियो घुसृणचन्दनपात्रहस्ता·
कर्तुं विशेषकमुपास्थिषताऽस्य पस्त्यम् ॥ १२२ ॥

ताः श्रेष्ठिन समुपवेश्य चतुष्किकायां
भाले विधाय तिलक वितताक्षत च ।
विश्राण्य वानपरिपाकिमनालिकेरं
त्व जीव नन्द भव पुत्रवतामधीश· ॥ १२३ ॥

इत्याशिष स हृदये बहुधाभिनन्द्य
प्रोद्यत्प्रमोदनिवह· पुरसुन्दरीणाम् ।
दत्त्वांशुकानि शरदिन्दुमयूखजाल-
व्यूतिभ्रम विरचयन्ति विसृष्टवांस्ता· ॥ १२४ ॥

द्रव्याणि यानि स धनी विचिकाय षष्ठी-
जागर्यिकामहमवाप्य सुतस्य तस्य ।
नो तानि काश्चिदपि च व्ययसात्करोति
पाणिग्रहेऽपि तनयस्य महर्द्धिकोऽपि ॥ १२५ ॥

जाते महोत्सवभरे सकलेऽपि लोके
सम्मानिते वसनचीनदुकूलदानैः ।
स्वप्नानुसारि तनयस्य ततान नाम
श्रेष्ठी महेन दशमेऽहनि·सम्मदेन ॥१२६॥

ज्योतिर्विदोऽपि विनिवार्य सुवासिनीश्च
नैमित्तिकानपि कलाकुशलानशेषान् ।
सन्मङ्गलश्रुति च मङ्गलकुम्भ इत्या-
ब्रह्माण्डमाकलितशारदचन्द्रकीर्तिः ॥ १२७ ॥

॥ युग्मम् ॥

धात्रीभिरुज्ज्वलरसोदयसृत्वरीभि-
विश्वम्भरारुह इवाचलसारिणीभिः ।
संवर्द्धमानसुभग' परिपाल्यमानो-
जज्ञे जनप्रमददोऽष्टसम. क्रमात्सः ॥ १२८ ॥

दृष्ट्वा प्रयान्तमपरेद्युरुदारचित्तं
तातं वनीं प्रति स मङ्गलकुम्भ एतत् ।
व्याचष्ट मङ्गलमुखो ननु तातपादाः !
सिद्ध्यै प्रयात मयि सत्यपि किं स्वयं वा ? ॥१२९॥

स्मित्वा जगाद जनकः प्रियपुत्र ! याम्या-
नेतु सुमानि जगदीश्वरपूजनार्थम् ।
आराममुद्गतफलाभ्युदयाभिराम-
मामोदमाशु जनयन्तमुपागतानाम् ॥ १३० ॥

पित्राभ्युदीरितमिदं विनिशम्य पुत्रः
प्रोवाच वाचमतिमात्रविनीतधुर्य. ।
आज्ञाप्यते यदि भवद्भिरनुग्रहेणा-
रामं तमप्यहमुपैमि समं भवद्भिः ॥ १३१ ॥

अत्यन्तवल्लभतया न निवर्तितुं तं
पुष्यच्छिरीषसुकुमारतया न नेतुम् ।
शक्तोऽभवत्स भुवनाद्भुतभागधेय.
कूलङ्कषारयमिवायनवर्त्तिशैल ॥ १३२ ॥

तस्याग्रहं शिशुतयाऽविनिवार्यमार्य-
श्चित्ते विचार्य सममेव समाप तं तम् ।
जाम्बूनदाभरणभूषितपाणिकण्ठं
मञ्जुस्वरावजितकोकिलकण्ठनालम् ॥ १३३ ॥

साक्षात् षडानन इवैष महेश्वरेण
श्रीमाञ्जयन्त इव जम्भनिषूदनेन ।
पद्मालयाप्रणयिनेव सुमेषुवीरो-

गच्छन् समं स जनकेन विराजते स्म ॥१३४॥

पृच्छन् क्वचिद्विटपिनां विटपानतानां
नामानि लोकविदितान्यपि न श्रुतानि ।
वल्लीदलानि विपुलानि सविस्मय सन्
गृह्णन् क्वचिच्छिशुतयाऽतिचलाचलत्वात् ॥१३५॥

उद्यद्दिनाधिपतिमण्डलसन्निभानि
कुत्रापि पाककलकोलफलानि चिन्वन् ।
गोपाङ्गना: क्वचन लोचनगोचरेऽपि
कुर्वन् पयोदधिघटी. शिरसाऽऽदधाना. ॥ १३६ ॥

दूर्वाप्रवालशकलानि सुकोमलानि
भास्वत्तुरङ्गमतनूरुहसोदराणि ।
मत्त पुरीपरिसरे परितश्चरन्त
कुत्रापि तर्णककुलं समवेक्षमाण: ॥१३७॥

छायां भजन् क्वचिदपि श्रमघर्मतोयै-
राप्लावित: समुदयत्सुकुमारभाव. ।
अभ्रंलिहावनिरुहावलिलक्ष्यमाणां
दूरादवैक्षत वनीमवन. श्रियां स. ॥१३८॥

॥ चतुर्भि. कुलकम् ॥

पुंस्कोकिलान् क्वचन दर्शयता रसाल-
शाखाप्रदेशमवलम्ब्य सुखं निविष्टान् ।
पीयूषपारणविधि श्रवसां जनाना-
मातन्वत: सुमधुरस्वरगीतभङ्ग्या ॥ १३९ ॥

व्याकोशकिंशुकसुमायतचारुचञ्चून्
लीलाचलच्चरणचङ्क्रमणैकचुञ्चून् ।
क्षीरोदसागरतरङ्गसदक्षपक्षान्
पद्माङ्कुरादनपरान् क्वचनापि हंसान् ॥ १४० ॥

चक्री प्रियां विशलताशकलार्पणेन
प्रेमप्रकाशमनुरञ्जयतो यथेच्छम् ।

कुत्राप्यगाधसरसी निकषैव चक्रा-
नाराममासददयं जनकेन साकम् ।। १४१ ।।
।। त्रिभिर्विशेषकम् ।।

भास्वत्करप्रसरवारणमाऽऽदधानं
छायाभरेण विततोद्गतभूरुहाणाम् ।
सान्द्रीभवत्किसलयच्छदनाश्चितानां
स श्रेष्ठिसूरुपवन प्रविवेश तच्च ।। १४२ ।।

तं बालकं समवलोक्य समाव्रजन्तं
पीयूषवर्षमिव लोचनयो सृजन्तम् ।
पप्रच्छ मालिकवरो धनदत्तमिभ्यं
कोऽयं नवोऽत्र भवता समुपैति चेति ।।१४३ ।।

सूनुर्ममायमतिजातकुतूहल स-
न्नाराममागमदवेक्षितुमेव तेऽद्य ।
इभ्यप्रभूदितामिदं विनिशम्य सम्यग्
जम्बीरदाडिमफलानि ददौ स तस्मै ।।१४४।।

रम्भाफलानि विपुलानि मनोरमाणि
सह्याङ्गलीतनुमहाफललुम्बियुञ्जि ।
आरामिको व्यतरदाशु निवारितोऽपि
त्यागोद्धतेन किल तज्जनकेन मेति ।। १४५ ।।

प्रोत्फुल्लचम्पककुसुमानि सकेतकानि
जाम्बूनदोपपदजातिसुमानि लात्वा ।
व्यावर्तत स्वभवनं प्रति वाणिजेशः
प्रीतिं परां कलयता तनयेन सार्द्धम् ।। १४६ ।।

आनन्द्यमानमनसं जननी प्रकुर्व-
न्नालिङ्गनेन वचनेन च संमतेन ।
यच्छन् फलानि वनपालसमर्पितानि
तानि स्वयं परिजनाय यथाक्रमेण ।।१४७।।

पश्यन् जिनाधिपतिपूजनमेकतान-

स्तं कञ्चन प्रमदमापद्य स्वतोऽपि ।
आराधयद्भिरसमं परमेश्वरं यः
सम्प्राप्यते नियमिभिर्नियत कथञ्चित् ॥ १४८ ॥

विज्ञाप्य स्वमुखेन तातचरणान् कल्याणरुक्प्रीणितान्
गत्वाऽऽराममुपानयत्स सततं पुष्पाणि मालाकृत ।
अभ्यस्यत् सकलाः कलाश्च वयसोर्मध्यं जगाहे द्वयो
कुम्भाख्यो बहुशावभावयुवताप्रख्यातनाम्नोरयम् ॥१४९॥

आसीत् श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विद्यावतां सद्गुरु ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गस्तृतीयोऽगमत् ॥१५०॥

॥ इति श्रीशान्तिनाथचरिते महाकाव्ये तृतीयः सर्गः ॥

अर्हम्

## अथ चतुर्थः सर्गः ।

उपास्य यस्याङ्कमनाप्यमन्यैर्विलोचनानामबलाजनानाम् ।
मृगो बभाराप्युपमानभावं शान्तिप्रभुर्वस्तनुतां स शर्म ॥ १ ॥
इतश्च चम्पानगरी प्रसिद्धा कलिङ्गदेशे विषयावतंसे ।
भोगीशितायामवलोक्य रम्यां भोगावती स्वामध एव चक्रे ॥ २ ॥
न्यायक्रियासुन्दर एव तस्यां पृथ्वीपति सुन्दरनामधेयः ।
बभूव यस्याग्रत एव लक्ष्म्या पुरन्दरः किङ्कर इत्यमानि ॥ ३ ॥
गुणावली तस्य नृपस्य देवी देवीव सौन्दर्य्यगुणेन याऽऽसीत् ।
त्रैलोक्यसुन्दर्य्यभिधा तदीया त्रैलोक्यसुन्दर्य्यभवत्तनूजा ॥ ४ ॥
उत्सङ्गसंसङ्गिफलोपशोभां स्वप्ने समालोकत वीरुधं यत् ।
त्यामीतुरीयप्रहरेऽवशिष्टे तस्यां प्रसूर्गर्भमधिश्रयन्त्याम् ॥ ५ ॥

अन्योऽन्यमास्फालयता तदस्या विज्जृम्भमाणेन कुचद्वयेन ।
कन्दर्पलीलोपवने कृशाङ्ग्या तद्यौवने किं फलितं न चापि ? ॥ ६ ॥
तां यौवनोद्भेदविशेषरम्यां माता समालोक्य मुदं बभार ।
विचिन्तयन्तीति सुधा किमेषा मत्कुक्षिरत्नाकरतो विजज्ञे ॥ ७ ॥
अन्येद्युरभ्यज्य सहस्रपाकतैलेन कर्पूरसुगन्धिनैनाम् ।
श्रीखण्डवासैर्मसृणैः समन्तादुद्वर्त्य कोष्णैरभिषेच्य वार्भिः ॥ ८ ॥
सुवर्णरत्नाभरणैर्विचित्रैराचूलमापादनखं विभूष्य ।
दिव्यं दुकूलं परिधाप्य भव्यं शिरीषकोषम्रदिमाऽपघाति ॥ ९ ॥
गुणावलीं तां प्रसरत्समग्रगुणावलीमालिजनेन सार्द्धम् ।
आस्थानमास्थाय कृतासनस्य प्रस्थापयामास नृपस्य पार्श्वम् ॥ १० ॥
॥ त्रिभिर्विशेषकम् ॥

भूपालदो स्तम्भमवाप्य बाला सा शालभञ्जीव परं रराज ।
विलोचनेन्दीवरसन्ततीनां ज्योत्स्नेव यूनां ददती विकाशम् ॥ ११ ॥
विलोक्य बालां सुरसुन्दरस्तां रूपस्वरूपेण जगज्जयन्तीम् ।
गुणैरशेषानपि रञ्जयन्ती मनोभुवः शासनवैजयन्तीम् ॥ १२ ॥
दध्यौ नृपस्त्वेवमहो ! किमस्या वरो विधात्रा प्रवरो न सृष्टः ।
सृष्टो यदि स्यादवलोक्यतेऽत्र श्रोत्रातिथित्वं प्रतिपद्यते वा ॥ १३ ॥
॥ युग्मम् ॥

अतादृशाय प्रतिपाद्यते चेत्सपद्यते तद्वचनीयता मे ।
अस्यां हि सृष्टिः सुकृतैरियं तत्सम्पादयिष्यन्ति तमेव तानि ॥ १४ ॥
निश्चित्य चित्ते स्वयमित्यधीशः सभां पुनस्तां सहसा विसृज्य ।
अन्तःपुरं बालिकया तयाऽमा समागमद्वेत्रिनिरुद्धलोकम् ॥ १५ ॥
प्रत्युज्जगामाऽथ गुणावली तं नृपावलीवन्द्यपदारविन्दम् ।
भद्रासने भद्रतया निविष्टः सा संनिविष्टा तमिदं बभाषे ॥ १६ ॥
विवाहयोग्या भवतोऽस्ति पुत्री यशःपवित्रीकृतविश्वविश्व ! ।
दिगीश्वरांशाश्रितमूर्त्तिरद्धा सर्वं स्वतो वेद महीमहेन्द्र ॥ १७ ॥
विज्ञापना यत् क्रियते तदत्राऽवधारय त्वं परमार्थमीश ! ।
अस्माकमस्यां मनसा प्रवृद्धः प्रेमा समुज्जृम्भत एव कोऽपि ॥ १८ ॥
ततो महाराज ! मयि प्रसादं विधाय पुत्रीं प्रतिपादयेमाम् ।

वराय कस्मैचिदिदंपुरीयवास्तव्यचूडामणये महेच्छ ! ॥ १९ ॥
सङ्गच्छतेऽसौ श्वशुरस्य गेहादागत्य चागत्य यथाऽनिशं नः ।
अस्या वियोग न वय विसोढु क्षमा क्षमाखण्डल ! किञ्चिदेव ॥ २० ॥
राज्ञीभिरन्याभिरिय निजेच्छा राज्ञ पुरो विज्ञपयाम्बभूवे ।
को वा प्रभूणां न मनीषित स्वं लब्धावकाश. प्रविकाशयेत ? ॥ २१ ॥
विज्ञप्तिमासां हृदये निधाय क्ष्मावासवः संसदमध्युवास ।
पूषेव पूर्वाऽचलसानुदेश सिंहासनं च श्रितवानतन्द्र ॥ २२ ॥
सुबुद्धिनामानमथो सुबुद्धि मन्त्रीशमूचे वसुधासुधांशुः ।
सुतां मदीया स्वसुतेन सार्द्धं विवाहयाऽस्मद्विनियोगतस्त्वम् ॥ २३ ॥
त्वग्दोषदुष्ट तनय विभाव्य प्रोवाच मन्त्री नृपतिं प्रतीदम् ।
स्वामिन्ननौचित्यविपश्चितं किं वचस्त्वयाऽवाचि विपश्चिताऽपि ? ॥ २४ ॥
क स्वर्णकायः क च राजिलोऽय कैरावण कैडकडिम्भ एषः ।
राजेन्द्र ! ससेव्यपद क देवस्त्वत्पादपद्मप्रणयी क चाऽहम् ॥ २५ ॥
वित्त ययोरेव समं जगत्यां कुल ययोरेव सम प्रतीतम् ।
मैत्री तयोरेव तयोर्विवाहस्तयोर्विवादश्च निरूपितोऽस्ति ॥ २६ ॥
स एव सम्बन्धविधिर्विधेय सम्बन्धिता येन भवेत् प्रशस्या ।
निर्बन्धमापाद्य विधीयमानः सम्बन्ध एव प्रकरोति हास्यम् ॥ २७ ॥
ततो महाराज ! मनागपीद न युक्तमेतद्भवताऽभ्यधायि ।
महीयसामातनुते महत्त्वं युक्त्यानुयुक्तं हि निरूप्यमाणम् ॥ २८ ॥
अपेक्षणीया न भवन्ति जातु क्षोणीश्वराणामपि सेवकास्ते ।
ये लोभमालम्ब्य समुत्सहन्ते कीर्तिं प्रभो ! च्छेत्तुमिह प्रसिद्धाम् ॥ २९ ॥
तदुक्तिमाधाय हृदीति राजा विराजमानः सहजेन धाम्ना ।
जगाद मन्त्रिन् ! कथमस्मदीयं वाक्यं विसम्बन्धमुदाहरस्त्वम् ॥ ३० ॥
स्वस्वामिसम्बन्धमभाषताऽयं दाक्षीसुतो व्याकरणं प्रकुर्वन् ।
आबालगोपालमहो ! प्रसिद्धः संस्मर्य्यतेऽमात्य ! स किं त्वया न ? ॥ ३१ ॥
सम्बन्धमुद्द्योतयितुं पटिष्ठा षष्ठीविभक्तिः सुधियां मताऽस्ति ।
त्वं सेवकोऽहं प्रभुरसि तेऽपि प्रतीतमेवं तमुरीकुरुष्व ॥ ३२ ॥
धनं ययोरेव समानमित्याद्यवाचि यत्तन्न विचारचारु ।
सहस्रपादस्य दिनेश्वरस्य किं पङ्गुना काश्यपिना न योगः ? ॥ ३३ ॥

न किं विभिन्नान्वययोर्भवेयुः प्रीतिश्रियः स्फीततमाः सुबुद्धे ! ।
तथा हि रामः प्रमना. स्म दत्ते लङ्काधिपत्यं स विभीषणाय ॥ ३४ ॥
श्रीरामलङ्केश्वरयोर्गरीयान् कुले विभिन्नेऽपि रणो बभूव ।
न मन्वते मानधनास्तु यद्वा किञ्चित् परित्यक्तविवेकभावाः ॥ ३५ ॥
प्रीतौ विरोधे च ततश्च पुण्याऽपुण्यप्रवृत्ती प्रथमं निदानम् ।
विचिन्त्य सबन्धविधानतो मे सम्बन्धिनां शेखरतां श्रय त्वम् ॥ ३६ ॥
इत्याग्रहं भूमिपुरन्दरस्य सञ्चिन्त्य चित्ते सचिवः स्वचित्ते ।
समागमन्मन्दिरमिद्धऋद्धिप्रधानमाधानमथ सुखस्य ॥ ३७ ॥
बुद्ध्या न यत्सिद्ध्यति कार्य्यमीषद्वैषम्यमापन्नमनन्तशोऽपि ।
न पौरुषेणापि न भूरिदानैस्तत्रोचितार्चा कुलदेवतायाः ॥ ३८ ॥
इत्यन्तरुद्भाव्य विभावितात्मा निकेतनाभ्यन्तर एव देव्याः ।
निकेतने केतनराजिराजि स्नात्वा प्रविश्य प्रयतः स धीरः ॥ ३९ ॥
संस्नाप्य नीरैर्घनसारमिश्रैर्मनोभिरच्छैरिव भावनाढ्यैः ।
कस्तूरिकाकुङ्कुमचन्दनैस्तां विलिप्य मूर्तिं कुलदेवतायाः ॥ ४० ॥
मधुव्रताकर्षणसिद्धविद्यारूपाणि पुष्पाणि मनोहराणि ।
आरोप्य मूर्तिं परितः पुरस्तान्निधाय नैवेद्यमनेकधापि ॥ ४१ ॥
अदभ्रदर्भैर्मृगचर्वितामैरास्तीर्य्य संस्तारकमस्तदोषम् ।
भवत्प्रसादादचिरेण वाञ्छा भवत्वियं मे सफलेत्युदित्वा ॥ ४२ ॥
स्तुत्वा महार्थैः स्तवनैरुदग्रैर्नानाप्रकारैर्ललितैः सुवृत्तैः ।
अयं जनो देवि ! तव प्रसादे प्राप्ते समुत्थास्यति चेति जल्पन् ॥ ४३॥
स्वदेहसामर्थ्यमचिन्तयित्वा यावद्वरप्राप्तिसमानकालम् ।
आहारभङ्गीपरिहाररूपं कुर्वन्नखर्वं नियमं विगर्वः ॥ ४४ ॥
नवाम्बुदक्षालितशम्भुशैलावदातवासा विकसन्मुखश्रीः ।
सुष्वाप देवीचरणारविन्दद्वयाग्रतः शुद्धमना. प्रशस्यः ॥ ४५ ॥

( षड्भि. कुलकम् )

अथ प्रभापूरहतान्धकारा तद्ध्यानकाष्ठाचलितासना सा ।
निशावसाने विदितप्रभावा तुष्टा बभाषे कुलदेवता तम् ॥ ४६ ॥
त्वया किमर्थं विहितं मदीयाऽनुध्यानमेतत्सचिवावतंस ! ।
उत्तिष्ठ वत्स ! स्वमनीषितं द्राग्मदग्रतस्त्वं विनिवेदयस्व ॥ ४७ ॥

इति प्रसादप्रमुखं मुखोक्तं निशम्य वाक्य सचिव' स देव्या' ।
उत्थाय बद्धाञ्जलिसम्पुट सन्नानन्दसम्पूर्णमना जगाद ॥ ४८ ॥
मत्पुत्रकायस्थितकुष्ठगन्धस्तव प्रमादाद्धनसारसारान् ।
देवि ! प्रयातु क्षयमिष्टसिद्धिप्रदानसम्पादनसिद्धिरूपे ! ॥ ४९ ॥
तदुक्तमाकर्ण्य सकर्णसेव्या देव्याऽऽह सा स्म स्मितपूर्वमेवम् ।
रोगक्षय कर्तुमहं न शक्ता शक्ताऽपि पुत्रस्य तवादिभक्त ! ॥ ५० ॥
सुरासुराधीशनतक्रमोऽपि विज्ञानसम्पत्तिविभूषितोऽपि ।
नैवाऽन्यथाकर्तुमलम्भविष्णुर्जिनोऽप्ययभुक्त्वा निजकर्मजातम् ॥ ५१ ॥
उपार्जित येन यदेव कर्म शुभाशुभं तेन तदेव भोग्यम् ।
किं नान्यथा पुत्रसुखेन वप्ता वप्तु सुखेनैव सुत सुखी वा ? ॥ ५२ ॥
एतत्परित्यज्य ततोऽपर त्व हृदा समालोच्य वर वृणीष्व ।
नाऽस्वामितां स्वाम्यपि विन्दतेऽत्र प्रसाधयन् साध्यमहो ! स्वसाध्यम् ॥
ऊचे स यद्येव मत कुमार मान्ये ! समानीय समर्पयस्व ।
योऽवक्रयेणापि नरेन्द्रकन्या विवाह्य मह्य ददते प्रसह्य ॥ ५४ ॥
विज्ञापनां तस्य निवेश्य चित्तेऽभिधीयते देवतया तया स्म ।
त्वन्माननावासितमानसाऽहं सर्वं विधातास्मि तदेतदाशु ॥ ५५ ॥
अस्या पुरो दूरत एव कोऽपि त्वन्मन्दुरापालतटस्थ एव ।
यो मन्दुरासन्निहित' कुमारः स्वरूपसन्तर्जितमाररूप ॥ ५६ ॥
अताड्यजाड्यज्वरपीड्यमान. समेत्य सन्तापयते कृशानौ ।
आप्तेन गुप्त रभसा तमानाय्योद्वाहये राजसुतां यथेच्छम् ॥ ५७ ॥
(युग्मम्)

तमेवमुक्त्वा कुलदेवताऽसौ तिरोदधे नम्रजनानुकम्प्रा ।
विधित्सव कार्यमिहार्य्यचित्ता भृत्य हि किं नाम न शिक्षयन्ते? ॥ ५८ ॥
ततः प्रभाते सचिव प्रहृष्यन् महाशय. पारणक विधाय ।
आह्वाय्य मौहूर्त्तिकमादरेणान्वयुङ्क्त लग्न स्वहिते विलग्नः ॥ ५९ ॥
ज्योतिर्विदं दत्तविवाहलग्नं धनानि दत्त्वा वसनानि चापि ।
विसर्जयामास नृपस्य शिष्ट्या विवाहसामग्र्यमपि व्यधत्त ॥ ६० ॥
य. कश्चिदागच्छति वाजिशालापार्श्वे कुमारः सुकुमारगात्र. ।
स्वरूपमारः प्रतिपत्तिसारः स मे समानीय समर्पणीयः ॥ ६१ ॥

प्रकुर्वतेदं भवता मदीयं प्रयोजन निर्मितमेव सर्वम् ।
एक समाहूय स वाजिशालाऽध्यक्षं समादिक्षदिति प्रसन्नम् ॥ ६२ ॥
(युग्मम्)
सा देवतापि प्रतिपन्ननिष्ठा गत्वोज्जयिन्या सुखराजधान्याम् ।
व्योम्नि स्थिता तद्वनपार्श्वतोऽद पुरोऽवदन् मङ्गलकुम्भकस्य ॥ ६३ ॥
अवक्रयेणैष कुमार एवोद्विवक्ष्यते राजसुतां स्वरूपाम् ।
इत्यन्तरिक्षे स वचो निशम्य व्यचिन्तयद्विस्मित एव चित्ते ॥ ६४ ॥
देवस्य कस्यापि वच किमेतद्दैत्यस्य कस्याप्यथवा गभीरम् ।
विद्याधरस्याप्यनवद्यविद्याविद्योतमानाशयकस्य किवा ? ॥ ६५ ॥
सिद्धस्य कस्यापि किमेतदाहोस्विच्चारणस्य व्रतचारिण' किम् ? ।
कार्य्यं निरालम्बनमेव न स्यान्नाकारण किञ्चिदवेक्ष्यते हि ॥ ६६ ॥
पर न युक्तिव्यतिरिक्तभावात् स्वान्तं प्रतीति दधते ममात्र ।
निवेदयिष्यामि विशेषतोऽदस्तथापि पित्रे सदन गत सन् ॥ ६७ ॥
आदाय पुष्पाणि स पाणिना द्राक् समाययौ सद्मनि वाटिकाया ।
कार्यस्य वैयग्र्यवशादमुष्य स्मृतेर्न तद्गोचरतामयासीत् ॥ ६८ ॥
अन्येद्युरुद्यानममुष्य यात श्रुतौ प्रयात वचन तदेव ।
अथाप्तसद्मा नियमेन वप्तु पुर प्रवक्ष्येऽद्भुतमेतदुग्रम् ॥ ६९ ॥
न यद्वचोवर्त्मनि मानवानां महाकवीनामपि किञ्चनापि ।
चेत पथे नापि कदापि धाता करोति लीलास्फुरणेन तच्च ॥ ७० ॥
शुभोदयो वाऽप्यशुभोदयो वा स्याद्देहभाजां नियतेर्नियोगात् ।
न कोऽपि शक्नोत्यतिवर्तितुं तं कदाचन च्छायमिव स्वकीयम् ॥ ७१ ॥
अत्रान्तरे प्रादुरभूत्कुतश्चिद्वात्या हरन्ती विततं प्रकाशम् ।
रजोभिरान्ध्यं दिशती जनानां विलोचनान्त पतनप्रगल्भै' ॥ ७२ ॥
स वात्ययोत्पाट्य तया कुमार सुमार्थमिङ्गन्निजवाटिकायाम् ।
चम्पापुरीसन्निहिताटवीभूभागे क्षणाद्गन्ध इव व्यमाचि ॥ ७३ ॥
विभीषणं यत्र विनैव लङ्का पश्यन्ति रामाकलितं जनौघा' ।
हरीश्वरो यत्कपिभि' परीत क्वचित् क्वचित् खेलति निर्विशङ्कम् ॥७४॥
भीति दधाना इव सूरपादा विन्दन्ति यत्र प्रसर न किञ्चित् ।
अभ्रंकषोर्वीरुहसन्ततीनां छायाच्छलस्थानतम प्रपञ्चात् ॥ ७५ ॥

तस्मिन्नविज्ञातहरिद्विभागो बभ्राम पञ्चाननवत् स वीरः ।
विमार्गयन्मार्गमुपैतुकामो ग्रामं पुरं वा पृथुगोकुलं वा ॥ ७६ ॥
अथ व्यलोकिष्ट स पुण्यसार कासारमाशाः परिपूरयन्तम् ।
समाव्रजत्पान्थपरम्पराणां कर्पूरसारैरिव वारिपूरैः ॥ ७७ ॥
अस्ताघभावं कलयन्तमुच्चैः सतां मनोवद्वितत समन्तात् ।
दैत्यारिवक्षःस्थलवद्दधानं पद्मानुरागं बहुसत्त्वनिष्ठम् ॥ ७८ ॥
चक्राचितं जीवनदानवित्त राजाधिराजोन्नतपाणिवच्च ।
विष्वग्वृतं चारुविशालशालावल्या महापत्तनवत्सहंसम् ॥ ७९ ॥
॥ त्रिभिर्विशेषकम् ॥
ग्रामीणपौरैः क्रयविक्रयाभ्यां चलद्भिराकीर्णमभीप्सिताभ्याम् ।
ग्रामस्य कस्याप्यथवा पुरस्य पन्थानमन्वेषयितु प्रतीतम् ॥ ८० ॥
कृत्वा तडागे सवन श्रमार्त्तः स्वच्छानि शीतानि जलानि पीत्वा ।
आलम्ब्य दोर्भ्यां च वटस्य पादांस्तस्योपरिष्टात्स समारुरोह ॥ ८१ ॥
( युग्मम् )
सूरस्तमालोक्य तदुग्रदुःखं करेष्वनेकेष्वपि सत्सु हर्तुम् ।
अपारयन्नस्तमहीध्रचूलामारुह्य वेगाज्जलधौ ममज्ज ॥ ८२ ॥
न बन्धनं यस्य न कर्मपाशः किञ्चिन्न वा पञ्जरमस्ति यस्य ।
तनूपभोगत्यजनापरस्य स्थिरः स हंसः प्रतिपद्यते किम् ? ॥ ८३ ॥
निमित्तमात्रं पतने गुरुत्व प्रोक्तं कणादेन मुनीश्वरेण ।
ग्रहेषु सर्वेष्वपि भास्करस्य व्यक्तं न तर्कि पतनं विपत्ताम् ? ॥ ८४ ॥
सरोजिनीनाथदिनाधिनाथप्रभाधिनाथग्रहनाथमुख्यैः ।
विवर्णना यस्य बभूव शब्दैः स ह्यास्तमेति स्थिरमाः परं किम् ? ॥८५॥
इदं कराणां स्फुरतां सहस्रं पुरस्कृतं यन्मयका पुरैव ।
उपेक्षतेऽस्मिन्समयेऽपि तन्मामिति क्रुधाऽऽरुण्यमधत्त योऽर्कः ॥ ८६ ॥
प्रवर्त्तमानेऽभ्युदयेऽसमाने ये स्वामिना केऽपि पुरस्क्रियन्ते ।
तं तेऽनुगच्छन्ति तथा हि यातः प्रभादिनौ भानुमता सहास्तम् ॥ ८७ ॥
सुतो यदीयः स यमः प्रसिद्धः पद्मापतेर्यः स्वयमेव चक्षुः ।
प्रभुर्ग्रहाणामपि यः समेषां हन्तास्तमेतीह स चेत्स्थिरं किम् ? ॥ ८८ ॥
तमस्ततौ विस्तृतिमाश्रितायामधःस्थितं श्वापदमेव किञ्चित् ।

व्यापादयिष्यत्यचिरेण मामित्यवेत्य सोऽस्थात्स्तिमितस्तथैव ॥ ८९ ॥
तथा कथञ्चित्प्रसृतं तमोऽपि दृश्यो न हंसोऽपि यथाजनिष्ट ।
भासामभावो हि तमोऽपि युक्तं प्रोक्तं कणादेन ततः कथञ्चित् ॥९०॥
विलोक्य सोऽथ ज्वलनज्वलन्तं न्यग्रोधभूमीरुहमुत्तरेण ।
हृष्यत्तनु. शीतविकम्पमानोऽवतीर्य तस्मात्तमियाय देशम् ॥ ९१ ॥
स स्थानपालैर्बहु तप्यमानः शीर्षे प्रहारैरभिताडितश्च ।
एकेन तन्मान्त्रिवचो विचिन्त्याऽपसार्य तेभ्यो विजनेऽथ निन्ये ॥९२॥
क्षणं कृशानावकृशाशयस्त स तापयित्वा सचिवाय मङ्क्षु ।
समर्पयामास कुमाररूपं कुमारमालोक्य मुदेऽदित स्वम् ॥ ९३ ॥
अपूपुषत्तं सचिवोऽप्यजस्रं स्निग्धान्नपानैः स्वकुमारवच्च ।
प्रच्छन्नमाधाय निधानवत् स देयार्थवत्प्राहरिकैररक्षत् ॥ ९४ ॥
स एकदाऽपृच्छदमात्यमेवं वैदेशिकस्यापि विधीयते मे ।
किं गौरवं तात ! पुरी च केयं किं नामधेयस्त्वमिह प्रसिद्धः ? ॥ ९५ ॥
मन्त्र्यप्यभाषिष्ट विशिष्टबुद्धिः स्वार्थं न ते गौरवमादधेऽहम् ।
चम्पापुरीयं प्रथिता जगत्यां तन्नाथमन्त्र्यस्म्यहमत्र वित्तः ॥ ९६ ॥
स्वार्थोऽपि कस्ते सचिवेति पृष्टस्तेन न्यगादीत्पुनरेव मन्त्री ।
निवेदयिष्यामि तवाऽपि मुग्ध ! स्वार्थं कदाचित्स्वमनोऽनुमत्या ॥९७॥
गतेषु घस्रेषु कियत्स्वमात्यं प्रस्तावमासाद्य स पृच्छति स्म ।
स्वार्थं तमाख्याहि ममानुवृत्त्येत्युक्त स तेनाभिदधेऽभिसन्धिम् ॥ ९८ ॥
श्रुत्वा तदाकूतमुदारचेता. स नि.श्वसन् दिक्करकोऽप्युवाच ।
आ ! युक्तिमुक्त भवता किमुक्तं वच' कलङ्क रचयत् कुलस्य ॥ ९९ ॥
को नाम तत्कर्म विनिर्मिमीते भूतं न यत्क्वापि न भावि यच्च ।
सचेतनः क. परिणीय कन्यां प्रदातुमीहां तनुतां परस्मै ॥१००॥
तद्वाचमन्तर्विनिवेश्य मन्त्री च्छेत्स्यामि मूर्द्धानमिति ब्रुवाण' ।
पाणौ कृपाणं कलयन्स पापात्कृपापरैः प्राहरिकैर्न्यवारि ॥ १०१ ॥
देशे त्वदीये यदि वा कुलेऽस्मिन् प्रवृत्तिरेषा न तथापि मेऽर्हा ।
आमुष्मिकं वैहिकमीहमानः समाचरेत्कः प्रतिषिद्धमर्थम् ? ॥ १०२ ॥
विमुञ्च सन्तापकरं प्रकोपं कोशे कृपाणं क्षिप मन्त्रिराज ! ।
भवादृशा बालवधाय खड्गं किमाददाना न खलु त्रपन्ते ? ॥ १०३ ॥

अवोचदज्ञानवशादवद्ध बाल प्रवालच्छविदन्तवासा॰ ।
विदन् प्रभूणां पुरत क एवं वदेत्पिधत्ते प्रतिपाद्धि दोषान् ॥१०४॥
तावत्प्रतीक्षस्व विबोधयामो यावद्वय बालमबालबुद्धिम् ।
इतीरितस्तै प्रशशाम मन्त्री सामप्रसाध्या ह्यविपा भवन्ति ॥१०५॥
रक्षानियुक्तास्तमबूबुधस्ते तथा यथामंस्त स तद्वचस्तत् ।
ऊचे च तन्मे सुमते ! प्रदेयं प्राप्नोमि यत्पाणिविमोचनेऽहम् ॥१०६॥
आमेति तस्य प्रतिपद्य साख्याहारमाकारपरार्द्धमूर्त्ते ।
वैवाहिक धीसख एव सर्वं विधापयामास विधि विधिज्ञ॰ ॥१०७॥
प्रवाद्यमानेषु विचित्रभङ्ग्या महामृदङ्गेषु कलस्वनेषु ।
मार्दङ्गिकैर्द्रव्यमुपाददानैरुत्तार्यमाणं स्वसुवासिनीभि ॥१०८॥
योषासु भूषासुमनोहरासु प्रकुर्वतीषु प्रवरासु गीतम् ।
अभ्यज्य तैलेन सुगन्धिना त हारिद्रचूर्णोपचितेन तेन ॥१०९॥
स्ववृत्तसन्तोषितकान्तपुत्रप्रपूर्य्यमाणानुपमाभिलापा ।
अम्भोभिरुष्णैरवदातरूपैरासिस्नपस्त प्रवरा रमण्य ॥११०॥

(युग्मम्)

विलेपनं काश्चन चक्रुरङ्गे कर्पूरसम्भाजितचन्दनेन ।
ललाम काश्चिच्च ललाटपट्टे गोरोचनारोचितकुङ्कुमेन ॥१११॥
सदा विवाहव्यवहारविज्ञा॰ काश्चिद्बबन्धुर्वलय प्रकोष्ठे ।
ताम्बूलमाराद्धनसारमिश्रं व्यश्राणयन् काश्चन भव्यभावा॰ ॥११२॥
कपोलदेशे मृगनाभिपत्रभङ्गी व्यधु काश्चन रागसङ्गान् ।
वासांसि काश्चित्परिधाप्य नव्यान्यदीदृशन्दर्पणमिद्धदर्पाः ॥११३॥
इत्युग्रसौभाग्यपरप्रभावानुमेयभाग्यातिशयस्य तस्य ।
चक्रु॰ पुरन्ध्र्योऽपि विधि विवाहे क भाग्यभाजां न भवन्ति भोगा॰॥११४॥

॥ चतुर्भि॰ कलापकम् ॥

आरोपितान् कुङ्कुमपङ्कहस्तान्सीमान्तिनीभिर्दधतं समन्तात् ।
तत॰ समारुक्षदरूक्षकायं स हस्तिनं हस्तिपकात्तहस्त. ॥११५॥
वीणासु भेरीषु च वाद्यमानास्वनन्तरामासु च कुर्वतीषु ।
गीतानि तारस्वरमन्यपुष्टाध्वानि जयन्तीषु तमन्वितासु ॥११६॥

(युग्मम्)

भट्टेषु काव्यानि पठत्सु सत्सु गीतानि गायत्सु च गायनेषु ।
बर्हातपत्रेण विराजमान स मण्डपं प्राप निवृत्ततापः ॥११७॥
तन्मण्डपद्वारि मतङ्गजेन्द्रस्कन्धात्समुत्तीर्य्य दिशन् वसूनि ।
कुलाङ्गनाभि कृतमर्घपात्रैरर्घं गृहीत्वान्तरमाविवेश ॥११८॥
(युग्मम्)

विभूषयामास विभूषणांशुप्रद्योतिताशः स कुमारसिंह ।
सिंहासन श्रीसुरसुन्दरेण व्यधायि यत्तत्र सुमेरुतुङ्गम् ॥११९॥
त्रैलोक्यसुन्दर्य्यपि वर्यभूषाविभूषिताङ्गी विहिताभिषेका ।
विलेपनैर्वासितदिक्कदम्बा दुकूलवास पिहिताननश्री ॥१२०॥
सा मातृकासद्मनि मातृकाणां वृद्धाङ्गनास्थापनया स्थितानाम् ।
विधाय पूजां सुमनोऽनुरूपां भद्रासने प्राग्निषसाद भद्रा ॥१२१॥
(युग्मम्)

लग्ने प्रशस्ते पतिमित्रपूर्णदृष्ट्या प्रहृष्टे बलशालमाने ।
षड्वर्गशुद्धे च तयो. पुरोधा अमीलयन्मङ्क्षु करं करेण ॥१२२॥
स मङ्गले प्राचि दुकूलभारान् ददौ द्वितीये वरभूषणानि ।
सुवर्णमाणिक्यभर तृतीये तुर्य्ये रथाश्वादि धराधिराज ॥१२३॥
यावत्कर मुञ्चति नैव पुत्र्या धव स तावत्तमुवाच भूप ।
जामातरद्यापि विमृग्यते यत्त देशमादत्स्व विना निदेशम् ॥१२४॥
देशान्निदेशानिव ते निदेशव्यापारभाज परिपालयन्तु ।
तान्पञ्च पञ्चाञ्चित ! वल्लभस्य देशस्य वाहान् दिश मे नरेन्द्र ! ॥१२५॥
कियत्त्वया याचितमित्युदित्वा स भूपति पञ्च ददौ तुरङ्गान् ।
प्रसादमासेदुषि मानसेऽस्मिन्नैवास्त्यदेयं महतां हि किञ्चित् ॥१२६॥
विवाह्य तां मङ्गलकुम्भ एवं समाश्रयद्वासगृह स यावत् ।
तावद्भुजिष्याभिरुदीर्य्यमाणा स्वय समाकर्णयति स्म वाच ॥१२७॥
निर्गम्यतां सांप्रतमेष गेहात्प्रयोजन न परिपूर्णमेव ।
सख्यः क्षणं तिष्ठतु स प्रतिष्ठ प्रवर्त्तते यावदिद तमोऽपि ॥१२८॥
तासां गिर कर्णपथं स नीत्वा विमृश्य चित्तेन निमेषमात्रम् ।
शरीरचिन्तामिषतोऽभिमानी विनिर्ययौ वासगृहात् सवेगम् ॥१२९॥
सुवर्णपात्रं सलिलै. प्रपूर्ण स्वपाणिनादाय नरेन्द्रकन्या ।

तमन्वयासीद्रभसाद्रसोत्का सम्पद्यथैव व्यवसायभाजम् ॥ १३० ॥
वितत्य किञ्चित्किल देहचिन्तामेतं वधूरुन्मनसं समीक्ष्य ।
ब्रूते स्म किं नाथ ! विबाधते त्वामारोग्यसम्पातकरी बुभुक्षा ॥ १३१ ॥
अभाषमाणे दयिते वधूटी चेटीं समादिश्य पटीरवासा ।
स्थालं समानाययति स्म चेत.प्रमोदकैर्मोदककैः प्रपूर्णम् ॥ १३२ ॥
ताभ्यामुभाभ्यामपि मोदकास्ते निष्कृत्रिमप्रेमसमन्विताभ्याम् ।
एकत्र पात्रे घनसारसारैरिवाहिता हर्षभरेण भुक्ता. ॥ १३३ ॥
आस्वादमास्वादयतेव तेषामस्या निजस्थानविबोधनाय ।
तेनेन्दुखण्डैरिव निर्मितानां सौन्दर्यमादर्शयतेत्यवादि ॥१३४॥
स्याच्चेद्द्विशालासलिलं कथञ्चित्तन्मोदका मानसमोदका. स्युः ।
द्राक्षारसोत्पादितपानकान्त सितापरिक्षेपनिदर्शनं च ॥१३५॥
तद्भाषिताकर्णनतो धरित्रीधवस्य पुत्री परिविस्मिता सा ।
विचिन्तयामास किमार्यपुत्रोऽप्यबद्धमेतन्निजगाद विद्वान् ॥१३६॥
एतस्य जन्मास्पदमेपिका पूरितो विशालानगरी दविष्ठा ।
एतज्जनन्या जनकस्य पस्त्य प्रशस्तमास्ते ध्रुवमेव तत्र ॥१३७॥
निर्णीय बुद्ध्येति लवङ्गपूगकर्पूरपूरेण विमिश्रितं सा ।
ताम्बूलमस्मै प्रददे नरेन्द्रकन्या मनोरागमिव स्वकीयम् ॥१३८॥
शरीरचिन्ताकपटेन धीमान् वासालयादेष विनिर्जगाम ।
आदाय पञ्चापि तुरङ्गमांस्तान् क्रमात् पुरीमुज्जयिनीं जगाम ॥१३९॥
यत्रान्धकोऽसौ धृतराष्ट्र एव पङ्गु प्रतीतोऽरुण एव कामम् ।
मनुष्यधर्मा स परं कुबेरः काणः पुनर्भार्गव एक एव ॥१४०॥
(युग्मम्)

समागतं तं पितरौ समीक्ष्य प्रमोदमासेदतुरञ्जसापि ।
गाढं समालिङ्गय चुचुम्बतुस्तच्छिरोऽम्बुजं षट्पददम्पतीव ॥१४१॥
महामहं जन्मदिने तदीय यं चक्रतुस्तौ सुतरां प्रहृष्टौ ।
तस्यागमे तं विहितावशिष्टमिवादधाते स्म ततोऽप्यनल्पम् ॥१४२॥
वृत्तं यथावृत्तमथ स्वकीयं निवेद्य पित्रो. प्रतिपत्तिपूर्वम् ।
अत्रीनहत्तानपि पञ्चवाहान् हर्म्ये विनिर्माय स वाजिशालाम् ॥१४३॥
विद्याविहीनस्य नरस्य पुंस्त्वं तिर्यक्त्वमेव प्रकटीकरोति ।

इति स्वचित्ते प्रतिपद्य विद्याभ्यासाय यत्नं स दृढीचकार ॥१४४॥
वाग्वैभवं केवलमेव तज्ज्ञाः पुंस्त्वे निदान परमामनन्ति ।
साध्यस्य सिद्धि हि विधित्सतादौ तत्साधनं साधनमेव साध्यम् ॥१४५॥
अध्यापकस्याखिलवेदविद्याक्षीरोदसामीप्यमवाप्य तूर्णम् ।
तत स पीताब्धिरिव प्रकृत्या विद्यामृत तच्चुलुकीचकार ॥१४६॥
अथावनीवासवनन्दनी सा त्रैलोक्यसुन्दर्यपि सुप्रबुद्धा ।
पार्श्वे शयानं सचिवस्य पुत्रं विलोक्य वैलक्ष्यविलक्षणाऽऽस्या ॥१४७॥
अपास्य तं दुष्टरुजाभिभूतं भूतार्त्तवद्वासगृहान्निरीय ।
दासीव दासीजनसन्निधाने निशां कथञ्चिद् गमयाम्बभूव ॥१४८॥
(युग्मम्)
सेवागतो मन्त्र्यपि भूमिपालं व्यजिज्ञपद्विज्ञतमः प्रभाते ।
तादृक् सुरूपोऽपि सुतोऽभवन्मे त्वदङ्गजासङ्गवशेन रुग्ण. ॥१४९॥
तत् क प्रतीकारमहं प्रकुर्वे कस्याग्रतो वच्म्यसमाधिमेतम् ।
श्रुत्वेति देवीमनुजेश्वराभ्यां निवारिता दृष्टिपथात् क्रुधा सा ॥१५०॥
राजन्यसिंहं निजगाद सिंहं विज्ञापनार्थे जनकस्य राज्ञः ।
क्रुद्धस्य नेतुः पुरत सुतेन गन्तुं न शक्यं सुतया न चापि ॥१५१॥
सिंहस्य विज्ञापनयैव राज्ञाऽऽहूता सुता व्यज्ञपयत् स्ववाचा ।
पुंवेषमाश्रित्य तवाज्ञयेत्वावन्तीं च जामातरमानयामि ॥१५२॥
आकस्मिकी कुष्ठरुजा शरीरे ज्वरादिवन्नैव भवेन्नराणाम् ।
शापेन कस्यापि मुनेर्यदि स्यात्तथापि पूतिव्रणसंश्रितानाम् ॥१५३॥
दुर्वृत्तमेतत्सचिवस्य सर्वं कियच्चिर स्थास्यति संवृतं वा ।
अन्तर्दधाने न हि पुण्यपापे सुगन्धदुर्गन्धवदावृते च ॥१५४॥
पुण्यैर्ममायं घटितश्चिरत्नैस्तेषां द्विषत्त्वं सहसा कथं स्यात् ? ।
दिगीशवृन्दांशभवः प्रभुर्वा स्वयं विचारं कुरुतां विचारम् ॥१५५॥
नरेन्द्र ! तन्मां विसृज प्रसादं सृज त्यजाकारणकोपमेतम् ।
पश्चादपि क्रोधफलं मयि त्वं प्रभो ! न किं दर्शयितुं प्रभु स्या. ? ॥१५६॥
आज्ञापितस्तत्क्षणमेव राज्ञा प्रदाय शिक्षां द्रविण चमूं च ।
प्रत्यर्थिदन्तावलभेदसिंहस्तया समं प्रास्थित सोऽपि सिंह ॥१५७॥
समुत्सुकं तन्मन एव पूर्वं सिंहस्तत क्षोणिभुजा प्रणुन्नः ।

ततोऽपि कामः प्रगुणीकृतेषुस्ततो वरं सा लभतां न किं स्वम् ? ॥१५८॥
वीरैरनेकैरनुगम्यमानां प्रस्थाप्य तां भूमिपतिर्गभीरः ।
कारीपसंछन्नकृशानुवच्च प्रच्छन्नकोपः सचिवाधमेऽस्थात् ॥१५९॥
केनापि नालक्षि पथि प्रयान्ती स्त्रीत्वेन सा नृनपि वार्तयन्ती ।
नृपेण दत्तं खलु धारयन्ती पुंवेषमक्षाण्युपवासयन्ती ॥ १६० ॥
समेति सूनुः सुरसुन्दरस्य त्यागी गुणी क्षोणिपुरन्दरस्य ।
इति श्रुतिग्राहितया जनौघा लात्वोपदां द्रष्टुमुपागमंस्ताम् ॥१६१॥
अवन्तिदेशाधिपतिर्नरेन्द्रः पञ्चालदेशाधिपतेः कुमारम् ।
समाव्रजन्तं विनिशम्य चारैरुपाचरत् संमुखमानदानैः ॥१६२॥
प्रदापिते मालववासवेनावासे नरेन्द्रस्य सुतः स तस्थौ ।
दौर्विध्यविच्छेदकराणि यच्छन् द्विजोत्तमानां द्रविणानि कामम् ॥१६३॥
सरोवरे वारिविसारिपानहेतोः प्रयातः पितृनामवर्णैः ।
अङ्काञ्चितान् पञ्चतुरङ्गमांस्तान्स एकदाऽपश्यदहश्यदोषान् ॥१६४॥
एते तुरङ्गाः प्रविशन्ति यत्र तत्सद्म सद्मप्रभुनाम मत्वा ।
ब्रूतेत्य मह्यं झटिति स्वभृत्यानित्यादिशन् सिंहमुखेन सोऽपि ॥१६५॥
तथाकृते तैः क्षितिपालसूनुर्वितत्य सिंहेन समं विचारम् ।
निमन्त्रयामास समं समग्रैश्छात्रैरुपाध्यायमधीयमानैः ॥१६६॥
समागतं तं समवेक्ष्य सोऽपि च्छात्रेषु सर्वेष्वपि भासमानम् ।
नरेन्द्रपुत्रः परमं प्रमोदं योगीव लेभे प्रतिभासमानम् ॥१६७॥
वणिक्कुमारोऽपि कुमारधामा कुमारमालोक्य विसिष्मिये तम् ।
इयं किमाकल्पविपर्ययेण प्रिया मदीया समुपागता सा ॥१६८॥
भोज्यैर्विचित्रैर्वसनैरनेकैरमानयच्छात्रजनं समस्तम् ।
यं मङ्गलेऽसौ विदधे विशेषं तेनैव जज्ञे स च साभ्यसूयः ॥१६९॥
तांस्तीर्थयात्रोपगतानिवाऽय संमान्य सर्वानपि भाषते स्म ।
आख्यानिकां कोऽपि भवत्सु मेऽग्रे निजानुभूतां सरसां ब्रवीतु ॥१७०॥
विज्ञप्तिमाकर्ण्य नृपाङ्गजस्य गुरुर्जगौ तान् प्रति जल्पतेति ।
ते साभ्यसूया जगदुः स एव वक्ता कथां यत्र कृतो विशेषः ॥१७१॥
अथ स्वयं मङ्गलकुम्भ एतां बुद्ध्वा विबुध्यात्मवधूमधूतः ।
विवाहमुख्यं सकलं स्ववृत्तं सिंहादिकानां पुरतो बभाण ॥१७२॥

गृह्णीत गृह्णीत जवेन चैनमित्युद्धतं जल्पति राजपुत्रे ।
छात्रैः समं पण्डित एव नष्टः स काकनाशं कलितात्मभीतिः ॥१७३॥
भद्रासनेऽमुं विनिवेश्य सान्द्रभद्रार्थिनी राजसुताह सा स्म ।
त्वया कथं नाथ ! तदा विमुक्ता मुक्ताऽप्रहारा ननु मन्दभाग्या ॥१७४॥
विना त्वया नाथ ! यदन्वभूवं दुःखं प्रवक्तुं न तदस्मि शक्ता ।
द्विजिह्वतादोषपरिष्कृतः स प्रवक्तु किं नाम सहस्रजिह्वः ? ॥१७५॥
इति खदु खप्रतिपत्तिपूर्वं स्वाभाविकं वेषमियं प्रपद्य ।
प्रत्यर्प्य सैन्यैः सह तं नृवेषं संमान्य सिंहं व्यसृजद् गृहाय ॥१७६॥
पित्रोः पदद्वन्द्वमनुक्रमेण प्राणीनमत्तामुपदान्वितां सः ।
इयं वधूर्वो नमतीति जल्पन् भक्त्योपगूढः स्वयमप्यनंसीत् ॥१७७॥
वधूं समालोक्य विधूतदोषां श्वश्रूः परं तोषमवाप साऽपि ।
योग्यास्य जाया भवितेति चिन्ता तदैव तस्या हृदयं मुमोच ॥१७८॥
श्वश्रूं समीक्ष्य श्वशुरं च लक्ष्मी निकेतनं चापि परिच्छदं च ।
कृतार्थयामास वधूः स्वमेषा स्वभाग्यसंरम्भविवर्णनेन ॥१७९॥
सिंहोऽपि गत्वा त्वरितं नृपाय प्रत्यर्पयामास स तं नृवेषम् ।
निशम्य तस्या वरलाभवृत्तं मुदान्वितस्तं प्रशशंस भूपः ॥१८०॥
त्वमेव सिंहाखिलवैरिसिंहः परोपकारप्रवणस्त्वमेव ।
इति प्रशस्याङ्गविभूषणानि वासांसि चास्मै नृपतिर्व्यतारीत् ॥१८१॥
अवाप्य चम्पाधिपतेर्निदेशं निवेद्य तं मालववासवस्य ।
स मङ्गलश्चम्पकपुष्पगौरश्चम्पां परीवारयुतः समागात् ॥१८२॥
प्रवेशितामुत्सवपूर्वमेतां समं प्रियेणोपगतां स पुत्रीम् ।
निरीक्ष्य राजा सचिवस्य तस्य दुश्चेष्टितं सत्यममंस्त सर्वम् ॥१८३॥
सर्वस्वमादाय नरेश्वरस्तं समादिशद्वध्यमवन्ध्यकोपः ।
कुम्भस्तदाकर्ण्य तदैव गत्वा विज्ञप्य राजानममोचयत्तम् ॥१८४॥
विमोचितस्तेन दयालुनासौ विसर्जितोऽगाद् द्रुतमन्यदेशम् ।
कस्यापि कुत्रापि कदाचनापि कुकर्म निर्माय न शर्मलाभः ॥१८५॥
स यौवराज्ये नृपतेः प्रसन्नाल्लब्ध्वा सुखं वैषयिकं बभाज ।
तया समं पौरजनोपगीतां विस्तारयन् कीर्तिमिहेन्दुशुभ्राम् ॥१८६॥
अथावनीशं वनपालकोऽपि द्रुतं समागत्य समाजभाजम् ।

व्यजिज्ञपच्चारु मनोरमाख्ये वने यशोभद्रगुरुं समेतम् ॥१८७॥
वितीर्य तस्मै परितुष्टिदान गुरु प्रणन्तु निरगान्नरेन्द्र ।
नत्वोपदेश विनिशम्य राज्ये जामातर न्यस्य ललौ स दीक्षाम्॥१८८॥
राज्य समासाद्य तथा कथञ्चित् स पालयामास नृप प्रजास्ता ।
यथा कदाचित् सुरसुन्दरस्य क्ष्मापस्य नास्मार्षुरपेतबाधाः ॥१८९॥
त्रिवर्गमाराधयतो नृपस्य श्रीमङ्गलस्य श्रितमङ्गलस्य ।
नीत्या प्रजा रञ्जयत प्रभूताः सम्वत्सरा जग्मुरमेयशक्ते ॥१९०॥
अथान्यदा श्रीजयसिंहसूरि प्रणम्य विज्ञानिनमन्वयुङ्क्त ।
कृताञ्जलिः प्राग्भवमात्मनोऽपि देव्यास्तथा मङ्गलकुम्भभूपः ॥१९१॥
जगाद सूरिर्द्विजराजनिर्यत्कान्तिप्रतिक्षिप्ततम प्रचारः ।
अस्ति प्रशस्त क्षितिसंभृतश्रीप्रतिष्ठितं नाम पुरं गरीयः ॥१९२॥
तत्रर्जुरूप कुलपुत्रकोक्त्या ख्यातोऽपि नाम्नाऽजनि सोमचन्द्र ।
कुटुम्बिनी चास्य विशुद्धशीला श्रीदेवभिख्या प्रथिता बभूव ॥१९३॥
सुहृत्तदीयो जिनदत्तनामा श्रद्धाधन श्राद्धकुलावतस ।
देशान्तरं यत्स्वधनानि तस्मै समर्पयामास विसर्जनाय ॥१९४॥
तस्मिन्नवाप्ते विषयेऽपरस्मिन् प्रयच्छत स्वच्छतया धनानि ।
विश्राणनेऽजस्रमहिंस्रवृत्तेः श्रद्धा विशुद्धाऽस्य समुल्लास ॥१९५॥
तस्य प्रियाया अपि दानधर्मे शर्मैकहेतौ मतिरुज्जजृम्भे ।
प्रियस्य वृत्तानुगुणेन नार्य. प्रवर्तयन्ति व्यवहारमेता' ॥१९६॥
नयार्जितं स्वं कुलपुत्रकेण स्वं पात्रसात्तेन कृतं समग्रम् ।
अखण्डितं सौख्यमपेक्षमाणा' किं किं न कुर्वन्ति महाऽनुभावाः ? ॥
स्वग्दोषदुष्टं समवेक्ष्य भद्रा सखीपति सा कुलपुत्रपत्नी ।
हास्याज्जगौ तां प्रति विप्रियं ते किमङ्ग ! माहात्म्यमिद सखि ! स्यात् ॥
येनायमीदृक् समभूत्प्रियस्ते स्मुल्लसत्सूरणकन्दरूपः ।
तस्या वचस्तद्विनिशम्य भद्रा भद्राऽपि सन्तापमधत्त बाढम् ॥१९९॥
तया गिरा तां व्यथितां विभाव्य सौम्येन्दुपत्नी क्षमयाम्बभूव ।
खेदं वृथा त्वं हृदि मा कृथा यत्तनोति जन्तोर्निखिलं स्वकर्म ॥२००॥
अथ स्वमायुः परिपूर्य मृत्वा यातौ युवां तौ क्रमतोऽनुरूपौ ।
अवक्रयेणोपयमस्तवायं परार्थदानेनं बभूव भूप ! ॥ २०१ ॥

सख्याश्च दोषप्रतिपादनेन जज्ञे कलङ्को भवतः प्रियायाः ।
ईदृग्वचस्तस्य निशम्य सूरेस्तयोरभूत् प्राग्भवसंस्मृतिश्च ॥२०२॥
स जातजातिस्मृतिरात्मपत्न्या समं समुत्थाय गुरून् विनम्य ।
आह स्म यावत् समुपैमि गत्वा तावद्भवद्भिः स्थितिरत्र कार्या ॥२०३॥
नैव प्रमादं नृपते ! विदध्या इतीरितेऽसौ गुरुभिः ससार ।
निवेश्य राज्ये तनयं विनीतं वैराग्यरङ्गात्तरसाऽऽससार ॥२०४॥
पार्श्वे गुरूणां गरिमाचलानां दक्षः स दीक्षां विधिवत् प्रपेदे ।
त्रैलोक्यसुन्दर्यपि कुर्वतीव पतिव्रताभावमियं यथार्थम् ॥२०५॥
क्षमां स्थिरामाश्रयतो नृपस्य तथास्य राज्येन बभूव शर्म ।
चारित्रलक्ष्मीं प्रतिपद्य हृद्यां कषायकालुष्यजयाद्यथैव ॥२०६॥
तपांसि तप्त्वा स सुदुस्तपानि निर्माय कन्दर्पमदर्पकं च ।
विहृत्य पृथ्वीं च मुनिस्तयामा स्वर्लोकलक्ष्मीमुररीचकार ॥२०७॥
इत्थं चरित्रं मुनिमङ्गलस्योपदिश्य वाचं विससर्ज सोऽर्हन् ।
संसारसम्भूतमहाधिदुःखप्रस्थानभम्भानिनदानुकाराम् ॥२०८॥
अथाहमर्हन्तमपृच्छमेतं विद्याधराणां कथमाधिपत्यम् ?।
ममाऽघटिष्ट प्रतिपत्पटिष्ठ ! प्रकाशयेदं प्रणतानुकम्प्र ! ॥२०९॥
जिनोऽवदत् पश्चिमपुष्करार्द्धे सीतोदिकाऽस्ति प्रतता स्रवन्ती ।
कूलेऽनुकूले सलिलावतीति ख्यातोऽस्ति तस्या विजयः समृद्धः ॥२१०॥
द्वेधापि तस्मिन्नपि वीतशोका पुरी परीता पुरुषोत्तमौघैः ।
निषेवते यां परिचारिकेव लक्ष्मीरनन्ताश्रयवाञ्छयेव ॥२११॥
रत्नध्वजस्तत्र बभूव चक्री यस्य प्रतापेन विनिर्जितोऽसौ ।
वार्द्धाववाप्य प्रतिपक्षशङ्कां झम्पां ददौ वाडवजातवेदाः ॥२१२॥
तथा न वक्षः प्रतिपक्षभेत्तुर्व्यभूषि वक्षः कनकश्रियाऽस्य ।
सौभाग्यलक्ष्मीरसराजधान्या राज्या यथा तत्कनकश्रियैव ॥२१३॥
दया यथा मानस एव राज्ञस्तस्य न्यवात्सीन्नयवत्सलस्य ।
तथैव हेमच्छविहेममालिन्याख्याऽद्वितीया महिषी द्वितीया ॥२१४॥
ताभ्यामुभाभ्यामधिकं प्रियाभ्यां विभ्राजमानः स कलाधिनाथः ।
प्रकाशयामासतरां सदाशा ज्योत्स्नाकलाभ्यामिव शीतधामा ॥२१५॥
स्वप्नेऽन्यदोत्सङ्गगतं नृपस्य कान्ता लतायुग्ममवैक्षताद्या ।

पद्माश्रयां पद्मलतां द्वितीया तथा व्यलोकिष्ट निजाङ्कभाजम् ॥२१६॥
स्वप्नानुसारेण च बभ्रतुस्ते गर्भानदभ्रद्युतिपेशलाङ्गयौ ।
आद्या प्रसूते स्म सुते क्रमेण सुवर्णपद्मादिलतोत्तराख्ये ॥२१७॥
सा हेममालिन्यपि हेमगौरी पद्माभिधानां तनयामसूत ।
ता. पाल्यमाना अपि लाल्यमानास्तिस्रः पितृभ्यामपि वृद्धिमापु· ॥२१८॥
अधीतशास्त्रार्थविबोधभाजस्तिस्रोऽपि ता गुप्तिवदप्रमत्ता. ।
प्रवर्तिनी नो मुमुचुः कदाचिन्नमद्रसेनाजितसेनिकाह्वाम् ॥२१९॥
पद्मेव पद्मा सुभगान्यदातिनिर्वेदपात्रीकृतबुद्धिधारा ।
तस्याः समीपे व्रतमादिताऽसौ कदाचन व्यञ्जपयन्मुदा ताम् ॥२२०॥
षष्टिश्चतुर्थानि भवन्ति यस्मिन् द्वे च त्रिरात्रे तदहं तपोऽद्धा ।
कुर्वेतरां कर्म चतुर्थसंज्ञं सा तन्मता तद्विदधे स्वतुष्ट्या ॥२२१॥
सैवान्यदोद्दिश्य शरीरचिन्तां पथि प्रयान्ती यतिनी पराद्ध्या ।
द्वौ राजपुत्रौ युधमादधानौ वाराङ्गनानङ्गलतानिमित्तम् ॥२२२॥
उद्गूर्णशस्त्रौ सरसौ समानौ तत्सङ्गसम्प्राप्तिनिदानमेषा ।
समीक्ष्य विश्वाप्रतिरूपरूपौ व्यामोहमूढाऽरचयन्निदानम् ॥२२३॥
(युग्मम्)

प्रान्तेऽथ नालोच्य दुरीहितं तद्बलव्यपायेऽनशनेन मृत्वा ।
सौधर्मकल्पेऽजनि देवतासौ कल्पद्रुसंपूर्ण्यमनोविकल्पा ॥२२४॥

रत्नध्वजस्य महिषी महिता गुणौघै-
धर्मं वितत्य विततं प्रथमा विपन्ना ।
विद्याभृतामधिपतिर्मणिकुण्डली त्व
जातो भुजाबलविनिर्जितकुण्डलीशः ॥२२५॥
ते चक्रिजे कनकपद्मलते भ्रमित्वा
गर्भाशयप्रभवदुःखचितं भवं च ।
दानादिधर्ममुरुशर्मकरं निषेव्य
श्रीषेणभूपरिवृढस्य सुतावभूताम् ॥ २२६ ॥
आयुः पल्योपमपरिमितं पूरयित्वाद्यकल्पा-
त्पद्मा च्युत्वा सपदि गणिकानन्तमत्याह्वयाऽभूत् ।
श्रीषेणक्ष्मापरिवृढसुतौ साम्प्रत तन्निमित्तं

युध्येते तौ स्मरपरवशौ बिन्दुषेणेन्दुषेणौ ॥२२७॥
पीत्वा तीर्थकराननादिति वच:पीयूषमत्रागमं
प्राच्यप्रेमवशान्निवारयितुमन्यायं युवानौ युवाम् ।
माता पूर्वभवेऽभव तु भवतोर्वाराङ्गनेयं स्वसा
तद्भद्रौ ! सुकुलीनयोः पशुजनाचारो न वां युज्यते ॥२२८॥
देवः कदाचन कदाचन नारकोऽपि
राजा कदाचन कदाचन रङ्क एष: ।
कीटः कदाचन कदाचन मानुषोऽपि
लक्ष्यो भवी न नटवत्परिवर्तमानः ॥ २२९ ॥
तदुदितमिति सर्वं बिन्दुषेणेन्दुषेणौ
श्रवणपथमवाप्य प्रीतिपूर्वं विबुद्धौ ।
प्राणिजगदतुरेवं प्राप्तहर्षप्रकर्षौ
निरुपचरितमावां बोधयेत्त्वां विना कः ? ॥२३०॥
वचनरचना स्नेहाक्ता तेऽविनश्वरदीपिका
हृदयभवनं कर्णद्वारा न नौ प्रविशेद्यदि ।
प्रसृमरमिदं पापध्वान्तं निरस्य तदा कथं
शिवपथमहो ! जानीयाव प्रयत्नशतैरपि ॥ २३१ ॥
विद्याभृन्मणिकुण्डली सविनयं ताभ्यां विसृष्टस्ततः
शस्त्राशस्त्रिकथामपास्य सहसा कल्याणमालावृतौ ।
प्रव्रज्यां प्रतिपद्य तौ नृपसुतै: सार्द्धं सहस्रैश्चतु:-
संख्यै: कर्मबलं विभिद्य तपसा कैवल्यमासेदतु. ॥२३२॥
आसीत्श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभो:
पट्टे श्रीगुणभद्रसूरिसुगुरुश्चारित्रभाजां गुरु. ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गश्चतुर्थोऽगमत् ॥२३३॥

॥ इति श्रीशान्तिनाथचरिते चतुर्थः सर्गः ॥

अर्हम्

# अथ पञ्चमः सर्गः ।

यन्नाममात्रश्रवणान्नराणामेनांसि नाशं झगिति श्रयन्ते ।
संविन्मणीरोहणरोहणाद्रिः श्रीशान्तिनाथः स शुभाय वोऽस्तु ॥ १ ॥
अन्तार्णिपल्येन्दुकराभिराम. क्षेत्रं द्विधा यो भरतं चकार ।
विद्याधराणां भवनानि यस्मिन् वैताढ्यनामा स धराधरोऽस्ति ॥ २ ॥
तस्मिन् पुरं श्रीरथनूपुराद्यास्ते चक्रवालाभिधमुच्चवप्रम् ।
श्रेणेर्विभूषाकृतिदक्षिणस्या वर्ष्मेव माहेश्वरमिद्धभूति ॥ ३ ॥
क्ष्मापो जटी तज्ज्वलनाविताभः प्रत्यर्थिकान्तारतिरोहितश्री ।
काष्ठान्तरावेशविगाहमानो विद्याधरेन्द्रोऽन्वशिपद्बलीयान् ॥ ४ ॥
पत्नी तदीयाजनि वायुवेगा यल्लोचनाना सुपमामवेक्ष्य ।
आसन कुरङ्गा हरिणा' प्रसिद्धा मा शब्दशास्त्रेप्वधुनापि संज्ञा ॥ ५ ॥
सूनुस्तदीयोऽभवदर्ककीर्त्तिर्द्धाम्नार्करूपः शरदिन्दुकीर्तिः ।
यो यौवराज्यं जनकोपनीत लीलापरः पालितवानशङ्क' ॥ ६ ॥
श्रीपोतनेश प्रथमो हरिस्ता शस्तामुदूहेऽवयवैस्त्रिपृष्ट ।
अस्यानुजासीत् स्वयमादिभूता ख्याता प्रभाख्या रतिरम्यरूपा ॥ ७ ॥
विश्राणयामास स च प्रसादप्रासादचित्तः श्वशुराय तस्मै ।
श्रेण्योर्द्वयोरप्यसमानलक्ष्म्यो राज्यं विरज्यन्निव राजकान्ति. ॥ ८ ॥
श्रीअर्ककीर्त्तिर्दयिताजनिष्ट मालाभिधा मेघवनस्य पुत्री ।
विद्याधरेन्द्रस्य यदीयनाम्नि ज्योति पदं पूर्वमभूदपूर्वम् ॥ ९ ॥
पल्यङ्कपर्यङ्कमधिश्रिता सा किञ्चित् प्रबुद्धा वदनारविन्दे ।
आलोकयामास विशन्तमर्कं ध्वान्तप्रचारच्छिदुर कदाचित् ॥ १० ॥
स्वप्नं समाकर्ण्य हृदीश्वरेण प्रोक्तं फलं सा प्रतिपद्यमाना ।
श्रीषेणजीवेन भवे चतुर्थे च्युत्वाऽऽद्यकल्पादथ संश्रितारम् ॥ ११ ॥
जातस्य पुत्रस्य शुभे मुहूर्ते जन्मोत्सवं ऋद्ध्युचितं विधाय ।
स्वप्नानुसाराद्विदधे पितृभ्यामाख्या यथार्थाऽमिततेजसेति ॥ १२ ॥
राज्येऽर्ककीर्तिं विनिवेश्य पुत्रं विद्याधरेन्द्रज्वलनो विरक्तः ।

जग्राह दीक्षामभिनन्दनस्य पार्श्वे जगन्नन्दनसंश्रितस्य ॥ १३ ॥
जीव पुन सत्यकिकन्यकाया सौधर्मकल्पाच्च्यवनोपपत्त्या ।
विद्याभृतो मेघवनस्य पुत्र्या पुत्रीत्वमापत्सुकृतानुभावात् ॥ १४ ॥
स्वप्ने सुतारा रजनी निदध्यौ गर्भे श्रितायां जननी यदस्याम् ।
आख्या पितृभ्यां द्युतिभासितायाश्चक्रे सुतारेति तत. सुतायाः ॥ १५ ॥
श्रीषेणपत्न्या अभिनन्दिताया प्रच्युत्य जीवस्तत एव नाकात् ।
जज्ञे त्रिपृष्ठस्य हरेर्महिष्याः सूनु प्रसूनायुधरूपमूर्ति ॥ १६ ॥
गर्भस्थितेऽस्मिन्नपि साभिषेका स्वप्नेऽम्बया श्री समवैक्षि यच्च ।
तेनैष पित्राऽप्यभिधीयते स्म नाम्ना सुत. श्रीविजय स्वकीय. ॥ १७ ॥
तस्यानुजोऽभूद्विजयादिभद्रो भद्राकृतिर्ध्वस्तसमस्ततन्द्र ।
ज्योति प्रभाख्या शिखिनन्दिताया जीवस्तथाजन्यऽनुजा तदीया ॥१८॥
विप्रश्चव सोऽपि च सत्यभामापत्नीवियोगात् कपिलस्तदार्त ।
मृत्वा भ्रमित्वा सुचिर भवौघ चञ्चानगर्या चमराञ्चितायाम् ॥ १९ ॥
विद्याधरेन्द्रोऽशनिघोषनामा द्वेषिक्षमापालमहीन्द्रपक्षान् ।
भिन्दन् समग्रानशनीयमान स्वौजोभिरासीदसमानभाव ॥ २० ॥
(युग्मम्)

भूपार्ककीर्तेस्तनयामुदूहे प्राज्योत्सवै श्रीविजय सुताराम् ।
श्रीमात्रिपृष्ठप्रभवा प्रभाढ्या ज्योति प्रभाख्याऽमिततेजसा च ॥ २१ ॥
क्ष्मापार्ककीर्तेर्नगरे कदाचित्तातो व्रती स्वैर्गुरुभि. सहैव ।
अभ्यागमद् व्योमविहारकारी सहारकारी जनपातकस्य ॥ २२ ॥
गत्वाऽर्ककीर्ति प्रणिपत्य भक्त्या सर्वान् विशालाख्यवनस्थितास्तान् ।
सद्देशनां गुर्वभिनन्दनस्य शुश्राव स श्रावकवन्नरेन्द्र ॥ २३ ॥
आलोक्यते शर्म न भूमिलोके नामैव तस्यापि यथा सुधाया ।
तल्लाभमिच्छुर्यदि तर्हि जैनी दीक्षां समादत्स्व विशेषवेदिन् ! ॥२४॥
वाचयमानामधिपस्य वाच तस्यैवमाकर्ण्य स मानवेन्द्र ।
राज्ये निवेश्याऽमिततेजस त पुत्र प्रपेदे पदवी मुनीनाम् ॥ २५ ॥
शौरिस्त्रिपृष्ठस्य मृतेरितश्च शोकप्लुतान्त करणोऽचलोऽपि ।
नीलाम्बरः प्रव्रजति स्म राज्ये दर्पोद्धत श्रीविजय निवेश्य ॥ २६ ॥
सिंहासनं पित्र्यमधिष्ठितौ तौ विभ्रेजतुर्विक्रमसंभृतांसौ ।

कैलासशैलस्य विशालशृङ्गे पञ्चास्यशावाविव मानवासौ ॥ २७ ॥
राजार्ककीर्त्ति पुरमेकदा चागात् पोतन जामिदिदृक्षयोत्क ।
प्रत्यट्टमूर्द्धीकृतवैजयन्तीलक्ष महासमश्चविपश्चित च ॥ २८ ॥
आम्रच्छदैरुद्ग्रथितैर्निबद्धस्फारीभवद्वन्दनमालिकं च ।
पौरै प्रमोदाकुलितैरनेकैराधीयमानोत्सवमादरेण ॥ २९ ॥
आनन्दसम्फुल्लविलोचनश्रीर्दृग्गोचरीकृत्य विसिस्मिये तत् ।
किं स्वर्गत. स्वर्गपुर समागादत्यद्भुतश्रीभिरिति श्रितोह ? ॥ ३० ॥
॥ त्रिभिर्विशेषकम् ॥

एतं समायान्तमपेतदोषं भूमीपति श्रीविजयोऽभ्युदस्थात् ।
अन्योन्यमाश्लिष्य निषेदतुस्तावेकासने प्रेम निदर्शयन्तौ ॥ ३१ ॥
ऊचेऽर्ककीर्तिप्रभव क्षितीश स्मेरानन. श्रीविजय प्रहृष्टम् ।
एतत्पुरं ते क्रतुराजशक्रसौराज्यसम्बन्धदिन विनैव ॥ ३२ ॥
आमोदसङ्कीर्णमुदित्वरांशुप्रोत्फुल्लपाथोरुहवत् किमीदृक् ? ।
सजातमावेदय तन्ममापि हेतु तदत्र प्रियमित्र ! चित्रम् ॥ ३३ ॥
( युग्मम् )

तस्योक्तमेतद्धृदये निधाय प्राह स्म स श्रीविजयोऽतिवाग्मी ।
अस्माद्दिनादष्टमके दिनेऽत्र ज्योतिर्विदेक समुपाजगाम ॥ ३४ ॥
आशी प्रदानैरभिनन्द्य मां स प्रत्तासनो वेत्रभृता निविष्ट ।
यत्कार्यमुद्दिश्य समागमस्त्वं तन्मे द्विज ! ब्रूहि मयेति पृष्ट ॥ ३५ ॥
नैमित्तिकोऽजल्पदनल्पबोध क्षोणीसुनासीर ! निबोध तत्त्वम् ।
अस्मादृशां यद्यपि याचितेन वृत्तिर्विधात्रा परिकल्पिताऽस्ति ॥ ३६ ॥
त्वत्तस्तथाप्यर्थयितु न चागां किन्त्वागमं दर्शयितुं कला स्वा. ।
युष्मादृशामग्रत एव धीराः क्लान्ति कलाना शमयन्ति यस्मात् ॥ ३७ ॥
ज्योतिर्विद सन्ति परस्सहस्रा येऽतीतमुद्भावयितुं क्षमन्ते ।
येऽनागतं किञ्चन सम्प्रदर्श्य कौतूहलं राजहृदा न तेऽत्र ॥ ३८ ॥
तत्किं विजानासि मयेति पृष्टे तेनोक्तमाकर्णय भूमिपाल ! ।
घस्रादित सप्तमकेऽपि घस्रे मध्याह्नकाले पतिताशनिर्द्राक् ॥ ३९ ॥
श्रीपोतनेशोपरि दैवयोगान्नैतद्वचो मे व्यभिचारि किञ्चित् ।
आकर्ण्य तत्कर्णसुदु.श्रवं मेऽमात्येन वैमत्यविसस्थुलेन ॥ ४० ॥

आक्षिप्य नैमित्तिकमात्मनैव क्रोधान्धतामाश्रयता न्यगादि ।
त्वन्मूर्ध्नि किं वा पतिता तदानीमाख्याहि मे पृच्छत एव तावत् ? ॥४१॥
( युग्मम् )

तद्वाचमन्तर्विनिवेश्य तेन प्रोचे मयि स्वर्णमणिव्रजानाम् ।
वृष्टिः पतिष्यत्युदयं दिशन्ती भानोरिव ध्वान्तभरं हरन्ती ॥ ४२ ॥
धैर्यं समालम्ब्य मया ततोऽपि स्व धीसख प्रत्युदितं यदस्मै ।
न क्रुध्यतेऽमात्य ! विशिष्टशास्त्रदृष्टार्थसार्थप्रतिपादकाय ॥ ४३ ॥
दैवज्ञसंवेदनसम्प्रसिद्धमाम्नायमावेदय मे पुरः स्वम् ।
इत्युक्तमात्र स जगाद देव ! राम प्रवव्राज यदाचलोऽसौ ॥ ४४ ॥
शाण्डिल्यनामापि पिताऽनु तं मे त चाऽनु दीक्षामहमग्रहीषम् ।
जज्ञौ निमित्त तत एव सम्यक्कालत्रयावेदनजागरूकम् ॥ ४५ ॥
यत्पद्मिनीखण्डविराजमान श्रीपद्मिनीखण्डमिति प्रसिद्धम् ।
अव्राजिष तत्पुरमन्यदाऽहं कुर्वन् विहारं जनपापदाहम् ॥ ४६ ॥
तस्मिन् मदीया जनकस्य जामिर्नाम्नाऽहिरण्यापि हिरण्यलोमा ।
तत्पुत्रिका चम्पकपत्रगौरी चन्द्रानना चन्द्रयशोऽभिधाऽभूत् ॥ ४७ ॥
आलोक्य तां मन्मथराजधानीं त्रैलोक्यसुभ्रूसुभगत्वभेत्रीम् ।
कामेन लब्धाऽवसरेण बाणैरुत्तेजितैः पञ्चभिराहतोऽस्मि ॥ ४८ ॥
अर्थीव मानं विजहाति लज्जां दूरीकरोत्येव पिशाचकीव ।
भिन्ते च चार्वाक इवात्मसिद्धिं कन्दर्पबाणैरभिताड्यमान ॥ ४९ ॥
दीक्षां प्रतिज्ञामिव हीनवादी सन्त्यज्य तां प्रार्थ्य कथञ्चनापि ।
भव्ये मुहूर्ते परिणीय तत्राऽवात्सं प्रजावत्सल ! निश्चल सन् ॥ ५० ॥
इत्येवमाख्याय गृहीतमौने तस्मिन्नुपायं नृपरक्षणाय ।
सञ्चिन्तयन् धीसख एक इत्याचख्यौ स्वबुद्धिप्रभवं सुमन्त्रम् ॥५१॥
स्वाम्यम्बुधौ तिष्ठतु यानपात्रं सश्रित्य तस्मिन् पतिताऽशनिर्न ।
अन्योऽब्रवीत्तत्र निवारणीयो भ्रश्यन्नसौ केन विपश्चितापि ? ॥५२॥
वैताढ्यशैले प्रवरेऽत्र काले सौदामिनी नैव पतेत्ततश्च ।
तत्कन्दरान्तःस्थितिमादधातु स्वामी समाधाय दिनानि सप्त ॥ ५३ ॥
मन्त्री तृतीयो निजगाद मन्त्र श्लाघ्योऽपि नैवैष विशेषदृष्ट्या ।
यद्भाविनो नैव विभङ्गहेतुः कर्मानुभावेन हि भावि सर्वम् ॥ ५४ ॥

मन्त्रैरनेकैरपि जप्यमानैर्यन्त्रैरनेकैरपि यन्त्र्यमाणैः ।
तन्त्रैरनेकैरपि तन्त्र्यमाणैर्नाभाव्यता भाव्यमुपैति किञ्चित् ॥ ५५ ॥
वार्त्तं तदेतन्नियत तथाहि क्षेत्रे पुरं श्रीविजयाख्यमत्र ।
यस्योच्चसौधेषु सुवर्णकुम्भच्छाय समास्कन्दति पूर्णचन्द्र ॥ ५६ ॥
तस्मिन्नवात्सीद्वसुधासुपर्वा पुण्याधिपर्वा किल रुद्रसोम ।
य पूजयामास महेश्वराणा वर्ग स किं नैव नवो द्विजेश ? ॥५७॥
कान्ता शिखाख्या ज्वलनादिरम्याऽऽसीत्तर्जयन्ती ज्वलन स्वकान्त्या ।
लावण्यमुद्दाममधिश्रयन्ती प्राणेशितुर्या मधुरा बभूव ॥५८॥
जज्ञे शिखी नाम तयोस्तनूज प्राप्त प्रणीतैरुपयाचितौघे ।
गार्हस्थ्यवृक्ष सफल पितृभ्यामज्ञायि यस्मिन् परिवर्द्धमाने ॥ ५९ ॥
तत्रान्यदा कश्चन यातुधानो मानुष्यमामाऽदनलोलजिह्व ।
गत कुतश्चिन् स नरान्निहन्ति नित्य बहून्नत्ति च तत्र किञ्चिन् ॥ ६० ॥
श्रीसागराणा गुरुनागराणा विज्ञापनानन्तरमेव भूपः ।
साम्ना तमाचष्ट निहंसि कस्माज्जन्तूननेकांस्तनुमामकार्ये ॥ ६१ ॥
स्थानस्थितस्यैव मयैव तत्त्व दत्त बुभुक्षापगमाय मर्त्यम् ।
आस्वादयैक स्वविधे समेत नित्यं स्वय नृक्षय ! रक्षयाऽन्यान् ॥ ६२ ॥
अस्त्वेवमित्यादृतवाचि तस्मिन्नामानि सर्वाण्यपि लेखयित्वा ।
आरक्षकैराशु पुरोकसां राट् क्षिप्तानि नव्येषु करीरकेषु ॥ ६३ ॥
कन्या समाकर्षयदेकमेकं प्रातर्विनिर्गच्छति यस्य पत्रम् ।
पत्र यमस्येव स तत्र तूर्णं प्रस्थाप्यते साध्वसकम्पमानः ॥ ६४ ॥
(युग्मम्)

अन्येद्युराकर्षि करेण कन्या तस्यैव पत्रं द्विजपुत्रकस्य ।
आरक्षकेण प्रहितास्तदानी भृत्यास्तमादातुमतत्वरश्च ॥ ६५ ॥
तैर्नीयमानं समवेक्ष्य पुत्रं तारस्वरं तज्जननी रुरोद ।
सर्वे तदाऽऽसन्नगृहान्तरस्था भूता यथा तत्करुणां प्रपन्ना ॥ ६६ ॥
तामूचिरे ब्राह्मणि ! मा रुदस्त्वं पुत्रं पुरा ते वयमाहराम: ।
आच्छिद्य तस्मात्त्वरितं पलादात् सोऽपि स्थितिं नैव तथा विभेत्ता ॥६७॥
आरक्षभृत्यास्तमथोपनिन्युर्यावत् स तैस्तत्पुर एव तावत् ।
हृत्वार्पितस्तस्य जवात् सवित्र्यै क्षिप्तस्तया सोऽपि गिरेर्गुहायाम् ॥६८॥

तत्रोषितेनाजगरेण दैवाद् ग्राहीकृत स द्विजदारकोऽपि ।
तद्वत्कचिद् भाव्यमभाव्यभाव नैव प्रयात्यन्यदपि त्रिलोक्याम् ।।६९।।
तस्मात् प्रचण्डाशनिपातघातकार्याय सज्जीक्रियता तपोऽस्त्रम् ।
यद्भावशाणाश्रयणात् समस्तप्रत्यूहमुच्छेत्तुमलंभविष्णु ।। ७० ।।
श्रुत्वेति तुर्यो वदति स्म मन्त्री ज्योतिर्विदाख्यायि तडिन्निपात ।
श्रीपोतनेशस्य किलोपरिष्टाद्भावी न तु श्रीविजयस्य राज्ञ ।। ७१ ।।
सप्ताहमन्य क्रियता तदस्य स्वामी पुरस्य प्रयतैर्भवद्भि ।
प्रज्ञाप्रधानत्वमस्त तस्यामात्यस्य हृष्टो गणकोऽथ शस्यम् ।। ७२ ।।
तन्मन्त्रमाकर्ण्य मयापि चोक्त य स्थाप्यते राज्यपदे स्वरुच्या ।
तत्प्राणनाश परिचिन्तयेत् क कल्याणमिच्छन्निजजीवितस्य ? ।।७३।।
प्राणे परस्यापि विनश्वरान् स्वान् प्राणानवेयं यदि वस्तुवृत्त्या ।
न स्यात् कदाचिन्मरण ममापि मुक्ति गतस्येव निरीहवृत्ते ।। ७४ ।।
प्रात्रादिषुर्मन्त्रविदा धुरीणास्तेऽथ क्षण चेतसि चिन्तयित्वा ।
श्रैदी निवेश्या प्रतिमैव राज्ये नो जीवघातोऽपि भवेत्तथा ते ।। ७५ ।।
एतत्सदालोचितमञ्जसा वो मत्यानुमत्यायतन जिनस्य ।
गत्वा कृतार्च कृतपौषधश्च दर्भैर्विहब्धाऽऽस्तरणो न्यषीदम् ।।७६।।
राज्ये धनेशप्रतिमाभिषिक्ता तत्कालमेतै सचिवैस्त्रिकालम् ।
आराध्यते स्म प्रभुनिर्विशेष कुर्वन्ति किं नेशहितानुरक्ता ?।। ७७ ।।
पूर्व हि धातोरुपसर्गभावो यद्यप्यय व्याकरणे प्रणीत ।
प्रादुर्भवेन्नैव तथापि पुसामर्हन्नमस्कारमहाप्रभावात् ।। ७८ ।।
सद्ध्यानकाष्ठामधितस्थुषो मे प्राप्ते तत सप्तमकेऽपि घस्ने ।
मध्याह्नकाले दिवि वारिवाह कल्पान्तकालाब्दसुहृज्जगर्ज ।। ७९ ।।
शम्पा तटत्काररवैस्तु काष्ठा सम्पूरयन्ती निपपात यक्षे ।
अन्त पुरीभि प्रमदाद्विमुक्ता मुक्तादिवृष्टिर्गणके तु तस्मिन् ।। ८० ।।
तत्पद्मिनीखण्डमिवाधिलक्ष्मीसवासित तोषवशात् प्रदाय ।
श्रीपद्मिनीखण्डपुर स वित्तदौर्विध्यमुच्छेद्य मया व्यसर्जि ।। ८१ ।।
अर्चा कृता रत्नकरस्य नव्या भव्याशया रत्नमयी यदर्च्या ।
तेनैव पौरा परमप्रमोदात् कुर्वन्त्यखर्व महमात्तगर्वम् ।। ८२ ।।
इत्थ निशम्यासममर्च्यते स्म देवी सुतारामिततेजसापि ।

तत्रैव कश्चिन् समय समानं स्थित्वा ययौ स्वं स पुरं नरेन्द्र ॥ ८३ ॥
ज्योतिर्वन नाम वन सुताराद्देव्या सम श्रीविजयोऽन्यदाऽयम् ।
शच्या विडौजा इव नन्दनाख्य रन्तु जगाम प्रमदाभिराम ॥ ८४ ॥
तस्मिन् क्षणेऽसौ कपिलस्य जीवो विद्याधरेन्द्रोऽशनिघोषनामा ।
विद्या प्रतारण्यभिधा प्रसाध्य व्योम्नापतन् विक्रमशालिबाहु ॥८५॥
दृष्ट्वैव भर्तु सविधे सुतारां प्राग्जन्मकान्तां कमनीयकान्तिम् ।
तां हर्तुमिच्छु प्लवमानरूपं सारङ्गमेकं विचकार सारम् ॥ ८६ ॥
युग्मम् )
नीलाश्मसम्पादिततुङ्गशृङ्गभ्राजत्खुरं काञ्चनचारुवर्णम् ।
व्यालोक्य तं श्रीविजयस्य देवी साभ्यर्थयत क्रीडनकेच्छयैव ॥ ८७ ॥
एता विमुच्यावनिवासवोऽपि प्रख्यातशक्तिर्मृगमन्वधावत् ।
वीक्ष्यानुधावन्तममु मृगोऽपि तस्येर्ष्ययाऽधावदिव त्वरावान् ॥ ८८ ॥
यश्चेतसाऽस्पर्शि न येन जातु नो पाणिपद्मे विधिनाप्यलेखि ।
भालेऽपि नो त स कथ कुरङ्ग लातु प्रयास कुरुता सरङ्गम् ? ॥८९॥
एतं चतुष्पादमह द्विपाद प्राप्तु कथं वा प्रभवेयमेवम् ?।
चित्ते परामृश्य स धावति स्म स्त्रीणां ग्रहस्तत्र पर बलीयान् ॥ ९० ॥
भूत्वा कदाचित्किल सन्निकृष्टस्तूर्ण भवत्येव च विप्रकृष्ट ।
फाल ददद्यो निकषान्तरिक्ष केन ग्रहीतु हरिण स शक्य ? ॥९१॥
वेगः समीरस्य च सन्निधानादेणेऽस्ति तद्वाहनमेव यस्मात् ।
तेनैव धावन् वसुधाधिपालो निन्येऽतिदूरं स जवेन तेन ॥ ९२ ॥
ऐरावणोऽम्भोरुहिणीमिवैतां तारां स हृत्वाऽशनिघोषकोऽपि ।
वेगाज्जगाम स्वपुरीमरीणस्वौज.पराभूतसमस्तभूतः ॥ ९३ ॥
क्लेशाब्धिनिस्तारतरी प्रणुन्ना विद्या प्रतारण्यपि तेन तत्र ।
रूपं सुताराभ्रमकारि कृत्वा पूत्कृ उच्चै स्वरमेवमेषा ॥ ९४ ॥
प्राणेश ! हा कुर्कुटभोगिनाहं दष्टास्मि दष्टास्मि समेहि तूर्णम् ।
श्रुत्वेति हित्वा हरिण रणेच्छुः क्षोणीपतिर्व्यावृते द्रुतं सः ॥ ९५ ॥
मन्त्रैर्विचित्रैर्मणिभिः पवित्रैस्तां प्रत्यकार्षीन्नृपतिः स यावत् ।
सा तावदत्याजि निरीक्षमाणस्याप्यस्य जीवेन कृतागसेव ॥ ९६ ॥
हंसेन मुक्तां नलिनीमिवासौ तां प्रेयसीं प्रेक्ष्य पपात भूमौ ।

आस्वादितोन्मत्तकवन्मुमूर्छे पद्मोपलम्भे प्रथमं निदानम् ॥ ९७ ॥
पद्माकरास्फालननित्यशैत्यगन्धोद्धरारामसमीरणेन ।
स प्राप्तचैतन्यभरो धरेन्द्रश्चक्रे विलापानिति मुक्तधैर्यः ॥ ९८ ॥
मद्विक्रम किं कुरुतां प्रताप कं वा समाक्रामतु मामकोऽपि ?।
दृश्योऽभविष्यद्यदि धर्मराजो व्यज्ञास्यत स्फूर्तिरियं तयोस्तत् ॥९९॥
नो धीरुपायुङ्क्तमां कचिन् मे धामापि मे निष्फलतां जगाहे ।
यन्मय्यपि प्राणति मत्प्रियाया वैवस्वतोऽजायत जीवितेश ॥१००॥
हा ! श्राद्धदेवत्वममुष्य हासाभिव्यञ्जकं किं न यमस्य हन्तु ? ।
स श्राद्धदेव' प्रथितोऽत्र लोके सर्वत्र कारुण्यमुपादिशद्य' ॥१०१॥
पश्येद्विना पण्डकपण्डितान् क को वा स्पृशेन्मामपहाय हा ! त्वाम् ? ।
यत्कुक्कुटाहि प्रययौ विदश्य ज्यायान्विधे प्रक्रम एव सोऽयम् ॥१०२॥
ससारसर्वस्वमिय ममासीन्नितां विना जीवत एव लाभ ।
इत्थ विलप्यैव चिर तयाऽमा क्लृप्तां चितां प्राविशदेष भूप ॥१०३॥
जज्वाल यावत् स चिताकृशानुर्वातेन दारूपचित' प्रणीत ।
विद्याधरद्वन्द्वमुपाजिहीत व्योम्नापि तावत् सहसा महिम्ना ॥१०४॥
मन्त्रेण पावित्र्यमितैर्जलौघैरेकोऽभ्यषिञ्चच्चितिचित्रभानुम् ।
विद्या प्रतारण्यपि साट्टहास निर्माय तत्कालमगात् प्रणश्य ॥१०५॥
एतत्किमाकस्मिकमेव जातमित्यभ्यधात्तावपि भूमिपालः ।
व्याजह्रतुर्व्याजविवर्जितौ तौ पत्नी नरेन्द्रामिततेजसो नौ ॥१०६॥
मां विद्धि सबोधकर विमिश्रं श्रोताभिधानं वृषसावधानम् ।
पुत्र पर दीपशिख ततो नौ तीर्थानि नन्तु प्रयतौ प्रयान्तौ ॥१०७॥
हा प्राणनाथ ! प्रसरत्प्रताप ! श्रीमत्त्रिपृष्ठप्रभव ! प्रजेश ! ।
हा ! शौर्यवर्यामितधामनामसौन्दर्यविद्योतितवश्यकीर्ते ! ॥ १०८ ॥
त्रायध्वमस्मादिमिकां सुतारां विद्याधरादन्यकलत्रलोलात् ।
आकर्णयामासिव चेति वाचमुच्चैस्तरां व्योम विगाहमानाम् ॥१०९॥
॥ त्रिभिर्विशेषकम् ॥
अस्मत्प्रभोर्जामिरनेन रूपाऽऽक्षिप्ताशयेन ह्रियते स्म नूनम् ।
व्यावर्तयावस्तदिमामिम च हत्वा दुराचारमपेतसारम् ॥११०॥
चित्ते विमृश्येति रुषारुणौ तौ यावत् प्रवृत्तौ सह तेन योद्धुम् ।

निस्त्रिंशवृत्तेन दुराशयेन निस्त्रिंशमादाय शितं करेण ॥१११॥
(युग्मम्)

तावन्महिष्या भवतोऽभ्यधायि युद्धेन वां पूर्णमितोऽपि तूर्णम् ।
ज्योतिर्वनं नाम वनं प्रयात प्राणास्त्यजन्तं प्रतिषेधत तम् ॥११२॥
विष्णुत्रिपृष्ठान्वयवारिराशिवेलासमुल्लासनशीतरश्मिम् ।
देव्या प्रतारण्यभिधानयामुं मद्रूपसम्पादनविप्रलब्धम् ॥११३॥
स्वस्वामिजाम्या विनियोगयोगात् सा नाशिता देव ! लघु प्रतारा ।
तत्त्व विषादं त्यज नौ प्रसादं सम्पाद्य वैताढ्यमुपेहि शैलम् ॥११४॥
अभ्यर्थ्य ताभ्यां वसुधासुधांशुर्नीतः स वैताढ्यगिरिं गरीयान् ।
वृत्तान्तमुक्त्वाऽमिततेजसे स्वं दुःखं हृदिस्थं गमयाम्बभूव ॥११५॥
कुर्वल्ललाटे भ्रुकुटिं प्रकोपात्ताम्रीकृतापाङ्गविलोचनाऽऽस्य ।
ऊचेऽर्ककीर्तिप्रभवाक्षितीशः सरम्भवान् श्रीविजयं प्रतीदम् ॥११६॥
आदाय कस्तक्षकमौलिरत्नं कोटीरकोटे कुरुतां विभूषाम् ।
सौपर्णपक्षान् परिगृह्य नूनबाणान् सपक्षांश्च जिजीविषुः कः ? ॥११७॥
सगृह्य जीवाभ्यधिकप्रिया ते जामिर्मदीया मदविह्वलः सन् ।
स क्व प्रयाता मयि पृष्ठलग्ने दुर्वारवैरिक्षयकालदण्डे ! ? ॥११८॥
उक्त्वेति शस्त्रावरणीमणीयोबन्धप्रमोक्षप्रगुणप्रभावाम् ।
विद्यां ददौ श्रीविजयाय हृद्यां निःशेषदुःखच्छिदुरां नरेशः ॥११९॥
श्रीरश्मिवेगादिकतत्तनूजस्फूर्जद्भटानामथ पञ्चशत्या ।
युक्तस्त्रिपृष्ठप्रभवः सुतारामाहर्तुमेवारिपुरीमयासीत् ॥१२०॥
विज्ञाय विद्याबलिनं तमार्कक्षोणीशिताऽसौ हिमवन्महीध्रे ।
कान्त्याऽववदातान् धरणेन्द्रपादानग्रे जयन्तं च मुनिं महान्तम् ॥१२१॥
तेजोविनिर्धूतसहस्ररश्मिः पुत्रं समादाय सहस्ररश्मिम् ।
ज्वालाभिधामन्यबलोपनोदां विद्यां ययौ साधयितुं महाढ्याम् ॥१२२॥
(युग्मम्)

स्थित्वा ततो मासिकभक्तवृत्त्या सप्तत्रियामाप्रतिमां विधाय ।
विद्यां तयोः साधयतोरनिन्द्यां मासो व्यतीयाय सजापमेकः ॥ १२३ ॥
स्थित्वा महीशश्चमरादिचञ्चापुर्या बहिः श्रीविजयोऽथ वीरः ।
आकूतविज्ञं प्रजिघाय दूतं प्रत्यर्थिभूपाय यथार्थभाषम् ॥१२४॥

गत्वाऽथ दूतस्तदुपेत्य सिंहद्वारं नृसिंहस्य स सिंहशौर्य ।
विज्ञापितो वेत्रभृता प्रविष्ट. सभ्य सभामध्यमभाषतैवम् ॥ १२५ ॥
अन्यस्त्रियं नैव दृशापि सन्त सत्यं स्पृशन्ति प्रतिपन्नपुण्या ।
तस्या पुन संहरणं प्रसह्य स्वच्छन्दपापाहरण न किं तत् ? ॥१२६॥
एतां समानेतुमहो ! सुतारां नैवौचितीमञ्चति तेऽपि चेत ।
आनीय यद्वा जननीव सारैर्वासोभिरभ्यर्च्य समर्पणीया ॥ १२७ ॥
व्रीडां प्रकुर्वन्ति विनिर्मिमाणाः क्रीडावशात्कर्म परं छलेन ।
अस्या पतिः सर्वबलौघशाली नीति समालम्ब्य बहि स्थितोऽस्ति ॥
तस्मै तदेतां स्वयमेव गत्वा सत्त्वावलीढाय समर्पयस्व ।
यद्वा समाचर्य विकार्यचर्या नादीयते मन्तुरुपागतस्य ॥ १२९ ॥
मामं यदि स्वीकुरुषे कदाचित्त्व चाटुकारैरुपलालित सन् ।
द्रष्टा कबन्ध यदि वैकबन्ध नूनं तदा तद्भटचन्द्रहासै ॥ १३० ॥
इत्थं सनिर्बन्धमुदीर्य दूतो जोष समालम्ब्य स यावदाऽऽस्ते ।
तावज्जगादाशनिघोषभूपो भ्रूभङ्गभीम विदधत्क्रुधाऽऽस्यम् ॥ १३१ ॥
बुद्ध्या विदग्धत्वमवेदि रे ! ते राज्ञो मया यस्य न सन्त्यमात्या ।
नो तेऽप्यमात्या न हित प्रभोर्ये ब्रूयु प्रयुज्याप्युपपत्तिजातम् ॥१३२॥
दासेरक स प्रभुताधिकारी नैव प्रभु कर्हिचनापि दूत ! ।
य कण्टकास्वादनलोलुपोऽपि स्वस्यैव जानाति हिताहितं न ॥१३३॥
यो मन्त्रिणा नैव वच करोति नासौ प्रभुस्तेऽपि च मन्त्रिणो न ।
अन्योन्यवैरानुगमात् क्षयाय राज्यस्य तौ सम्भवत स्वतोऽपि ॥१३४॥
ताभ्यामनालोच्य भवादृशोऽत्र प्रस्थापितो दूत्यविधाऽनभिज्ञ ।
वक्तु न यो वेद पुर प्रभूणां तस्योचितं दूत्यमिदं किमु स्यात् ? ॥१३५॥
बुद्ध्या विनैकेन पराक्रमेण जेतुं न शक्या रिपवः कथञ्चित् ।
गर्जन्तमम्भोदमुपर्यवेक्ष्य स्वं किं न हन्याच्छरभो विबुद्धि ? ॥१३६॥
अन्धा न पश्यन्ति परस्त्रियं चेत्ते किं प्रशसां सुधियां श्रयन्ते ? ।
यद्येवमेषां चतुरिन्द्रियाणां निन्द्यं कथं स्याद्विकलेन्द्रियत्वम् ? ॥१३७॥
नान्यस्त्रिय विक्रममन्तरेण हर्तु नरः क्लीब इव क्षमेत ।
नो विक्रम पुण्यमृते कथं तत् पापाय तस्या हरण ब्रवीषि ? ॥१३८॥
स्त्रीरत्नमेतादृशमद्भुतं चेदानेतुमौचित्यविपञ्चना न ।

अन्यत्र सा क्वापि वितायमाना स्वाभावमेव प्रथयेन्न किं वा ? ॥१३९॥
शक्त्या समानीय निवास्यते या सा माननीया जननीव किं स्यात् ?।
व्रीडा वधे स्याद्विहिते छलेन लक्ष्म्यां हृतायां न पुन श्रियां वा ॥१४०॥
उद्धाररूपेण समाहृत यद्विश्राण्यते तत्परमेव नीत्वा ।
नैवोत्तमर्ण स च मे न चाहं तस्याधमर्ण कथमर्पये तत् ?॥ १४१ ॥
मन्तुं स एव क्षमतेऽनुमन्तु द्वेधापि यस्यास्ति बलं विशालम् ।
आगत्य पुर्यां स बहिर्भवन्तं प्रस्थापयन् स्वस्य बलं न वक्ति ॥१४२॥
स्वाभाविको यस्य न चास्ति मानः समानभागी स कथ जनानाम् ? ।
अध्याहृतः सङ्गरसीम्नि भर्तुर्वीर्यं विधत्ता किमु कातरस्य ?॥ १४३ ॥
तद्याहि दूताधम ! यावदेते भृत्या ददन्ते न तवार्धचन्द्रम् ।
त्वद्वाक्यनुन्नस्त्वरित स तेऽपि स्वामी समायात्वथवा प्रयातु ॥ १४४ ॥
इत्यूर्जिता तस्य निशम्य वाच विद्याधरेन्द्रस्य गत स दूत ।
आख्यादशेषं निजनायकाय स्वर्नायक तर्जयते स्वधाम्ना ॥ १४५ ॥
आदेशत श्रीविजयस्य राज्ञस्तूर्याण्यवाद्यन्त रणोन्मुखानि ।
यन्नादमाकर्ण्य भटा समग्रा सन्नह्य सन्नह्य समागमंश्च ॥ १४६ ॥
संग्रामतूर्येषु नदत्सु हर्षाद्वीरा दधु कण्टकपेटकानि ।
तैरेव तत्कङ्कटबन्धनानि त्रुट्यन्ति भूयस्समयोजयंश्च ॥ १४७ ॥
विद्याधरेन्द्रोऽपि रणाय सज्जांस्तानश्वघोषप्रमुखान् स्वपुत्रान् ।
प्रस्थापयामास चमूसमूहै सार्द्धं प्रतिद्वन्द्विजनान् विजेतुम् ॥ १४८ ॥
सैन्यद्वयान्तर्गतभृत्यवर्गयष्ट्यग्रगाढाहतवाद्यनादै ।
पार्श्वेऽपि वाचं प्रणिगद्यमानां कस्यापि शुश्राव न कश्चनापि ॥ १४९ ॥
रङ्गत्तुरङ्गक्षुरसन्निपातक्षुण्णक्षमामण्डलरेणुपूरै. ।
आच्छादिते व्योमनि पुष्पदन्तौ शङ्के पलाय्यैव गतौ तदा तौ ॥१५०॥
अश्वक्षुरोत्खातरज प्रचारै स्फारेऽन्धकारे यदि चन्द्रहासै. ।
ओजस्विनां पाणिषु विस्फुरद्भि. प्रापे तदानीमपि सान्वयत्वम् ॥१५१॥
सेनाचराणामवलेपभाजामेतादृशोऽजायत सम्परायः ।
रक्तोदसिन्धुः प्रचचार यस्मादुत्साहचन्द्रोदयवर्द्धमान. ॥ १५२ ॥
यो वीरविस्फारितखड्गयष्ट्या विच्छिन्नकुम्भस्थलकुम्भिदेहात् ।
संजातयाऽसृग्भिरुदिलरौघै रक्तोदया वल्लभया परीतः ॥ १५३ ॥

वीरैर्विभिन्नद्विपराजकुम्भनिष्पातिमुक्ताफलमण्डलानि ।
यस्मिन्नभूवन् बहुशो विभान्ति धात्रीफलानीव समुज्ज्वलानि ॥ १५४ ॥
नक्रन्ति गात्राणि मतङ्गजानां यस्मिन् भटै खड्गविदारितानाम् ।
कूर्मन्ति विच्छिन्नचतुष्कमाणां यस्मिश्च तान्येव तुरङ्गमाणाम् ॥१५५॥
मत्स्यानि लूनानि महाभटानां यस्मिन् शिरांसि प्रतिवीरखड्गैः ।
शङ्कन्ति चाऽऽयोधनरञ्जितान्तर्विद्याधरक्षिप्तसुमोत्कराणि ॥ १५६ ॥
॥ पञ्चभि. कुलकम् ॥
भूमीशितु श्रीविजयस्य सैन्यधानुष्कधन्वध्वनिमात्रतोऽपि ।
काका इवाथ प्रतिभूपपुत्रा नेशु समस्ता अपि ते विहस्ता. ॥ १५७ ॥
श्रुत्वा प्रनष्टास्तनयास्तदैव विद्याधरेशोऽशनिघोषकोऽपि ।
पाणौ समादाय गदां रणाय विद्वेषिसैन्याभिमुखं ससार ॥ १५८ ॥
तस्य प्रहारै परुषैर्गदाया नद्या इवाऽगा सलिलप्रवाहै ।
भग्ना नरेन्द्रामिततेजसोऽपि सम्बद्धमूला अपि ते कुमारा ॥ १५९ ॥
दृष्ट्वा पराभूतपराक्रमांस्तान् योद्धुं स्वय श्रीविजयो ढुढौके ।
सेनाचरान् स्वस्य पलायमानान् धीरैर्वचोभिर्विनिवर्तयश्च ॥ १६० ॥
नैवापराद्ध भवतो ममापि सेनाचरैरेभिरतो हतै किम् ? ।
त्वं मे कलत्रापहृतेर्विरोधी त्वां हन्तुमिच्छुस्तव चाहमस्मि ॥ १६१ ॥
तस्मादरे ! रेऽशनिघोष ! युद्धं कार्यं त्वयाऽमा मयका च नान्यैः ।
इत्युद्धतध्वानमसौ निवार्याशेषान् भटान् स्वानपि तेन तस्य ॥ १६२॥
श्रीपोतनक्ष्मामघवा नियुद्ध प्राक्रस्त तेनाशनिघोषकेण ।
तिष्ठन् क्षण व्योमनि. सैनिकानां विस्मापयन् मानसमात्तहर्षम् ॥१६३॥
॥ त्रिभिर्विशेषकम् ॥
उत्थाप्य तं कन्दुकवद्विपक्षं दोर्भ्यामुभाभ्यां तुलयन्निवाभात् ।
श्रीमत्त्रिपृष्ठप्रभव सुतारां व्यावर्तयिष्यन् किमिवाप सख्यम् ॥१६४॥
राज्ञाऽथ स श्रीविजयेन रोषात्कौक्षेयकेण प्रसभ प्रहृत्य ।
द्वेधा प्रचक्रेऽशनिघोष एतत्खण्डद्वयेनाशनिघोषयुग्मम् ॥ १६५ ॥
जज्ञे विलून द्विगुणं पुनस्तद्रम्भामहास्तम्भवदेकमेव ।
यद्यच्छिरश्छिन्नममुष्य तेन तत्तज्जगाहे द्विगुणत्वमाशु ॥ १६६ ॥
विच्छिद्य विच्छिद्य शिरांसि तस्य श्रान्त सुतारादयित स यावत् ।

विद्यां प्रसाध्याऽमिततेजसापि तावत् समागम्यत सान्वयेन ॥ १६७ ॥
आयान्तमालोक्य त्रिलोकनीयं सौन्दर्यलक्ष्म्याऽमिततेजसं तम् ।
सर्वे विपक्षा प्रपलाय्य जग्मुर्घूका इवादित्यमुदीयमानम् ॥ १६८ ॥
विद्वेषिपक्षाश्च पलायमानानेतान्मुचो मैव कथञ्चनेति ।
विद्यामहाढ्यामिततेजसोचे ज्वालाभिधाना ज्वलितारिवशा ॥१६९॥
व्यामोहितास्तेऽपि तया स्वशक्त्या प्रत्यर्थिवारा अपि दुर्निवारा ।
जग्मु शरण्यं शरणं शरारु सर्वेऽपि मत्वाऽमिततेजसं तम् ॥१७०॥
तेषु प्रनष्टोऽशनिघोष एकस्तं वीक्ष्य वैरिक्षयचण्डरोषम् ।
विद्याऽनवद्यापि तमन्वियाय सा तान्नियुक्ता तमथो ग्रहीतुम् ॥१७१॥
तस्मादपाच्ये भरतस्य खण्डे वेगेन सोऽगाच्छरणेच्छयैव ।
सीमाद्रिनाभेयजिनेन्द्रचैत्यं चेत.कुरङ्गीधृतिवागुराभम् ॥ १७२ ॥
सस्थापितोऽस्मिन् समवादिसृत्याख्यस्थानके केतन एव नाग ।
तत्रैकरात्रप्रतिमा महात्मा रामोऽचलास्तिष्ठति निश्चल स ॥ १७३ ॥
दुष्कर्मधाराधरके निरस्ते ध्यानानिलेन स्फुरता जगन्ति ।
निर्भासयन् केवलसविदशुर्व्योम्नीव तत्राऽऽविरभूत्तदेव ॥१७४॥
आगाज्जगन्नन्दनचारणर्षिस्तत्रोत्सवेऽमाप्यभिनन्दनेन ।
अन्येऽर्ककीर्त्यग्निजटिक्षमेशमुख्या समेयुर्बहवोऽपि चाऽत्र ॥ १७५ ॥
तस्यैव सेवां विबुधा विधातुमभ्यागमन् केवलबोधभाज ।
बिभ्यत्तत' सोऽशनिघोषकोऽपि तत्पादपद्मं शरणं प्रपेदे ॥ १७६ ॥
व्यावृत्त्य विद्याऽमिततेजसोऽपि सामीप्यमाशिश्रियदाश्रयस्य ।
स्वाभाविकद्वेषभरा अपि स्युर्न ज्ञानिषु द्विष्टहृदः कदाचित् ॥ १७७ ॥
निर्दिश्य मारीचिमदृश्यदोषं श्लाघ्य सुतारानयने प्रहृष्टौ ।
नन्तुं तत. केवलिनं प्रयातौ क्ष्मावासवौ श्रीविजयामिताख्यौ ॥१७८॥
सीमाद्रिमागत्य विलम्बवर्जं बिम्बं विनम्यादिजिनस्य पूर्वम् ।
तौ ज्ञानलक्ष्मीहृदयैकहारं साधु प्रलम्बन्नमवन्दिषाताम् ॥ १७९ ॥
गत्वा स धीरोऽशनिघोषकस्य मारीचिरप्याशु पुरीं विवेश ।
तन्मन्दिरे तज्जननीसमीपस्थास्नुं सुतारां समवेक्षते स्म ॥ १८० ॥
आसाद्य भर्तुः कुशलप्रवृत्तिं भोक्ष्येऽन्यथा नेति कृतोपवासाम् ।
आस्यान्नि दृश्यानि वियोगिनीनां नैवेति सध्यानमवाङ्मुखीं ताम् ॥१८१॥

शीतांशुलेखामिव कृष्णपक्षे लक्ष्मीमिवान्यायवतां गृहेषु ।
वाणीमिव प्रातिभवर्जितानां बाढं कृशां शीलगुणैरुपेताम् ॥ १८२ ॥
॥ त्रिभिर्विशेषकम् ॥
आवेदिते तेन पुरः स्ववृत्ते तत्कालमेवाशनिघोषमाता ।
तां प्रापयत्साधुपदारविन्दद्वन्द्वाग्रभूमिस्थिततद्वृदीशम् ॥ १८३ ॥
भेत्तु न यच्छीलतनुत्रमात्रं सुत्रामवर्गोऽपि शशाक सर्वे ।
तामर्पयामास हृदीश्वराय तोषं दधानां हृदये सुताराम् ॥ १८४ ॥
भक्त्या मुनीन्द्राचलकामपाल नत्वा यथास्थानमुपाविशत् सा ।
विद्याधरेन्द्रोऽशनिघोषकोऽपि तावादरेण क्षमयाम्बभूव ॥१८५॥
भव्येषु सर्वेषु निषेदिवत्सु तन्निष्ठपापेषु विषेदिवत्सु ।
वक्त्राम्बुजं देशनयाऽचलोऽपि संयोजयामास मुनिस्तथाहि ॥१८६॥
मत्ताङ्गनापाङ्गविलासलोलं रूपं वयश्चारु धनं तथायु ।
भव्या ! भवद्भि परिभाव्य धर्मे कार्ये प्रमादो न मनागपीह ॥१८७॥
संजाततोषोऽशनिघोषकोऽथ नत्वा मुनिं विज्ञपयाम्बभूव ।
विद्यां गृणन् भ्रामरिकीं स्वपुर्यां श्रीमज्जयन्तान्तिक एकदागाम् ॥१८८॥
सप्तत्रियामाविहितोपवासस्तां साधयित्वा विनिवर्तमानः ।
ज्योतिर्वने वीक्ष्य सतीवतसामेतामहं प्रीतमना बभूव ॥१८९॥
तस्मादपाहारि मयेयमार्य ! क्रूरेण चित्तेन न तु प्रतीक्ष्य ।
अस्यां मम प्रेमनिबन्धनं यत्तत्त्व समाख्याहि विशेषतस्त्वम् ॥१९०॥
विज्ञप्तमात्रोऽथ मुनिर्बभाण श्रीषेणभूपादिकवृत्तमेवम् ।
निष्ठापयामास भवं भ्रमित्वा दुष्कर्मजात कपिलोऽपि तादृक् ॥१९१॥
भीते पदव्यामपि भूतरत्नाटव्यां महाश्वापदसंश्रयायाम् ।
ऐरावतीद्वीपवतीतटान्ते जज्ञे जटी कौशिकनामधेयः ॥१९२॥
तद्वल्लभाऽभूत् पवनादिवेगा धर्मक्रियायाः सहकृत्वरी या ।
सूनुस्तदीयः कपिलस्य जीवः कर्मेरितोऽजायत धर्मिलाख्यः ॥१९३॥
उत्क्रान्तबाल्यः स्वपितुस्तपस्यां लात्वा स्वयं बालतपः स तेपे ।
बिभ्रज्जटा मूर्ध्नि घना पिशङ्गीर्भूतिं प्रभूतां च गृहीतवल्कः ॥१९४॥
ग्रीष्मे चतुर्णां ज्वलतां समिद्भिः सप्तार्चिषां मध्यगतः स मूढः ।
मध्ये चतुर्णां हरिदीश्वराणां शक्रः स्वतेजोभिरिवाबभासे ॥१९५॥

धाराभिरासारनिपातिनीभिर्वारीणि वर्षासमये स सेहे ।
जाज्वल्यमानज्वलनोपतापसन्तापितो वा किमसौ तपस्वी ? ॥१९६॥
अन्तर्गतेनेव निपीड्यमानो जाड्येन जाड्य सहते स्म शीते ।
नो रल्लक नापि स वल्कलानि वास प्रतीयेष न वेषमात्रम् ॥१९७॥
निर्मापयामास तडागवापीकूपानगाधान् स वृषैकबुद्ध्या ।
नाबुद्ध चैकत्र जलस्य बिन्दौ जीवा अनेके निवसन्ति चेति ॥१९८॥
सम्पूरयामास स पादपानामावापचक्र स्वयमेव क्लृप्तम् ।
आनीय चानीय शिला विशाला अद्भि. स्फुरत्पूतरकाभिरेव ॥१९९॥
निष्पीड्य निष्पीड्य स इङ्गुदीनां बाढ फलान्येव पचेलिमानि ।
आदाय तैलानि निशागमेऽसौ धर्मप्रदीपान्विदधेऽतिमुग्ध. ॥२००॥
सम्पूर्य सम्पूर्य जलैरजस्र वृक्षस्य शाखासु शरावमालाम् ।
रज्ज्वा निबद्ध्यैव बबन्ध पक्षिव्रातस्य पानाय निदाघकाले ॥२०१॥
विभ्रम्य विभ्रम्य पुरीगृहेषु भिक्षा गृहीत्वा स वन समेत्य ।
विश्राण्य काकादिविहङ्गमेभ्यो भुङ्क्ते स्म तच्छेषमशेषकृत्य ॥२०२॥
वस्त्रेण पूतं सलिल पिबेच्चेत्येतादृशी स श्रुतिमप्यजानन् ।
आपूरितैर्वारिभरेण कुम्भै कुत्र प्रपां वर्त्मनि नो चकार ? ॥२०३॥
स त्रि· परीय प्रणनाम धात्री सङ्कल्पयन् शक्तिमनन्तरूपाम् ।
धेनुं तथैव प्रतिपत्तिपूर्वं दूर्वाङ्कुरास्वादकृतप्रतीतिम् ॥२०४॥
शाखासमाक्रान्तनभोविभाग छायां प्रकुर्वन्नमिलातलेऽपि ।
सान्द्रैर्दलैर्विस्तृतिभावमेतैर्दृष्ट्वा वटद्रुं स भृशं ननाम ॥२०५॥
इत्यादि सावद्यममुष्य कर्म स·श्चिन्वतो धर्मधिया जडस्य ।
भूयान् व्यतीयायतमामनेहा हा ! कष्टमज्ञानमपास्य कि वा ?॥२०६॥
सोऽन्येद्युरालोक्य नभोऽन्तराले विद्याधरं यान्तमतुल्यरूपम् ।
चक्रे निदानं मनसेत्यबुद्धिर्भूयासमीदृक् तपसाऽमुनापि ॥२०७॥
मृत्वा स विद्याधरसार्वभौमस्येन्द्राशनेरिन्द्रपराक्रमस्य ।
देव्याऽऽसुरीकुक्षिभवस्त्वमासीश्चञ्चानगर्या नगराजसार: ॥२०८॥
प्रागजन्मसम्बन्धवशात्ततोऽस्यां स्नेहस्तवाभूदवलोकितायाम् ।
श्रुत्वेति संवेगतरङ्गितास्ते सभ्या बभूवु. सुकृतोपलभ्या: ॥२०९॥
भव्योऽहमाहोस्विदभव्यरूप इत्युक्त एवामिततेजसाऽपि ।

सवित्तिगङ्गातीटनीतुषारक्षोणीधरो राममुनिर्बभाषे ॥ २१० ॥

अस्माद्भवान्नवम एव भवे भवाना-
मुच्छेदकोऽत्र भरते भवितासि भव्यः ।
त्वं पञ्चमोऽनुपमविक्रमधामचक्री
श्रीशान्तिनाथ इति षोडश एव चार्हन् ॥ २११ ॥

एष श्रीविजयस्तदादिमतमश्चक्रायुधो नन्दन
सम्भावी भवतस्तथा गणधरोऽप्येषोऽपि विश्वार्चितः ।
त्रैपृष्ठामिततेजसौ नरपती नत्वा ततस्तौ मुनि
धर्मं द्वादशधा बुधावभजतां सुश्रावकाणा स्वयम् ॥२१२॥

विद्याभृतां परिवृढोऽशनिघोषकोऽश्व-
घोषाभिध तनयमङ्कगत विधाय ।
भूमीभुजोरपि तयो स्वयमादिताऽसौ
दीक्षा बलाचलमुने सविधे विधिज्ञ ॥२१३॥

मातापि श्रीविजयनृपते सा स्वयभाभिधाना
भेजे दीक्षां बलमुनिपते सान्निधाने विरक्ता ।
युक्त चान्ते वयसि विदुषी कापि सीमन्तिनीनां
कुर्यादेवं भवपरिभवं भेत्तुमुज्जागरूका ॥२१४॥

सेवित्वा बलभद्रसाधुचरणाम्भोजद्वयं चालिवत्
पीत्वा वाग्मकरन्दबिन्दुपटलीमाकण्ठमाप्यायिता ।
स्थान श्रीविजयादयो ययुरथो स्वं स्व गुरूणां गुणान्
पीयूषांशुमयूखविभ्रमकरान् सवर्णयन्तो मुहु ॥२१५॥

कल्याणाप्तिनिबन्धन विदधतौ धर्मं त्रिवर्गोत्तर
तद्द्वाराऽपरयोर्द्वयोरपि फल तौ प्रापिवांसौ मुदा ।
पीयूषद्युतिमण्डलीमयमहो ! भूमण्डलाखण्डलौ
काञ्चित्कालमपि व्यतीयतुरधिप्रौढप्रतापोदयौ ॥२१६॥

अर्हच्चैत्यसमीपपौषधगृहे श्रित्वान्यदा पौषधं
दुष्कर्मामयभेदनौषधमसौ विद्याधराणां पुर ।
यावद्भूपतिरर्ककीर्त्तितनयो व्याख्याति धर्मं स्फुट
तावच्चैत्यानिनसु चारणमुनिद्वन्द्वं समाजग्मिवन् ॥२१७॥

अभ्युत्थाय नृप कृताञ्जलिपुटो हृष्टस्तदालोकना-
त्तौ वृन्दारकवृन्दवन्दितपदाम्भोजाववन्दिष्ट सः ।
विश्राण्यान्वयिधर्मलाभवचनं ज्येष्ठस्तयोरादिश-
द्धर्मं शर्मनिदानमार्हतमिमं दुष्कर्मविप्लावकम् ॥२१८॥
सम्पूर्णं फलमादधाति विहितः सम्पूर्ण एवार्हतो-
धर्मः स्वार्थचिकीरहो ! बत नृणां स व्यत्यये व्यत्ययम् ।
प्राप श्रेष्ठिसुतो यथा स धनदो मत्स्योदरान्याह्वय·
कल्याणं जिनधर्मखण्डनवशाद्दुःखेन सम्भावितम् ॥२१९॥
आसीत् श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विद्यावतां सद्गुरुः ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽगमत्पञ्चमः ॥२२०॥

## ॥ इति श्रीशान्तिनाथचरिते पञ्चमः सर्गः ॥

अर्हम्

## अथ षष्ठः सर्गः ।

कामधेनुसुरपादपचिन्तारत्नकामकलसा अपि सन्ति ।
यस्य कामजयिनः प्रतिहस्ताः स श्रियेऽस्तु भवतां जिनशान्तिः ॥१॥
क प्रभो ! धनद इत्युदितोऽपि क्ष्माभुजा मुनिरुवाच तथाहि ।
द्वीपराजविनिषेवितजम्बूद्वीपचक्रिकमलासुषमाकृत् ॥ २ ॥
अस्ति याम्यभरतार्द्धधरित्रीभामिनीतिलकभूषणरूपम् ।
पत्तनं कनकपत्तनसञ्ज्ञं सान्वयं बुधजनैरपि वर्ण्यम् ॥ ३ ॥
ईश्वरत्वमनुमापरिभाव्यं विद्यते धनवतामपि यत्र ।
यद्द्विजिह्वपतिना सह योगो नार्धचन्द्रपरिशीलनता यत् ॥ ४ ॥
तत्र कोऽपि कनकादिरथोऽभून्मेदिनीपरिवृढोऽपि शुचिः सः ।
कुर्वता करतले करवालं कीर्त्तिरापि युधि येन रिपूणाम् ॥ ५ ॥
तत्र भूपपरमाभ्युपपत्तेर्भाजनं सुजनरञ्जनधुर्यः ।

रत्नसार इति नाम महेभ्य· पावनीकृतमहीतलकीर्तिः ॥ ६ ॥
यस्य मानससरस्वति पुण्यक्षीरनीरनिकरोत्थतरङ्ग. ।
खेलति स्म सुतरां जिनहंसो बुद्धिजातनलिनीवनपूर्णे ॥ ७ ॥
प्रेयसी समभवन्मणिचूला तस्य पुण्यकलिता सुचरित्रा ।
यां विलोक्य पतिभक्तिसमृद्धां सा रतिर्न रतिमाप कथञ्चित् ॥ ८ ॥
एतयोर्विषयजानुपभोगान् भुञ्जतोरविरतं क्रमशोऽपि ।
सर्वलक्षणसुलक्षणमूर्त्या शोभितः समभवत्तनुजन्मा ॥ ९ ॥
तस्य जन्मदिवसे स महेच्छो यानि कानि विचिकाय वसूनि ।
तानि दुर्गतगृहेऽपि यदि स्युर्दुर्गतत्वमपि तद्गमयेयु ॥ १० ॥
द्वादशे समधिजग्मुषि घस्रे मानितेषु सुजनेषु यथार्हम् ।
आदधे धनद इत्यभिधानं स्वात्मजस्य जनको महपूर्वम् ॥ ११ ॥
बालक प्रववृधे बहुधात्रीलालितो नवनवैश्च रसौघैः ।
स द्विपत्रितसमुद्गतशाखीवाङ्गभङ्गिभिरभङ्गुरशाख ॥ १२ ॥
उत्सवेन पितरौ हृदि हृष्टौ त कलाविदमवापयत स्म ।
साक्षिमात्रमुपलभ्य तमुत्कोऽभ्यस्यति स्म स कला. सकलास्ताः ॥१३॥
कामिनीनयनमत्तचकोरचक्रचङ्क्रमणयन्त्रणपाश ।
प्रत्यपद्यत स यौवनमिच्छाहस्तिनीवनविलासनिवास· ॥ १४ ॥
आपणे स निषसाद विषाद सादयन्पितुरजस्रमितश्च ।
द्यूतकृत् सुकृतकुञ्जरसिंह. सिंहलोऽत्र नगरे विदितोऽभूत् ॥ १५ ॥
द्यूतमुख्यगहन व्यसनानामाकर· स्वपरवञ्चनचुञ्चु. ।
सोऽपि पू परिसरे धुरदेव्या मन्दिरेऽरमत नित्यश एव ॥ १६ ॥
किञ्चनापि न जयत्यपि लाभस्यान्तरायकरणेन स जातु ।
सर्वकर्म कुरुतां पुरुषो वा पुण्यसन्ततिमृते न फलानि ॥ १७ ॥
अन्यदा स दृषद परिगृह्य देवतां प्रणिजगाद दुरात्मा ।
त्वामनेन दलितास्मि न चेन्मे देवि ! देहि विपुलानि धनानि ॥ १८ ॥
मातुरप्यपहरेत् परिधान द्यूतकृज्जगति विश्रुतमेतत् ।
अभ्युपेत्य भयविह्वलचित्ता देवता प्रवदति स्म तमेवम् ॥ १९ ॥
कर्मठ जगति कर्म तदेकं सर्वकर्मसु निबोध सुबोध ! ।
तद्विलङ्घ्य भवतो वितरीतुं स्वापतेयमहमस्मि किमीशा ? ॥ २० ॥

अन्तरायरकथा जनुषि त्व प्राचि तेन तव नास्ति धनाय' ।
श्लोकपत्रकमिद मम लात्वा याहि दास्यति तथापि धन ते ॥ २१ ॥
पत्रक तदुपगृह्य च देवीभाषितं भवति नैव वृथेति ।
आगत स च चतुष्पथमिभ्यै पृच्छयते स्म करपत्रकमूल्यम् ॥ २२ ॥
तद्गिरा प्रणिगदन् स सहस्र हस्यते स्म वणिजैरतिवेलम् ।
युक्तिरिक्तमतिरिक्तमविद्वानुच्चरन् क इव वा न विहास्य. ?॥ २३ ॥
पर्यटन्नविकट प्रतिहट्ट खिन्न एव धनदाट्टमुपेतः ।
पत्रमूल्यममुनापि स पृष्ट' शिष्टवत् प्रणिजगाद सहस्रम् ॥ २४ ॥
स स्वयं गणकवद्गणयित्वा सारमस्य विततार ससार. ।
श्लोकनिष्ठमविचार्य तमर्थं दातुरस्ति यदि वा न विचार ॥ २५ ॥
तत्र यातवति जातविधेये द्यूतकर्मपरिकर्मविदग्धे ।
बुद्धितर्जितबृहस्पतिरेष श्लोकमेतमपि वाचयति स्म ॥ २६ ॥
यद्यदस्ति विधिना लिखितं तत्तन्नृणा परिणमत्यनिवार्यम ।
इत्यवेत्य मनसैव महान्त कातरा न विधुरेऽपि भवन्ति ॥ २७ ॥
तस्य चिन्तयत एव तदर्थं चेतसा विदितमर्घ्यमनर्घ्यम् ।
आससाद जनको जनवाक्यैरापण व्ययितहेमसहस्रम् ॥ २८ ॥
आ ! किमेतदविचारितमाधा दुर्मते ! पठितमूर्ख ! विवर्ण ! ।
श्लोकक्रयविधौ ननु तादृक्को व्ययीकुरुत एव सहस्रम् ?॥ २९ ॥
त्वं मुखानि मुखराणि खलाना पश्य हास्यचतुराणि निकामम् ।
तद्विधेयमपि कर्म मनुष्यैः स्यान्न येन पिशुनस्य हि हास्यम् ॥ ३० ॥
निर्विमर्शमथितारणिजातकोपपावकशिखाज्वलितस्य ।
एवमादिवचनैरपि तस्य स द्विजिह्ववचनैरिव दून. ॥ ३१ ॥
मातुरप्यसुखहेतुमनुक्त्वा तं पराभवमदृष्टचरं स. ।
नक्तमात्मसदनान्निरयासीद् दुष्कर किमिव तस्य तदेतत् ?॥ ३२ ॥
उत्तरां ककुभमाश्रयत. स्याद्भानुमालिन इवाधिकधाम ।
एवमात्महृदये स विचिन्त्याशोत्तरां सहृदयः प्रचचाल ॥ ३३ ॥
उत्तराधिपतितां भजत' स्याद्राजराजपदमित्यवधृत्य ।
श्रेष्ठिसू' स धनदो धनदाशां प्रास्थित स्थितिविदामवतंसः ॥ ३४ ॥
राजहंसबकसारसचक्रमुख्यपक्षिकुलतारविरावैः ।

स्वादुशीतलसुगन्धिजलानि वर्णयन्तामिव वार्द्धिजयाय ॥ ३५ ॥
पिञ्जराणि सलिलानि जिनानामाप्लवाय घुसृणैरिव देवै ।
निर्मितानि दधतं रविरश्मिबोधिताब्जपतयालुपरागैः ॥ ३६ ॥
क्षीरनीरनिधिमानममान तर्जयन्तमतिमात्रवितत्या ।
पान्थवर्गहृदयाहितराग यन्नसौ पथि ददर्श तडागम् ॥ ३७ ॥
॥ त्रिभिर्विशेषकम् ॥
पाणिपादवदनं परिमृज्य वस्त्रपूतममृत परिपीय ।
तत्तटे वटतरोस्तल एव स स्मरंस्तदपि वृत्तमशेत ॥ ३८ ॥
तस्य दु खमपनेतुमिवासावक्षमो दिनपतिर्निपपात ।
अस्तशैलमधिरुह्य तदाब्धौ कौचिती स्खलति धामवतां हि ? ॥३९॥
अस्तभूधरतिरोहितभानावन्धकारनिकर प्रससार ।
एकवर्णपरिमृष्टमशेषं विष्टपं समजनिष्ट किमन्यत् ? ॥ ४० ॥
शुष्कपत्रपरिकल्पिततल्पे खेदभेदनकृते शयितस्य ।
यावदेव कियती क्षणदाऽगात्तत्र तस्य मधुराकृतिभाज ॥ ४१ ॥
स्कन्धदेशविधृतेषुधिरेक पाणिपद्मकृतकार्मुकयष्टि ।
तावदेव मृगयु समियाय नीलनूतनयवाङ्कुरवेष. ॥ ४२ ॥
तस्य पार्श्वपरिवर्तनजातमर्मरैर्हरिणसशयतोऽसौ ।
व्याध एव चरणेऽकरुणस्तं विध्यति स्म निशितेन शरेण ॥ ४३ ॥
यद्यदेव विधिनेति च जल्पन्नुत्थितो मृगयुणा धनदोऽपि ।
प्रोच्यतेति मयका हरिणस्य भ्रान्तिमाश्रितवता निहतस्त्वम् ॥४४॥
तत्सहस्व मम मन्तुमसह्य सह्यसारनृवरेति निरूप्य ।
पत्रिण स परिगृह्य निवृत्तोऽस्त्र पदेऽथ निरगाद्गृहु चास्य ॥४५॥
भादिरुण्डपतगेन स रुण्डभ्रान्तिमूलकरणेन तदेष. ।
उन्नमय्य जलधेरपि मध्ये द्वीपके क्वचिदमोचि जवेन ॥ ४६ ॥
सोऽपि तेन पतगेन सजीव इत्यवेत्य मुमुचे बुभुजे न ।
आससाद च निशाप्यवसान प्रीतिभङ्गिरिव वाररमण्या. ॥ ४७ ॥
पूर्वपर्वतमहोन्नतसानुं भानुमान् समधितिष्ठति यावत् ।
अभ्यघानि तिमिरं किरणौघैस्तावदस्य पुरत. प्रसरद्भि ॥ ४८ ॥
उद्गते बत सहस्रमरीचौ. चक्रवाकशतपत्रदिनानि ।

समदं कमपि तं दधुरुच्चैर्बन्धुतैव विदिताऽजनि येन ॥ ४९ ॥
भास्करस्य रजनीदयितेन स्वौतिष निरुपपत्तिकमेव ।
मित्रतां वदति तेन मनो मे न प्रतीतिमपि तस्य विधत्ताम् ॥ ५० ॥
सपदि श्रयति संपदभावमापदि श्रयति चापदभावम् ।
यस्य य स कथमस्तु सुहृद्वा सत्यता न गणितागम एव ?॥ ५१ ॥
कैरवाण्यपि निशाप्रियबन्धुभावविश्रुततयैव विरोधम् ।
बिभ्रते तरणिना सह तस्य नोदये विकसितं यदमीभि ॥ ५२ ॥
वेधसा कुमुदकोशगतानि संविधाय तिमिराणि कथञ्चित् ।
रक्षितानि समुदश्वति भानौ नास्ति वृद्धिरिह बीजमृते यत् ॥ ५३ ॥
ध्यानमीलितसरोरुहनेत्रा यामिनीविततयामचतुष्कम् ।
भृङ्गहुङ्कृतिमिषस्मरमन्त्र पद्मिनी यदजपद्विजने सा ॥ ५४ ॥
तेन पुण्यपरिपाकवशेन जीवन विमलमाश्रयमाणा ।
हंसयोगपरभागनिमित्तं सा परां सपदि निर्वृतिमाप ॥ ५५ ॥
॥ युग्मम् ॥
भास्कर समुदितं समवेक्ष्य रत्नसारतनय समुदस्थात् ।
पादपावलिसमाकुलमेक कानन च समवेक्षत शून्यम् ॥ ५६ ॥
वारिराशिपुलिने विपुलेऽसौ सञ्चरञ्चरणचारितयैव ।
शून्यपत्तनसमीपमुपेत कूपक मधुरवारिमदर्शत् ॥ ५७ ॥
तत्र पत्रपुटकं परिमाय वल्लरीविततरज्जुभिरेष ।
सन्निकृष्य सलिलं परिपीय प्राणवृत्तिमकरोत् फलपुष्पै. ॥ ५८ ॥
अस्तमीयुषि पुनर्दिनराजे भूधरप्रवरपादतटस्थ. ।
जाड्यपातचकितः शमिकाष्ठैराशुशुक्षणिमपीपतदेष ॥ ५९ ॥
इत्थमेष रजनीमतिवाह्य प्रातरेव वसुधां शिखिदग्धाम् ।
जात्यकाञ्चनमयीं समवेक्ष्य चेतसेति परिचिन्तयति स्म ॥ ६० ॥
नूनमेष कनकाङ्कितनामा द्वीप एव भविता यदिला स्यात् ।
स्वर्णमग्निसमवायमवाप्य तत्करोमि कनकं किमपीह ॥ ६१ ॥
इत्युदारमतिरेष विमृश्य मृत्तिकाभिरवनेरपि तस्याः ।
इष्टका व्यतत संपुटरूपाः स्वीयनामकलिता ललिताशः ॥ ६२ ॥
दारुभारखचिते ज्वलनेऽथ प्रज्वलत्यपि धृताः कनकस्य ।

भावमेव दधति स्म ततोऽन्धोः सन्निधौ बुधवरो व्यमुचत्ताः ॥६३॥
भ्राम्यता क्वचन तेन च रत्नान्यापिरे जलनिधेरपि तानि ।
कूपसन्निधिधृतार्जुनहाराऽभ्यासके निदधिरे रुचिराणि ॥ ६४ ॥
अन्यदा प्रवहणादवतीर्णैं पोतवाणिजसुदत्तनरैस्तम् ।
द्वीपमेव सलिलार्थमुपेतैः पृच्छयते स्म सलिलाशय एष' ॥ ६५ ॥
तेन तूर्णमुपदर्शितकूपे वारि लाद्भिरथ तैस्तट एव ।
वीक्ष्य रत्नकनकैष्टकभार' कस्य चेति धनदोऽप्यनुयुक्त. ॥ ६६ ॥
स्वर्णमेतदपि मे खलु तस्मै तुर्यभागमहमेव ददामि ।
यस्तु मां नयति रोधसि वार्द्धेरित्यभण्यत नरान् प्रति तेन ॥ ६७ ॥
तद्वचोऽनुगमुखेन सुदत्तस्तद्यथास्थितमसौ प्रतिपद्य ।
स्वर्णलोलुपतया निजभृत्यै कैतवेन तमपीपतदन्धौ ॥ ६८ ॥
धर्ममेव जनकं प्रणिहन्ति क्षुद्रसश्रयतया परिभूय ।
य. कृपामपि निजां जनयित्री त स्तुवन्ति सुधिय कथमर्थम् ? ॥६९॥
नीरमध्यपतितच्छदनान्त पाततो निधनमाप न चायम् ।
ना न मृत्युमधियाति हि दैवे संप्रसेदुषि पतत्यपि वज्रे ॥ ७० ॥
रत्नहेमनिकरं स सुदत्त' सर्वमेव परिगृह्य जगाम ।
अन्तरीपमपरं न परस्वग्राहिणां क्वचन जातु समाधि. ॥ ७१ ॥
वृत्तसंगतमसावपि चार्थे चिन्तयन्नवटभित्तितटान्त. ।
द्वारमक्षिपथमाप्य तृणौघैर्मन्दमन्दमविशत्पिहित तत् ॥ ७२ ॥
ग्रावबद्धपदमानपदव्या सोऽवतीर्य शनकैरपि तत्र ।
शून्यपत्तनमवैक्षत रम्य देवसद्मसुषमारमणीयम् ॥ ७३ ॥
चित्तरागमुपरागसमेते चारुचित्रमकरन्दरसाढ्ये ।
पुण्डरीकमनुकुर्वति लक्ष्म्या यत्र दृष्टिमधुपी विनिविष्टा ॥ ७४ ॥
कालिमानमपनेतुमिवान्त स्थायिन कलयितु स्थिरतां वा ।
ईदृशं क्वचन किञ्चन रम्यं नात्र भावि वसुधासरसीह ॥ ७५ ॥
पुण्यमन्त्रपरिपाकवशेन स्तम्भिता निगडिता किमु बद्धा ?।
कुर्वती मतिमतामिति तर्क नेहते स्म परमीक्षितुमेव ॥ ७६ ॥
॥ त्रिभिर्विशेषकम् ॥
एष वीक्ष्य तदवीक्षितपूर्व संमदस्फुरितदृग् हृदि दध्यौ ।

पुण्यबद्धमनसां पुरुषाणां राशिरेष यशसां किमुदीर्ण ? ॥ ७७ ॥
शारदाभ्रनिकरानवलम्बे व्योमनि स्थितिविधावसमर्थ ।
भूमिमण्डलगत किमयं वा कौमुदीसमुदय किमुदञ्चन् ? ॥ ७८ ॥
चिन्तयन्निति स मण्डपमापत्तत्र च स्थितिमय विदधान ।
सुप्रभावविदितामथ चक्रेड्देवता नयनमार्गमनैषीत् ॥ ७९ ॥
तां विनम्य विनयादरपूर्वं नाकनायकनिकायविनम्याम् ।
योजिताञ्जलिपुट स्तवमस्या कर्तुमप्ययमुपक्रमते स्म ॥ ८० ॥
भारती भगवती भवतीह ख्यातिमागतवती गुरुवाचा ।
बिभ्रती सुभगतां विगतांशां त्व जगज्जननि ! हैमवतीति ॥ ८१ ॥
त्वं पुन. कमलमाश्रयमाणा विश्रुतात्र कमला विमलात्मा ।
सर्वकामफलदानविधानान्मातरस्यनुपमा कुरुकुल्या ॥ ८२ ॥
क्रीडयैव धरणोरगराजं संश्रिता त्वमसि किं न न पद्मा ? ।
चक्रमात्मकरपङ्कज एव स्थापयन्त्यपि च चक्रधरा त्वम् ॥ ८३ ॥
श्रीयुगादिजिनशासनभक्ता विघ्नवारविनिवारणशक्ता ।
देवतासु सकलास्वपि चक्रेश्वर्यपि त्वदपरा न परास्ति ॥ ८४ ॥
तावदापदमुपैति मनुष्यो दुर्भगत्वमपि विन्दति तावत् ।
दु स्थतां समधिगच्छति तावद्यावदाचरति देवि ! न तेऽर्चाम् ॥८५॥
आन्तराणि करणानि नराणां न स्वरूपमवधारयितु ते ।
विस्फुरन्ति धिषणा धिषणानां बोधवारिधुतकर्ममलानि ॥ ८६ ॥
कामधेनुमपि कामितलब्ध्यै कल्पवल्लिमपि वेल्लितपाप ।
प्रार्थये न भवतीमपहाय स्वामिनि ! प्रणतदु खबिहन्त्रि ! ॥ ८७ ॥
आश्रये विकचचम्पकचञ्चत्पुष्पदामकमनीयशरीराम् ।
आधिधूननविधौ विबुधानां वन्दनीयचरणां मनसा त्वाम् ॥ ८८ ॥
इत्थमादरपर स्तुतिमेतां यावदेव विरचय्य स तस्थौ ।
तावदेव मुदिता हृदि देवी रत्नपञ्चकमदादियमस्मै ॥ ८९ ॥
आद्यमापदपसारणकर्म श्रीविलासकरण च ततोऽन्यत् ।
द्वन्द्वमस्ति विषदुर्भगताभिद्रोगभङ्गकुशलं खलु शेषम् ॥ ९० ॥
रत्नपञ्चकमहामहिमानं श्रोत्रमार्गमवतार्य स देव्या ।
जङ्घिकां क्षुरिकयैव विदार्य्य स्वां न्यवीविशदिदं च तदन्त. ॥९१॥

भेषजैरुपचितां निजजङ्घां स प्रणीय पटुबुद्धिनिधानम् ।
यन्नगप्रमुबलो नगरान्ता राजमन्दिरमुदैक्षत राजत् ॥ ९२ ॥
तत्र चित्रवति सप्तमभूमिस्थायिनी नयनयोर्विषय स. ।
चित्तसंमदकरी नयति स्म क्षीरनीरधिसुतामिव कन्याम् ॥ ९३ ॥
एणनाभिधृतपत्रकमस्या यन्मुख कमलराजिमजैषीत् ।
तद्ध्रुवं द्विजपति. प्रपलाय्य व्योम केवलमशिश्रियदेष ॥ ९४ ॥
अङ्गचङ्गिमरुचिर्मयकास्या नो मनागपि हृतेत्यधुनापि ।
स्वस्य शुद्धिविधये ज्वलनान्त काञ्चन विशति विश्वसमक्षम् ॥ ९५ ॥
एतदीक्षणयुगेन कुरङ्गी लोचने नु विजिते निजकीये ।
सविमृश्य वनवासमयासीद्दु सह परिभवो हि जगत्याम् ॥ ९६ ॥
रूपधेयमवलोक्य यदस्या लज्जितैव कमला निममज्ज ।
सागरप्रमथने परिक्लृप्ते सोन्ममज्ज दिविषद्भिरशेषै· ॥ ९७ ॥
नास्यमेतदलिकस्य पुरस्तादर्धचन्द्रपरिकल्पनमिन्दो ।
अष्टमीशशिनमारचयस्त स्वाभिसन्धिमकरोद्विधिशिल्पी ॥ ९८ ॥
वर्णयन्निति समीपमुपेत सत्कृत समुचितप्रतिपत्त्या ।
अभ्यधायि स तया किमिहागा भद्र ! दैवविमुख सुमुख ! त्वम् ? ॥९९॥
चन्द्रसुन्दरमुखि ! त्वमपीद साध्वसाप्लुतवच स किमात्थ ?।
सा जगाद भरतेऽत्र समृद्ध श्रीचित तिलकपत्तनमस्ति ॥१००॥
ऋद्धिसंहतिनिरस्तमहेन्द्रस्तत्र भूपतिरभूत्स महेन्द्र ।
नैव य कृपणतां स्पृशति स्म दातृराड् परवधूमिव जातु ॥१०१॥
तद्विषद्भिरपरेद्युरसूयासूचिते पुरमरोधि बलौघे ।
वारिदैरिव विकर्त्तनबिम्ब शारदैर्विहितगर्जितघोरै ॥१०२॥
तं तदा वसुमतीशतमन्युं व्यन्तरोऽभ्यधित कोऽपि सुपर्वा ।
पूर्वजन्मसुहृदस्मि तवाह वारिवाह इव तापनिहन्ता ॥१०३॥
भूभुजापि कथमित्यनुयुक्ते व्यन्तर प्रणिजगाद सहर्षम् ।
दक्षिणार्धभरतावनिवामाभूषण जयति चन्द्रपुर तत् ॥ १०४ ॥
रक्षति स्म किल चन्द्रयशास्तत्पत्तनं वसुमतीहृदयेश ।
खेचरीभिरुदगीयत यस्य व्योम्नि विक्रमकथा दयितेषु ॥१०५॥
राजराज इतिशब्दमुवाह भूतनायकसख. स कुबेर.

यत्र शासति परं क्षितिचक्रं चक्रपाणिसमविक्रमधाम्नि ॥१०६॥
सा बभूव दयिता शशिकान्ता नाम तस्य जलधेरिव गङ्गा ।
शीलमुज्ज्वलमवर्णयदिन्द्र. प्रेयसीषु निखिलास्वपि यस्याः ॥१०७॥
तत्र केलिसदन करुणाया दीनदौस्थ्यविनिबर्हणकर्मा ।
वाणिजो निवसति स्म जिनेन्द्रोपासनाप्रवणहृज्जिनदत्तः ॥१०८॥
शङ्खदत्त इतिनाम वयस्यस्तस्य शङ्ख इव गौरगुणोऽभूत् ।
साधुशब्दवसति. कुटिलत्व नो बभार हृदि यो वणिजोऽपि ॥१०९॥
हट्टविष्टरनिविष्टमदुष्टं शङ्खदत्तमपरेद्युरुपेत्य ।
कोऽपि तस्करवरोऽतिमहार्घं रत्नमेकमुपदर्शयति स्म ॥११०॥
मूल्यमस्य वणिजाऽप्यनुयुक्तस्तस्कर प्रवदति स्म स तेन ।
किञ्चनापि यदिद लभते द्राक् साधुरत्न ! मम यच्छ तदेव ॥१११॥
दस्युमेतमनवेत्य स चापि मुग्धमेव कलयन् कलयापि ।
संमदेन कनकस्य सहस्राण्यार्पयद्दश तदैव धनाढ्य. ॥११२॥
यावदेव नगरे स नु तत्र स्वेच्छयैव वसु तद्विललास ।
तावदेव नृपतेरधनोऽन्य कोऽपि कोशमपि लुण्टयति स्म ॥११३॥
तद्गवेषणकृते भ्रमतैवारक्षकेण निखिले नगरेऽपि ।
स व्ययन् समवलोक्य धनानि तद्भ्रमेण विनिबन्धित एव ॥११४॥
सर्वमर्पितमनेन च लोप्त्रं दस्युना निबिडताडनभीत्या ।
प्रत्यपादि पुररक्षितुरग्रे शङ्खदत्तवणिजस्य च वृत्तम् ॥११५॥
तत्स्वरूपमधिगम्य नृपेणारक्षकादथ वणिग्विधृतोऽपि ।
श्रावकस्य जिनदत्तमहेभ्यस्याग्रहेण मुमुचे स इतश्च ॥११६॥
सोमराज इति तत्र कुटुम्बी न्यायवित्तपरिपोष्यकुटुम्ब ।
रुक्मिणी प्रियतमाजनि तस्य रुक्मिणीव सुभगत्वमहर्द्धा ॥११७॥
रेवणाख्यपुरुषे मनसः सावस्थिति व्यधित भर्तृविरागा ।
विश्रुता चपलता चपलाया वस्तुत स्फुरति सा वनितानाम् ॥११८॥
तत्प्रियोऽप्युपपति विबुभुत्सुर्गुप्त एव तदनुभ्रमति स्म ।
सापरेद्युरपसूचितमेका शून्यदेवकुलमैदविलम्बम् ॥११९॥
व्यग्रतां क्वचन कर्मणि बिभ्रद्रेवणोऽहनि न तत्र समागात् ।
तत्र देवमभिवन्दितुकामः शङ्ख एव स तदा प्रविवेश ॥१२०॥

रुक्मिणीपतिरवेक्ष्य विशन्तं तत्र त स रहसि स्थित एव ।
स्वप्रियोपपतिशङ्कितचेता संविधूत्य नयति स्म नृपान्तम् ॥ १२१ ॥
विज्ञपय्य नृपतिं जिनदत्तो भूय एनमपि मोचयति स्म ।
तापसस्य सविधे स तपस्यामग्रहीद्भवपराभवशङ्की ॥ १२२ ॥
संविधाय घनबालतपांसि स्वायुषः स निधनं प्रतिपद्य ।
व्यन्तरत्वमनुभूय भवं च व्यन्तरोऽहमभव पुनरेव ॥ १२३ ॥
आर्हतः स परमो जिनदत्त. स्वर्गमाद्यमधिगम्य ततश्च ।
विच्युतो नृप ! भवानपि जज्ञे तेन मैत्र्यपदमस्मि तवाहम् ॥ १२४ ॥
ये त्वया विरचिता उपकारास्तानहं गणयितुं कथमीशः ? ।
काञ्चनक्षितिधरस्य सुवर्णं क. प्रभुस्तुलयितु यदि वा स्यात् ? ॥१२५॥
मोचितो नरपतेर्भवताऽहं यद् द्विरस्मि तदिदं हृदयं मे ।
सर्वदा न विजहाति ततस्त्वं कृत्यमादिश किमप्युचित मे ? ॥१२६॥
उत्तमा उपकृतेर्निरपेक्षा. संभवन्त्युपकृतीरपि कृत्वा ।
वर्षुको जलधरोऽमृतवृष्टिमादधत्किमपि वाञ्छति किं वा ? ॥१२७॥
मां तथाऽप्यनृणमाचर राजन् ! स्वेप्सितप्रथनताविनियुक्त्या ।
क्वापि न प्रतिहता खलु शक्तिर्व्यन्तरस्य करणीयपरस्य ॥ १२८ ॥
एवमस्य वचनं विनिशम्य क्षोणिनायकवरः स बभाषे ।
त्वत्प्रसादगरुडादरिनागा मत्पुर परिभवन्ति यथा न ॥ १२९ ॥
व्यन्तरामर ! विधेहि तथा त्वमागमं सफलयन्निजमेव ।
इत्युदारवचसाऽवनिभर्तुं सोऽत्र पत्तनमिदं निरमासीत् ॥ १३० ॥
संप्रवेशनविनिर्गमनाभ्यां युक्तमन्धुविनिबन्धलसद्वाः ।
न स्वचक्रपरचक्रभयाभ्यां संश्रितं जितमहेन्द्रपुरश्रि ॥ १३१ ॥
सत्क्रयाणकततिर्विषयेभ्योऽभ्यागमत्प्रवहणैरपरेभ्यः ।
श्रीयुगादिजिनराज्यवदस्मिन्भिक्षुकस्य विदितं न च नाम ॥ १३२ ॥
अध्युवास सकलैः सह पौरैर्भूपतिस्तदिदमेव सुखाय ।
इत्यतुल्यमुपकृत्य नृपाय व्यन्तरः स निजधाम जगाम ॥ १३३ ॥
वत्सरेष्वतिपतत्सु मुदैव पौरकल्मषसमुच्छ्रयनुन्नः ।
कोऽपि मर्त्यपिशिताशनविद्याभृत् समागमदिहानुपमौजाः ॥ १३४ ॥
तेन पौरनिकुरम्बमशेषं प्राणवृत्तिमुपकल्पयतैव ।

ग्रस्तमेतदुभयोरपि पुर्योर्नष्टमन्यदविनष्टबलं च ॥ १३५ ॥
कन्यकाऽहमपि भूपुरुहूतस्याख्यया तिलकसुन्दरिकेति ।
सप्तमेऽह्नि भणिताऽहमतोऽह्न कौणपेन शृणु सुन्दरि ! किञ्चित् ॥१३६॥
रत्नसञ्चयपुरे किल वैताढ्याद्रिमण्डनमणौ समभूवम् ।
भूपति पवनवेग इतीड्यो मर्त्यजाङ्गलरति क्रमतोऽहम् ॥ १३७ ॥
यातुधानकुलसंप्रतिपन्नं कर्म तद्विरचयन् सचिवार्यैः ।
त्याजितो नृपपदं छलवृत्त्या विभ्रमंस्तव पितु. पुरमागाम् ॥ १३८ ॥
त्यक्तवानहमशेषभवती यत्तेन विद्धि नियतं परिणेता ।
इत्युदीर्य स जगाम च सम्प्रत्यागमिष्यति गमी निरयान्त· ॥ १३९ ॥
तत्प्रयाहि परिहाय विलम्बं जीवितं निजमवेति कुमार्या ।
व्याहृत· प्रवदति स्म स भीति मा कृथास्तमहमद्य निहन्मि ॥१४०॥
साऽप्युवाच हृषिताखिलरोमा यद्यवश्यमिदमाचरितासि ।
देवतार्चनमसौ विदधानस्तत्र वक्ति गदितोऽपि मघोना ॥ १४१ ॥
मत्समर्पितपितुर्निशितासिप्रेरणान्निधनमापय चैनम् ।
जल्पतोरिति तयोरविशङ्कमाययौ स लघुखेचरपाश· ॥ १४२ ॥
आपतन्तमवलोक्य तमारात्तस्थिवान् स धनदोऽपि निलीय ।
खेचरोऽप्युपविवेश स विद्यादेवतार्चनचिकी· शुचिदेह ॥ १४३ ॥
बालिकाऽर्पितमसौ करवाल धारयन् करसरोरुहमध्ये ।
तर्जयंस्तमिदमभ्यधितारे ! तिष्ठ तिष्ठ शठ ! रे ! क्व नु गन्ता ?॥१४४॥
भाषितोऽपि मुहुरुद्धतमेवं जोषमास्थित कृतार्चनकृत्य· ।
यावदेव शनकै· स उदस्थात्तेन तावदसिना विनिजघ्ने ॥ १४५ ॥
पाणिपीडनविधिस्थितिहेतोराहृतोपकरणैरपि तस्य ।
भूमिपालतनयां धनदोऽथ सानुरागहृदयामुपयेमे ॥ १४६ ॥
किञ्चिदत्र समयं सुखमग्नः कान्तया सह तया गमयित्वा ।
पूर्महार्घ्यतमरत्नसमेतः कूपमार्गमभिसृत्य स तस्थौ ॥ १४७ ॥
यावदागमयते स तु तत्र पूरुषान् परमपौरुषभाजः ।
तावदेव कतिचित्समुपेता न्यक्षिपन् सलिलभाजनमन्धौ ॥ १४८ ॥
रज्जुचालनवशादवबुध्य स्त्रीसखं पुरुषमेव निरीक्ष्य ।
तत्स्वरूपमवगम्य च देवदत्तपोतवणिजे जगदुस्ते ॥ १४९ ॥

सोऽपि विस्मयपरिप्लुतचेतास्तत्क्षणादनुचरैः सममेत्य ।
स्वापतेयदयितायुतमन्धोर्मध्वकेन निरजीगमदेनम् ॥१५०॥
साप्रिय स तमवेक्ष्य स्वरूप विस्मित' स्मितपुरस्सरमूचे ।
ईदृशस्त्वमुपमातिगमूर्ति सन्मते ! निपतित. कथमन्धौ ? ॥ १५१ ॥
तन्निशम्य स बभाण सधैर्य भग्नपोतविभवोऽन्धुसमीपे ।
तीरमाप्य फलकेन कथञ्चिन्नीरमत्र च निरैक्षिषि पश्यन् ॥ १५२ ॥
एषिकाऽतितृषिता जलमिच्छु कूप एव निपपात जवेन ।
नैव निर्गमयितुं प्रभुरेता पृष्ठ एव निपपात तदस्या ॥ १५३ ॥
रत्नमुख्यमखिलं व्यतरन्मे सम्प्ररूढकृपया जलदेवी ।
सात्त्विकस्य पुरुषस्य हि वृद्ध्या देवता हृदि वहन्ति समाधिम् ॥१५४॥
कान्तया सह षडशगृहीत्या यानपात्रमधिरोपित एषः ।
भाटक कपटलम्पटचित्ता. कस्य लान्ति वणिजो न हि लोके ?॥१५५॥
अन्तरम्बुनिधि गच्छति पोते देहचिन्तनविधौ विनिविष्टम् ।
तत्प्रियाहृतमना धनदं सोऽक्षेपयज्जलनिधौ वणिगीश. ॥ १५६ ॥
कापथे पदनिवेशनसक्तं व्यक्तमेव परियाति विवेक ।
मानस दहति मन्मथवह्नौ स क्व तिष्ठतु निराश्रयवृत्ति ? ॥ १५७ ॥
पूर्वमस्य वसु तादृशमिद्ध दापयत्यपथ एव पदानि ।
सा शशाङ्कवदना परिदृष्टा तत्खलो नृपतिसंपदमाप ॥ १५८ ॥
अन्यदा प्रवहणाधिपतिस्तां शोकशङ्कुमपनेतुमिवासौ ।
ऊचिवांश्चटुवचोभिरधीरां मा वृथा हृदि कृथा परिखेदम् ॥ १५९ ॥
आससाद नियतेरपमृत्युं तावक' स पतिरत्र न शोक ॥
तत्पदे सुतनु ! मामभिषिञ्च येन शर्म सकलं सुलभ स्यात् ॥ १६० ॥
दुष्कृतप्रवणमेव तदीयं चेष्टित समवधार्य हृदन्तः ।
साऽभ्यधत्त यदि भद्र ! नृपस्ते मां प्रदास्यति तदा तव जाया ॥१६१॥
सङ्कटे निपातिता विधियोगात् प्रार्थयन्तमपरं पुरुष वा ।
विप्रतार्य्य परिरक्षति शील काचनापि निजवशपताका ॥ १६२ ॥
पूर्वपुण्यपरिपाकफलेन रत्नसारतनय फलकेन ।
प्रेरितेन मरुता निजवृत्तं संसरञ्जलधितीरमभीतः ॥ १६३ ॥
तत्र दत्तनयन. परिपश्यश्चैत्यराजिकलितं स्वपुरं तत् ।

लक्षणैरविकलैरुपलक्ष्य यावदेव मुदितः स बभूव ॥ १६४ ॥
संप्रसारितमुखस्तिमिरेतं तावदेव सहसा ग्रसते स्म ।
साकमेव फलकेन मनुष्यो नागवल्लिदलकैः क्रमुकं च ॥ १६५ ॥
रत्नमस्सरदसौ विनिहन्तुमापदं तदपि वृत्तमभीष्टम् ।
मारुतोत्थिततरङ्गविनुन्नस्तीरमाप स तदैव तिमिश्च ॥ १६६ ॥
वीक्ष्य त सपदि धीवरवण्ठाः पाणिसंचितकठोरकुठाराः ।
धाविता जठरदारणपूर्वं जघ्नुरेष निरगाच्च यथास्थः ॥ १६७ ॥
विस्मितास्तदवलोकनतस्ते तत्क्षणान्निधिविलोकनवत् तम् ।
हृद्यमान्तमिव वेत्रिमुखेन क्ष्माभुजे निजभियैव शशसुः ॥ १६८ ॥
भूभुजा कनकपूर्वरथेनाह्वाय्य निर्मलकुलादि स पृष्टः ।
स्वं जगौ वणिजमेव नरेन्द्रस्याग्रतोऽवितथमेव हि भाष्यम् ॥ १६९ ॥
आतपत्रतल एव नृपेण स्नापितः शुचिभिरम्बुभिरुष्णैः ।
संमदेन पुनरप्यनुयुक्तः कामितं स्वमनसः कथयेति ॥ १७० ॥
संस्मरन् सुभगताकृति रत्नं योजिताञ्जलिरसौ वदति स्म ।
मां स्थगीधरमिनस्तनुतां, स्वां येन सन्निहित एव हितो वः ॥ १७१ ॥
तं तथैव स वितत्य च मत्स्योदर्यसंज्ञकमथाह्वत राजा ।
संज्ञया स विदितः स्वकयाऽस्थाद्भूपते सविधवर्त्यपि नित्यम् ॥ १७२ ॥
शूलभृत्पशुपतिः स कपाली स्थाणुरुद्रविषमेक्षणवाच्यः ।
राजसंश्रयवशादिह जज्ञे किं न नाम महितः स महेशः ? ॥ १७३ ॥
स क्रमादथ महेभ्यसुदत्तो ज्ञापितः प्रथममेव नियुक्तैः ।
आगतः क्षितिपतिं प्रणिपत्तुं तेन तूर्णमुपलक्षित एषः ॥ १७४ ॥
न्यासयन्मरकतस्य विशालस्थालमामलकमौक्तिकपूर्णम् ।
अग्रतोऽवनिपतेः स इतीव द्वेषिणामयशसामुपरिष्टात् ॥ १७५ ॥
सङ्गराङ्गणपलायिचराणां शारदेन्दुकरनिर्मलधाम ।
तावकं स्फुरति देव ! यशोऽदः सर्वतः समुदितं भुवनान्तः ॥ १७६ ॥
( युग्मम् )
पादपास्तव सुमानि ददन्ते मौक्तिकानि जलराशय एते ।
भूभृतोऽपि मणिसंचयमर्हं वाणिजोऽपि विपुलानि धनानि ॥ १७७ ॥
अर्धशुल्कमकरोन्नृपतिस्तं शुक्लकीर्तिपरिवीतदिगन्तः ।

कल्कपूरितमना मनसीदं सोऽप्यचिन्तयदचेतनरूपः ॥ १७८ ॥
हा स्थगीभृदसकाववटान्त क्षिप्तमानुषसमाक्रतिधर्मः ।
दृश्यते तदिह किं स भवेद्वा बुध्यते विलसितं न विधातुः ?॥ १७९ ॥
सविमृश्य मनसेति स किञ्चिद्वेत्रिणं सविधभाजमपृच्छत् ।
किं स्थगीभृदवनीशितुराद्यो नूतनः किमयमत्र निविष्टः ? ॥ १८० ॥
तत्प्रवृत्तिमवगम्य यथार्थां तन्मुखादधृतिमान्स सुदत्तः ।
तज्जिघांसनधिया नृपमानोन्मत्तगीतरतिगायनमूचे ॥ १८१ ॥
राट्स्थगीभृदतिगायन ! वाच्यः सोदरेति भवता मदरिः सः ।
इष्टकाश्च कनकस्य चतस्रः पूर्वमेव भवतो वितरामि ॥ १८२ ॥
स प्रमाणमिति वाचमुदीर्य्य प्राप्य काञ्चनमुदीरितपूर्वम् ।
वीटकं वितरतः श्वपचोऽसौ प्रातरेव लगति स्म गलेऽस्य ॥ १८३ ॥
वीक्षितोऽसि सुचिरेण मया हा भ्रातरित्यभिदधत्स रुरोद ।
आदिदेश नृपतिः कुपितस्तं वध्यमेव स ततः सुविचित्तः ॥ १८४ ॥
अब्रवीद्धनद एव ततश्चारक्षकं श्वपच एव भवामि ।
यद्यपि त्वमभिधेहि तथापि क्ष्मापतेः पुरत एव मदुक्तम् ॥ १८५ ॥
किञ्चिदेव भवतां पुरतोऽसौ भूमिपाल ! धनदोऽस्ति विवक्षुः ।
एतदेव विनिशम्य नृपेणाकारितोऽभ्यधित सोऽपि सुबुद्धिः ॥ १८६ ॥
राट्प्रसादसदनं जनको मे गायनः समभवन्नृपतेऽत्र ।
द्वे स्त्रियावभवतामपि तस्यैका प्रसूर्मम तयोरपराऽस्य ॥ १८७ ॥
अप्रिया मम परं जनयित्री किञ्चनापि समजायत वप्तुः ।
रत्नपञ्चकमदत्त च योगक्षेमभावविधये जनको मे ॥ १८८ ॥
प्रेयसीतनुभुवे पुनरस्मै नैकधा मणिगणं तिमिरघ्नम् ।
इत्युदीर्य्य स विदार्य च जङ्घां स्वामदीदृशदिलापतये तत् ॥ १८९ ॥
अभ्यधाच्च नरदेव ! वपुष्यस्यापि रत्ननिकरोऽस्त्यखिलाङ्गे ।
तद्विदारयितुमेव नियुक्तैः पातितो झगिति गीतरतिः सः ॥ १९० ॥
अन्तकस्य रसनामिव पश्यन् शस्त्रिकां भयविकम्प्रशरीरः ।
निर्जिह्वानमिव जीवितमिङ्गैस्तथ्यमेव स बभाण नृपाग्रे ॥ १९१ ॥
(युग्मम्)
तेन दत्तमथ तत्क्षणमेवानाययत्तदपि भर्म स सर्वम् ।

देवदत्तवणिजं विनिबद्धं भूपतेरथ विमोच्य कथञ्चित् ।
सञ्चकार निजवित्तषडंशस्पर्शनात् स धनदश्चरिताख्यः ॥ २१९ ॥
सज्जना विरचयन्त्युपकारं दुर्जनस्य विहितेऽप्यपकारे ।
छिन्नघृष्टमथवा परितापं किं न चन्दनमपास्यति पुंसाम् ? ॥२२०॥

अथ कनकरथस्य क्षोणिशक्रस्य वाक्या—
जनकगृहमयासीत्पाद्चारेण सोऽपि ।
चिरपरिचययोगाल्लक्षणैर्लक्षयित्वा
प्रणतमपि पिता तं हर्षतोऽप्यालिलिङ्ग ॥ २२१ ॥

दिष्ट्या वत्स ! निरीक्षितोऽसि मयका जीवंश्चिराय स्वयं
प्राणान् धारयता निमित्तविदुरज्योतिर्विदां वाक्यतः ।
कुत्रास्थाः किमुपार्जयो विषयमद्राक्षीः कमित्यादरा-
त्पृष्टोऽसौ जनकेन तं तमखिलं वृत्तान्तमाख्यन्मुदा ॥२२२॥

एकाकी निरगादयं निजगृहात्कश्चित्सहायोऽपि न
द्रष्टा नाप्युपवर्तनस्य न परिच्छेत्ता पुनः कस्यचित् ? ।
स्वर्णद्वीपमवाप्य तादृशमहो ! यत्स्वर्णमप्यार्जय-
द्राजानं रमयन् गुणान्विवृणुते तत्पुण्यविस्फूर्जितम् ॥२२३॥

मत्वैवं रत्नसारः प्रमुदितहृदयः साररत्नोपदाभि-
र्विज्ञप्य क्षोणिपालं तनयमथ निजं वाहने मर्त्यवाह्ये ।
आरोह्यामैव वध्वा सह नगरजनैः सेन्दिरे मन्दिरे तं
नीत्वा वर्द्धापनं स व्यरचयदसमं स्वस्य कल्याणमिच्छुः॥२२४॥

सीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विज्ञानभाजां गुरुः ।
च्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽत्र षष्ठोऽगमत् ॥२२५॥

## ॥ इति श्रीशान्तिनाथचरिते षष्ठः सर्गः ॥



अर्हम्

# अथ सप्तमः सर्गः ।

यस्य दर्शनमवाप्य योगिनो योगमेव सफलं विजानते ।
दुष्टकर्मविनिबर्हणक्षम शान्तिरस्तु भवतां शुभाय स ॥ १ ॥
साऽथ कान्तधनदोपदेशत. प्राणमत्तिलकसुन्दरी वधू ।
रत्नसारचरणाम्बुजद्वय सेवितं किमपि रत्नचूलया ॥ २ ॥
तौ समीक्ष्य विनयोज्ज्वलामिमां हर्षमेव बिभराम्बभूवतु ।
मानसे द्रुमकदम्पती ज्वलत्स्वर्णरत्नखचितं निधिं यथा ॥ ३ ॥
सा बभार गृहभारमात्मनाऽऽवर्जयन्त्यपि कुटुम्बपेटकम् ।
धर्म्यकर्मणि मन· समाहितौ तौ च बिभ्रतुरपेतविभ्रमौ ॥ ४ ॥
कान्तया सह तया समाश्रयत्सोऽथ शर्म धनदो धनेश्वर ।
कामकेलिजनितं हि यौवने मुख्यमेतदुपचारतोऽपरम् ॥ ५ ॥
भर्तृसङ्गमुपलभ्य भाविनी दुःखमेव न वियोगसंभवम् ।
साऽध्यगात्कुमुदिनीव कौमुदीनायके समुदिते मुदञ्चिता ॥ ६ ॥
लज्जया किमपि कामकौशल या न वल्लभमबूबुधत्पुरा ।
प्रेम पत्युरवलोक्य सभृत सा स्वतस्तदनु त न्यवीविदत् ॥ ७ ॥
वप्तुरङ्कमधितष्ठुषोऽन्यदा नन्दनस्य नृपते· समार्पयत् ।
प्राभृतं निभृतमानमच्छिरा मालिक. सुरभिपुष्पमालिकाम् ॥ ८ ॥
घ्राणदेशविषयं नयन्नयं तां मधुव्रतविकर्षणौषधीम् ।
दृश्यते स्म वदनेऽन्तराश्रिता निर्निमित्तरिपुराजभोगिना ॥ ९ ॥
तत्क्षणादपि पपात भूतले क्ष्वेडपीडितवपुर्मुमूर्च्छ च ।
व्याकुलश्च नृपतिः सहस्रशोऽजूहवद्विषचिकित्सकानयम् ॥ १० ॥
औषधानि कतिचिन्न्ययोजयस्तत्र मन्त्रमपरे च मान्त्रिका ।
सम्प्रयुज्य सकला स्वकौशल केवल श्रममवापुरास्थिता ॥ ११ ॥
तान्निरीक्ष्य विफलीकृतक्रियान् मान्त्रिकान्विषचिकित्सकानपि ।
देवतार्पितमणेर्जलोक्षणान्निर्विषं धनद एव त व्यधात् ॥ १२ ॥
रत्नमेतदुपकर्तुमप्यलं त्वादृशां समधिगम्य सन्निभिम् ।

वेधसैव घटितं विचेतनं रत्नसारसुत ! चेतनाश्रय ! ॥ १३ ॥
रत्नसारतनुजन्मता तव प्रागभूद्धनद ! सा निरन्वया ।
रत्नसारतनुजन्मताधुना सान्वया मदुपकारकारणात् ॥ १४ ॥
एवमस्य बहुधा प्रशंसनं बन्दिवन्नरपतिस्ततान सः ।
कीर्त्यते स हि वदावदः परं यः प्रशंसति गुणाश्रयं जनम् ॥ १५ ॥
(त्रिभिर्विशेषकम्)
यौवनोपचयसुन्दरोऽन्यदा कुञ्जरं समधिरुह्य यन् पथि ।
भूपसूः स च गवाक्षमाश्रितां सूरभूपतनयामवैक्षत ॥ १६ ॥
श्रीपदोपचितषेणिकाभिधां क्षीरनीरधिसुतानुजामिव ।
दृश्यपाणिकमलामनाविलां रूपलक्षणगुणोपशोभिताम् ॥ १७ ॥
(युग्मम्)
पुष्पसायकनिशातसायकैराहतः सममजन्यचेतनः ।
का तदङ्गसुकुमारता परा तस्य कोऽत्र ननु विक्रमक्रमः ॥ १८ ॥
चेतनाविकलमेव मन्दिरं तं सुहृत्समुदय समानयत् ।
चन्दनैर्न हृदये निवेशितैस्तापशान्तिरभवत्तदङ्गके ॥ १९ ॥
मान्मथं ज्वरमपोहितुं क्षमा भेषजैर्न भिषजो रसैरपि ।
लङ्घनैरपि घनैर्न साधनैः सुश्रुतोक्तविधिना विधापितैः ॥ २० ॥
तस्य शस्यशयनीयपल्लवा मर्मरत्वमगमन् प्रतिक्षणम् ।
अङ्गदाहशमनाय कल्पिता दाहमेव विपुलं वितेनिरे ॥ २१ ॥
तच्चिकित्सकचिकित्सितं वृथा संप्रपद्य सुहृदा स भाषितः ।
तथ्यमेव यदि कथ्यते त्वया तद्रुजोपशमनाय यत्यते ॥ २२ ॥
तेन तस्य परिपृच्छतः पुरः स्वस्वरूपमखिलं प्रकाशितम् ।
नैकमानसविभिन्नवर्ष्मणो गोप्यमस्ति सुहृदो हि किञ्चन ॥ २३ ॥
तस्य सख्युरवगम्य तत्तथा भूपतिः सपदि मूलमन्त्रिणम् ।
सूरभूमिपतिसन्निधौ सुतां प्राहिणोत् मृगयितुं मृगेक्षणाम् ॥ २४ ॥
आपतन्तमवलोक्य मन्त्रिणं रंहसा समुदतिष्ठदासनात् ।
आसने समुपवेश्य गौरवादित्युवाच च स सूरभूपतिः ॥ २५ ॥
भूपतिप्रतिकृतिस्त्वमेव यन्मन्दिरं मम समागमः स्वयम् ।
पूर्वजाचरितपुण्यसञ्चयस्तद् ध्रुवं जयति मे महत्तमः ॥ २६ ॥

एतके वयमियं वधूस्तव कन्यकेयमुभयोश्च जीवितम् ।
देहमेतदपि गेहमृद्धिमद् ब्रूत येन करणीयमस्ति व. ॥ २७ ॥
धीसखोऽभ्यधित काश्यपीपते[1] वस्तुतो यदिदमुच्यते त्वया ।
तत्सुतां वितर भूपसूनवे युज्यते गुणवतोर्हि सङ्गम ॥ २८ ॥
श्यामलेन जलदेन चञ्चला भाति नो विकचचम्पकप्रभा ।
पुत्रिका तव नरेन्द्रसूनुना योगमाप्य च यथा विभास्यति ॥ २९ ॥
अन्वमन्यत स सूरभूपतिर्मन्त्रिवाक्यमवधानत' श्रुतम् ।
स्व प्रदत्तमवबुध्य पुत्रिका भूमिपालतनयाऽथ साभ्यधात् ॥ ३० ॥
क्षोणिवासवसुताय मां पिता चेत्प्रदास्यति तदा तदग्रत. ।
स्व कृशानुविषपाशलम्भनाल्लम्भयामि निधनत्वमात्मना ॥ ३१ ॥
धीसखोऽपि तदुपेत्य भूपति सर्वमेव रहसि व्यजिज्ञपत् ।
राजपुत्रविरहानलेन्धनं कामसायकनिघर्षसाधनम् ॥ ३२ ॥
अर्पितं सुभगतानिबन्धनं रत्नमाशु धनदेन तत्ततः ।
वासराणि कतिचिन्निराकुलो ध्यायति स्म नृपते कुमारक' ॥ ३३ ॥
तन्मणेर्निरुपमप्रभावतो दुर्भगत्वगरलं हृदि स्थितम् ।
दुष्टकर्मभुजगोपपादितं तस्य नश्यतितरां स्म सत्वरम् ॥ ३४ ॥
यस्य नाम सहते स्म नापि या वैरिनामवदुपेतमत्सरा ।
तस्य सा तदपि सूरकन्यका मन्त्रवज्जपति मन्मथातुरा ॥ ३५ ॥
मत्प्रियप्रियसुहृद्विरोधिनं राजनन्दनमसौ समाश्रयत् ।
इत्यमूं समभिसृत्य जालकैस्तापमापयति कौमुदी भृशम् ॥ ३६ ॥
एतदीयवदनेन मामकं मण्डलं विजितमित्यसौ विधुः ।
तापभेदनधिया तया श्रितस्तापमेव तनुते तदङ्गके ॥ ३७ ॥
मानिताऽपि बहुश सखीजनै किञ्चनापि बुभुजे न सा सकृत् ।
भोजिताऽपि न रसं विवेद सा भूतदोषकलितेव केवलम् ॥ ३८ ॥
भाषिताऽपि वचनं न सा ददौ मूकतामुपगतेव साग्रहा ।
जल्पति स्म यदि वा कथञ्चन म्लिष्टमाहतमबद्धमुद्धतम् ॥ ३९ ॥
ईदृशी समवलोक्य तां सखी बुद्धिकौशलभृताऽनुयुज्य च ।

---

१ अविस्पष्टम् । २ मृषार्थकम् ।

तत्स्वरूपमवगम्य तत्पितु: सर्वमेव कथयाम्बभूव तत् ॥ ४० ॥
सूरभूपरिवृढो निशम्य तद्दूतिकाभिहितमात्तसंमदः ।
विज्ञपय्य नृपतिं महोत्सवात्कन्यकां नृपभुवा व्यवाहयत् ॥ ४१ ॥
अन्यदा नरपतिः शिरोव्यथाकुक्षिशूलविषमामयार्दित. ।
वैद्यमान्त्रिकगणैरुपेक्षितो जीवितव्यविमुखो विनिश्वसन् ॥ ४२ ॥
रत्नसारतनयार्पितोल्लसद्रोगभेदिमणिवारिभिरुक्षित: ।
तत्क्षणादपि विशीर्णवेदनो व्याहरद्धनदमन्तिकस्थितम् ॥ ४३ ॥
॥ युग्मम् ॥
भास्कर: प्रकुरुतेऽप्युपक्रियां तापमादधदधिप्रकाशन ।
चन्द्रमास्तु कलयन् कलङ्कितामादधाति जनतापहिस्रताम् ॥ ४४ ॥
चन्दनं हरति तापमान्तर घृष्टमेव दृषदा धृतं तनौ ।
रत्नसारगुरुवंशकेतन स्वव्यतिक्रमगुणो भवानभूत् ॥ ४५ ॥
॥ युग्मम् ॥
मादृशामसमभाग्यवैभवाज्जात एष भवतो भवोदय: ।
चक्रवाकसुकृतानुभावतो भानुमानुदयते हि सन्ततम् ॥ ४६ ॥
श्वसतीत्थमवनीश्वरे स्वयं रत्नसूर्विनतिवामनोऽब्रवीन् ।
एष देव ! महिमा महांस्तव वक्ति यद्विभुरुपक्रियां मम ॥ ४७ ॥
उत्तमाश्रयवशात्प्रशस्यतां यात्यवश्यमपि वर्णदूषक ।
पीतरक्तसितवर्णयोगतश्चित्रके स्फुरति कृष्णवर्णक. ॥ ४८ ॥
सम्भवेदतितमां महीयसामाश्रयेण महिमाऽमहीयसाम् ।
आरकूटशकलं धनेशितु: पाणिना विधृतमर्जुनायते ॥ ४९ ॥
रत्नलब्धिविषये महीपते ! त्वत्प्रसत्तिरपि मूलकारणम् ।
राजनि प्रणयिनां प्रसेदुषि प्रीतिमान् भवति देवताजन. ॥ ५० ॥
एवमेष मणिभिश्च पञ्चभिः स्वापरोपकृतिकर्म निर्ममे ।
इन्द्रियैरिव महामना: पुमानात्मशुद्धिपरभागकाङ्क्षया ॥ ५१ ॥
तत्पुरोपवन एव चान्यदा चित्रतुष्टयधरो मुनीश्वर: ।
शीलधार्य्यभिध आययौ गुरुः शिष्यवृन्दविनिषेवितक्रम: ॥ ५२ ॥
प्रेयसी मम हृदः पर क्षमा तां न वीक्षितुमयं क्षमः क्षणम् ।
इत्यवेक्षितजिनेश्वरागम. कोपमेव निजघान यः स्वयम् ॥ ५३ ॥

मत्प्रियङ्करणपालितात्मना संविदा सह सदा विरोध्ययम् ।
इत्यशेषभुवनानुगामिनं मानमुद्धतमधश्चकार य ॥ ५४ ॥
आर्जवं मम हृद. प्रियङ्करं धावतीयमपि तज्जिघांसया ।
इत्यत. प्रथममेव मायिकां यो बिभेद सुकृतोपदेशकः ॥ ५५ ॥
पापमुग्रमसुहृन् ममाधुना तद् विवर्द्धयितुमेष काङ्क्षति ।
इत्यतो निखिलदोषपोषकं लोभमेव शमयाम्बभूव यः ॥ ५६ ॥
॥ पञ्चभि. कुलकम् ॥
पौरलोकमवलोक्य कानने यान्तमुत्सुकतया सकारणम् ।
पार्श्वग कमपि पृष्टवानयं सूरिमागतमजिज्ञपच्च सः ॥ ५७ ॥
रत्नसारवणिगीशनन्दन स्यन्दन समधिरुह्य सोऽथ तम् ।
वन्दितुं विदितयोगसङ्गतं गच्छति स्म मुनिनायकं मुदा ॥ ५८ ॥
तं विनम्य पुरत श्रितासने भक्तिभाजि धनदे मुनीश्वर. ।
शर्करारसमयीमिवानघश्रोतृकां व्यधित धर्मदेशनाम् ॥ ५९ ॥
आदधीत सुकृत सभावनं सर्वमेव खलु नान्तरान्तरा ।
भावनाविकलमेव यन्न तत्स्यात् समग्रफलदायक नृणाम् ॥ ६० ॥
प्राग् यथैव जिनराजमन्दिरं श्रेष्ठिपुत्रमथनो विधाप्य सः ।
खण्डितं फलमविन्दत ध्रुवं भावखण्डनवशेन तद्यथा ॥ ६१ ॥
दक्षिणेऽत्र भरते रते. पुरं नाम रत्नपुरमस्ति सान्वयम् ।
तत्र कोऽपि कनकप्रभोऽभवत्क्षिप्ततप्तकनकप्रभो नृप. ॥ ६२ ॥
तत्प्रियाऽपि कनकप्रभाऽजनि प्रीतिवल्लिवनसारणिप्रभा ।
यां समीक्ष्य मधुराकृति शिवा वल्लभं स्ववपुषाऽप्यनीनहत् ॥ ६३ ॥
आस तत्र वसुदत्त इभ्यकस्त्यागकीर्तिभरचन्दनोज्ज्वलः ।
प्रार्थनाभिमुखमन्यकामिनीवर्गमेव विमुखीचकार यः ॥ ६४ ॥
पूर्णचन्द्रशुचिशीलधारिणी चार्व्यजायत सधर्मचारिणी ।
तस्य धर्मधिषणा वसुन्धरी चित्ररूपरसनावसुन्धरा ॥ ६५ ॥
माररूपमथन सुतस्तयोर्नामतोऽपि मथनोऽभवत् कृती ।
श्रीश्च सोमपदपूर्विका वधूस्तस्य सोमवदना गुणाश्रया ॥ ६६ ॥
सोऽन्यदा सखिभिरावृतो गत केलिकौतुकितयावनं वनम् ।
ऐक्षत द्रुमतले तपोधनं मूर्तिबद्धमिव धर्ममर्हत ॥ ६७ ॥

वीक्ष्य तं मुनिपति शमाश्रयं मित्रमन्तिकगमन्वयुङ्क्त म ।
कोऽयमङ्ग ! किमिहावतिष्ठते कश्मलाविलकृशाखिलाङ्गक ॥ ६८ ॥
तेन तं प्रति निवेदित सखे ! साधुरेष विरतस्तपस्यति ।
एतदंह्नियुगल विनम्य तत् स्व पुनीहि दुरितं लुनीहि च ॥ ६९ ॥
इत्युदीरितममुष्य सादर तन्निपपि मथनोऽनमन् मुनिम् ।
भूमिमण्डलरजोमिलच्छिरा भावनां प्रकटयन्निवान्तरीम् ॥ ७० ॥
साधुराशिषमुदीर्य्य साधवे साधुधर्ममुचित दिदेश स ।
आगताय महते महाशया' सारमेव सकलं विवृण्वते ॥ ७१ ॥
देशनां स विनिशम्य हर्षवान् भाषते स्म मथनो मुनीश्वरम् ।
धर्ममेतमुपदिष्टमर्हता नालमस्मि विनिषेवितु मनाक् ॥ ७२ ॥
अभ्यधायि गुरुणा महामते ! श्राद्धधर्ममुररीकुरुष्व तत् ।
शुद्धदर्शनपुरस्सर स तं स्वीचकार वचसा मुनीशितु ॥ ७३ ॥
स प्रणम्य मुनिपादपङ्कज मन्दिरं प्रति जगाम मित्रयु ।
देवधर्मगुरुतत्त्वचिन्तनाज्जीवितं सफलमेव सविदन् ॥ ७४ ॥
तीर्थनाथभवन स चान्यदा स्वापतेयनिचयैरचीकरन् ।
तत्र बिम्बविनिवेशनक्षणे भग्नभाव इति च व्यचिन्तयत् ॥ ७५ ॥
भूरि भूरि रभसाद्व्ययीकृतं हन्त ! मेऽपि किमकार्यकारिता ।
इत्यनेकमनुतापमादधे तापयन् हृदयमेष चिन्तया ॥ ७६ ॥
यातवत्यपि कियत्यपि क्षणे भूय एव विशदीकृताशय. ।
तीर्थराट्प्रतिमया समन्वितं पूर्णमेव रचयाम्बभूव स. ॥ ७७ ॥
पूर्णतामुपगतेऽथ तत्र स ध्यातवान् पुनरपि प्रसङ्गत ।
वित्तवित्तविहितव्ययस्य मे स्यात्फलं किमपि नो परत्र वा ॥ ७८ ॥
साधुयुग्ममपरेद्युरागतं प्रत्यलाभयदसौ स्वमन्दिरे ।
प्राशुकैरशनपानकैः परेऽचिन्तयद्रजनिशेष इत्यपि ॥ ७९ ॥
अव्यवस्थितफले वृषेऽत्र किं जन्यते खलु मया परिश्रमः ?।
एवमेष परिचिन्त्य निर्मलं धर्ममाधित पुनर्विशुद्धधीः ॥ ८० ॥
वर्त्मनि व्रजत एकदा मुनीनेष वीक्ष्य सजुगुप्समस्मरत् ।
नाहला इव मलाविला अहो ! एतके मलिनवाससो भृशम् ॥ ८१ ॥
उज्ज्वलानि सिचयानि यद्यमी नित्यश. परिदधत्यनेनसः ।

कि विनश्यति ततस्तपस्वितेत्याद्यं मुनिविगानमाचरत् ? ॥ ८२ ॥
एवमेष समुपास्य दर्शनं सातिचारमविचारसुन्दरः ।
श्रेष्ठिसूरनभिधाय तद् गुरोर्मृत्युमाप्य भुवनोद्धुर सुर. ॥ ८३ ॥
जायते स्म वनजायतेक्षणो वत्सरायुतमितायुरद्भुत. ।
प्रच्युत. स च ततो भवानभूद्रत्नसारतनयो नयोज्ज्वलः ॥ ८४ ॥
॥ युग्मम् ॥
तेन ते समभवंश्च सम्पदः सापद. परपदाभिलाषिणः ।
भावभावितमनास्ततः पुमान् धर्ममेव विदधीत धीधन. ॥ ८५ ॥
प्राग्भवस्मरणमाप्य तत्क्षण ज्येष्ठनन्दनधनावहेऽथ तम् ।
वेश्मभारमधिरोप्य स व्रतादानमातत सुवर्णदानकृत् ॥ ८६ ॥
कश्चिदेव नरजन्मकाञ्चन सद्व्रताचरणरत्नयोगतः ।
प्रापयेद् गुरुकलादसंविदा लक्षकोटिकलनामहर्घताम् ॥ ८७ ॥
तत्प्रिया तिलकसुन्दरी पिता तस्य सापि जननी जनेश्वरः ।
कान्तया सह महाव्रतं ललुर्निर्वृतिप्रणयकार्मणौषधम् ॥ ८८ ॥
तन्मुनिक्रमसरोजषट्पदास्तद्यथाविधि समे प्रपाल्यते ।
प्राप्य देवपदवी दिवि क्रमाल्लेभिरे पदमनन्तमव्ययम् ॥ ८९ ॥
इत्थमात्मरुचिचारणव्रती भूपतेरमिततेजसः पुरः ।
पौषधादवसितस्थितेः कथां सम्प्रकाश्य परितोषमासदत् ॥ ९० ॥
श्रद्दधे नृपतिरेव तामपीच्छामि नूनमनुशिष्टिमित्यणन् ।
तौ च चारणमुनी विहायसा स्वेच्छया व्यहरता दमाश्रयौ ॥ ९१ ॥
तौ च खेचरमनुष्यनायकौ वत्सरं प्रति जिनेन्द्रसद्मसु ।
चक्रतु. सुमहिमत्रयं महासंपदामनुगुणं तथाहि च ॥ ९२ ॥
चैत्रकाश्विनकमासयोरिमौ स्वस्वजैनभवनेषु चक्रतु' ।
शश्वदेव विभवेन शाश्वताष्टाह्निके शुभनिबन्धन नृणाम् ॥ ९३ ॥
सीमभूमिभृति रामकेवलज्ञानभुव्यनुपमं तृतीयकम् ।
श्रीयुगादिजिनचैत्यमन्दिरे काञ्चिदुत्सवममू वितेनतुः ॥ ९४ ॥
अर्ककीर्तिसुतभूमिवासवः सपदा विजितवासवोऽन्यदा ।
खेचरै परिवृतः पर शतैराश्रित परिषदं ससमदः ॥ ९५ ॥
धर्म एव दशधा विभाजितोऽप्येकतामिव गतोऽतिहार्दत ।

एकवाससमुपास्तिजन्मनो विष्टपात्रितयतत्त्ववेदिभिः ॥ ९६ ॥
अन्तरेण सततोपवासिनां यो विचित्रविषयोपलम्भनम् ।
पश्यताममृतपारणाविधि चक्षुषां विरचयन्निवारुचत् ॥ ९७ ॥
मासकक्षपणपारणेच्छयाऽभ्यापतन्तमतिमात्रदुर्बलम् ।
दुश्चरेण तपसा मुनीश्वर तत्र नेत्रविषय निनाय तम् ॥ ९८ ॥
॥ चतुर्भि. कलापकम् ॥
सिहविष्टरमपास्य सोऽथ त त्रि. परीय च विनम्य भक्तित ।
धर्मलाभवचसाऽतितोषितः प्राशुकान्यशनपानकान्यऽदात् ॥ ९९ ॥
पात्रदानमाहिमप्रकाशकं तत्क्षणादजनि दिव्यपञ्चकम् ।
ज्ञानपञ्चकविपञ्चनास्थिति भूपतेर्वददिवात्मन. स्फुटम् ॥ १०० ॥
एवमार्हतवृषोद्यमे रतौ श्रीत्रिपृष्ठतनयामितौजसौ ।
वत्सरान् प्रकृतिवत्सलौ नृपौ तौ व्यतीयतुरिमौ सहस्रश ॥ १०१ ॥
तौ विमानमधिरुह्य मानिनौ जग्मतुर्नरपती परेद्यवि ।
नन्दने सुरपतेर्मनोरमे शाश्वताञ्जिनपतीन्विवन्दितुम् ॥ १०२ ॥
तत्र काञ्चनशिलातलासनौ वीक्ष्य चारणमुनीश्वरौ नृपौ ।
सत्तमौ विपुलधीमहामती तौ प्रणेमतुरपेतकल्मषौ ॥ १०३ ॥
अग्रतोऽपि विनिविष्टयोस्तयोराद्यसाधुरतनिष्ट देशनाम् ।
प्राप्य मानुषजनु सुदुर्लभं मा प्रमादवशगा. स्त साधव. ! ॥ १०४ ॥
धर्ममार्हतमुपाद्ध्वमादराज्जन्मकोटिकृतकल्कनाशकम् ।
ग्रीष्मकालजनितं निरर्गल तापमम्बुभृदपास्यति क्षणात् ॥ १०५ ॥
आशुशुक्षुणिरिवेन्धनैर्घनैर्वारिराशिरिव वारिराशिभिः ।
हा ! चकोर इव कौमुदीभरैर्जीव एष विषयैर्न तृप्यति ॥ १०६ ॥
धर्ममारचयितास्मि यौवने वार्धकेऽपि यदि वा विरक्तधीः ।
धर्मराजमवितत्य मित्रक कोऽपि जल्पतु किमीदृशं वचः ? ॥ १०७ ॥
बालिश त्यजति नो न पण्डितं नैव रङ्कमपि नापि चक्रिणम् ।
नैव देवमपि नापि वासवं क्रुद्ध एष शमन' कथञ्चन ॥ १०८ ॥
उत्तमर्ण इव न प्रतीक्षते प्रार्थितोऽपि बहुभिश्चटूक्तिभिः ।
याममात्रमपि नो मुहूर्तकं न क्षण कुपित एष दण्डभृत् ॥ १०९ ॥
तज्जनाः ! जिनपतिप्ररूपितं धर्ममाचरत निश्चलाशयाः ।

येन वोऽपि शिवसम्पद' स्थिरा सम्भवेयुरुभयत्र भाविनः ॥ ११० ॥
एवमस्य वचनं निशम्य तौ ससृते परिहृतौ निबन्धनम् ।
पृच्छतः स्म परिशेषमायुषः प्राञ्जलौ नवविनेयवन्मुनिम् ॥ १११ ॥
तौ प्रति प्रणिजगाद चारणः साधुरेव दिवसानि विंशतिम् ।
षड्युतानि नियतानि संस्कृतच्छन्दसामिव विभाजनाविधाः॥११२॥
दुर्लभं मनुजजन्म हारित हा! प्रमादमदसंगमेन नौ ।
ईदृशं कथमहो! निरर्थकं सर्वशस्यपुरुषार्थसाधनम् ? ॥ ११३ ॥
अन्तरेण परमायुरर्जना श्रेयसो वितनुते न योग्यताम् ।
वेश्मनि ज्वलति जातवेदसा कस्य हास्यमपि नान्धुनिर्मितिः ? ॥११४॥
सान्त्वनामतनुतां मुनीश्वरौ भूभुजोरथ तयोर्विषण्णयोः ।
खेदमेदुरहृदौ युवां कथं धीधनौ भवथ एवमुन्नतौ ? ॥ ११५ ॥
घस्रमात्रमपि सेवित व्रतं भावतो भवति निर्वृतिप्रदम् ।
दीपिका विरचिताऽपि किं गृहे नान्धकारनिकरं निरस्यति ?॥ ११६ ॥
चारु चारणमहर्षिबोधितौ तौ जवान्निजनिजं निकेतनम् ।
नागरै प्रमुदितैरवेक्षितौ भूपती शुभमती समागतौ ॥ ११७ ॥
भक्तिपूर्वमुपहूय सर्वत. पूज्यभावमुपनीय भावतः ।
संघमार्च्य परम चतुर्विधं दीनदौस्थ्यमपनीय दानतः ॥ ११८ ॥
न्यस्य राज्यमपि पुत्रयो. स्वयोस्तौ व्रत जगृहतुर्महीपती ।
विश्वनन्दनगुणाभिनन्दनस्यान्तिके मुनिपते. पितुर्गुरो. ॥ ११९ ॥
॥ युग्मम् ॥
पादपोपगमनाम्नि तस्थतुस्तौ मुनी अनशने समाहितौ ।
अस्मरत्स्वपितर तथा स्थित श्रीविराजिविजयो महामुनिः ॥ १२० ॥
तस्य ऋद्धिमधिकां विचिन्तयन् स्वस्य किञ्चन तनीयसीं तत ।
स्यामहं कमलया पितु. समस्तन्निदानमकरोदसाविति ॥ १२१ ॥
तौ विपद्य मुनिपुङ्गवौ शुभध्यानसन्ततिनिलीनमानसौ ।
प्राणतेऽनुपमऋद्धिवैभवौ कल्प एव भवत. स्म नाकिनौ ॥ १२२ ॥
नन्दितादिपदसुस्थितादिमावर्त्तनामकविमानकद्वये ।
दिव्यचूलमणिचूलसंज्ञकौ तत्र च व्यलसतां हृतान्तरम् ॥ १२३ ॥
जम्बुनामनि महान्तरीपके प्राग्विदेहसुषमाविशेषकम् ।

श्रीजयोऽस्ति विजय. सुखास्पदं सत्यनाम रमणीयसंज्ञक॰ ॥ १२४ ॥
तत्र सैतपुलिनेऽस्ति दक्षिणे पुण्यधाम्न नगरी शुभाऽभिधा ।
पश्यता शतमखेन या मता चक्षुषा दशशती फलोत्तरा ॥ १२५ ॥
सङ्गरप्रहतशत्रुसन्तति. सत्यसङ्गरशिरोऽवतसक. ।
अन्वशान्नयसुधांशुसागरस्तां चिरं स्तिमितसागर प्रभु॰ ॥ १२६ ॥
द्वे प्रिये अभवतां वसुन्धराऽनुद्धरा च किल तस्य भूपते. ।
प्रीतिरत्यभिधयैव विश्रुते संवरद्विष इव प्रिये हृद ॥ १२७ ॥
स्वीयमायुरुपभुज्य नान्दितावर्तनामकमहाविमानत॰ ।
जन्तुरप्यमिततेजसश्च्युत. संजगाम महिषीं वसुन्धराम् ॥ १२८ ॥
सा सुखेन शयिता सुलक्षणा तत्क्षणं प्रविशतो मुखान्तरे ।
स्वप्नकांश्चतुर ऐक्षतोपदालम्भितानिव चतुर्दिगीश्वरै. ॥ १२९ ॥
तांद्विलोकसमनन्तर प्रियाऽजागरीन्नरपतेः शशंस च ।
ईदृशां मम फल नु कि विभो ! स्याच्छुभ तदितरन्नवेति सा ? ॥१३०॥
अभ्रमुप्रियतमो विलोकितः कीर्तिराशिरिव मूर्तिमाश्रित ।
जङ्गमस्तुहिनकाश्यपीधरः शृङ्गपाटिततटो वृषोऽपि च ॥ १३१ ॥
शीतरश्मिरथ पूर्णमण्डलो विश्वतापमपसारयन्निव ।
स्वच्छनीरनिकरै प्रपूरित पद्मराजिरुचिर महासरः ॥ १३२ ॥
तन्निवेदितमिद हृदि क्षणं संप्रधार्य्य नृपतिर्बभाण सः ।
देवि ! वैरिबलजित्वरो बल॰ संभविष्यति भवत्तनूभव॰ ॥ १३३ ॥
भूमिपालवचन मनोरमं संनिधाय हृदि साशुकाञ्चले ।
एवमस्त्विति निवेदनोन्मुखी ग्रन्थिमेव निबबन्ध हर्षत ॥ १३४ ॥
तत्प्रभृत्यपि नरेश्वरप्रिया गर्भमेव बिभराम्बभूव सा ।
अर्थजातमिव नीतिरुच्छ्रिता धर्मबुद्धिरिव तत्त्वमान्तरम् ॥ १३५ ॥
गौरवर्णपरिपूर्णविग्रहं कामपालकलिताग्र्यलक्षणम् ।
सन्निधानमिव सा वसुंन्धरा पुत्रमप्यजनयद्वसुन्धरा ॥ १३६ ॥
चेटिकाभिरभिवर्धितो नृपस्तस्य जन्मनि परप्रमोदतः ।
निर्विकल्पमविकल्पितं परं कल्पवृक्ष इव काङ्क्षितं ददौ ॥ १३७ ॥
द्वादशापि दिवसेश्वरानसौ भूपतीनपि महौजसा सुतः ।
जेष्यतीति नृपतिर्विनिर्ममे द्वादशेऽह्नि किल नाम्न उत्सवम् ॥ १३८ ॥

उत्सवे बहुविधे प्रसर्पति प्रीतिपूर्वमपराजिताभिधा ।
भूभुजाऽस्य विदधे समन्ततो द्वेषिभूपतिभयैककारणम् ॥ १३९ ॥
प्राणतत्रिदिवतोऽवतीर्णके जीव एव विजयस्य राट्प्रिया ।
स्वप्नसप्तकमवैक्षतापरा पुण्यगर्भमहिमानुभावतः ॥ १४० ॥
केसरी प्रथममेव बृत्कृतैर्दिग्गजानपि बिभीषयन् शुभः ।
शारदेन्दुकरराशिकेसरश्चञ्चलाचलविलोचनाञ्चल· ॥ १४१ ॥
क्षीरनीरनिधिनन्दना ततः क्षीरनीरनिचयैर्मतङ्गजैः ।
पार्श्वतो विरचिताभिषेचना पद्मपीठविनिवेशितक्रमा ॥ १४२ ॥
चक्रवाकमिथुनानि हर्षयन् पद्मजातिमभितो विकासयन् ।
सर्वशोऽपि ककुभ· प्रकाशयन् संहरंश्च तिमिराण्यहर्पतिः ॥ १४३ ॥
पद्मिनीदलगताम्बुमौक्तिकक्षोदनिर्मलजलौघपूरित ।
कण्ठदेशनिहिताम्रपत्रकः पूर्णपूर्णकलशोऽथ शोभितः ॥ १४४ ॥
वाहिनीभिरधिकं समाश्रितः सार्वभौम इव जीवनाश्रय ।
आगताभिरतिसारसद्रसै· सत्त्वमादधदपांनिधिस्तत· ॥ १४५ ॥
रत्नराशिरथ तेजसां भरैर्ध्वान्तसहतिविधूननक्षम ।
द्वादशार्कमहसां समुच्चयः किं न्वयं समुदितो मुखाशया ? ॥ १४६ ॥
जाड्यकालकमनीयसङ्गमः सत्यनिर्मथितदाहशक्तिक ।
ज्वालजालकलितान्तरिक्षको धूमसङ्गविकलो विभावसु· ॥ १४७ ॥
स्वप्नसन्ततिमिमां विलोक्य साऽनुद्धरा प्रमुदिता समुत्थिता ।
लक्षरत्नमिव रङ्ककामिनी प्रेयसे सरभस व्यजिज्ञपत् ॥ १४८ ॥
अङ्गक पुलकितं दधन्नृपस्तन्निशम्य स जगौ प्रियामिति ।
स्वप्नलब्धिविनिवेदितागमः केशवस्तव सुतो भविष्यति ॥ १४९ ॥
मेरुभूमिरिव कल्पशाखिनं श्यामलं सुतमसूत सा सुखम् ।
भाग्यभङ्गिललितात्मनां नृणां न प्रसूतिजमश प्रसू श्रयेत् ॥ १५० ॥
मागधा द्रविणमापुरीप्सितं गायनाश्च विपुला अलङ्कृती ।
प्रीणितान्नरपतेः सुतोद्भवात् शर्मणे न खलु कस्य तादृश· ? ॥ १५१ ॥
वेदशास्त्रयुगलेन वा बुधश्चन्द्रसूर्ययुगलेन वा नभः ।
अर्थकामयुगलेन वा वृषस्तद्द्वयेन नृपतिर्व्यभूष्यत ॥ १५२ ॥
तस्य नाम विदधे महीभुजाऽनन्तवीर्य इति सान्वयं मुदा ।

भावि यादृशमहो ! शरीरिणां तादृशं भवति चेष्टितं पुरा ॥ १५३ ॥
अङ्कतोऽङ्कमुपयातुमुद्यतौ बालिकाभिरवनीभुजामिमौ ।
पाल्यमानवपुषौ प्रयत्नतो वृद्धिमापतुरथ क्रमेण तौ ॥ १५४ ॥
कामपालगरुडध्वजाविमौ श्वेतकृष्णवपुषौ विरेजतु ।
सगतावधिकहार्दतो मिथ: क्षीरवार्द्धिलवणाम्बुधी इव ॥ १५५ ॥
उद्भवे शुभदिने समर्पितौ तौ कलागुरुरशिक्षयत्कला. ।
स्थान एव बिनयो नियोजित किं करोति न मनीषितं नृणाम् ?॥१५६॥

रणरणाकितां दृशौ द्रष्टुं जनो वितनोति न
श्रयति न पुन श्रद्धालुत्व नरेश इलाभवे ।
मनसिजमपि क्षामच्छायं व्यनक्ति विवेकवान्
नयनपदवीमापाद्यैतौ नराधिपनन्दनौ ॥ १५७ ॥

सा काचिन्न नितम्बिनी समभवद्या वीक्ष्य रूपं तयो
पाण्डित्य प्रकटीचकार न च तद् व्यावर्णयन्ती मुहु ।
या तत्सङ्गमपीहते स्म न हृदा नेत्रे स्तुवाना निजे
स्वप्ने तौ समवाप्य मोहनमय नैवाऽऽपि सौख्य यया ॥१५८॥

नृप स्तिमितसागर समवलोक्य धानुष्कतां
तयोर्निजकुमारयो रतिकुमारसम्वादयो: ।
अमन्यत न कञ्चन प्रबलमेव विद्वेषिण
विलक्षमतिमार्गणं गुणविमुक्तिबद्धादरम् ॥ १५९ ॥

बुद्ध्या प्राक् समुपासितौ नृपसुतौ सौभाग्यभङ्ग्या ततो
गाम्भीर्य्येण मनोहरेण च ततोऽप्यौदार्य्यसंयोगिना ।
लावण्येन ततस्ततोऽतिरभसात् शौर्य्येण वर्य्येण त-
द्वञ्च्येऽहं किमहो ! विमृश्य तदिद तौ यौवनेनाश्रितौ ॥१६०॥

राज्ञा तौ परिणायितौ नृपसुते रूपेण चेतोभुव.
पत्नी पत्तिपदं प्रपञ्चविगमात्सप्रापयन्त्यावपि ।
भुञ्जन्तौ विषयातिरक्तमनसौ सौख्यानि ताभ्यां समं
कल्याण कलयाम्बभूवतुरिमौ भूपालपुत्रौ भृशम् ॥ १६१ ॥

आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभो
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विज्ञानभाजां गुरु: ।

तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽगमत्सप्तम ॥ १६२ ॥

## ॥ इति श्रीशान्तिनाथचरित्रे सप्तमः सर्गः ॥

अर्हम्

## अथाष्टमः सर्गः ।

भवरुजापगमाय शमौषधं सुलभमेव दिदेश गतस्पृह ।
जगति य॰ स पुनस्त्रिजगद्भिषग् भवतु शान्तिविभुर्भवतां श्रिये ॥ १ ॥
उपवने क्वचनापि गुरु स्वयप्रभमुनि समवातरदन्यदा ।
दिनपति तपसां महसा जयन्निधनतां तमसां प्रसभ दिशन् ॥ २ ॥
स्तिमितसागरभूमिपतिस्तदा तुरगवाहविनोदमधिष्ठित॰ ।
परिसरं समियाय पुर॰ पुरस्सरदनेकपदातिपरिष्कृत. ॥ ३ ॥
कमपि कालमसौ क्षितिपालक॰ स चतुर परिवाह्य तुरङ्गमान् ।
श्रमजलाविलगात्रविलेपनस्तदपि काननमभ्यसरज्जवात् ॥ ४ ॥
कुसुमगुच्छविनम्रमहीरुहप्रकरनिश्चलभृङ्गरुतैरलम् ।
क्षितिपते शरदिन्दुसहोदरां यदुपवर्णयतीव गुणावलिम् ॥ ५ ॥
सुरभिशीतसमीरनिषेवितो भवति तत्र स यावदपश्रम ।
रहसि तावदमुं प्रतिमास्थितं मुनिमपश्यदशोकतरोस्तले ॥ ६ ॥
दुरितसन्ततिरेतदवेक्षणादपगता प्रणतेः शुभसन्तति ।
प्रभवतीति विमृश्य हृदा नृप॰ प्रणमति स्म मुनि मतिमन्नुतम् ॥ ७ ॥
मुनिपति. प्रतिमां परिपूर्य्य स क्षितिभुजेऽप्रतिमां ददداशिषम् ।
उपदिदेश कृपामयमार्हतं सुकृतमुग्रकषायनिवर्त्तकम् ॥ ८ ॥
परिहरन्ति कषायपरिग्रहं किमिति नैव जना सुखलिप्सव ? ।
न खलु कर्हिचनापि निषेवित शुभमयं खलवत्प्रथयिष्यति ॥ ९ ॥
त्यजति निम्बतरुर्यदि तिक्ततां स सितदुग्धघटैर्भृशमुक्षितः ।
यदि सुधासमतां च विष भजेद्विविधमन्त्रपवित्रितमप्यद॰ ॥ १० ॥
मधुरयाऽपि गिरा परिवर्णितः कनकरत्नविहायितमानितः ।

यदि खल· कलयेदपि साधुतां तदपि पुण्यमहो ! न कषायत· ॥११॥
॥ युग्मम् ॥
अमरदत्तनृपादिवदेतके विरचिता वचसाऽपि कषायका ।
इह भवेऽपि परत्र च शर्मणे नहि भवेयुरधर्मनिबन्धनम् ॥ १२ ॥
इति निशम्य शुभानगरीश्वरः प्रणिजगाद गुरूनभिवन्द्य स· ।
अमरदत्तनृपादय एव के त इह ये भगवद्भिरुदाहृता ? ॥ १३ ॥
गुरुरुवाच नरेन्द्र ! निशम्यतां समवधाय मनागपि दक्षिणे ।
भरत एव पुरं सुररोचितं तिलकसंज्ञकमस्ति समृद्धिमत् ॥ १४ ॥
अजनि तत्र नृपो मकरध्वजः प्रवररूपकलामकरध्वज· ।
यमवलोक्य परं द्युसदङ्गना अदधुरेव वरं न निजं वरम् ॥ १५ ॥
सुवदना महिषी मदनाभिधा तदवनीदयितस्य बभूव सा ।
स्वदयितापुरतः प्रशशस यत्सुभगतां विनयानुगतां स्मर· ॥ १६ ॥
कमलराजिविराजि सरोवरं शयितबुद्धतमा रजनीभरे ।
समवलोक्य निवेद्य महीभुजे तदनुगर्भमधत्त नृपप्रिया ॥ १७ ॥
अजनयत्तनयं नयशालिनं कमलकेसरनामतया श्रुतम् ।
प्रणयिनी नृपतेरखिलार्थिनामशमयच्च धनैश्चिरदु स्थताम् ॥ १८ ॥
विदितविद्यमवद्यपराङ्मुखं दितधनुर्धरमानपरिश्रमम् ।
क्षितिपतिर्युवराजपदेऽथ तं सचिववासनयाऽभ्यषिचत्समम् ॥ १९ ॥
जितकलापिकलापकलापकं नृपतिकेशकलापमथान्यदा ।
व्यरचयद्विवरीतुमुपक्रमं स्वरुचि यावदसौ नृपवल्लभा ॥ २० ॥
पलितमभ्रातिरोहितचन्द्रम·प्रकटितैककरभ्रमकारणम् ।
नृपतिमूर्द्धनि वीक्ष्य निरैक्षयत् स्मितमुखी मुकुरेण महिष्यपि ॥ २१ ॥
तदवलोक्य महीमघवा हृदि व्यषददन्यपराजितसैन्यवत् ।
दयितया हितया स तया ततो निजगदे जगदेकपतिः पति. ॥ २२ ॥
जरितया प्रिय ! किं परितप्यते पटहघोषणया प्रतिषेत्स्यते ?।
सकल एव जनः स तु दण्ड्यते दशमिनं प्रवदिष्यति यो नृपम् ॥२३॥
नरपतिः स्मितपूर्वमथावदत् प्रियतमे ! न च वृद्धतया त्रपे ।
अनवलोक्य पुनः पलितं मम व्रतमुपादिषताखिलपूर्वजा. ॥ २४ ॥
अहमहो ! विषयैरुपलालितः पलितवानपि नैव समाददे ।

इति विषादनिबन्धनमाशु ते निगदितं मयका प्रियवादिनि ।। २५ ।।
हृदि निधाय तदुक्तमियं ततः प्रियमुवाच रसाधिपते प्रिया ।
किमधुनाऽपि न तत्क्रियतेतरां फलितमेव जनैरुपवर्ण्यते ।। २६ ।।
तदनु तद्वचन हितमीहितं समवधार्य्य सुतं विनिवेश्य तम् ।
निजकराज्यपदे नृपतिर्वने प्रमदया सह तापसतां ललौ ।। २७ ।।
यमपि गर्भमुवाह निकेतने स्थितिमती मकरध्वजवल्लभा ।
स ववृधे जलसिक्तवसुन्धरानिहितबीजगताङ्कुरवत्क्रमात् ।। २८ ।।
नृपमुनि: समवेक्ष्य विशेषविद्रहसि तां समपृच्छदुवाच सा ।
प्रथम एष मया व्रतविघ्नभीकलितया कथितो न भवत्पुरः ।। २९ ।।
कुलपते पुरतोऽकथि तेन तत्स च रहोऽधृत ता विततान्वयाम् ।
सकललक्षणसारसमान्वित सुतमसूत तत: समये सती ।। ३० ।।
विदधतीषु यथाऽवगम तपोधनकनीषु चिकित्सितमञ्जसा ।
उचितभेषजहीनतया वने विषमसूचिरुजाऽजनि साऽर्दिता ।। ३१ ।।
विधुरतां धृतवत्सु जटाधरेष्वपि तदीयरुजाऽनुपशान्तितः ।
दयितया सह देवधरस्तदा वणिगुपैदपि निर्जरसेनया ।। ३२ ।।
पुरवरं स च हर्षपुरं गतो वलित उज्जयिनीनगरीवणिक् ।
गुरुजटाधरभक्तिपरायणः शुभमनाः प्रविवेश तपोवनम् ।। ३३ ।।
कुलपतिं प्रणिपत्य विलक्षतां प्रति निमित्तमपृच्छदथो वणिक् ।
गुरुरुवाच यथायथमेष च प्रणयिनीनवसूतिरिहास्ति मे ।। ३४ ।।
वितरताशु तमद्भुतलक्षणं तनयमेव यथा भवता वधू ।
तमनुशास्तितरां मयकाऽर्पितं स च तथैव चकार विचारवित् ।।३५।।
कुलपतिप्रतिपादितपुत्रकं समुपलभ्य वणिग्दयिताऽतुषत् ।
युगमजीजनदित्यपि सर्वत परिजनादपि सिद्धिमचीकरत् ।। ३६ ।।
प्रमदया प्रमदोद्धतया समं स गत उज्जयिनीपुरमुत्सवात् ।
अमरदत्तमथाह्वत नन्दनं त्वभिधया तनयां सुरसुन्दरीम् ।। ३७ ।।
धनधनेश्वरसागरजीविताभ्यधिकमित्ररमादयिताभव. ।
अमरदत्तसुहृत्समभूदिहासमगुणाकरमित्रमुदाह्वय ।। ३८ ।।
यमवलोक्य समुन्नतमम्बरे प्रमदमान्तरमेव शिखण्डिनः ।
प्रकटयन्त्यपि नृत्यविधानतः स्तनिततुङ्गमृदङ्गरवानुगम् ।। ३९ ।।

सितविहङ्गमपङ्क्तिरवेक्ष्य यं समुदितं नभसि स्तनितोद्धतम् ।
अवजिता शिखिनां विरुतैरिव प्रचलिता सर एव नु मानसम् ॥ ४० ॥
उपययो जलभृत्समयोऽन्यदा तपऋतुं गमयन्विषयाद्बहि. ।
जलमय भुवन स सृजन्निव प्रततवारिकदम्बकवर्षणै. ॥ ४१ ॥
॥ त्रिभिर्विशेषकम् ॥
विमलसैप्रमहापुलिनोदितायतवटद्रुमसन्निधिमाश्रितौ ।
सहचरौ मिलत. किल तत्र तौ कनकमौधिकया श्रुतखेलया ॥ ४२ ॥
नृपसुते प्रणुदत्यपि मोहिक सुहृदि चाभ्युपगच्छति साऽविशत् ।
वटमहीरुहलम्बिशवानने तदपि सोऽपि जहास च मित्रमुत् ॥ ४३ ॥
कुणप आह च मित्रमुदाह्वयं परिहसन्तमिम ननु मा हसीः ।
कतिपयेषु दिनेषु गतेष्वियं तव मुखेऽपि ममेव पतिष्यति ॥ ४४ ॥
तदथ तस्य वचो विनिशम्य सोऽप्यमरदत्तमभाषत भीतिभृत् ।
कृतमनेन च खेलनकेन नौ सदनमेव सखे! लघु यावक ॥ ४५ ॥
अकथि तेन शवाननमध्यत पतितया भवतोऽपि किमेतया ।
सहृदयास्त्वपराऽपि ममान्तिके किमिति तन्न यथारुचि रम्यते? ॥४६॥
इति सुकोमलयाऽपि गिरोदित. स सुहृदा रमते स्म न मित्रमुत् ।
वहति चेतसि चारुविरागता किमपि न प्रतिभाति हि देहिनाम् ॥४७॥
अथ विहाय जवादपि तामुभौ निजनिज सदन समुपेयतु ।
परिजने रमते मतिरङ्गिनां न विजनेऽपि वने हि कथञ्चन ॥ ४८ ॥
अशनितोर्ध्वममुं मिलित हित नृपकुमारवरो निजगाद तम् ।
त्वमधुनाऽपि वयस्य! किमुन्मना इव मयाऽपि परं समवेक्ष्यसे? ॥४९॥
अवितथे कथिते खलु तेन चाभ्यधित राजसुतो मधुराक्षरम् ।
वदति नैव शव पुनरेतकद् वनचरस्य सुरस्य विजृम्भितम् ॥ ५० ॥
अवितथ वितथं यदि तेन वा प्रकथितं खलु वेद तदेव कः ? ।
मतिबल प्रवितत्य तत. सखेऽयमपि विन्नकण. परिभूयते ॥ ५१ ॥
अतुलमाप फलं मतिसागर. सचिव एव यथा विहितोद्यम. ।
वद स कोऽयमिति प्रनिरूपितः स सुहृदा वदति स्म वदावदः ॥५२॥
भरत एव पुरी किल मालिनी[1] कलकलिङ्गमहाविषयेऽस्ति या ।

---

१ चम्पा ।

निजसमृद्धिवितानसमुच्चयैरजयदेव पुरीममरावतीम् ॥ ५३ ॥
नरपतिर्जितशत्रुरजायत प्रथितविक्रम एव स तत्र यम् ।
स्वदयिताभिरजस्रमजीगपन् दिविषदो दिवि धर्मधुराधरम् ॥ ५४ ॥
अजनि तत्सचिवो मतिसागर स्वमतिवैभवरञ्जितनागर ।
सुरगुरुप्रतिरूपतयैव यन्मतिमधत्त विधि श्रितकौतुक ॥ ५५ ॥
प्रियतमाऽस्य बभूव गुणावली, विलसदुज्ज्वलभूरिगुणाश्रय ।
तनुभवोऽपि सुबुद्धिरभूत्तयोर्विनयिनां नयिनां च धुरि स्थित ॥ ५६ ॥
समभवन्नपरेऽपि तयो' सुता गुणगणग्रहणे विहितादरा. ।
श्रुतमहोदधिपारमवापिता जनकनाविकसन्मतिवेडया ॥ ५७ ॥
वसुमतीदयितेन विभूषिते सदसि कोऽपि समागमदन्यदा ।
गुणनिकेतनिमित्तविदा वर कनकदण्डकवेत्रिनिवेदित ॥ ५८ ॥
जय नरेश्वर ! जीव चिराय चेत्यभिहिताशिषमासितमासने ।
तमवदद् नृपतिर्वद कि किमस्त्यवगत भवताऽपि निमित्तकम् ? ॥ ५९ ॥
वसुमिताङ्गनिमित्तकलाविदित्यभिहिते गणकेन पुनर्नृप. ।
स तमवग् वद भावि सद सदा किमपि, भूतविदो हि पर शता ॥ ६० ॥
स च विचार्य जगौ जगतीपति शुभमतेर्मनिसागरमान्त्रिण. ।
अपि कुटुम्बजुषो भविता मृतिर्हतविपक्षक ! पक्षदिनान्तरे ॥ ६१ ॥
श्रुतिसृति विनिवेश्य स तद्वचो हत इव व्यसृजद् नृपति सभाम् ।
मम पुनीहि गृहं स्वपदाम्बुजैरिति निरूप्य समानयदालयम् ॥ ६२ ॥
स्म परिपृच्छति मन्त्रिवर स त गणकमुल्वणभक्तिपुर सरम् ।
यदुदितं विदितं नृपते पुरः सरलतां प्रतिपद्य तदुच्चर ॥ ६३ ॥
( युग्मम् )
अकथि तेन सुबुद्ध्यभिधाश्रुतात्तव सुतात्प्रथमाद् भविता मृति ।
इति निशम्य विनिर्मितसत्कृति स विससर्ज निमित्तविदं रयात् ॥ ६४ ॥
अशनपानकमूत्रपुरीषकस्थलततीर्विरचय्य निवेद्य च ।
तमपि पुत्रमहो ! गुरुपेटिकान्तरमुमक्षिपदक्षयकौशल ॥ ६५ ॥
न विपदापतति प्रतिवासर स्फुरति सम्पदपायविवर्जिता ।
नयति लोकयुग वशतां यया भवति पुण्यवत खलु सा मति ॥ ६६ ॥
स्वयमिमा विनियन्त्र्य स तालकैर्नृपतिदृष्टिममक्षममोचयन् ।

भवनसारमिदं निखिलं ममेति विनिरूप्य नृपेण सुमुद्रिताम् ॥ ६७ ॥
प्रकृतमन्यदपि प्रियमात्मनः प्रयत एव विधाय स धीसख ।
अगमदालयमध्यगचैत्यकं गृहमरक्षयदश्वपदातिभि ॥ ६८ ॥
अहनि पञ्चदशे समुपागते, स्पृशति यौवनमित्यभवन्महान् ।
कलकलो गगनाङ्गणसृत्वरोऽरमवरोधचरास्यसमुद्भव ॥ ६९ ॥
अयममात्यसुतो नृपपुत्रिकाप्रवररत्नवती कवरी द्रुतम् ।
क्षुरिकया परिभूय महत्तमो व्रजति धावत धावत तद्भटा ! ॥ ७० ॥
सदसि तद्विनिशम्य रुषाऽरुण क्षितिपतिर्ध्वजिनीपतिमादिशत् ।
सचिवनिग्रहणाय महाबल बलसमन्वितमाजिभयानकम् ॥ ७१ ॥
सपृतन पृतनापतिमागत ममकगम्य बभाण स मन्त्र्यपि ।
अनुचरैर्भवत परिवेष्टितो नृपतिविज्ञपन करवै सकृत् ॥ ७२ ॥
अनुमत स च तेन समेत्य त वसुमतीशतमन्युमजिज्ञपत् ।
गणकवाक्यसथाहितपेटकोद्घटनकर्मणि शर्मणि कर्मठम् ॥ ७३ ॥
स नृपति कुपितोऽप्युपरोधतोऽस्य सचिवस्य चकार वचस्तथा ।
सुतमवैक्षत तत्र च मन्त्रिणो निदधत कवरीक्षुरिके करे ॥ ७४ ॥
तदवलोकवशादथ विस्मितेऽवनिपतौ सचिवोऽवददीदृशम् ।
वनचरस्य सुरस्य च कस्यचिद् मयि विचेष्टितमन्यभवद्विष ॥ ७५ ॥
अवनिवासवमन्त्रिवरौ च तौ तदवलोक्य विरक्तहृदौ पदम् ।
स्वसुतयोर्विनिवेश्य निज निर्ज व्रतमवाप्य दिव समुपेयतु ॥ ७६ ॥
तव सखेऽप्यवितास्मि विनिश्चित तनुकविघ्नमिम लघु मा मुह ।
इति सधैर्यवयस्यवचोऽमृतं स परिपीय जगावथ मित्रमुत् ॥ ७७ ॥
विषयसेवनवद्विषयस्थितिस्तदियमाशु सखे ! परिमुच्यते ।
न खलु यत्र मनो दधते धृति भवतु तत्र कथं विदुषां स्थिति ? ॥ ७८ ॥
इति विचिन्त्य चिरं हृदि तावपि प्रचुरचारुविचारविचक्षणौ ।
किल परस्परमन्दिरसुप्ततोपधिमुखेन निरीयतुरालयात् ॥ ७९ ॥
विदधतावनिश गमनं च तौ विषयजातविलोकनविस्मितौ ।
कुसुमपत्तनबाह्यवनान्तिके विबुधसद्म विलोकयत. स्म तत् ॥ ८० ॥
पृथुशिलाशकलैरधिकोशल सुघटितेऽपि जनैर्भृशमीक्षित: ।

न खलु सन्धिरलक्षितलक्षणैरिव कदाचन यत्र विबुध्यते॥ ८१ ॥
(युग्मम्)

विमलशीतलपुष्करदीर्घिकासवननिर्मितिपावितवर्ष्मकौ ।
तत इमौ त्रिदशायतनं गतौ विविधचित्रसमाहितलोचनम् ॥ ८२ ॥
उपलक्लृप्तमनोहरपुत्रिकां नृपसुत समवैक्षत तत्र च ।
नयनयुग्ममममन्यत सोऽर्थवत् किममृत प्रियलाभमृतेऽपरम् ? ॥ ८३ ॥
दशशती स समैहत चक्षुषां दशशतेक्षणवत् कमलेक्षण. ।
विषयमूर्तिमिमामवलोकयन्नपघनस्थितिरूपमनोरमाम् ॥ ८४ ॥
कठिनमस्य न तद् हृदयं कृत विदधता विधिना, कथमन्यथा ।
सुमशरः कुसुमैरपि सायकैरतितमां परिपीडयितु क्षम. ? ॥ ८५ ॥
मनसिजेन युवा स पराहत. किमपि नैव विवेद विचेतनः ।
अपरथा कथमेष दृषत्स्त्रियां रतिलय विदधीत विधीरत. ? ॥ ८६ ॥
सुरवधूर्क्षिशापपराहतोपलमयत्वमशिश्रियदेषिका ।
न दृषदीदृशरूपविवर्तना क्वचन सम्भवतीति विचिन्तयन् ॥ ८७ ॥
अभिदधे सुहृदा स कुमारकः प्रबल मित्र ! पुरान्तरमीयते ।
स निजगाद सखे ! क्षणमास्यतां किमपि यावदिदं वपुरीक्ष्यते ॥ ८८ ॥
(युग्मम्)

अमरदत्तवचो विनिशम्य सोऽभ्यधित मित्रमुदागमितक्षण ।
पुनरपीदमथायमवोचत ह्रियमपास्य नृपस्य तनूभव ॥ ८९ ॥
अहमिमामपहातुमनीश्वर सुचरितामिव पूर्वभवप्रियाम् ।
यदि बलादपि मां नयसे सखे ! न तदसून्मम तर्हि किमन्तिताम् ? ॥ ९० ॥
इति स तद्वचनाच्छ्रुतिसङ्गताद् व्यधित मङ्क्षु सुहृत् परिदेवनम् ।
तमनु रोदिति स स्म नृपाङ्गजो ध्वनिमय भुवनं समभूत्तदा ॥ ९१ ॥
गुणवदिभ्यमणिर्मणिसारक सकरुण. स च तत्र समागत ।
स्म परिपृच्छति शोकनिबन्धनं तमथ सागरिराह यथातथम् ॥ ९२ ॥
स च विचिन्तयति स्म ततो जन कथमहो मदनेन विडम्बित ? ।
इदमचेतनमेव सचेतन न भवतीति विवेकुमल न य ॥ ९३ ॥
अथ स मित्रमुदिभ्यमुवाच तं रचयिताऽस्य मया परिपृच्छ्यते ।
प्रतिकृतिः किमियं खलु पुत्रिका किमपि शिल्पधियाऽथ विकल्पितम् ? ॥ ९४ ॥

तदवधार्य्य स इभ्य उदाहरद् व्यरचयं त्रिदशालयमेतकम् ।
जलधिकूलगपूगमहाऽभिधाश्रुतपुरस्थितशूरकतक्षत. ॥ ९५ ॥
अहमियर्मि पुरा ननु तत्र च प्रकथिते सुहृदाऽथ सुहृज्जगौ ।
न भविताऽस्मि भवन्तमृते, स तद् व्यतत मासयुगावधिमाधिभृत्॥ ९६ ॥
तमुपरुध्य महेभ्यशिरोमणि निजसुहृत्परिरक्षणकर्मणि ।
जलधितीरमतीत्य स तत्पुरं प्रथितमासददुत्तमलक्षणै ॥ ९७ ॥
विहितवेषविशेषविभूषण' स उपदापदपाणिसरोरुह ।
तदथ तक्षगृहं रुचिरं गतः सुपरिपृष्टसमागमकारणः ॥ ९८ ॥
रचितसत्कृतिरीप्सितशिल्पिना वदितुमारभतायमनन्तरम् ।
विबुधसद्म विधापयितु मतिर्मतिसमुद्र ! समुत्सहते मम ॥ ९९ ॥
स्थपतिषु प्रथम' प्रथितस्ततः प्रतिकृति विनिवेदय मत्पुर ।
प्रतिकृति कृतिनां श्रुतिमागता यदधिका वितनोति विभावनाम् ॥१००॥
अचकथत् स च सूत्रभृदीदृश सुमपुरोपवने रचित मया ।
विरचित मणिसारकसाधुना यदपि तद्भवता किमवेक्षितम् ? ॥ १०१ ॥
सदवलोकितमित्यभिधाय त पुनरपृच्छदसावपि पुत्रिका ।
प्रतिकृतेन वृता खलु तत्र या किमपि शिल्पमहो यदि वा तव ? ॥ १०२ ॥
स गिरमादित पुष्पकरण्डिनीपतिमहाप्रतनाङ्गभवा[1] मया ।
निपुणमारचिता मणिमञ्जरी न खलु शिल्पविकल्पितमत्र मे ॥ १०३ ॥
वचनमभ्युपगम्य स शिल्पिन स्वपरिकल्पितमुत्तरमब्रवीत् ।
अहमुपैमि पुरा गणकोत्तमं गुणकरं परिपृच्छय मुहूर्तकम् ॥ १०४ ॥
इति निवेद्य स उज्जयिनीपुरीपरिसरेऽपि गतो रजनीमुखे ।
अवसदायतगोपुरमध्यत' प्रततगोपुरवासिनिकेतने ॥ १०५ ॥
स्थितिमयं कलयन्नपि तत्र च समशृणोत्पटहस्य पटुध्वनिम् ।
अवति दोषमृत नरमाक्षपं क्षपितभीतिरमु कथमेव य ॥ १०६ ॥
दिशति तस्य सुवर्णसहस्रकं धनवतां प्रभुरीश्वरनामकः ।
स विनिशम्य तदाह च यामिक किमिति रक्ष्यत एव शवो ननु? ॥ १०७ ॥
स जगिवान् दुरवोऽयमहो नर पथिक ! मारिकदर्थनमारित. ।
पिदधिरे निखिलान्यपि गोपुराण्यवितुमेतमतो हि महादर. ॥ १०८ ॥

१ उज्जयिनीपतिमह्लसेनसुता ।

पटहमस्पृशदेव धनाशया धनमवाप निवेदितसामि च ।
उषसि चानतिसृज्य धन बलाच्छवमनैषुरिदं प्रियबान्धवा. ॥ १०९ ॥
अनयमैहत मित्रमुदेतक, तमपि बोधयितुं वसुधाभुजे ।
वसुशतात्तसुवेषविराजितस्तदनु वारवधूसदन ययौ ॥ ११० ॥
मदयति स्म हिरण्यचतु शतीवितरणेन तदैव स कुट्टिनीम् ।
सवनभोजनकर्मभिरेव सा विहितगौरवमेतमतूतुषत् ॥ १११ ॥
सहचरार्थविनिर्मितिचिन्तनः कमनशास्त्रपरिस्मृतिशून्यधीः ।
अनयदेव तमीमखिलामसौ हृदि समाधिविधि किल नाटयन् ॥ ११२ ॥
इति निशात्रितयेऽपि नियन्त्रित विदधत सुतमां मुनिवन्मन' ।
सविधभाजि गुणोपचितस्त्रियां, तत इय तमवोचत शम्भली ॥ ११३ ॥
मम सुता भवता किमुपेक्ष्यते विकचगन्धफलीव षडङ्घ्रिणा ?।
किमुचिता न गुणैर्निचिता नवा प्रियतयोपाचिता यदि वा नवा ? ॥११४॥
अथ जजल्प स मातरिद हितं त्वदुदित समये विदधे पुरा ।
कथय किञ्च तवाप्यवरोधके किमु गतिर्दृढसङ्गतिशालिनी ? ॥११५॥
वदति सा स्म ततो, मणिमञ्जरी तनुभुवो मम यत्सुतरां सखी ।
सदृशरूपकलाबलशीलयोर्भवति सख्यमपेक्ष्यमिद यत ॥ ११६ ॥
अपि स तामवदद् वदतां वरो जननि ! सा तदिद प्रणिगद्यताम् ।
सुतनु ! वाचिकतोऽप्यनुरागयुग् दृढहृदो भव मे प्रिय ईदृशात् ॥११७॥
अमरदत्तमहापुरुषेण ते प्रियतमेन सुते ! प्रहित परम् ।
हृदयमेव पर समुपागतो मधुरवागिह वाचिकहारकः ॥ ११८ ॥
॥ युग्मम् ॥
श्रुतिपदं तदवाप्य जगाम तां हृषितरोमततिर्लघु कुट्टिनी ।
अभिहिताऽथ तया प्रमदाञ्चितैव भवती प्रसवित्रि ! किमीक्ष्यते ? ॥११९॥
अथ जगावपि सा तदुदीरित हृदि निधाय च धूर्तधुरन्धरा ।
विकटकैतववृत्तिपरिष्कृत तमपि मेलय मे प्रियमेलकम् ॥ १२० ॥
तमुदितं मुदिता विनिवेद्य सा तमथ मित्रमुद समतोषयत् ।
नृपसुताऽऽलयमीक्षयितु स्वय सुजवना निशि तेन सहागमत् ॥ १२१ ॥
प्रणिजगाद च वत्स ! महामते ! वरणसप्तकयामिककोटिभि ।
परिवृते कथमत्र तदालये भयमपास्य ! भवानपि यास्यति ? ॥१२२॥

अथ तया भवने तदपेक्षिते निजकराम्बुरुहा समवेक्षिते ।
असमविक्रमभृत्तडिदुच्छिख करणमेव ददावतिसाहसः ॥ १२३ ॥
अतिविशालसमुन्नतशालकप्रविततिं समतीत्य निमेषत ।
प्रवरजालगवाक्षमधिश्रित. समवलोकयति स्म स कन्यकाम् ॥ १२४ ॥
अहह ! वीरशिरोमणिरेष को बलमियच्च यदीयमवेक्ष्यते ?।
इति सहर्षमिय परिचिन्तयन्त्यचिरमालयमापक कुट्टिनी ॥ १२५ ॥
उपनमन्तमनन्यसमाकृति सुकृतवीक्ष्यमवेक्ष्य च कन्यका ।
वितनुते किमयं तदवेक्ष इत्युपधित. स्वपिति स्म साविस्मया ॥ १२६ ॥
स च विकृष्य ततः क्षुरिकां शितां करिकराकृतिदक्षिणसक्थनि ।
किमपि तां करभोरुमलाञ्छयद्वलयमादित वामकराद् द्रुतम् ॥१२७ ॥
करणशक्तियथागतवर्त्मना पणवधूभवनं प्रविवेश स ।
प्रतिपदा सचिवेन महौजसा तादिह किं नहि यत्सुकरं नृणाम्?॥ १२८ ॥
सुलपना तदनालपनापि सा स्वमपि विप्रमदा स्म विगायति ।
कथमपि क्षणदाविरतिक्षणे शयनशर्म समासददाशु च ॥ १२९ ॥
अमरदत्तसुहृद् दिवसोदये नृपतिमन्दिरवेत्रिमहीस्थले ।
सरलवशपुरस्तृणपूलकमधृत पूत्कृतिपूर्वकमुच्चकैः ॥१३०॥
तमथ वेत्रिमुखेन महीपतिर्द्रुतमजूहवदाश्रुतिपूत्कृतिः ।
तदनु पृच्छति च स्म स चावदत् परिभवं वणिजा कृतमात्मनः ॥१३१।
क्षितिपतेर्वरपत्तिभिराहृतः स उपदासहितो वणिगीश्वर ।
उपगतः प्रणतो नृपभाषितोऽवगततत्त्वमुवाच कृताञ्जलि. ॥ १३२ ॥
अवनिवासव ! पुत्रविपत्तितः शुचमकार्षमहं दिवसत्रयम् ।
व्यवहृति. परमा परमार्थतो भजति ना न विनैव तया सुखम् ॥१३३।
प्रभुपदाम्बुजयुग्ममयं तत. सुमतिराश्रितवान्मतिमात्प्रिय ।
इति निवेद्य विसृज्य च तद्धन गृहमिते वणिजे तमवग् नृप· ॥ १३४ ॥
कथय सत्त्वनिधे ! कुणपं त्वया कथमिदं परिरक्षितमक्षतम्? ।
स निजगाद निबध्य महीपते ! परिकर दृढमत्यवधानत ॥ १३५ ॥
करतले क्षुरिकां निशितां दधद् निदधदक्षि विदिक्षु च दिक्षु च ।
अहमतिष्ठमत· प्रहरे गते विहितफेत्कृतिभीमशिवागणः ॥ १३६ ॥
तदनु च द्विमिते प्रहरे परे नृपलभोज्यकृतोऽपि नृचक्षसः ।

प्रहर एव भयङ्करशाकिनीसमुदयः समियाय तृतीयके ॥ १३७ ॥
विविधखेलननर्तनजल्पनैः सुचिरमप्यधिवास्य तिरोदधु. ।
अपरिभूततयाऽवहिताशयो विगतभीरपि यावदवास्थिषि ॥ १३८ ॥
उपगता रमणीयतमाकृतिः कुणपसान्निधिमेव तुरीयके ।
प्रहर आगमिता ननु मान्त्रिकैर्वरमणी रमणीयविभाभरै. ॥ १३९ ॥
सनय ! मारिरिति प्रतिपद्य साऽध्रियत वामकरे प्रसभं मया ।
विदधती प्रपलायनमेषिका सपदि दक्षिणसक्थनि लाञ्छिता ॥ १४० ॥
रभसनाशविकृष्टकराम्बुजे मम करे किल तद्वलयं स्थितम् ।
नृपनिदेशवशादथ दर्शितेऽत्र नृपतिर्मनसीदमचिन्तयत् ॥ १४१ ॥
कनककङ्कणमेतदहो ! मया स्वतनयाकर एव विलोकितम् ।
इदमजायत तत्करतः कथं श्लथनवर्जि च तत्करगोचरः ? ॥ १४२ ॥
समभिसृत्य तत शयितां सुतां परिहिताच्छतराभरणांशुकाम् ।
सुदृढमूरुनिबद्धकपट्टिकां नृपतिरैक्षत सहृतकङ्कणाम् ॥ १४३ ॥
किमभवत्तरणेस्तिमिरोदय सलिलतो यदि वा ज्वलनोद्भव ? ।
यदिदमश्रुतपूर्वकमीदृशं तनुभुवो मम मारिविदूषणम् ॥ १४४ ॥
अपि समक्षविलक्षणलक्षणैरियमजायत किंनु कलङ्किनी? ।
किमथवा सहसा न निगृह्यते सकलमेव कुल परिरक्षितुम् ? ॥ १४५ ॥
इति विमृश्य तमेत्य रहोऽभ्यधात् सरससाहसिकोत्तम ! साहसम् ।
कुणपरक्षण एव तवाथवा स्फुरति किञ्चन मान्त्रिककौशलम् ? ॥ १४६ ॥
निनयिथ क्षणदाप्रहरेऽन्तिमे सुनयनां नयनायनमेव याम् ।
कलयतां तनयां विनयान्वितां मम विचक्षण ! मारितयेङ्गिताम् ॥ १४७ ॥
यदि तवास्त्यपि शक्तिरनाहता तदिमिकां निगृहाण गृहाण च ।
प्रथममेव निरीक्ष्य परीक्ष्य च प्रवदितास्मि नृपेति च सोऽवदत् ॥ १४८ ॥
नृपनिदेशवशात्समुपागतं सदकरोद् नृपतेस्तनयाऽपि तम् ।
किमुचिताचरणव्यभिचारणां विदधते क्वचनापि महाशया ? ॥ १४९ ॥
अथ जगौ जगतीपतिनन्दनाममरदत्तसुहृद् यदह ब्रुवे ।
शुभमुताशुभमेव मदीरित तदविमर्शमिद क्रियतां त्वया ॥ १५० ॥
न वलयापहृतौ तव केवलं नवलयापहृतौ मनसोऽस्म्यऽलम् ।
कुवलयाक्षि ! च सक्थनि दक्षिणे विहितवानहमस्मि तवाङ्कनम् ॥ १५१ ॥

शुभवती भवती नृपते पुर कनि ! मया खलु मारिरितीरिता ।
जडधिया निजकार्यविधित्सया परमघं न हि दूषणरोपणात् ॥ १५२ ॥
शृणु यतोऽस्ति सुहृत्सुमपत्तनेऽयमरदत्त इति प्रथितो मम ।
सुरगृहे तव रूपकपुत्रिकासुभगताकलनात्स भवन्मय. ॥ १५३ ॥
निधनतां त्वदलम्भनतो गमी गमितशक्तिरसौ स्मरसायकै ।
सुहृदह भवदर्थमिहागम कपटमारचयं किल तादृशम् ॥ १५४ ॥
मम मृतिर्नियता त्वदलाभतः स च मरिष्यति तत्र शुभाशये ! ।
तव कलङ्कयुगं भविता गिराऽयमपि चेतसि तन्वि ! विचारय ॥१५५॥
नृपसुताऽपि विचिन्त्य जगाद त मयि दृषद्वपुषि स्थिरसौहृदः ।
अयि ! सुहृत्तव मित्रयुरीदृशस्त्वमपि तद्वयमाव्यमिदं ध्रुवम् ॥ १५६ ॥
तदनुरागमवेक्ष्य विसारिण स वदति स्म यदा जनकस्तव ।
मम समर्पयते भवती तदा सुतनु ! फेत्क्रियतां सुतरां त्वया ॥ १५७ ॥
इति विनीय स तां मणिमञ्जरी नृपतिमध्यगमन्निजगाद च ।
क्षितिपते ! मम साध्यतमाऽस्ति सा चतुरगस्तुरग परमर्प्यताम् ॥१५८॥
दिनकराभ्युदयात्प्रथम यथा जनपदान्तरमेव तकां नये ।
अपरथा तु तथाश्रितलक्षणा कुलविघातकरी भवितैव सा ॥ १५९ ॥
क्षितिभुजा चकितेन च तस्य सा कचविकर्षणपूर्वकमर्पिता ।
अथ सुता गुरुफेत्कृतिभीषणा व्यवसिता कुलजा हि कुलश्रिये ॥ १६० ॥
अयमपि प्रणयप्रवण' स हुफुडितिमन्त्रसमुच्चरणाग्निमम् ।
नृपसुतामधिरोह्य तुरङ्गम निरगमन्नगराद्दिवसात्यये ॥ १६१ ॥
उदित एष तया हयमाश्रयेति स जगौ स्फुटमेककवाहने ।
सह सुहृत्प्रियया त्वधिरोहण न खलु सङ्गतिमङ्गति कुत्रचित् ॥ १६२ ॥
नृपसुताऽपि विचिन्तयति स्म सा सुकृतिनां कृतिनां स शिरोमणि ।
गुणनिधि. सुहृदेष यदीयकः श्रुतिविदां व्यवहारविदां गुरु. ॥ १६३ ॥
अहमपि त्रिजगत्प्रमदाजनस्तुतिपदं न भवाम्यधुना कथम् ? ।
अपि दृषद्वपुषा परिक्लृप्तया युवमनः प्रसभं प्रहृतं यया ॥ १६४ ॥
विमृशतीति महीपतिकन्यका सुहृदपेक्षितसिद्धिविधित्सुना ।
द्रुतमनीयत पुष्पपुरान्तिकं नयवता कमलेव विशालताम् ॥ १६५ ॥
परमितश्च दृषन्मयपुत्रिकास्मरणलीनमना नृपनन्दनः ।

अवसिते सुहृदाऽभिहितेऽवधौ तमरामिभ्यमयाचत चिन्त्यिकाम् ॥१६६॥
विरचिते खलु तेन तदीहिते निरुपचारमथोपचितानले ।
निखिलपौरजनप्रतिपत्तितस्तदहरेकमवास्थित भूपजः ॥ १६७ ॥
तुरगवाहन एति पदातिना सममिति प्रजया प्रनिरूपिते ।
अमरदत्तसुहृत् तयका समं स समयाऽमरदत्तमुपागमत् ॥ १६८ ॥
उपलमूर्त्तिरियं समुपासिता कलयति स्म यदत्र समक्षताम् ।
अविकलं तदिदं किल भावनाबलफलं कलयन्तु मनीषिणः ॥ १६९ ॥
अमरदत्तकुमारशिरोमणिः समवलोक्य स तां मणिमञ्जरीम् ।
सुखमवाप तदेव न निर्वृतैर्यदपि निर्वृतिमाप्य दुरासदम् ॥ १७० ॥
कटसुहृन्प्रियता कटसगरराम्बुधितटप्रतिपत्तिरनाहृता ।
कटविसाध्वसमानसवृत्तिता कटमतिप्रचयोऽपचयोज्झित ॥ १७१ ॥
इति स मित्रमुदाश्रितसंमदैरभिनुतो मणिसारकनागरैः ।
न गुणवद् यदि वस्तु विवर्ण्यते क्व रसना रसमद्भुतमश्नुताम्? ॥ १७२ ॥
( युग्मम् )
सुजनभावमितैरथ नागरैर्भजति शुष्मणि तत्र च साक्षिताम् ।
स्वमनसः परितापनिवृत्तये व्यधित सोऽपि विवाहविधिं तया ॥ १७३ ॥
नवनवं खलु मासयुगेन यत्कृतमशर्म दृषद्वपुषा तया ।
अपि शिरीषसुमात्सुकुमारया तदपि तस्य तदैव तया क्षतम् ॥ १७४ ॥
वितनुतेऽसुखमेव विचेतनो मिलित एव सुखं तु सचेतनः ।
अपरथा हि दृषद्वपुषा तया सुखमजन्यत नास्य तदा कथम्? ॥ १७५ ॥
अथ निशीथभरेऽत्र महीश्वरेऽसुतकुले मृतिमीयुषि मन्त्रिणः ।
अभिविमृश्य मिथोऽभ्यषिचन् समे गजमुखाद्भुतदिव्यसुपञ्चकम् ॥१७६॥
दयितया सुहृदा सह चामरस्तरुगणाञ्चितबाह्यवने स्थितः ।
स जलपूर्णघटेन समुक्षितः स निहितः करिणा निजकुम्भके ॥ १७७ ॥
तुरग एव चकार च हेषितं शशिकरोज्ज्वलचामरवीजितः ।
स्वयमवास्थित चातपवारणं शिरसि देवमहामहिमाश्रयात् ॥ १७८ ॥
अमरदत्त इतिप्रथिताभिधो जयति भूमिपतिः स्थितिवेदकः ।
इति जगादतमां दिवि देवता सचिवमुख्यजनैः स विनम्यते ॥ १७९ ॥
जनपदान्तरमप्यधिजग्मुपः सुकृतिनः सुकृतं फलवद्भवेत् ।

क्वचन तिष्ठतु गच्छतु वेच्छया कनकमस्य हृता न महार्घता ॥ १८० ॥
प्रविशतो नृपतेर्नगरान्तरं वदनचन्द्रमवेक्षितुमुत्सुका ।
व्यधिषताऽऽलपन नगराङ्गना भवनतुङ्गगवाक्षमधिश्रिता. ॥ १८१ ॥
समवलोक्य महीपतिमेकिका प्रवदति स्म सखी प्रति पश्य यत् ।
सुरपतेरिव मर्त्यपते श्रिय. परबलच्छिदुरत्वमनोहराः ॥ १८२ ॥
अवददप्यपरा मणिमञ्जरीकरसरोरुहपृक्त्यनुभावत ।
पथिकवृत्तितयाऽयमुपागत' सखि ! विलोकय राज्यमविन्दत ॥ १८३ ॥
रसनया सखि ! वर्णनमेकया किमिव मित्रमुदोऽस्य विधीयताम् ? ।
जलधिपारमवाप्य च मालवप्रभुसुतां य इमां सुधियाऽऽनयत् ॥१८४॥
सखि ! विवर्ण्यतमो मणिसारको दयितया दयया समलङ्कृतः ।
कथमपीममजीजिवदेव यः सहचरेण विनाऽत्र पुन स्थितम् ॥ १८५ ॥
इति नयन् वचन विषय श्रुते' प्रमुदिताशयनागरयोषिताम् ।
नृपतिसौधमवाप नरेश्वर सचिवमाण्डलिकैरभितो वृत ॥ १८६ ॥
व्यधित भूमिपतेरभिषेचन सचिवसहतिरभ्युदयोन्मुखी ।
विविधतीर्थजलैरुपहारितै कनककुम्भधृतैरथ पावनै ॥ १८७ ॥
सुहृदि मन्त्रिपद निदधेऽमुना प्रविदधे महिषी मणिमञ्जरी ।
सममहेभ्यवरो मणिसारक. क्षितिभुजा जनकेन समस्तदा ॥ १८८ ॥
परमवास्थित भास्वति सूरता कुमुदिनीदयिते किल राजता ।
निविडमेव बिडौजसि जिष्णुताऽप्यमरदत्तनृपेऽवति मेदिनीम् ॥ १८९ ॥
अतिगतेषु कियत्स्वपि वत्सरेष्वमरदत्तमहीपतिमन्यदा ।
विनयपूर्वमभाषत मित्रमुन्नुदति तन्नृप ! मां शवभाषितम् ॥ १९० ॥
कुरु तदभ्युपपत्तिमिलापते ! विसृज मामिति साग्रहमीरित' ।
नरपति स्वजनैरनुवर्त्तकैरथ वसन्तपुरे नयति स्म तम् ॥ १९१ ॥
कतिपयैर्दिवसैस्तदुदन्तकेऽनवगतेऽधृतिमान धरणीधव ।
अकृत शुद्धिमभीष्टजनैर्निजैर्न तदुदन्तमविन्दत कश्चन ॥ १९२ ॥
प्रियवयस्यकवार्तमनाप्नुवन् हृदि वहन्नसमाधिभरं नृप ।
इति विचिन्तयति स्म स कोऽपि विद् यदि समेति तदा रुचिरं भवेत्॥ १९३॥
अथ वनीपतिरप्यवनीपतिं समुपगम्य विनम्य जगाद तम् ।
तव वने समुपास्थित चिच्चतुष्टयधरो वृषघोषमुनीश्वर ॥ १९४ ॥

१ धर्मघोषनामा ।

अमरदत्तनृपः प्रमदोल्लसद्बहलरोमसमाचितविग्रहः ।
सदयितोऽथ विवन्द्य गुरूनय गुरुमुखात्सुकृतश्रवणं व्यधात् ॥ १९५ ॥
तदनु शोकसदत्तमहेभ्यको दुहितृशोकसमाकुलमानसः ।
स्फुटमपृच्छदनिच्छहृदो गुरून् मम सुताऽपि सदा किमहो ! सरुक्? ॥१९६॥
गुरुभिरात्मसमीपमवापिता गुरुदशाऽजनि साऽपि निरामया ।
धनपतिस्तु किमेतदिति स्वयं मुनिपतीन् स ततः परिपृष्टवान् ॥ १९७ ॥
गुरुरवोचत भूतकशालके पुरवरेऽजनि भूतकदेवकः ।
वणिगभूतमहाव्यसनोदयः समुदयच्छुभकर्ममनोरथः ॥ १९८ ॥
कुरुमती समजायत तत्प्रिया सरसिजायतलोलविलोचना ।
नवपयः[1] समवेक्ष्य च साऽपि [2]पीविषयमाहृतमोतुभिरन्यदा ॥ १९९ ॥
मतिमतीमपि देवमती वधूमिति जजल्प रुषाऽरुणितेक्षणा ।
किमवधानपराङ्मुखि ! शाकिनीकवलिताऽसि न पासि यदेतकत्? ॥२००॥
( युग्मम् )
वदतिभीमवच श्रवणादपि प्रचलदङ्गलतां क्षुभितामिमाम् ।
छलयति स्म बलादपि शाकिनी छलपरा हि खला न यथैषिका ॥ २०१ ॥
अथ नरेन्द्रगणैः कृतमण्डलैः प्रचुरमन्त्रविधानविशारदैः ।
बलविसारितया स्म निगृह्यते परचमूरिव सा विरसारवा ॥ २०२ ॥
पुनरभूद्वपुषाऽपि समाहिता प्रतिकृता खलु तैरपि योगिभिः ।
कुरुमती किल कालरसञ्ज्ञिकेति भुवि सा श्रुतिमेव ततो गता ॥ २०३ ॥
तदसमानविरागभरादियं व्रतमुपेत्य दिवं च तवाङ्गजा ।
अजनि पुण्यमतेऽम्बरदेवतास्तत इमां व्यथयन्ति कुकर्मणः ॥ २०४ ॥
मम समीक्षणतोऽप्यपहाय तास्तव सुतां प्रपलायिषताधुना ।
सहजवैरभरार्दितचेतसामपि न वैरकथा दृशि विद्रुताम् ॥ २०५ ॥
स्मृतभवान्तरजातिरथ व्रतं भवविरक्तिरयाचत साऽप्यलम् ।
गुरुमुखाधिकभोगफलश्रुतेः शिवफलं गृहिधर्ममुपाददे ॥ २०६ ॥
नृपतिविज्ञपनासमनन्तरं गुरुरवोचत मित्रचरित्रकम् ।
तव भटैः सह भक्तिपरैस्तदा गहन एव पपात स मित्रभृत् ॥ २०७ ॥
दिनमवास्थित यावदतन्द्रितो जनसुखाय सखा तव तत्र स ।

---

१ दुग्धम् । २ पानाविषयम् ।

बहलनाहलराजिरुपागमद् यमभटा इव तावदतर्किता ॥ २०८ ॥
तव भटेष्वखिलेषु पलायितेष्वथ पलायितवान् स सुहृत्तव ।
क्वचन केचन तेऽपि च मण्डले परमपत्रपयाऽस्थुरवाङ्मुखा ॥ २०९ ॥
क्वचन कानन एव परिभ्रमस्तृषित एव निपीय सरोजलम् ।
श्रममपासितुमातपवर्जिते शयितवान् वटभूमिरुहस्तले ॥ २१० ॥
तदुरुकोटरतोऽत्र विनिःसृतस्तमदशत्सहसैव सरीसृपः ।
उपगते हि विधौ प्रतिकूलतां प्रतिपदं महतां विपदेत्यपि ॥ २११ ॥
तमथ तस्य विषेण विचेतनं सपदि कोऽपि जटी समजीजिवत् ।
उपकृतिः सुकृताय महीयसे भवति संजनिता यदसत्सु ते ॥ २१२ ॥
जटिनि जग्मुषि तत्र निजाश्रमं तव समीपमुपेतुमना वने ।
स जगृहे बलिभिर्नरतस्करैः, क्व सुखमस्ति विधौ विमुखेऽथवा ? ॥ २१३ ॥
स विभवग्रहणेन समर्पितोऽभ्युपगतो बहुनौपरिचारिभिः ।
सरसपारसकूलयियासया क्रमश उज्जयिनीमगुरेव ते ॥ २१४ ॥
भृशमुपद्रवजातमवापिता प्रबलचौरगणेन तदा पुरी ।
स्वयमिलाऽधिपतेर्विनियोगतो भ्रमति दुर्गपतिर्भ्रमणीविधौ ॥ २१५ ॥
स कथमप्यपसृत्य पलायित समभिवञ्च्य विलोककरक्षकान् ।
वरणमध्यगवार्गमनाध्वना पुरि विशन् ददृशे पुररक्षकैः ॥ २१६ ॥
निशि मलिम्लुचविभ्रमतो धृतो निबिडशृङ्खलया विनियन्त्रितः ।
दिनकरेऽभ्युदिते पुररक्षितुः सरभसं त्वविमृश्य समर्पितः ॥ २१७ ॥
स तदवेक्षणतः कुपितोऽधिकं वटतरावुदलम्बयदाशु तम् ।
यदुपकण्ठमधिश्रितयोस्तदा स भवतोः किलतोरवदच्छवः ॥ २१८ ॥
विदधतामथ तत्र च खेलनं ललितयौवनगोपतनूभुवाम् ।
उपरिभागमिते तदुदश्चिका प्रविशति स्म भवत्सुहृदानने ॥ २१९ ॥
त्रिदिवलोकमुपैतु, रसातल विशतु वा, यदि वा भजतां नभः ।
फलमुपैति पुमानविशङ्कितं स्वविहितानुगुणं हि पर स्वयम् ॥ २२० ॥
यतिपतेरितिमित्रसुदुर्मृतेः समुपलभ्य कथां नरपुङ्गव ।
गुणगणं गणनाऽतिगतं स्मरन् सदयितः परिदेवनमाधित ॥ २२१ ॥
गुरुरपि प्रसरद्वचनामृतैः शुगुपतापमपाकृतवांस्तयोः ।
प्रियवयस्यवियोगनिदाघजं घनजिनागमसङ्गमसम्भृतैः ॥ २२२ ॥

असुमतः सुहृदोऽथ महीभुजा गतिमपृच्छयत सद्गुरुशेखरः ।
स पुनराह तदा शुभभावन., स उदभूद्भवतो दयितोदरे ।। २२३ ।।
कमलगुप्त इतिप्रथिताभिध स भविता भवतस्तनय परम् ।
अथ धराधिपति स्ववयस्ययोरपि च पूर्वभवौ परिपृष्टवान् ।। २२४ ।।
सूरिः प्राह पुरे क्वचित् समजनि क्षेमङ्करोऽपि द्विधा
सत्यश्रीरिति गेहिनी कुमुदिनीवेन्दोरमुष्याभवत् ।
ख्यातः कर्मकरस्तयो. स चतुर सच्चण्डसेनाभिध
क्षेत्र रक्षति खाद्यमानमभित पक्षिव्रजै सोऽन्यदा।। २२५ ।।
स्वत्क्षेत्रनिष्ठा नवबीजकोशिका स्वक्षेत्रपार्श्वे समवेक्ष्य कञ्चन ।
लान्त स्वय कार्पटिक स चाह भो ! उल्लम्ब्यतां दस्युरय वयस्यका !।।२२६।।
शाखामूले शाखिनोऽस्मिन्विशाले, श्रुत्वा चैतद् दु.श्रव वाक्यमेष ।
चित्ते दून केवल नास्य किञ्चित् कारुण्येन क्षेत्रनाथेन क्लृप्तम् ।। २२७ ।।
सन्ध्याकाले चण्डसेनोऽपि चण्ड सवेशाय स्वामिवेश्माऽऽजगाम ।
युक्त चैतत् कर्म निर्माय घस्रे नक्त सेवा स्वामिनः किङ्कराणाम् ।। २२८ ।।
तदाऽश्नत्या बध्वा विपुलकवले लग्नमचले
गलं वीक्ष्य क्षेमङ्करदयितयाऽवाचि कटुकम् ।
अरे ! रक्षःकान्ता त्वमसि किमलं स्थूलकवलै-
र्यदेवं भुङ्क्षे चेति परिगदिते साऽशमभजत् ।। २२९ ।।
अप्राक्षीच्चण्डसेनोऽप्यवसरमधिगम्यैकदा स्वामिन स्वं
सस्नेहं बन्धुवर्गं मिलितुमयि ! विभो ! याम्यहं त्वन्निदेशात् ।
तेन प्रोचे रुषैवाविरतममिलनिर्बन्धुवर्गेण तेऽस्तु
श्रुत्वा चैतत् स्वचित्ते पृथुतरमसुख धारयामास सोऽपि ।।२३०।।
शुद्धान्न मुनये नयेन ददतौ तावेकदाऽऽलोकितौ
धन्यावित्यनुमोदनां विदधता दासेन तेनाधिकम् ।
याते तत्र मुनीश्वरे निजपद तेषां त्रयाणामुप-
र्येवापप्तदनित्यतामुपदिशत् सौदामिनीदाम तत् ।। २३१ ।।
ते मृत्यु समवाप्य पुण्यवशतो देवास्ततो जज्ञिरे
सौधर्मेऽप्युपभुज्य भोगमसमं तेऽपि त्रयोऽपि च्युता. ।
सत्यश्रीर्दयिता तवेयमभवद्बध्वां च दुर्वाक्यतो

मारित्वेन कलङ्किता नरपते ! क्षेमङ्करात्मा भवान् ॥ २३२ ॥
दासं प्रत्युदित विरुद्धवचनं यत्तेन ते बन्धुभि–
जातोऽय विरह॰, सखा च समभूच्चण्डस्य जीवस्तव ।
यत्त कार्पटिक प्रतीरितमसत्तेनायमुल्लम्बित.
शाखायां वटशाखिनो, नहि गिरा कार्या. कषायास्तत.॥२३३॥
स्मृत्वा पूर्वभवं निजं गुरुमुखात्तौ दम्पती श्राद्धता–
मङ्गीकृत्य गुरुं स्म पृच्छत इदं किं भाषते वा शव:? ।
मृत्वा कार्पटिक. क्रमादुदभवत् स व्यन्तरेष्वल्पधी
प्राग्वैरात् स शवान्तिकस्थितिरुवाचैवं गुरु प्राह स. ॥२३४॥
श्रुत्वैवं सुगुरुं प्रणम्य भवनं जग्मुर्नृपाद्या क्रमा–
द्देवी सूनुमसूत सूरिगदित ताभ्यां च नामादधे ।
पुत्रस्यास्य च पद्मगुप्त इति सोऽप्यासाद्य संवर्धनं
धात्र्यङ्क सकला कला॰ परिकलय्यापत् क्रमाद्यौवनम् ॥ २३५ ॥
तस्मादेव गुरो परेद्यविरय वैराग्यवान् भूपती–
राज्ये न्यस्य सुतं तया दयितया सार्द्धं तपस्यां ललौ ।
राजर्षि गुरुरन्वशादपि तथा त, नित्यसौख्यार्थिना
दीक्षा कल्पलता शमामृतरसै. पाल्या त्वयाऽविश्रमम् ॥ २३६ ॥
सर्वोपाधिविशुद्धमाप्य मनुजा. प्राय कलादाद् गुरो:
किञ्चिद्गन्धकगन्धसङ्ग विषयैर्भूताभिचारोद्धतै. ।
देहालङ्कृतिसान्निध धनमिदं ये दूषयन्ति व्रत–
स्वर्ण तेऽनुभवन्त्यशं प्रतिभवं धर्मार्थयत्नाक्षितेः ॥ २३७ ॥
माकन्दीतनयावुभाविह परं साधर्म्यवैधर्म्यकौ
दृष्टान्तौ तु यथाक्रमं शृणु मुने ! मे शंसतस्तद्यथा ।
चम्पा नाम पुरी कलिङ्गविषये तत्रास्ति धात्रीधव:
प्रख्यातो जितशत्रुरित्यभिधया तद्वल्लभा धारिणी ॥ २३८ ॥
माकन्दीति महेभ्यमस्तकमणिस्तत्रास्ति माकन्दको
भद्रा तद्दयिता सुतावभवतां तत्कुक्षिजौ द्वौ परम् ।
नाम्नैको जिनपालितो व्यवसितिप्रारम्भबद्धोद्यम
प्रेक्षा वान् जिनरक्षितस्तदपर. सौभाग्यभङ्गीनिधि. ॥ २३९ ॥

ताभ्यां व्यज्ञपि चान्यदा स्वजनकः सांयात्रिकत्वाय स
प्रोचे नो मकराकरेऽपि गमन कार्य्य युवाभ्यां सुतौ ! ।
यात्रा वा च यदन्तरायविकला एकादशासन् पुरा
प्रत्यूहेन युता भवेदियमहो ! वेला खलु द्वादशी ॥ २४० ॥
संख्यातीतमुपार्जित च बहुल तावद्भवद्भ्यां धनं
तद्दत्त च यदृच्छया विलसतं मत्सन्निधौ तिष्ठतम् ।
तौ तेनेति निषिध्यमानगमनौ वारांनिधौ प्रस्थिता–
वारुह्यार्थसमीहया, प्रवहणं लोभो बलीयान् यतः ॥ २४१ ॥
वार्द्धेर्मध्यमधिश्रिते प्रवहणे कैश्चिद्दिनैर्दुर्दिनं
सवृत्तं वियति स्थिरागगनयोरैक्याय वातो ववौ ।
पोतो वीचिभिराहत. क्षितिभृता संस्फाल्य विस्फोटितो
रत्नद्वीपमवापतुश्च फलक संप्राप्य तौ यत्नत· ॥ २४२ ॥
यावत्कृत्वाऽऽत्मवृत्ति मधुमधुरफलै सोदरौ तत्र तौ स्तो
रत्नद्वीपाधिपाऽऽगात्सरभसममरी तावदाकृष्य खड्गम् ।
सौख्य सार्द्ध मया वां विषयजमसम मानयेथा समानौ
नो चेच्छेत्स्याम्यह वां कमलवदिमक मण्डलाग्रेण मौलिम् ॥२४३॥
स्वीकृत्याज्ञा तदीया भयचकितहृदौ कामयेते स्म ता तौ
हृत्वाऽसत्पुद्गलौघाननिशमपि तया पूर्यमाणाभिलाषौ ।
अन्येद्यु साऽवदत् तौ सलिलनिधिपते सुस्थितस्योग्रशिष्टे
शोध्योऽस्मि सप्तकृत्वो जलनिधिरभितस्तन्न वां शर्म चेत् स्यात्॥२४४॥
हित्वाऽपाच्यवन च दृग्विषफणिव्यालीढमाशात्रये–
ऽन्यत्रोद्यानततीषु रम्यमिति सा प्रोच्चार्य्य देवी ययौ ।
आसाद्यारतिमेव तेषु गहनेष्वेतावपाच्ये वने
यातावेकमपश्यतामसुखिन शूलानुविद्ध नरम् ॥ २४५ ॥
आक्रन्द करुणस्वर विदधता तेनेति तावीरिता–
वायातौ कथमाग्रहे वत ! युवामस्या पिशाच्या ननु ? ।
काकन्दीपुरवास्यह वणिगहो ! संभग्नपोतोऽनया
नीतो मन्तुलवेऽपि दृश्याविषमामीदृग्दशां दुष्टया ॥ २४६ ॥
तेषामेषोऽस्थिकूट. स्फुटतरमनया ये हृताः सन्ति चान्ये

श्रुत्वैवं तौ विभीतौ तदपगमकथां स्वस्य तं पृच्छत स्म ।
तेनोचे प्राच्यवन्या तुरगमयतनुः शैलकाख्योऽत्र यक्षो
भूतेष्टाष्टम्युपेतेऽहनि वदति स कं तारये पामि कं वा ? ।। २४७ ।।
एवं तत्तत्र यात त्वरितमभिदधत्पूर्वरीत्या युवाभ्यां
याच्यः संयोज्य हस्तावुपकृतिनियते ! नाथ ! नौ रक्ष रक्ष ।
तौ नत्वाऽभ्यर्च्य पुष्पैस्तमपि च समये जीवितं याचमानौ
प्रोक्तौ नेष्यामि तीरं सपदि जलनिधेर्वामवामप्रवृत्ती ।। २४८ ।।
पृष्ठे सा समुपेत्य किन्तु यदि वा देवी भृशं भापये-
द्भेतव्यं न च तत्कथञ्चन गिरा दृष्ट्याऽपि संभाव्यताम् ।
आमेति प्रतिपद्य वाहवपुषः पृष्ठे समारुक्षताम्
तौ तस्यैव चचाल सोऽथ नभसा तत्पत्तन प्रत्यरम् ।। २४९ ।।
सा ज्ञात्वा तद्विभङ्गात् झगिति समुपगत्यानु तावाचचक्षे
व्यावृत्तिं किं न दासौ ! कुरुतमपरथा हन्मि कौक्षेयकेण ।
दृक्षौ यक्षस्य शिक्षां मनसि निदधतौ तौ न तां पश्यतः सा-
ऽक्षिभ्यामप्यक्षियातामिव पुनरवदत्तावनाथाऽस्मि मुक्ता।।२५०।।
स्वप्नेऽप्यप्रियमाहितं न मयका, किञ्चित् कदाचित्कृतं
चेद्युष्मद्बहुमानताग्रहिलया धार्य्यं न तच्चेतसि ।
दुष्टादुष्टवचोभिरेवमुदितौ यावन्न तौ क्षुभ्यतः
स प्रोचे किल भेदवाक्यमनया तावत्पुनः क्रूरया ।। २५१ ।।
किं त्वं मां जिनरक्षित ! त्यजसि वा गाढानुरागां मिथो
यन्मेऽयं जिनपालितः समभवन्नेष्टः सदा दुष्टधीः ।
इष्टा नास्य कदाऽप्यहं तव कथं प्राणेश ! तत् प्रस्मृतं ?
न स्त्रीणामिव मानसानि हि नृणां चाञ्चल्यमातन्वते ।। २५२ ।।
इत्युक्ते सोऽपि लज्जाभरविनतमुखः संमुखं संददर्श
तस्या दुष्टाशयायाः सरभसवलितग्रीवमुत्कण्ठमानः ।
नोच्चैरारोहणं स्याद्विचलितवचनस्येति सुचिन्त्य चित्ते
पृष्ठाद् यक्षोऽपि धृष्टं तमकृत निकृतिच्छित्तयेऽधः स्वतोऽपि।।२५३
अप्राप्तोदधिमध्यमेव तमिय कौक्षेयकेणाच्छिनद्
गत्वाऽथो जिनपालितं पुनरनु व्याचष्ट मिष्टाक्षरम् ।

सर्वं नाथ ! मृषाऽप्यभाष्यत पुरा त्वद्भ्रातुरग्रे मया
स्निग्धोऽभूर्मम यत्त्वमेव तव चाहं प्रेयसी सर्वदा ॥ २५४ ॥
तद्वाक्यश्रवणाय यद्बधिरतामापन्नपूर्वीव यद्
द्रष्टुं तामविलोचनप्रभुरिव प्रापत् पुरीं तेन सः ।
असिश्शैलविलेन तत्परिसरोद्याने विमुक्ते रयाद्
व्यावर्तिष्ट सुरी चरीतुमिव या तत्पृष्ठमालम्बत ॥ २५५ ॥
सम्प्राप्तो जिनपालितो निजगृहं मातापितृभ्यां मुदा
पृष्टोऽसौ जिनरक्षितस्य रुदितं कुर्वंश्चरित्रं जगौ ।
अन्येद्युः समवासरज्जिनपतिः श्रीवर्द्धमानः प्रभु-
र्गीर्वाणप्रभुवृन्दवन्दितपदस्तत्पत्तनारामके ॥ २५६ ॥
श्रुत्वा स्वामिसमागमं द्रुततरं गत्वा प्रणम्यादराद्
मातापित्रुपसङ्गतः श्रुतिलसद्धर्मोपदेशामृतः ।
प्रव्रज्यां जिनपालितो जिनपतेः पार्श्वे प्रबुद्धोऽग्रहीत्
तप्त्वा तोषपरं सुदुस्तपतपः कैवल्यमापत् क्रमात् ॥ २५७ ॥
तत्साधोऽमरदत्त ! सम्प्रति मया व्यावर्णितेदंस्फुर-
द्दृष्टान्तोपनयं स्फुटं शृणु यथा तौ वाणिजौ सस्तृतौ ।
जीवाः स्युर्द्विविधास्तथा मणिमयद्वीपाधिपा देवता
योक्ता साऽविरतिः स्मृता छलपरा पुंसां विशेषं विना ॥ २५८ ॥
मर्त्यः सोऽपि व्रतशिथिलताऽपायदौर्गत्यदुःखं
स्याद्वाचार्यः प्रथितमधुरामञ्जुवस्त्वं विगायन् ।
शुद्धाख्यानप्रकटनपरो गुह्यकः सोऽश्वरूपः
संसाराब्धेस्तरणकरणं चारु चारित्रमेव ॥ २५९ ॥
जीवो निम्नो विरत्या प्रतिसमयममुं शस्यते ज्येष्ठशिष्ट-
माकन्दीभ्याङ्गसूनाद्विरचितमहदाहेशभङ्गीविभङ्गः ।
दृष्ट्या पश्येन्न तां यो भवजलधिमहापारसिद्धिं पुरीं सः
प्रायो यायादवश्यं, हतगुरुवचनः क्षुद्रमाकन्दिसूवत् ॥ २६० ॥
निशम्य तदिदं कथानकमहो ! भविष्यत्परं
विरागपरिपुष्टधीरमरदत्तराजर्षिकः ।
सहार्दमणिमञ्जरीदयितया समं तच्चिरं

तपांसि परितप्य सोऽप्यजनि सिद्धिकान्ताप्रियः ॥ २६१ ॥
इत्थं चैते कषाया वचनरचनयाऽख्याततां नैव भव्या
मित्रानन्दादिवन् कं न भवजलनिधौ पातयामासुराशु ? ।
वह्नौ जाज्वल्यमाने स्फुरति च किमपि स्थावरे जङ्गमे वा
क्ष्वेडे घोरे ज्वरे वा कुलिशनिपतने मन्त्रतन्त्रादि नैषु ॥ २६२ ॥
आकर्ण्यावहितः स्वयंप्रभुगुरोरेतादृशी ता कथां
नत्वा पादयुगं व्यजिज्ञपदिदं यावद्धरित्रीभरम् ।
पुत्रे न्यस्य समैमि सत्वरतरं तावत्स्थितिर्वोऽस्त्विहे-
त्युक्त्वा धाम जगाम भूपरिवृढः कल्याणमालेच्छया ॥ २६३ ॥
आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुः प्रामाणिकानां गुरुः ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकाविना सर्गो ययावष्टम ॥ २६४ ॥

## ॥ इति श्रीशान्तिनाथचरिते सर्गोऽष्टमः संपूर्णः ॥



अर्हम्

## अथ नवमः सर्गः ।



जिगाय यो मन्मथसैन्यमेककः कषायमुख्यैः सुभटैरनुद्रुतम् ।
शमासिना स्वीकृतशीलकङ्कटः स वैश्वसेनिप्रभुरस्तु वः श्रिये ॥ १ ॥
अनन्तवीर्यं विनिवेश्य नन्दनं प्रजाऽऽधिपत्ये चिरकालपालिते ।
विधाय सर्वानपि चार्थिनोऽर्थिनः सुवर्णदानैरथ वर्णनोचितैः ॥ २ ॥
असशयं शिक्षितमन्त्रिनागरः शुभापुरीभूमघवा शुभाशयः ।
सुतक्षितीशाततवाञ्छितोत्सवो गुरुक्रमान्ते व्रतमादितेहितम् ॥ ३ ॥
(युग्मम्)
चिराय दुष्कर्ममहीधराशनिं महीश्वरर्षि परिपाल्य स व्रतम् ।
विराध्य चान्ते मनसा सुरेश्वर प्रभुत्वशाली चमराभिधोऽजनि ॥ ४ ॥
अनन्तवीर्योऽप्यपराजितान्वितः शशास पृथ्वीमपराजितोऽरिभिः ।

तनूनपादेकक एव दुर्जय किमङ्ग ! वातेन समन्वितो ज्वलन् ? ॥ ५ ॥
अजर्यमासाद्य कदाऽपि खेचर. प्रसिद्धविद्याबलमानदुर्धर. ।
अदत्त विद्या अनुरुध्य कश्चन प्रसाधिता ज्ञप्तिमुखास्तयोर्मुदा ॥ ६ ॥
अकृत्रिम नाटकपाटवं दधद् बभूव चेटीद्वितयं तयोर्वरम् ।
अगर्वविद् बर्बरिकाभिधाऽऽदिमा परा किरातीति गुणै. समाश्रिता ॥ ७ ॥
सभामधिष्ठाय कदाचिदेतकौ कृताऽऽसनौ नाट्यविधि व्यलोकताम् ।
किरातिकाबर्बरिकाख्यकिङ्करीप्रकल्पितं विश्वजनेक्षणोत्सवम् ॥ ८ ॥
अनेकतीर्थामलवारिसंभृत करारविन्दे निदधत् कमण्डलुम् ।
परासने नैव कदाचन स्थितिर्बुधैर्विधेयेति वृषी च पावनीम् ॥ ९ ॥
मनोवच कायविचेष्टितत्रय पुमान्प्रभुर्दण्डयितुं न कश्चन ।
जिनेन्द्रशिष्यानपहाय केवलं वहस्त्रिदण्डीमिति संविदाश्रितः ॥ १० ॥
जप विधातुं स्फटिकाक्षमालिकां वहन् स्वपाणौ शरदिन्दुनिर्मलाम् ।
स्फुरत्सितध्यानविवर्णिकामिव प्रदर्शयन् भव्यजनस्य सचिताम् ॥ ११ ॥
अधो विधेयं कनकं महर्षिभि प्रहर्षत. पादतलेन निःस्पृहै ।
इति प्रजा ज्ञापयितु जगद्गुरोर्गुरूपदेशं स सुवर्णपादुकः ॥ १२ ॥
हृतोपवीतस्तुहिनाचलच्छवि स्फुरच्छिखः पीवरकुक्षिरंसल ।
नभोविहारेण जगन्निभालयन् कलिप्रियस्तत्र समागमद् द्रुतम् ॥ १३ ॥

॥ पञ्चभिः कुलकम् ॥

विचित्रनाट्येक्षणसक्तचक्षुषौ न त समायान्तमिमौ स्म पश्यतः ।
कुत पुनर्विष्टरपाद्यसंकथा, प्रसक्तमन्तःकरणं न चेष्टते ॥ १४ ॥
स तं विजानन्नपमानमात्मनो विचिन्तयामास दिवौकसां मुनिः ।
अभूतपूर्वा तनुरप्यमानना महीयसां कि न भवेन्महीयसी ? ॥ १५ ॥
अखण्डभूमण्डलपालका अपि प्रयान्ति केचिद् न मदं कथञ्चन ।
इमौ तु चेटीद्वितयोपलम्भतः कथ नु मत्तौ बहुमानसङ्गिमौ ? ॥ १६ ॥
जगत्त्रयीनायकमाननीयतां गतो न चाभ्यामपि मानितोऽस्म्यहम् ।
यदाश्रयत् तत्खलु चेटिकाद्वयं मया तदाच्छेद्यमुपात्तविस्मयम् ॥ १७ ॥
इति स्वचित्ते परिभाव्य नारदस्ततो निरीय प्रययौ जवेन सः ।
यथार्थनाम्नो दमितारिभूपते समीपमाकाशविकाशलीलया ॥ १८ ॥

॥ त्रिभिर्विशेषकम् ॥

क्षणेन वैताढ्यवसुन्धराधरे शतेन सप्तत्यधिकेन चार्हताम् ।
विराजिते केतनराजिसद्मना समृद्धविद्याधरनिर्मितस्थिता ॥ १९ ॥
समागतं तं समवेक्ष्य संभ्रमात् स्वविष्टरात्स प्रतिविष्टरश्रवा: ।
मृगेन्द्रचिह्नादुदतिष्ठदुन्नताद् महीध्रशृङ्गादिव रङ्कुनायक: ॥ २० ॥

( युग्मम् )

कृती समुत्सार्य सुवर्णपादुके स तं प्रणम्यासनमात्मनो ददौ ।
मुनि परित्यज्य नरेश्वरासनं निजासनं स्वीकुरुते स्म कल्पवित् ॥ २१ ॥
निविष्टमग्रे समुपासनापरं विनीतमेतं निजगाद नारद: ।
त्रिखण्डभूमण्डलनाथ ! सर्वदा समस्तु ते स्वस्ति समस्तदुर्नय ! ॥ २२ ॥
महीश ! राज्यं कुशलेन वर्तते तवापि सप्ताङ्गमनङ्गसन्निभ ! ।
गुरुष्वतुल्या प्रतिपत्तिरेव ते सनातनं मङ्गलमाह सर्वत: ॥ २३ ॥
तदेतदाकर्ण्य मुनीन्द्रभाषितं जगौ नरेन्द्र: स्मितशोभिताननः ।
तव प्रसादेन सदाऽखिलं शिवं ममास्ति दृष्ट्या तव पापविच्युति: ॥ २४ ॥
भवादृशां दर्शनमेव केवलं पुराकृतैरेव शुभैरवाप्यते ।
न जातु दृष्ट: क्वचनापि संश्रुतो न पापिन: सद्मनि रत्नसेवधि: ॥ २५ ॥
मुनीन्द्र ! पृच्छामि पुन: किमप्यहं प्रसह्य वक्तुं यदि तत्त्वमर्हसि ।
त्वया समस्तं भुवनं प्रपश्यता कुतूहलं किञ्चन किं विलोकितम् ? ॥ २६ ॥
अहो ! ममैषा तपसां विजृम्भितं तदेतदाशंसितमात्रमेव मे ।
ऋते विलम्बं यदभूत्फलेग्रहीति चिन्तयित्वा मुनिरप्यभाषत ॥ २७ ॥
शुभापुरीस्वामिपुरो निरीक्षितं मयाऽद्य यन्नाटकमद्भुतं नृप ! ।
विधीयमानं पटुचाटुचेटिकाद्वयेन तन्न श्रुतलेऽपि भूतले ॥ २८ ॥
धराधराणामिव मेरुभूधरो जलाशयानामिव नाम सागर: ।
अये ! द्रुमाणामिव दैवतद्रुम: परं महीयांस्त्वमहो ! महीभुजाम् ॥ २९ ॥
समृद्ध्यमत्रे विजयार्धकेऽत्र यद्यदस्ति वस्तु प्रवरं तवैव तत् ।
तदाशु चेटीद्वितयं तदानय स्वमन्दिरं सेन्दिर ! सुन्दराशय ॥ ३० ॥
भविष्यदायोधनविश्रुतश्रुतेरयं तदोङ्कारवदुद्धतस्वरम् ।
निवेद्य तत्कालमियाय कुत्रचिन्मुनीश्वर: सोऽम्बरचारिणां गुरु: ॥ ३१ ॥
अनन्तवीर्याय महीभुजे महाननन्तवीर्य: प्रजिघाय सप्रभु: ।

तदैव दूतं परिभूतसाध्वस प्रदिष्टतद्वाचिकवाचनाचणम् ॥ ३२ ॥
समुत्सुक. सोऽपि शुभापुरीं गत प्रदर्शनात्प्रागपि वेत्रिबोधित' ।
अनन्तवीर्यं प्रणिपत्य भूपतिं यथास्थितं वाचमुवाच चारुवाक् ॥ ३३ ॥
नरेन्द्र ! किञ्चिद्विजयार्धकेऽत्र यन्मनोहर सम्भवतीह वस्तुत ।
प्रहीयते तत्सकल महीश्वरे' प्रसादहेतोर्दमितारयेऽनिशम् ॥ ३४ ॥
किरातिकाबर्बरिकेतिकिङ्करीद्वयं दधान पटुतां च नाटके ।
अनुग्रहार्थं प्रभवे प्रहीयतां ततस्त्वयेद पिशुनप्रशंसिलम् ॥ ३५ ॥
अनन्तवीर्यो नृपतिर्जगाद तं प्रतिष्ठमानो भव दूत ! तत्त्वकम् ।
इद प्रहेष्यामि च चेटिकाद्वय भवन्तमन्वेव महीमरुत्वते ॥ ३६ ॥
निशम्य चेदृग् वचन महीपतेर्गतः स दूतो निजासिद्धदूत्यवित् ।
महीमघोने प्रतिहारवेदित' शशस तद्वाचिकमीतवञ्चन ॥ ३७ ॥
निज समाहूय स बान्धव रह स्वरूपमाचष्ट विशिष्टशंसितम् ।
असौ तदाकर्ण्य तदाऽपराजितस्तमाह माहात्म्यविपश्चित वच. ॥ ३८ ॥
अनन्तवीर्यस्त्वमनन्तविक्रम समीक्ष्यसे यद्यपि चापराजितः ।
अनन्तवीर्योऽहमथापराजितस्तथापि वैरं सहसा न तेन नौ ॥ ३९ ॥
पदे पदे स्यादविमृश्यकारिणां नृणां विपत् सम्पदुपायिनामपि ।
स्वयं विमर्शप्रतिपत्तिशालिनां प्रतिक्षण हि प्रभवन्ति सम्पदः ॥ ४० ॥
असाम्यविद्याबलमात्मनो विदन् सुखेचरत्वप्रबलं बलं तथा ।
स एवमाज्ञापयति प्रसह्य नौ बल न नैसर्गिकमस्य किञ्चन ॥ ४१ ॥
तदावकाभ्यां प्रतिपादिता पुरोपरोध्य विद्याः खलु खेचरेण या ।
प्रसाधितास्ता वितरन्तु नौ हितं बलं परं स्यादधिकं किमस्य तत् ? ॥४२॥
उभौ तु यावत्खगराजतालकध्वजौ रहोऽमन्त्रयतामिसाविति ।
प्ररोचितज्ञप्तिमुखा. समागमंस्तदग्रतस्तावदुपांशुदेवता. ॥ ४३ ॥
प्रदीपरत्नाभरणप्रभाभरप्रणाशितध्वान्तविविक्तशक्तय ।
अवादिषुस्ता रचिताञ्जलिक्रमास्तनुं श्रिता कल्पलता इवाथ तौ ॥ ४४ ॥
स्मृता भवद्भ्यामपि याश्च देवता प्रसाधनायैव समागतास्तका' ।
वयं स्वत. प्राच्यभवप्रसाधितास्तनिष्ठसंकल्पवशादिहापि वाम् ॥ ४५ ॥
समाश्रयामो भवदीयमङ्गक युवां समाज्ञापयतं यदि स्वयम् ।
इति प्रकीर्त्यैव तदङ्गकेषु तास्तयोरनुज्ञामधिगम्य चाविशन् ॥ ४६ ॥

महाभुजौ तौ स्वयमेव किं पुनर्विभूषितौ ताभिरुदीर्णशक्तिभिः ?।
क्रमादभूतां भुवनेऽव्यविक्रमौ सुतौ महाकच्छककच्छयोरिव ॥ ४७ ॥
प्रफुल्लसन्तानकपुष्पवासितैः पटीरवासैर्घनसारसारितैः ।
यथेच्छमानर्चतुरेव ताश्च तौ न पूज्यपूजां जनयन्ति के जनाः ?॥ ४८ ॥
अथो पुनस्तत्र निदेशमात्रतः प्रतीन्द्रवैरिद्विषतः समेत्य तौ ।
बभाण दूतः परितर्जयन् रुषा न सामसाध्या हि भवन्ति तादृशाः ॥ ४९ ॥
अहो! युवां यौवनमानदुर्द्धरौ किमारभेथे प्रभुणा सह स्वयम् ?।
अधीतशास्त्रेण बुधोपजीविना न नर्म कार्यं गुरुभिः समं क्वचित् ॥५०॥
भवद्भिरामव्यभिचारकारणाप्रचारणातः कुपितं प्रभूत्तमम् ।
अपास्य मां रक्षितुमेव कः प्रभुर्भवन्महाविग्रहानिग्रहाग्रहात् ? ॥ ५१ ॥
प्रसादमासाद्य यदीयमीदृशं प्रपाल्यते राज्यमलं भवादृशैः ।
स तोषमाक्रामति चेटिकाद्वयीसमर्पणाच्चेत्किमपेक्ष्यते ततः ? ॥ ५२ ॥
प्रदाय चेटीद्वितयं प्रसाद्य तं महीमहेन्द्रं महसा समुज्ज्वलम् ।
द्विषत्पराभूतिमतर्कयन् हृदा चिराय राज्यं कुरु बन्धुना समम् ॥ ५३ ॥
अनन्तवीर्योऽपि निशम्य तद्गिरस्तमाचचक्षेऽतिनिगूढरुड्भरः ।
स राजराजो मम चेटिकाद्वये परं स्पृहावानिति दूत! कौतुकम् ॥ ५४ ॥
परं प्रभूणामपि चित्तवृत्तयः प्रवर्तमानाः स्वरसातिरेकतः ।
सुदुर्निवाराः किल निम्नगा इव समुद्रमास्कद्य पतन्ति केवलम् ॥ ५५ ॥
करोति चेटीद्वितयेन किं प्रभुर्विलोकते नौ तु निदेशवर्तिताम् ? ।
विलोकतां चेटकतां प्रपद्य नौ त्वया समं धीर! समैव सत्वरम् ॥ ५६ ॥
इति प्रतिख्यातमधूद्भवद्रसं वचोऽमृतं तस्य निपीय निर्वृतः ।
जगाम दूतो बलिवैरिणाऽर्पिते गृहे गृहीताभ्युपपत्तिसाधनः ॥ ५७ ॥
निवेश्य राज्यं निजमन्त्रिषु स्वयं क्रमागतेषु श्रुतिशास्त्रवेदिषु ।
बभूवतुस्ते कुटहारिके च तौ प्रगल्भविद्याबलतो बलाच्युतौ ॥ ५८ ॥
अनन्तवीर्येण सबन्धुनाऽपि तौ स्वनायकाय प्रहिते स्व उत्तमे ।
इति स्फुटं ते वदतः स्म मायया श्रिते भुजिष्ये, उपदूतमागते ॥ ५९ ॥
सहैव ताभ्यां मुदितोऽभ्ययादयं स मङ्क्षु वैताढ्यगिरिं महामतिः ।
व्यजिज्ञपच्चावनिपाकशासनं कृताञ्जलिर्वक्त्रविसृत्वरद्युतिः ॥ ६० ॥
वहन्ति मूर्ध्ना तव शासनं नृपाः समेऽपि मालामिव भूमिमण्डले ।

विशेषतस्तौ च विशेषवेदिनौ नरेन्द्र ! धत्तो मणिवन्महोदयम् ॥ ६१ ॥
उपायने स्त' प्रहिते च चेटिके इमे च ताभ्यां श्रुतसङ्गते ! तव ।
सरस्वती नाट्यकलामशिक्षयत्कुतूहलार्थं तव ये नरोत्तम ! ॥ ६२ ॥
समादिशत्ते दमितारिरात्मना प्रकृष्टनाट्याभिनये तदा नृप. ।
प्रवर्धमानोत्कलिकाऽऽकुलं मन. कथं विलम्ब सहतां मनस्विनाम् ? ॥६३॥
रसोऽपि यो य प्रकटीकृतस्तदा जनैः सदस्यै स नवो नवो मत. ।
यदैव तेनैव रसा नव स्मृता नटाङ्गशास्त्रेषु विचित्रभङ्गिषु ॥ ६४ ॥
यमेव शैलूषमतल्लिकारस तदाभ्यनैषुर्ललिताङ्गहारिका ।
सभाजनस्तन्मयता व्यगाहत प्रलीनचेताः स तु तत्र तत्र सः ॥ ६५ ॥
तदैव चक्षु.श्रवसो व्यवर्णयन् जना अभिन्नेन्द्रियभिन्नकर्मण. ।
समीक्षमाणा अपि नृत्यकौतुकं सुगीतगीतान्यपि येऽत्र शृण्वते ॥ ६६ ॥
तदा न तृष्णां विविदु. सभाजना न वा बुभुक्षामपि केऽपि जाग्रतीम् ।
श्रम निविष्टा अपि केऽपि नासदन् सुगीतलास्यास्थिराचित्तवृत्तयः ॥ ६७ ॥
चतुर्विधासु श्रितकर्णवृत्तिषु प्रवाद्यमानास्वपि वाद्यभङ्गिषु ।
भियेव तासामपरो ध्वनिस्तदा सदस्यकर्णान्तिकमाजगाम न ॥ ६८ ॥
अदृष्टपूर्वं समवेक्ष्य नाटकं तदेवमीदृग् दमितारिभूपति ।
पराक्रम स्वीयमथापि जीवितं तथा प्रताप सफलं व्यबुध्यत ॥ ६९ ॥
सरस्वतीक्षीरसमुद्रनन्दिनीद्वयप्रतिच्छन्दमिवाङ्गसङ्गतम् ।
तदाप्य चेटीद्वितयं नरोत्तमस्तृणाय मेने शतमन्युमप्ययम् ॥ ७० ॥
अथ स्वपुत्रीं कनकाश्रियं द्विधा रुचाऽपि नाम्नाऽपि समार्पयद् नृपः ।
तदैव ताभ्यामबलागुणोज्ज्वला प्रमोदभृन्नाटकसारशिक्षणे ॥ ७१ ॥
निरीक्ष्य तां कृत्रिमचेटिके पटुश्रिया जयन्तीममराङ्गना अपि ।
सुशिक्षितां शिक्षयत स्म नाट्यक समग्रकं साभिनयं क्रमेण ते ॥ ७२ ॥
अगायता ते च गुणैकसेवधि सदैव नाट्यान्तरनन्तवीर्यकम् ।
गुणास्तदीयान् श्रुतिगोचर नयन्त्यपृच्छदेते नृपते सुताऽन्यदा ॥ ७३ ॥
युवा युवाभ्यामपि गीयते नृप. सदा वयस्ये ! क उदग्ररागत. ? ।
इदं निशम्याभ्यधितापराजित स चेटिकारूपधरोऽथ तां प्रति ॥ ७४ ॥
शुभाशयेऽस्मिन्विजये शुभापुरी समृद्धिसङ्केतनिकेतमस्ति ताम् ।
समागता यत्र विहारलीलया पुलोमजाऽमस्त न चामरावतीम् ॥ ७५ ॥

अभूदिह क्षत्रियवंशमौक्तिकप्रभो नरेन्द्र स्तिमितादिसागर ।
व्रत समादाय नृजन्म सार्थक चकार कारुण्यरसाम्बुधिश्च य. ॥ ७६ ॥
तदङ्गजन्माऽजनि चापराजित. सपत्नसङ्घैरपराजित सदा ।
अनन्तवीर्य कमलाक्षि ! सान्वय' समस्ति तस्यानुज उत्तमोत्तम ॥ ७७ ॥
स मुख्यवृत्त्या सुभगे ! कलानिधि कलानिधिर्ग्लौरुपचारवृत्तित ।
गुणाश्रयोऽसौ परमार्थवृत्तितो गुणाश्रयो द्रव्यमवास्तवी श्रुति. ॥ ७८ ॥
कचिद्भवेदाकृतिरेव सुन्दरा न चापि सौभाग्यमभङ्गुरास्थिति ।
कचित्पुन स्थेयसि तत्र न ज्ञता, विभाव्यते भाविनि तत्र तत्त्रयम् ॥ ७९ ॥
बिभर्तु किं तद्गुणवर्णनाविधौ विदग्धता मादृगबोधविक्लवा ? ।
चतुर्मुखीभूय विरञ्चिरात्मना विधाय यत्र प्रभुतां व्यधत्त न ॥ ८० ॥
गुणांस्तदीयान् श्रवणावतसतां यथा यथा सा नयति स्म तन्मुखात् ।
तथा तथा तामदुनोद् मनोभव. प्रक्लृप्तनालीकशरै स निष्ठुरम् ॥८१॥
शुभापुरीभूमिरियं प्रशस्यते स एव यस्या. पतिरास्थितस्थिति ।
महीभृतं त हृदयेन बिभ्रती शिरीषमृद्वी श्रममागमं परम् ॥ ८२ ॥
विलोक्य तं मध्यमलोकनायकं विलोचने पायसपारणाविधिम् ।
अमूदृशाऽनीक्षणिकोपवासिनी चिराय ते मेऽपि कदा विधास्यत ? ॥ ८३ ॥
समीहितं पुण्यभृते न लभ्यते कदाचन स्फीतिमताऽपि सम्पदाम् ।
न चापि पुण्य विहितं मया हितं विलोकिताहे वरमेव तं कथम् ? ॥ ८४ ॥
विचिन्तयन्तीति नरेन्द्रकन्यका भुजिष्ययाऽवाचि तयैव धूर्तया ।
विचक्षणे ! तस्य समीक्षणे मन समुत्सुकं किं तव वर्तते मनाक् ? ॥ ८५ ॥
॥ चतुर्भिः कलापकम् ॥

अवोचदेतामिति राजनन्दिनी विमुच्य नि.श्वासपरम्परामियम् ।
तदीक्षणे धावति मामक मनो विधौ प्रसन्ने सखि ! वीक्ष्यते परम् ॥ ८६ ॥
तदुक्तमाकर्ण्य समुच्छ्वसन्मना. पुनर्जगौ कृत्रिमचेटिकाऽपि सा ।
त्वयोच्यते सुन्दरि ! चेन्मदग्रत' समानयाम्येव तदाऽत्र तं नृपम् ॥ ८७ ॥
जगाद चैनां दमितारिकन्यका सखि ! क वैताढ्यमहामहीधर ।
शुभापुरी सा क दवीयसी यत किमाम्रपाकोऽपि भवेदपेक्षया ? ॥ ८८ ॥
पर तदभ्यासजुषि प्रसादनापरायणे त्वय्युपपद्यतेऽखिलम् ।
प्रसादमासेदुषि वा विधौ नृणां न दुर्घटं किञ्चन सम्भवत्यपि ॥ ८९ ॥

कृतप्रतिज्ञाऽनुगते ! त्वमात्मन: सखि ! प्रतिज्ञां परिपूरयेति सा ।
तयोदिता स्वीयवयस्यया समं निमर्गरूप प्रकटीचकार तत् ॥ ९० ॥
विलोक्य तां विस्मितमानसामसाविमामवादीदपराजितो बल ।
अनन्तवीर्यं सुमुखि ! त्वदग्रत कृत यदीय गुणवर्णनं मया ॥ ९१ ॥
विलोचनेन्दीवरयोर्विकाशिनोर्विलोकनादस्य कलानिधेर्ननु ।
फल समादत्स्व तथा कृतार्थतां स्वजन्मन साध्वि ! विधत्स्व साम्प्रतम् ॥९२॥
निरीक्ष्य तं सा दमितारिपुत्रिका समालिलिङ्ग प्रथम सखीमिव ।
त्रपामियं समदसविभाजन ततो रति कर्तुमिवैकसौहृदम् ॥ ९३ ॥
अनन्तवीर्योत्तमराजदर्शनाद्बभूव तदृक्कमलं विकस्वरम् ।
तदीयतातस्य महान्वयक्षये पर किमुत्पातनिबन्धन भवेत् ? ॥ ९४ ॥
इय समीक्ष्य स्वसर[1] नरेन्द्रजा स्वय पुरस्तादपराजित नृपम् ।
प्यधत्त वक्त्र यदि वा कुलाङ्गना कुलाङ्गनानां न विदन्ति कि स्थितिम्? ॥९५॥
अनन्तवीर्यं निजघान वल्लभ कटाक्षबाणैर्निशितैर्यदेषिका ।
अनन्तवीर्यस्य तदाशये पुरा स्थितस्य कामस्य न कि तदीहितम् ? ॥ ९६ ॥
शिशुत्वमारभ्य मयैव पालिता समेधितप्रौढिरिय निषेधति ।
ममेव पत्या सह भाषण मिथो निरस्य लज्जामिति सेति तं जगौ ॥ ९७ ॥
कुमुद्वती चन्द्रमसेव पद्मिनी दिवाकरेणेव रमेव विष्णुना ।
बलाहकेनेव तडिद् गुणालय ! त्वया सनाथाऽस्मि परं महीपते ! ॥ ९८ ॥
मदीयभाग्यैरसमैरिहागमत् स नारद शारदमेघपाण्डुर: ।
प्रदातुमेव प्रियमन्यथा कथ समागम स्याद्भवतोऽत्र मद्गृहे ? ॥ ९९ ॥
ममैव दुर्गे हृदये वसन्नय विजित्य काम विषमायुधस्त्वया ।
यथा स्वदासत्वपदेऽभ्यषिच्यताऽभिषिच्यतां नाथ ! तथा द्विषज्जन. ॥१००॥
अनन्तवीर्योऽवददाहृतं[2] न चेदिद वचश्चम्पकपत्रगौरि ! ते ।
श्रियो गृहं तर्हि शुभां शुभाशये ! पुरी मदीयामुररीकुरु द्रुतम् ॥१०१॥
निधाय वाक्य हृदये हृदीशितुस्ततो बभाषे दमितारिनन्दिनी ।
मया निजाकूतमुदाहृतं पुरा त्वमेव मे नायक ! जीवितेश्वर: ॥१०२॥
परं मदीय कुपित कृतान्तवत् पिता स वां वाञ्छितविघ्नकारक: ।
बलैश्च विद्याभिरय महाबलो महौजसौ वामपि निष्परिग्रहौ ॥१०३॥

१ भ्रातरम् २ मृषाऽर्थकम् ।

स्मितं वितत्याऽभ्यधिताथ माधवः प्रियेऽभिधानादपि तस्य मैव भैः।
न सांयुगीनत्वमयं परिस्पृशेद् ममाग्रजे संयुगसीमभागिनि ॥१०४॥
निपीय वाच दयितस्य तामिय तमन्वचालीद्दमितारिजा ततः।
उदस्तहस्त. करटीव दुर्धरोर्जितां गभीरां गिरमुज्जगार सः ॥१०५॥
अहो! नु विद्याधरमण्डलेश्वराः! भटावतंसा! दमितारिगृह्यकाः!।
कृतावधाना! मम वाचमुच्चकैः श्रव.पथे धत्त महाभिमानिनः! ॥१०६॥
इमां भवत्स्वामिसुतामहं बलादनन्तवीर्यस्त्वपराजिताश्रयः।
हरामि यद्यस्ति बलं भवत्स्वपि प्रदर्श्यतां तद्बलनाय तत्परम् ॥१०७॥
स एवमुच्चार्य विधूतसाध्वस विमानमास्थाय विहायसि स्थित.।
द्विधाऽपि रामाऽनुगत' पराक्रमं प्रयोजयन् प्रास्थित विष्टरश्रवा ॥१०८॥
निशम्य तत्खेचरवर्गनायकः प्रकोपताम्राधरपल्लवोऽभ्यधात्।
क एष भूमीचर उग्रसाहसः स्वरूपसंवेदनताजडस्थिति ॥१०९॥
निहत्य चैनं हतकं सबान्धव वधार्हमुद्बन्धनदुष्टमृत्युना।
समानयध्वं विनिवर्त्य पुत्रिकामिति स्ववीरान् नृपति. समादिशत्॥११०॥
निदेशमात्रेण महीपतेर्भटा विनि सृता. स्वस्वपदात् सरहस.।
कलम्बकोदण्डकृपाणपाणयो रणाय तावन्वसरन् महौजसः ॥१११॥
प्रतीपभूमीपतिधर्मराड्गृहप्रकाशदीपप्रतिमानि जज्ञिरे।
हलोग्रशार्ङ्गप्रमुखानि भास्वरप्रभाणि रत्नानि तदा यतोस्तयोः ॥११२॥
यथैव गन्धद्विपदानगन्धतः प्रणश्यति क्षुद्रमतङ्गजावली।
तथैव तन्मुक्तशरौघपाततो ननाश सर्वारिपताकिनी रयात् ॥११३॥
पलायितान् स्वान् विनिशम्य सैनिकान् मुख ह्रियेवेक्षयितुं किलाऽक्षमान्।
युगान्तकालार्कवदुद्धतद्युतिश्चचाल योद्धुं दमितारिरप्यथ ॥११४॥
प्रयाणभेरीध्वनिरुद्धवंस्तदा दिगन्तरेषु प्रतिशब्दमूर्छित।
पर' प्रभुः कोऽपि बभूव नेदृगित्युदीरणाय प्रययौ जवेन किम्?॥११५॥
विमुच्य नः स्वामिसुतामिमामरे! युवां प्रयातं प्रपलाय्य कातरौ!।
न चेत् प्रकोपज्वलिताशुशुक्षणौ क्षणात्प्रभोर्नः शलभीभविष्यथः ॥११६॥
इतीरितां तस्य पुरःसरैर्भटैर्निशम्य वाच वलतः स तावपि।

१ बाणः।

वधूमधीरां वचनैः समुद्धतैर्विधाय धैर्यप्रतिबद्धकञ्चुकाम् ॥११७॥
निरीक्ष्य विद्वेषिबलं बलोत्तरं बलानुजोऽप्युग्रबलारिविक्रम. ।
बलेन विद्याप्रभवेन चात्मनो बलं ससर्ज द्विगुणं स सद्गुणः ॥११८॥
उपक्रमन्ते स्म युधि द्विषद्भटास्तयो परावृत्तिमवेक्ष्य तत्क्षणम्'।
चिरोपभुक्तं दमितारिवेतनं कृतार्थतां नेतुमभीप्सवोऽभया. ॥११९॥
पदातिमुद्दिश्य पदातिरिङ्गित' तुरङ्गसादी तु तुरङ्गसादिनम् ।
रथी रथस्थं गजयुग् निषादिनं बभूव तत्राजिरवर्णसङ्करम् ॥१२०॥
रणापणे येन यश क्रयाणकं समर्थमादायि न काङ्क्षता श्रियम् ।
विनश्वरप्राणपणेन दौस्थ्यभाक् स एवमूचु. समरेऽत्र बन्दिनः ॥१२१॥
शरं समुद्धृत्य विलग्नमङ्गके द्विषद्भटेन प्रहितं स्वपाणिना ।
वहन्नमर्षं हृदि तेन तं तथा न्यहन् यथा कोऽपि ययौ स पञ्चताम् ॥१२२॥
पलायमानस्य न कोऽपि सात्त्विक शरप्रहारेण जहार जीवितम् ।
तदीयवंश्यैश्च कृतं यशश्चयं शरत्सुधादीधितिदीधितिप्रभम् ॥१२३॥
पराक्रमेणोद्भटतां दधत्तमान् कटाक्षितान् किञ्चन तज्जयश्रिया ।
रणाङ्गणे वीक्ष्य विरोधिनो भटांस्तदैव दध्मौ जलजं जनार्दन ॥१२४॥
न पाञ्चजन्यध्वनिना प्रसर्पता न पाञ्चजन्यं गलित विरोधिनाम् ।
इहापि जन्ये प्रतिरूपवर्तिनां विचेतनानामुपलब्धमूर्छया ॥१२५॥
स्वयं समालोक्य महारथस्तथा रथाधिरूढो दमितारिरञ्जसा ।
प्रचक्रमे योद्धुमतन्द्रिताशयोऽभिसृत्य नागान्तकलक्ष्मणा समम् ॥१२६॥
मुमोच यद्यद्दमितारिरायुध प्रकोपदष्टाधरपल्लवोऽरये ।
अनन्तवीर्यश्च भयं दिशन् द्विषां विहस्य तत्तत्प्रतिकूलमीश्वरः ॥१२७॥
अवेत्य विद्वेषिणमन्यथा निजं सुदुर्जयं श्रीदमितारिरस्मरन् ।
समग्रदिक्चक्रतमोऽपहारकं महोदय चक्रमरेर्जिघांसया ॥१२८॥
प्रभापराभूतपरप्रभाभरं तदीयपाणौ विरराज चक्रकम् ।
यथाऽस्तभूमीधरतुङ्गशृङ्गके दिनेशितुर्मण्डलमच्युतांशुकम् ॥१२९॥
उवाच चैनं दमितारिरुल्लसन्महाभिमान करुणां स्पृशन्निव ।
वृथा मृथा मा, तनयापरिग्रहाग्रहं विहाय व्रज रे! विनि श्वसन् ॥१३०॥
अनन्तवीर्योऽपि जगाद तं द्विष तवाङ्गजां मूर्त्तिमती जयश्रियम् ।
श्रिय समादाय तथा च जीवितं यशश्च यास्यामि निरूपणादृते ॥१३१॥

असौ परिभ्रम्य मुमोच शक्तितस्तदेव चक्र शमनाय विद्विष ।
परे समालिङ्गति वा जयश्रिय किमौचिती रक्षितुमस्त्रमङ्गिनाम्? ॥१३२॥
चुचुम्ब चक्र हृदि चक्रधारिणं प्रवर्तयत् तुम्बकघातयातनाम् ।
बलेन चेलाञ्चलवीजित क्षण मुदा सहोत्तिष्ठति स स्म सस्मय ॥१३३॥
शतारमेव प्रथम बभूव यत् तदा सहस्रारमितं हरे करे ।
महीयसां सङ्गमतो लघीयसां प्रवर्धते किं महिमा महान्नहि ? ॥१३४॥
अनन्तवीर्यो दमितारिमूचिवान् स्मितश्रिया विच्छुरिताधरस्तत ।
हृदीश्वराया. कनकश्रियो भवान् पितेति मुक्तो मयका प्रयाहि तत् ॥१३५॥
जगौ सधैर्य्य दमितारिरीदृश परस्य शस्त्रेण च शास्त्रितां वहन् ।
न लज्जसे किं धनितामिवाल्पधीरहो ! परन्यासविलोपकर्मणा? ॥१३६॥
तदाशु मुञ्चेदमपत्रपाकरं ममेव ते चापि भविष्यति ध्रुवम् ।
विरोधिसंरोधनकारि पौरुष ममापि जागर्ति परार्तिभञ्जनम् ॥१३७॥
नृपेण तेनेति स तर्जितो विधुर्घृताक्तवैश्वानरवत् क्रुधा ज्वलन् ।
मुमोच चक्र दमितारयेऽरये शिरोऽच्छिनत्तच्छरकाण्डलीलया ॥१३८॥
विवर्णयामो वरवर्णिनीष्विमां किमुत्तमां नो कनकश्रिय वयम्? ।
जयश्रिय भेजुषि वल्लभे तदा प्रसन्नमन्त करण चकार या ॥१३९॥
विचित्रवर्णै सुमनोभिरद्भुतैर्दिवोऽभिवृष्टि सुमनोभिराहिता ।
अनन्तवीर्येऽद्भुतवीर्यसेवधौ जिनेशितु पारणकारणे यथा ॥१४०॥
अवादि तै श्रोत्रपथे विधत्त नो गिर तु विद्याधरनायका ! हिताम् ।
अनन्तवीर्यो हरिरेप सान्वयो हलायुधोऽसावपरोऽपराजित ॥१४१॥
बलाभिमान तदपास्य चैतयो पदाम्बुजच्छायमुपाध्वमादरात् ।
यथा परातङ्कनिदाघजातपप्रभूतसन्तापमहो न विन्दथ ॥१४२॥
दिवौकसां वाचमवाप्य ते ततस्तदङ्घ्रियुग्म शरण समाश्रिता ।
प्रियाप्रजाभ्यां सहित स तै सहाचलद् विमानेन पुरीमथो निजाम् ॥१४३॥
सुवर्णशैल परितो व्रजन्नग्र जनार्दनो व्यज्ञपि खेचरेश्वरै ।
अनेकश सन्ति विभोऽत्र भूधरे जिनेन्द्रचैत्यानि मुदां निबन्धनम ॥१४४॥
विधेहि माऽऽशातनिकां तदीदृशां प्रतिष्ठमानोऽनभिवन्द्य चाग्रत ।
इतीरितस्तैर्विधुरन्तरिक्षतो रयेण तत्रावततार तारवाक् ॥१४५॥
सुवर्णचैत्येषु सुधर्मपङ्कजेष्विवात्र कुर्वन् प्रयत. प्रदक्षिणा ।

न राजहंसश्रियमाप किं विधु श्रितो विवेकेन गुणेन तेजसा ? ॥१४६॥
सुरद्रुमानेव विनेयतां नयन्नवारिताकाङ्क्षितदानदीक्षया ।
भ्रमन् गिरौ तत्र हरि सविभ्रम तपोधन कञ्चिदवेक्षतोत्तमम् ॥१४७॥
अवाप य केवलसंविद शरत्प्रमोपवासप्रतिमां समाश्रित. ।
अभिख्यया कीर्तिधरो मुनीश्वर सुवर्णशैलेऽत्र जगत् पवित्रयन् ॥१४८॥
अवाप्यमानं महिमानमुच्चकैरमानवैर्मानववृन्दसयुतै ।
स त ववन्दे विहितात्मनां गुरु हरि स्फुरत्पुण्यसुपण्यताऽऽपणम्॥१४९॥
चतुर्गतिद्वारनिपातुकाखिलप्रजासमुद्धारविधौ समुद्धताम् ।
श्रितासने तत्र सुवर्णकेतने व्यधत्त साधु स च धर्मदेशनाम् ॥१५०॥
तमन्वयुङ्क्तावसरे हरिप्रिया प्रियाऽऽभिमुख्येन कृतावगुण्ठना ।
पितुर्वध किमभूद् मम प्रभो! सुदु सह. किं विरहश्च बन्धुभि ?॥१५१॥
मुनीशिता व्याहरति स्म तामिद स धातकीखण्डमहाविभूषणे ।
अदूषणे प्राग्भरते गवां कुलैरलङ्कृतं शङ्खपुरं तु विद्यते ॥१५२॥
निरर्गलग्राम्यजनोपशोभिते मनोहरे ग्रामशतेषु तत्र च ।
स्त्रियोषित श्रीपदपूर्वदत्तयाऽभिधानतोऽपुण्यवशेन दु स्थया ॥१५३॥
समानयन्त्यम्बु गृहेषु केषुचित् पिनष्टि केष्वेव निरूपिता सती ।
यदा तदा सा तनुते भुजिक्रियां न दु स्थताऽन्यत् पदमाससाद तत्॥१५४॥
ययौ भ्रमन्ती वनराजिराजिते विलोकयन्ती तरुवल्लरीरियम् ।
अथान्यदा श्रीपदपूर्वके गिरौ सुमेरुभे पर्वतनामनि श्रुते ॥१५५॥
शिलातलासीनमहीनसन्निभ क्षमामहाभारधृतौ धृते पदम् ।
निरीक्ष्य चेतोविनियन्त्रणक्षमं ननाम सा सत्ययशोऽभिध मुनिम्॥१५६॥
सुधर्मलाभं शिवलाभकारक समासदच्चित्तविषादहारकम् ।
इदं स्वदौस्थ्येन कदर्थिताशया शुभाशया विज्ञपयाम्बभूव सा ॥१५७॥
यथेन्द्रगोपप्रमुखा निरन्वया मुनीश! शब्दा विबुधैरुदीरिता ।
तथा ममैषा गुरुभि प्रकल्पिताऽभिधाऽपि तादृग् गुरुनि स्वताजुष ॥१५८॥
मनोरथाम्भोजकुलप्रकाशिना दुरन्त्यदौर्विध्यघनोदये सति ।
प्रभो! कदाचिद् मम या बभूव नास्तु सा त्वदालोकशरत्समागमात्॥१५९॥
पुराकृतै सम्पदवाप्यते शुभै कृतानि नो तानि मया भवान्तरे ।
ततोऽन्वभूवं च दरिद्रतासुख यदस्ति नाहेतुकमत्र हेतुमत् ॥१६०॥

मुनीन्द्र ! दुष्कर्मरजःप्रभञ्जनप्रभ ममैतर्हि किमप्युपादिश ।
इतीष्टविज्ञापनया तदीयया स चक्रवालाभिधमादिशत्तपः ॥१६१॥
शुभाशये ! त्रिंशदमाऽपि सप्तभिर्वरं चतुर्थानि चतुर्गतिक्षये ।
तथा त्रिरात्र कुरु पूर्वतोऽन्तत तपः समाराध्यमिद मदापहम् ॥१६२॥
यथेदृशं नान्यभवे भवेत् पुनस्तवाधिबाधाकृदशर्म भाविनि ।
इति प्रतीतां गिरमभ्युपेत्य सा गुरोर्निजग्राममुपागमज्जवात् ॥१६३॥
तप. समारब्धमवेत्य पारणादिनेषु तस्यै ददुरुत्तमस्त्रिय. ।
निमन्त्र्य चाहूय भुजिक्रियाविधि विधाप्य वासांसि कृतप्रशंसनम् ॥१६४॥
चकार कर्माणि गृहेषु येषु सा भृतिं द्विरुक्तामपि तेष्वविन्दत ।
तपःप्रभावेण दिनैश्च कैश्चन समृद्धिमत्त्वं कलयाञ्चकार सा ॥१६५॥
निकेतकुड्यैकतरप्रदेशकः प्रचण्डवातप्रतिघाततोऽन्यदा ।
पपात तस्या. सुतरां जरत्तरस्तदन्तरे किञ्चिदवाप सा वसु ॥१६६॥
निरन्तरायं तपसि प्रसाधिते सहर्षमुद्यापनमाततान सा ।
चतुर्विधं सङ्घमपूपुजच्च सा प्रमोदसङ्घप्रतिपादनक्षमम् ॥१६७॥
तया तपःपारणकान्त्यवासरो भुजिक्रियायै विनिविष्टया पुर ।
समैक्षि मासक्षपको महामुनिः शमाचलः सुव्रतनामधेयक. ॥१६८॥
अकल्पितैः प्राशुकपानभोजनैरुदारभक्त्या प्रतिलाभ्य सा स्वयम् ।
अथापि धर्मं शिवशर्मकारणं जिनेश्वरोपज्ञमपृच्छदेव तम् ॥१६९॥
मुनिर्बभाषे गृहमेत्य साधव कदापि सौस्थ्ये सुकृतोपदेशनम् ।
न कुर्वते किं पुनरालयैषिणां गृहीतुमाहारमुपागता हितम् ॥१७०॥
यदिच्छसि श्रोतुमुपाश्रयं श्रयेः सुसाध्वि ! निश्रेयससाधनोन्मुखि ! ।
इतीष्टमुच्चार्य गते मुनीश्वरे चकार सा पारणकं मुदञ्चिता ॥१७१॥
भुजिक्रियाऽनन्तरमेव सा रयाद् मुनिं प्रणन्तुं सह नागरैरगात् ।
प्रणम्य तत्पादयुगं प्रदक्षिणापुरस्सरं च न्यषदत्तदग्रतः ॥१७२॥
उदीर्य तस्या गुरुराशिष निजां समादिशद्धर्ममधर्ममर्मभित् ।
जगत्त्रयीनायकभूरिकामितप्रदानचिन्तामणिमानतस्करम् ॥१७३॥
जलं तपर्तौ पिबतोऽपि शीतलं पुनः पिपासाभवनाद् न शर्मणे ।
शुचिं हिमर्तौ भजतोऽपि केवलं पुनः स्फुरज्जाड्यविधेर्न तुष्टये ॥१७४॥
महातपे छायभरं च विन्दतः क्षणान्तरे तापभयान्न पुष्टये ।

इदं जिनाधीश्वरभाषितं यथा निषेवमाणस्य शुभं विवेकिन ॥१७५॥
(युग्मम्)

दुरापमम्यक्त्वपुरस्सरेण तज्जिनेन्द्रधर्मेण सुखाय भावये ।
निजास्थिमज्जाभवमज्जनोज्झिही पुरा परिव्राडिव चूर्णयोगत ॥१७६॥
अथ परिव्राट् क इतीरितस्तया मुनि पुनः प्राह विशेषवित्तमः ।
अवन्तिदेशस्य महाविभूषणं पुरी विशालाऽस्ति समृद्धिशालिनी ॥१७७॥
बभूव तस्यां जितशत्रुभूपतिर्नयोपदेष्टा जितशत्रुभूपति ।
सधर्मचारिण्यपि तस्य धारिणी शरत्सुधांशूज्ज्वलशीलधारिणी ॥१७८॥
निजाङ्कपर्यङ्कशयालुकेसरिस्वरूपसत्स्वप्ननिवेदितोदय ।
सुत प्रतीतो नरसिंहसंज्ञया नृसिंहवद्विक्रमसक्रमस्तयोः ॥१७९॥
स षोडशापि द्विगुणीकृताः क्रमात्कला विभज्येव कलानिधेः कृती ।
नरेन्द्रकन्या परिणायितो युवा नृपेण सौभाग्यगुणोपशोभिताः ॥१८०॥
समं स ताभी रमते स्म भूपभू शशीव ताराभिरुदित्वरद्युतिः ।
रसैरनेकैः परिवीतविग्रहस्तरङ्गिणीभिर्नीधिरम्भसामिव ॥१८१॥
नितान्तमन्त पुरमध्यवर्तिनो विनिर्मिमाणस्य मिथ प्रहेलिकाः ।
समं वधूभिर्नृपतेस्तनूभुव कदाचिदासीच्छरदागमस्ततः ॥१८२॥
नभ सरश्चापि बभूव निर्मलं स्फुटीभवद्धंसविनिर्मितस्थिति ।
समुत्पतत्सारसभङ्गिसङ्गतं न यत्र नो तारकराशिभासितम् ॥१८३॥
दिशोऽपि काशैः सह यत्र लेभिरे विकाशमात्मोदयसङ्गतैरिव ।
नृपप्रतापप्रसरादिवाधिकं दधाति यस्मिंश्छविसञ्चयं रवि. ॥१८४॥
(युग्मम्)

कृतान्तयानभ्रममादिशन् नृणां कपोलपालीप्रसरन्मदोदक. ।
तदा गजः कश्चिदुपेत्य काननादुपाद्रवत्तत्पुरमस्तसाध्वस. ॥१८५॥
उपायनं वाहनमात्मनो ध्रुवं मतङ्गजस्ते प्रहितो विडौजसा ।
नवाम्बुभृद्धौतमहेशभूमिभृत्सवर्णवर्णः क्षितिपाकशासन ! ॥१८६॥
बहिःस्थितस्ते सकल स पत्तन पराभवन्नास्ति मदी वनाद्विपः ।
समेत्य पौरा भयविह्वलाङ्गका महीशमेवं रभसाद् व्यजिज्ञपन् ॥१८७॥
(युग्मम्)

१ पक्षे हस सूर्य ।

विसृष्टपौरं बहुमानपूर्वक प्रवर्तमान करिनिग्रहे स्वयम् ।
सुतो नृसिह प्रणिपत्य पत्तिवद् व्यजिज्ञपाद्विज्ञपतिर्विशांपतिम् ॥१८८॥
प्रभो ! प्रयास पशुमात्रबन्धने स्वय कथ सत्यपि मादृशे जने ।
अपेक्षते भूमिगृहप्रकाशने रविप्रकाश· किमु दीपके सति ? ॥१८९॥
इति प्रसह्य प्रतिषिध्य भूपति स च स्वयं व्यालसमीपमागतः ।
स्वमुत्तरीय प्रवितत्य कन्दुक सुखेन चिक्षेप तदग्रत क्षणात् ॥१९०॥
विधाय त क्रोधवशात् स खण्डशः समुद्भवत्क्रुत् प्रतितन्तुपाण्डुरम् ।
हरित्सु सर्वास्विव विक्षिपन्नभात्कुमारसम्बान्धियशस्तरोभवम् ॥१९१॥
चिर परिक्लेश्य विधूतविश्रम भ्रमिप्रकारैर्बहुभिर्विचेष्टितै ।
शम समायातमवेत्य त सुधी समारुरोह प्रयत स कुम्भिनम् ॥१९२॥
गवाक्षमारूढवता महीभुजा निरीक्षितश्चित्रविकाशिचक्षुषा ।
जनै प्रशसामुखरैश्च विस्मितैर्गज तमालानयति स्म स स्वयम् ॥१९३॥
वसुन्धराभारधुरधर सुतं विभाव्य भूपो भुजवीर्यशालिनम् ।
अनन्यसाधारणधर्मकर्मणे समागमं साधुगुरो समैहत ॥१९४॥
तदा तदायुक्तजनाननाम्बुजादुपागतं सूरिजयधर वने ।
नृप समाकर्ण्य चचाल वन्दितु सुधीर्विलम्ब कुरुतां शुभे हि क ?॥१९५॥
विनम्य तं तस्य स धर्मदेशना निपीय संसारविरागमागत ।
निवेश्य राज्ये तनय लसन्नय कृती तपोराज्यमशिश्रियन् स्वयम् ॥१९६॥
जनोऽन्यदा विज्ञपयाम्बभूव त पुरीनिवासी नरसिंहभूपतिम् ।
पुरी तवेयं नृपतेऽमरावती जहास या पौरमहर्द्धिभि पुरा ॥१९७॥
मालिम्लुचै सह्रियमाणकाञ्चनाऽधुनाऽभजद् ग्रामटिकातुला च सा ।
इतीरयित्वा महिते गते जने नृप पुरारक्षकमादिशत्तत· ॥१९८॥
( युग्मम् )
गृहाण चौरान्निगृहाण सत्वर तव स्थितिर्नापरथेति भाषितः ।
नृपेण सोऽपि प्रतियामिनि भ्रमन् न चौरनामापि समासदत् क्वचित् ॥१९९॥
पुनर्जनैर्व्यज्ञपि नागरैर्नृप· प्रभो ! ह्रियन्ते नगरीस्त्रियो निशि ।
प्रविश्य चौरैर्भवनेषु नोऽधुना निवस्तुमन्यत् पुरमाशु दर्शय ॥२००॥
तत· स लज्जाभरसंकुचन्मुख समीक्षितु तान् परमोषिण. स्वयम् ।
निवस्य नीलं वसनं तमीमुखे स्वमन्दिराद् भूमिपतिर्विनिर्ययौ ॥२०१॥

कृपाणपाणिः कृपणत्ववर्जितः कृपाश्रयोऽपि श्रुतचौरनिष्कृप ।
अहर्मुखं यावदसौ भ्रमन्नभून् परं न काश्चित् समवैक्षत प्रभुः ॥२०२॥
पुनः प्रदोषे तिमिराऽच्छवेषभृत् पुरः प्रतोल्या बहिरेव निर्गतः ।
मलिम्लुचान्वेषणबद्धमानसस्तरुं समाश्रित्य स एककं स्थितः ॥२०३॥
त्रिदण्डभृत् कश्चन तत्र तापसः समाययौ सालसमायताङ्गकः ।
स तेन पृष्टो वसुधासुधाकरः, प्रणम्य तं पान्थमवोचत स्वकम् ॥२०४॥
जगौ परिव्राजक एव रेऽत्र कौ विलोकिताः के विषयास्त्वया ननु? ।
ततः स तं प्रत्यवदत् कृतादरं मुनीश ! दृष्टा विषयाः परःशताः ॥२०५॥
कलिङ्गवङ्गाङ्गतिलङ्गगूर्जराः सहूणकाश्मीरखसोड्रचेदयः ।
इमेऽपि दृष्टा न धनं कचिन्मया किमप्यवापि, क शुभं शुभं विना? ॥२०६॥
तदुक्तमाकर्ण्य स तापसोऽभ्यधात् तवाद्य दारिद्र्यमपाकरोम्यहम् ।
धनं समानीय, पुरः पयोऽम्बुधेर्नगस्य सन्तापमिवाम्बुदो घनम् ॥२०७॥
प्रफुल्लतापिच्छनिभे तमोभरे प्रसृत्वरे प्रास्थित सोऽपि सुस्थितः ।
पदातिवत् तेन समं महीपतिर्महीभुजः स्वार्थपरा हि केवलम् ॥२०८॥
समुद्धतैरेव वचोभिरिङ्गितैरवेत्य चैनं परमोषिणं नृपः ।
महेच्छ! यद्येवमहं न कर्मकृद् नु ते किमाश्वासमिति प्रकाशयन् ॥२०९॥
निहन्तुमेनं जगदेकवैरिणं करेऽसिमाधात् प्रतिकारमध्यतः ।
प्रयाति वा कुत्र करोति चैष किं हृदा विमृश्येत्यसिमाधिताश्रये ॥२१०॥
कृतान्तकान्ताकबरीसहोदरं करे कृपाणं समवेक्ष्य पृष्ठतः ।
विचिन्तयामास मलिम्लुचोऽप्ययं ध्रुवं न सामान्यपराक्रमः पुमान् ॥२११॥
किमस्त्वमीदृक् पथिकस्य सम्भवेदिति स्वचित्ते परिचिन्त्य सोऽभ्यधात् ।
अहो! प्रतीक्षस्व विचक्षण! क्षणं यदेष जागर्त्यधुनाऽपि पूर्जनः ॥२१२॥
ततो वलित्वा विपुलापतिस्तरोरधस्तदादेशवशादशङ्कितः ।
चकार संस्तारकयुग्ममायतं दलैश्च विश्रामसमीहया क्षणात् ॥२१३॥
अयं प्रमीलामुपलप्स्यते परं मयि प्रसुप्ते प्रथमं न चान्यथा ।
इति स्वचित्ते विनिवेश्य तस्करोऽप्यशेत निद्रामपि स स्म विन्दति॥२१४॥
ततः समुत्थाय स दारुखण्डकं मुमोच संस्तारक एव भूपतिः ।
निजोत्तरीयेण पिधाय तस्थिवान् विशालशालान्तरितः स्वयं सुधीः ॥२१५॥
स तु प्रबुद्धः शयितं विबुध्य तं त्रिदण्डमध्यस्थमसिं करेऽकरोत् ।

तदन्तिक प्राप्य शनैश्च दारु तद् द्विखण्डमाधान्निशितेन तेन च ॥२१६॥
दृढाभिघातादसृजामवाहृत स वीक्ष्य भीति रचयन् व्यचिन्तयत् ।
शठेन जागर्यपि तेन वञ्चित ततोऽनुयास्यामि तमेव मायिनम् ॥२१७॥
इति स्मृतिव्याप्तिचान्तचेतस मलिम्लुच प्रत्यवदद्धराधिप ।
प्रकाश्य चात्मानमद सतर्जन भटो मृगाधीशमिव प्रभोद्भट ॥२१८॥
अरे ! मुषित्वा नगरी दुराशय ! क यास्यसि क्रोधपरेऽद्य मय्यपि ? ।
भवानिव च्छद्मपरो न चाहकं तदायुधं सज्जय सज्जनेतर ! ॥२१९॥
इतीरिताकूतसमुद्भवत्क्रुधं तमापतन्त नृपतिश्छलाचितम् ।
अपातयच्छिन्नपलाशिवत् क्षितौ निहत्य खड्गेन निवारयन्निव ॥२२०॥
तथास्थित स क्षितिपालमूचिवास्तवासिघातेन सुरञ्जितोऽस्म्यहम् ।
प्रयाहि तद्वीरशिरोमणेऽधुना निरीक्ष्यते यत्र वटोऽयमायत ॥२२१॥
रमापतेस्तत्र निकेतन महत्तदन्तिकश्वभ्रगृहान्तरस्थिता ।
अनेकश सन्ति मृगेक्षणा सम ममाऽपि जाम्या धनदेविसञ्ज्ञया ॥२२२॥
प्रभूतलोप्त्र गणनाऽवधीरित सनाथय त्व निखिल तदेतकत् ।
असिं त्वभिज्ञानकृते ममाप्यमुं वर समादाय जवाद्व्रज स्वयम् ॥२२३॥
इति ब्रुवाण. स मलिम्लुचाग्रणीर्भियेव राज्ञ परितत्यजेऽसुभि ।
नृपोऽपि कौक्षेयकलक्ष्यपौरुषो धरागृहद्वारमुपागमद् द्रुतम् ॥२२४॥
तदीयजामि तदुदीरिताख्यया नृप समाहूय तयोदजीघटत् ।
रसागृहद्वारशिलापिधानक न चाप्रकाश सति धामसश्रये ॥२२५॥
अथाब्रवीत् सा सुकुमारया गिरा क्षणं महाभाग ! विनोदय श्रमम् ।
निषद्य तल्पेऽपनयस्व चक्षुषोर्विषादमुच्छृङ्खलमेतयोर्मम ॥२२६॥
तव क्रमक्षालनहेतवेऽधुना पय समादाय समाव्रजाम्यहम् ।
इतीरयित्वाऽसिविलोकनाच्छुचं हृदि स्पृशन्ती व्रजति स्म सोत्सुका ॥२२७॥
नृपो नयग्रन्थविचारचातुरीविदांवरस्तल्पमरेर्बभाज न ।
सहोदरस्याऽपि महीपुरन्दरा न विश्वसन्ति द्विषत स्वसुस्तु किम् ? ॥२२८॥
निवेश्य चोच्छीर्षकमेव तत्र स प्रदीपपृष्ठं स्वयमाश्रयद् नृप ।
तदैव यन्त्राऽभिहताऽत्र सारव शिला विशाला निपपात केवलम् ॥२२९॥
हत स मद्भ्रातृविघातपापभागितीरयन्ती सहसाऽऽजगाम सा ।

१ जागरोऽस्यास्तीति जागरी जागरूकोऽप्यहमित्यर्थः ।

नितम्बिनीनां हृदये कियच्चिर स्थिति रहस्यं कुरुतामसारके ॥२३०॥
कचैर्विधृत्य प्रसभ विकृष्य ता मुमोच राजा विरस रसत्तमाम् ।
यतोऽबलानां विनिबर्हण बुधैर्विगर्हित दुष्कृतवेश्मनामपि ॥२३१॥
प्रभातकृत्य नृपतिर्विलत्य स प्रभात एवार्पयति स्म नीतिवित्।
यदेव यद्यस्य तदेव तस्य तत् सहाबलाभिर्वसुसारमात्मना ॥२३२॥
प्रजापतेरित्थमहो ! प्रजाऽवन प्रकुर्वतः सर्वत एव सर्वदा ।
प्रजापतित्व चतुराननोचितं बभूव किं नो कमलासनस्थता ? ॥२३३॥
अथ व्यतीतेषु दिनेषु केषुचित् पुन प्रतीहारन्निवेदितागता ।
पुरौकसो भूमिपति व्यजिज्ञपन्निति प्रसादप्रतिपत्तिभास्वरा ॥२३४॥
स तद्गृहीतो वनिताजन प्रभो ! प्ररक्ष्यमाणोऽपि तदीयभूगृहम् ।
प्रति प्रयात्येव निजान् प्रियङ्करान् प्रियान् सपत्नानिव मन्यतेतराम्॥२३५॥
तदत्र कुर्म प्रतिकारमेव क प्रभो ! प्रतीकारविबोधवर्जिता ? ।
इतीदृश पौरमुखान्निशम्य राट् चिकित्सकानां मुखमैक्षत क्षणम् ॥२३६॥
विबुध्य तै कार्मणकर्म निर्मित मलिम्लुचेनैव महीशशासनात् ।
इमा यथायोगमवाप्तसत्क्रियै क्षणाच्चिकित्सा विरचय्य सज्जिता ॥२३७॥
तदस्थिवेधस्तु यदङ्गके स्थितस्तदस्थिखण्डे सलिलन पायितै ।
अवापितै सक्तुवदेव सूक्ष्मतामथाऽऽपि तै सा प्रकृति भिषग्वरै ॥२३८॥
कदाचिदायातजयन्धराभिधोपदेष्टृवाक्यश्रवणाद् विरक्तधी ।
निधाय राज्ये गुणपालनन्दन स्वयं तपोराज्यमशिश्रियद् नृप ॥२३९॥
महर्षिसङ्घैरपि यान्यसस्तुतान्यनेकशस्तानि सुदुस्तपान्यसौ ।
तपांसि तप्त्वा समुपार्ज्य सविद निरत्यय प्राप पद नृपव्रती ॥२४०॥
तदीयमज्जाऽस्ति यथैव भाविता प्रयुक्तचूर्णेन च तेन सुन्दरि ! ।
तथा त्वमात्मानमनन्यमानसा प्रति प्रतीक सुकृतेन भावयेः ॥२४१॥
अथाऽभिनम्य व्रतिन तमेव सा प्रपद्य सम्यक्त्वपुरस्सर वृषम् ।
प्रपञ्चित द्वादशभिर्व्रतैर्निज गृह समागात्समभेव नागरैः ॥२४२॥
सहर्षमेव कतिभिर्दिनैर्गतै शुभेन तत्कर्मविपाकतोऽजनि ।
अय विकल्पो, जिनधर्मसंम्भव फल महद्यत्परिकीर्त्यतेऽतुलम् ॥२४३॥
अमुत्र तत् किं मम भावि वा नवेति वेदितु क क्षमते महामति. ? ।
न वद शङ्कादिकदोषपञ्चक विनैव धर्मस्तनुतेऽभिवाञ्छितम् ॥२४४॥

परेद्यवि सत्ययशोऽभिधं यतिं प्रणन्तुमेकाऽपि यती विहायसि ।
विमानमारूढममानमानभृत् सुरूपविद्याधरयुग्ममैक्षत ॥२४५॥
अथागता सा निजमप्युपाश्रय प्रशस्यतद्रूपविमोहिता सती ।
लसद्विचिकित्साविचिकित्स्यदूषणं गुरोरनालोच्य खलु व्यपद्यत ॥२४६॥
इतश्च जम्बूपपदान्तरीपकान्तरस्थितप्राच्यविदेहमध्यगे ।
मनोरमे श्रीरमणीयवैजये समस्ति वैताढ्यमहामहीधरः ॥२४७॥
तदास्ति तस्मिञ्छिवमन्दिरं पुरं प्रमोदलक्ष्मीघनकेलिमन्दिरम् ।
वसन्ति यस्मिन् परमार्थिनो जना न यैः कदाऽपि श्रितमत्र लाघवम् ॥२४८॥
बभूव तस्मिन् कनकार्च्यसंज्ञको नरेश्वरः खेचरवर्गनायकः ।
यशांसि यस्योपजगुः सुरस्त्रियो दरीषु मेरोर्जनितानि विक्रमैः ॥२४९॥
स वायुवेगाप्रभवो भवद्विभुस्तदङ्गजः कीर्तिधरोऽहमाख्यया ।
अरिष्टदीपाः प्रहता यदोजसा बभूवुरालेख्यकृताः, इवोदये ॥२५०॥
प्रिया बभूवाऽनिलवेगिका मम प्रदर्शयन्ती कुलयोषिता स्थितिम् ।
निशाविरामे स्वपती मनोहरं निरैक्षत स्वप्नमतल्लिकात्रयम् ॥२५१॥
तत. समुत्थाय फलानि बिभ्रती सुपात्रयुक्ता प्रततीव पुष्पयुक् ।
समेत्य मां जल्पितकल्पपादपं स्फुटं जगावार्यसुतावधार्यताम् ॥२५२॥
व्यलोकय निर्जरराजकुञ्जरप्रभं प्रभो ! कुञ्जरमादितस्ततः ।
अनुत्तमं स्वप्नगता शरत्सुधाकरद्युतिव्रातसमद्युतिं वृषम् ॥२५३॥
पयोभिराकण्ठमनाविलैर्भृतं सुमार्चितं पूर्णघटं शुभाश्रयम् ।
फलं यदेषां मम भावि साम्प्रतं तदादिश त्वं श्रुतशास्त्रकोविद ! ॥२५४॥
तवार्द्धचक्री भविता तनूभवस्त्रिखण्डमुर्वीवलय स भोक्ष्यते ।
इति प्रहृष्टोऽहमवोचमात्मनः प्रियां प्रति प्रीतिविकाशिचक्षुषम् ॥२५५॥
तदादि सा गर्भमधत्त भाविनी प्रपूर्यमाणाखिलुरापदोहदा ।
क्रमेण सा पुत्रमजीजनच्छची जयन्तनामानमिवोरुतेजसा ॥२५६॥
अधिष्ठितेऽस्मिन्नपि गर्भमञ्जसा सुदुर्दमो यद्दमितो द्विषज्जनः ।
मया प्रसह्यैव, ततोऽभिधां व्यधां सुतस्य तुष्टो दमितारिरित्यहम् ॥२५७॥
कलाकलापं सकलं समग्रहीत् कुशाग्रबुद्धिः कुशली स लीलया ।
सुलोचनालोचनमीनजालकं तत परं यौवनमाससाद स ॥२५८॥
कथाऽपरस्मिन् विजये परेद्यविर्जिनेशशान्तिः समवासरद्विभुः ।

तदंह्रियुग्मं प्रणिपत्य देशनां निशम्य वैराग्यतरङ्गिणोऽभवम् ॥२५९॥
ततः स्वराज्ये विनिवेश्य नन्दनं व्रतं जगन्नन्दनमाददे स्वयम् ।
महाशया मोहमहारिपुक्षये न सागिरन्ते परमन्यदायुधम् ॥२६०॥
क्रमाद्विरावत्र च वार्षिकीमहं दृढप्रतिज्ञः प्रतिमां समाश्रयम् ।
तवाग्रतः सांप्रतमेव संविद समासदं विश्वविलोकनक्षमम् ॥२६१॥
विजित्य शक्त्या विजयार्धमण्डलं समुल्लसच्चक्रतरः समिद्धया ।
ततो नरेन्द्रैर्दमितारिरुद्धतो महारथः संप्रति केशवोऽभवत् ॥२६२॥
तदीयदेवीदयितोदरेऽभवः त्वमेव दत्तातनुमान् स्वपुण्यतः ।
सुता सुतारेक्षणपङ्कजा जगत्त्रयीवधूजित् कनकाश्रि ! सुश्रिया ॥२६३॥
यदप्यनालोच्य चिकित्स्यदूषणं समासदद् मृत्युमहो ! भवत्यपि ।
पितुर्वधे तेन निमित्ततां गता निजैस्तथा बन्धुजनैर्वियोजनम् ॥२६४॥
शुभोपदेशामृतसङ्गतो मुनेस्त्वया विनिर्वापितपापतापया ।
जनार्दनो व्यज्ञपि रामसंयुतः समुद्भवत्संसृतिभीतिकम्पया ॥२६५॥
तनीयसो दूषणता यदीदृशो भवेऽपि पाको भाविनामयं भवेत् ।
कृतं तदा दारुणदुःखकारणैः सुखैरहो ! वैषयिकैर्विषोत्कटैः ॥२६६॥
ममाधुनैश्वर्यमदानुषङ्गतो भवन्ति दोषा न पुरा कति ध्रुवम् ।
प्रसह्य दीक्षाप्रतिपत्तयेऽपि तन्न माऽनुजानीतमहो ! किमीश्वरौ ? ॥२६७॥
अवोचतां तां स्वयमेव तावपि प्रहृष्टचित्तावथ सीरिशार्ङ्गिणौ ।
विवेकसम्पत्तिजुषा विचक्षणे ! निवेदितं युक्तमिदं वचस्त्वया ॥२६८॥
समं त्वया किन्तु शुभे ! शुभापुरीं स्वराजधानीमधुना समाहितौ ।
प्रसाधयावस्तव निष्क्रमोत्सवं यथा च नौ तत्र समृद्धिसूचितम् ॥२६९॥
भवच्छुभप्रेरणया समागतस्वयंप्रभार्हत्पदपद्मसन्निधौ ।
व्रतं महारत्नमिवैकदुःस्थया त्वया ग्रहीतव्यमुपेततत्त्वया ॥२७०॥
मुनिप्रभुं तं प्रणिपत्य भक्तितस्तया समं तौ समुपेयतुस्ततः ।
गुरूपरोधप्रतिपन्नवाक्यया शुभापुरीमृद्धिसमृद्धनागराम् ॥२७१॥
महौजसाऽर्हं दमितारिणा निजैर्महाभटैः प्राक् प्रहितैश्च तत्र सः ।
अनन्तसेनः स्वसुतं महाबलं युधं प्रकुर्वन्तमवैक्षताच्युतः ॥२७२॥
वृतं समालोक्य हरेस्तनूभवं विरोधिभिस्तैरुरगैः सुपर्णवत् ।

१ श्रीदत्ताजीव । २ युवा मा किं नानुजानीतम् ।

हलायुधस्तान् गिरि राजसारभृद्धल समुद्यम्य रुषाऽन्वधावत ॥२७३॥
तमापतन्त समवेक्ष्य ते भटा दिशो दिश जग्मुरपेतशक्तय ।
अजातसङ्ग भयमेव बिभ्रतो मृगाधिपं मत्तमहामृगा इव ॥२७४॥
शुभे दिने पौरनिबद्धतोरणां शुभापुरी प्राविशतां बलाच्युतौ ।
अनन्तवीर्य्य पुनरर्धचक्रितापदेऽभ्यषेचि प्रमदेन राजभि ॥२७५॥
अथापरेद्यु समवासरद् जिन स्वयप्रभस्तत्र पवित्रयन् जगत् ।
वनीपतिर्वेत्रिनिवेदितो जिनागमेन भूमीपतिमप्यवर्धयत् ॥२७६॥
बलानुजेन प्रमदेन तस्य च प्रदापिता द्वादश रुक्मकोटय ।
विशिष्य सार्द्धा, कियदेतदद्भुत प्रवृत्तवृत्तानुकृतां हि तादृशाम् ॥२७७॥
मधुप्रियाभ्यामिव पुष्पसायको विनेतुमिच्छु कृतमन्तुमात्मन ।
बलप्रियाभ्यां सहितो जनार्दनो जिनं प्रणन्तु समियाय तत्क्षणम् ॥२७८॥
अविच्युतो भक्तिभरेण जातुचित् प्रदक्षिणीकृत्य विभु त्रिरच्युत ।
प्रणम्य भूमावुपविश्य सस्पृह तदास्यचन्द्रामृतपुण्यमप्यपात् ॥२७९॥
शुभोपदेशावसितौ हरिप्रिया जिनेश्वर विज्ञपयाम्बभूव सा ।
ममैव भाग्येन विभो[1] त्वदागमो व्रतप्रदत्त्याऽनुगृहाण मा तदा[1] ॥२८०॥
तवाभिकश्चेदनुमन्यते मुदा तदा भवत्वेवमितीरितेऽर्हता ।
स्वसौधमभ्याययुरेत्र तत्र ये समर्थयन्त स्वकृतार्थता तथा ॥२८१॥
प्रिय प्रविज्ञप्य गुरु च तत्कृतोत्सवेन लोकोत्तरतामुपेयुषा ।
स्वयप्रभुस्वामिपदान्तमागता व्रतं ललौ सा दमितारिनन्दिनी ॥२८२॥
तपांसि कृत्वा कनकावलीमुखान्युदीर्णकर्माणि च भस्मसादपि ।
उपार्ज्य सद्ध्यानबलेन सविद समासदत् सा परमं पद क्रमात् ॥२८३॥
वनीपकानामपरोपवर्तनात्समागतानां ददतो धनानि तौ ।
यथाऽभिलाष विषयोपसेवनात्सुखेन कालं गमयाम्बभूवतु ॥२८४॥
बलस्य पुत्री विजयाङ्गसम्भवा यथार्थनामा सुमति कृपापरा ।
शिशुत्वमारभ्य गुरुप्रसङ्गतो बभूव जैनागमतत्त्ववेदिनी ॥२८५॥
तया परेद्युर्विहितोपवासया प्रसक्तया पारणकप्रवृत्तये ।
स्वमन्दिरद्वारमवेक्षमाणया समाव्रजन् प्रैक्षि महातपोधन ॥२८६॥
प्रवर्धमानाधिकभक्तिभावया तया विशुद्धाशनके विहारिते[2] ।

---

१ आः इति हर्षे । २ कामयिता ।

सुपात्रदानप्रवरप्रभावतोऽत्र पञ्च दिव्यानि तदैव जज्ञिरे ॥२८७॥
मुनिप्रभौ वायुवदप्रतिश्रये गते ततोऽन्यत्र तदद्भुतश्रुते ।
बलाच्च्युतो तत्र समागतो च ता विलोक्य वर्य्या वराचिन्तयाऽऽश्रितौ॥२८८॥

आनन्दोत्तममन्त्रिमन्त्रपरया शक्त्या समं सीरिणा
निर्णीय प्रथम स्वयंवरविधि तस्या वरार्थे परम् ।
आहूता हरिणा स्वयवरमहे विद्याधरा भूचरा-
अप्येतां विजयार्धतोऽत्र बहवो दूतप्रवृत्त्या नृपाः ॥२८९॥

वास्तुग्रन्थविचारचारिमचणा वैकुण्ठनिर्देशत-
श्चक्रुर्मण्डपमुत्तमैश्च मणिभिर्ध्वान्तौघविध्वंसिनम् ।
उच्चैर्मञ्चसमुच्चय च रुचिरं तत्रापि यत्राऽलयो
वास कृत्रिमपुष्पगन्धभरत कोलाहल लम्भिताः ॥२९०॥

तस्मिन्मेरुमहीध्रशृङ्गजयकृत्सिहासनानि व्यधु-
र्जात्याष्टापदभङ्गभाङ्गिभिरलं रत्नैर्विचित्रैरपि ।
आरूढा अपि येषु राजतनया सिंहा इव स्वौजसाऽ-
नल्पाऽऽकल्पविभूषिता सुरतरुच्छायां समाचक्रमु ॥२९१॥

श्रीश्रीखण्डविलेपना विरचितस्नाना मनोहारिणी
दिव्याऽऽकल्पधरा सित च सदश सव्यानमाबिभ्रती ।
स्वे पाणौ वरमालिकां निदधती बाहु दधाना प्रती-
हार्या बाहुतले स्म मण्डयति सा त मण्डप कन्यका ॥२९२॥

वक्त्राक्षिक्रमपाणिमुख्यकमलैर्बिम्बोष्ठबन्धूकक-
व्यामिश्रैरपराङ्गचम्पकदलैर्नित्योल्लसत्सौरभै ।
मूर्ता तां वरमालिकामिव समालोक्य प्रहृष्टाशया
चेष्टाऽनेकविधा व्यधुर्नृपसुता[1] पञ्चेषुविद्धा इव ॥२९३॥

अस्मिन्नन्तर एव भास्वरमणिव्रातद्युतिद्योतिता-
शेषाऽऽशं मणिसिहविष्टरसमासीनामरीराजितम् ।
भास्वद्भास्करमण्डलच्छविपरिभ्राजिष्णु तन्मण्डपा-
ऽन्त स्थास्न्वेव कुतोऽप्युपागमदर व्योम्ना विमान महत्॥२९४॥

देव्युत्तीर्य तदग्रतस्तत इयं सश्रित्य सिहासन

---

१ याताः ।

नेपथ्यप्रभयैव मण्डपमलं विद्योतयन्ती तत: ।
पाणिं दक्षिणमुत्थितं विदधती प्रोवाच तां कन्यकां
स्मृत्वा पूर्वभवं धनश्र्यभिधया बुध्यस्व मा मा मुह ॥२९५॥
द्वीपे पुष्करनाम्नि पूर्वभरते मध्येऽस्ति खण्डे पुरं
यच्छ्रीनन्दनसंज्ञया श्रुतमभून्नो मारनाम्नाऽपरम् ।
भूमीन्द्रोऽपि महेन्द्र इत्यभिधया तस्मिन् महेन्द्र. श्रिया
जिष्णुर्य: शतमन्युतामरिजनेऽप्याविश्चकारैव ना ॥२९६॥
तस्याऽनन्तमति: प्रिया समभवद्रूपामरी सान्वया
देवैरप्यतिदुर्लभा समुदयत्सौभाग्यभङ्गीस्थिति ।
एतस्यास्तनये उभे अभवतां स्वप्नोपलम्भोल्लस-
त्पुष्पस्रग्युगसूचिते च कनकश्री' श्रीधनश्रीरपि ॥२९७॥
ते बाल्येऽपि कलाकलापकलिते क्रीडाविचित्रां मिथ
कुर्वत्यौ प्रियतारसह्रदसमे तारुण्यमासेदतु ।
अन्येद्युर्गिरिपर्वसं गिरिमिमे स्वेच्छाविहारोद्यते
वृक्षाणां कुसुमावचायरचनाव्यग्रे उभे जग्मतु: ॥२९८॥
वल्ल्यौ जङ्गमतां गते इव सुमैस्ते पर्यटन्त्यौ चिरा-
द्द्राष्टां क्वचनाऽपि नन्दनमुनि पुण्यश्रिया नन्दनम् ।
हर्षात्तस्य पदारविन्दयुगलं नत्वा निविष्टे पुरो
योग्ये इत्यवगम्य ते मुनिरपि व्याचष्ट धर्मं तयो: ॥२९९॥
सिद्धिप्रापणदर्शनप्रतिभुवं ते श्राद्धधर्मं तत.
स्वीकृत्य स्वनिकेतनं बत ! गते त पालयामासतु: ।
क्रीडाभूधरदीर्घिकापरिवहत्कूलंकषासंकुलां
नानाशालयुतामशोकवनिकां ते जग्मतुश्चान्यदा ॥३००॥
क्रीडन्त्यौ समवेक्ष्य तत्र सुभगे वीराङ्गविद्याधर:
क्षोभात् स त्रिपुराधिप: सरभसं हर्षाद्दहार्षीदिमे ।
वज्रश्यामलिकाकलत्रवचनैश्चेतोऽवसादप्रदै:
पद्मिन्याविव ते क्षणेन मुमुचे व्योम्न सुरानेकप. ॥३०१॥
त्रस्ते तेन च ते मृगाधिपतिना बाले कुरङ्ग्याविव
त्यक्ते द्राक् पतत. स्म दुर्गपदवीस्रोतस्विनीरोधसि ।

जाल्यां वंशवनस्य सान्द्रविटपव्यालीढतारातती
दैवे वा प्रतिकूलतां कलयति क स्याच्छुभं प्राणिनाम् ? ॥३०२॥
बुद्ध्वाऽनिर्गमनं स्वकीयमथ ते तस्या विबुद्ध्या स्फुर-
द्धर्मध्यानपरायणे अनशनं कृत्वा विपन्ने उभे ।
ज्येष्ठाऽभूवमहं ततोऽग्रमहिषी शक्रस्य दृश्यप्रभा-
जालैर्ध्वान्तविभेदिका नवमिका नाम्ना प्रसिद्धाऽधिकम् ॥३०३॥
जीवस्त्व तु धनश्रियोऽग्रमहिषी जाताऽपि यक्षेशितु-
श्च्युत्वा रामतनूभवा समभव. पुण्यप्रभावाद्भुता ।
आवाभ्यां तादिय व्यधीयत मिथः सङ्केतकेली पुरा
या पूर्वं च्यवते च साऽऽर्हतवृष बोध्याऽन्यया वस्तुत ॥३०४॥
तत्त्वां बोधयितु समागममहं प्रेम्णा स्वसा ते स्वय
कस्माद्विस्मृतमेतकत्त्वव जडे ! दु स्वप्नवत् सर्वथा ।
दुष्प्रापं समवाप्य मानुषभव प्रार्थ्यं सुराणामपि
प्रव्रज्यां प्रतिपद्यसे किमिति नो दुष्कर्मविच्छित्तये ? ॥३०५॥
इत्येतत्प्रणिगद्य शक्रमहिषी सा स्वं जगामालय
प्राग्जन्मस्मृतिमाप साऽपि सुमतिस्तच्चिन्तयन्ती भृशम् ।
चारित्रप्रतिपत्तयेऽथ खलु तानापृच्छते स्माखिलान्
संयोज्य स्वकरौ स्वयवरसमायातान् नृपान खेचरान् ॥३०६॥
एत्य प्राग्भवहार्दतो धनपतेरग्र्याप्रियास्तां प्रिया.
शक्रस्याऽपि परप्रमोदकलिता आनर्चुरृद्ध्या समम् ।
कन्यासप्तशतीवृताऽऽदित हित श्रीसुव्रताऽऽर्यापदो-
पान्ते सा कृतनिष्क्रमोत्सवभरा ताभ्यां पितृभ्या व्रतम् ॥३०७॥
अल्पैरेव दिनै. समग्रमसमं जीत समभ्यस्य सा
दुर्वारान्तरवैरिवारमजयत् साध्वी तपःखड्गभृत् ।
बिभ्राणा त्वहिते हिते च समता कर्मक्षये केवल-
ज्ञान प्राप्य महोदयं पदमलंचक्रे च शक्रेडिता ॥३०८॥
अन्योन्य प्रियतागभीरसरसीवैसारिणश्रीस्पृशौ
सम्यग्दर्शनहारहारिहृदयौ लीलाविहारोद्यतौ ।
तौ नीलाम्बरपीतपीतवसनौ प्राक्पुण्यमाहात्म्यतः

प्राज्यं राज्यमखण्डशासनमनुच्छिन्नस्थिती चक्रतुः ॥३०९॥
तत्क्षेत्रीयजिनायुषा परिमित सम्पूर्य चायुर्निजं
गत्वाऽऽद्यां नरकावनीमशुभतो रत्नप्रभाख्यां हरिः ।
स्मृत्वा प्राग्भवदुष्कृतं त्ववधित. सविन्नचित्त. सुधी
ससेहे बहुवेदनाश्च विविधाः, धिक्कर्मणां चेष्टितम् ॥३१०॥
अस्य श्रीचमरेन्द्र एत्य जनक' प्राग्जन्महार्दोदयात्
सञ्जाता इव वेदना समहरत् स्वस्मिन्कृपामाश्रयन् ।
राज्ये न्यस्य सुत बलोऽपि कलयन् भ्रातुर्विपत्त्या शुच
जग्राहाग्रहतो जयन्धरगुरो पार्श्वे विरक्तो व्रतम् ॥३११॥
मुख्यै. षोडशसंख्यया परिमितै' राज्ञां सहस्रैस्तत:
प्रव्रज्यामधिगम्य सेवनविधिश्रद्धापरैरन्वितः ।
विंशत्युग्रपरीषहान् द्विकलितान् बाढ विषह्य व्रती
पर्यन्तेऽभ्युपगम्य सोऽप्यनशन मृत्वाऽच्युतेन्द्रोऽजनि ॥३१२॥
द्विरुक्ताग्न्यागारिप्रथगुणसहस्रै' परिमितं
हरेर्जन्तु स्वायुर्निरयनियत पूर्तिमनयत् ।
इतश्चास्मिन् द्वीपे भरततटवैताढ्यगिरिगो-
त्तरश्रेण्यामस्त्यप्रतिकृति नभोवल्लभपुरम् ॥३१३॥
तस्मिन् विद्याधरपरिवृढो मेघवाहो बभूव
प्रेयस्यस्याऽभवदधिगुणा मेघमालिन्यभिख्या ।
तस्या' कुक्षौ स च मधुरिपोर्जन्तुरुद्धर्त्य दु ख-
क्रीडावेशान् नरककुहरान् मेघनाद' सुतोऽभूत् ॥३१४॥
राज्यं न्यस्य तनूभवे नरपतिस्तस्मिंस्ततो वार्धके
वीरो लोकमसाधयत् परमसौ वैराग्यखड्गं दधत् ।
साम्राज्यं समवाप्य विक्रमनिधि. श्रेणिद्वयं चापरो
बाह्याभ्यन्तरवैरिवारविजये युक्तस्तयोर्हि क्रमः ॥३१५॥
अन्येद्यु. स जगाम मन्दरगिरि विश्राण्य नीवृच्छतं
भागेनाङ्गभुवां शताधिकमयं भाग्यस्फुरद्वैभवः ।
कुर्वाणस्य च सिद्धचैत्यमहन तस्मिंस्तदा नन्दने
देवा कल्पनिवासिनोऽप्यवतरन्ति स्मावनेऽरं वने ॥३१६॥

प्राग्जन्मप्रियबान्धवं पुर इह प्रेक्ष्याऽच्युतस्वर्पतिः
प्रेम्णैत परलोकसाधनविधौ प्राबोधयद्बोधभृत् ।
तस्मिन्नेव किल क्षणेऽत्र समुपैच्छ्रीमान् मुनीन्द्रोऽमरः
सिद्ध्यत्येव मनीषित सुकृतिनां प्रायो विलम्ब विना ॥३१७॥

दीक्षां तत्पदसन्निधौ नरपति. श्रीमेघनादोऽग्रहीत्
निर्दम्भ स तपो विशुद्धमनसाऽप्याराधयामासिवान् ।
आलम्ब्य प्रतिमां स नन्दनगिरावन्येद्युरेकां क्षपां
तस्थौ पुण्यसमीहया हि यतयः कि किं न कुर्वन्त्यपि ? ॥३१८॥

अश्वग्रीवतनूभवोऽतिविभवो दैतेयभूयं श्रितः
प्राग्वैरात्तमुपाद्रवत्प्रतिघयुक् तत्रस्थमालोक्य च ।
वैफल्यं कलयाम्बभूव विविधाऽऽबाधा कृता तेन सा
तस्मिन् ध्याननिलीनचित्तविततौ स्वर्णाद्रिवन्निश्चले ॥३१९॥

शाखाऽपेत' कपिरिव ययौ दानवोऽय विलक्ष-
स्तच्च ध्यानं व्यसृजदसमं मेघनादो मुनीन्द्र' ।
कस्याऽत्यन्तं स्फुरति विशदं ध्यानमप्येकतानं
संसाराध्वभ्रमणकरणाऽसान्निधानं विहाय ॥३२०॥

एवं तप्त्वा चिरमपि तपस्त्यक्तभोज्योऽन्तकाले-
ऽध्यात्मप्रीतिप्रणयविवशां चित्तवृत्ति वितन्वन् ।
द्वाविंशत्यम्बुधिपरिमितं जीवितं बिभ्रदुच्चै.
कल्याणात्माऽच्युतसुरपतेराप सामानिकत्वम् ॥३२१॥

आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभो
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विद्यावतां सद्गुरु' ।
तच्छिष्येण कृतेऽत्र सुष्ठु नवमः श्रीशान्तिवृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गो विशालो ययौ ॥३२२॥

## ॥ इति श्रीशान्तिनाथचरित्रे नवमः सर्गः ॥



अर्हम्

# अथ दशमः सर्गः ।

---

यदीयनामाऽस्ति समीहितार्थप्रदानकर्मण्यपि सिद्धमन्त्र ।
स धर्मचक्रित्वपद प्रशासच्छ्रीशान्तिनाथस्तनुतां सुखं वः ॥ १ ॥
अथाऽत्र जम्बूपपदान्तरीपे सीतानदीदक्षिणतीरनिष्ठः ।
श्रीमङ्गलावत्यभिधोऽस्ति पूर्वविदेहचित्रं विजयो जयाढ्यः ॥ २ ॥
पुर्यस्ति तस्मिन् मणिसञ्चयाख्या विख्यातनामा त्रिदिवाधिकर्द्धिः ।
सुखैकभोगान् वृषशर्मयोगाद्दिवौकसो यत्र हसन्ति सन्तः ॥ ३ ॥
क्षेमङ्कर. क्षोणिपतिः स तस्या वसुन्धराक्षेमविधानदक्ष. ।
बभूव, यद्विक्रममाक्रमेण व्यवर्णयन्मागधवन्महीशा ॥ ४ ॥
चतुर्मुखो यद्गुणवर्णनायां चतुर्मुखीभावमधत्त नूनम् ।
तथाऽपि तां कर्तुमयं नितान्ताऽऽरोहत्प्रकर्षेण शशाक नैव ॥ ५ ॥
देवी तदीयाऽजनि रत्नमाला सुरत्नमालाततहारयष्टि. ।
उमा यदीय समवेक्ष्य रूपं वपुर्निबद्ध गिरिश चकार ॥ ६ ॥
अथाऽच्युतेन्द्रत्वपदात् च्युत सोऽच्युत. श्रिया श्रीअपराजितात्मा ।
तत्कुक्षिशुक्तौ प्रतिपद्यते स्माऽवदातमुक्ताफलमञ्जुभावम् ॥ ७ ॥
तया निरैक्ष्यन्त निशाऽवसाने स्वप्ना महान्तश्च चतुर्दशापि ।
वज्रं तथा पञ्चदश, सदास्या किञ्चित्प्रसुप्ताऽभ्यधिक प्रबुद्धा ॥ ८ ॥
संख्याय सा तान्निजगाद तुष्टा राज्ञेऽथ राज्ञी प्रतिपत्तुमर्थम् ।
न्यवेदयत् सोऽपि तदैव देवि ! चक्री सुतस्ते भविता श्रियेन्द्रः ॥ ९ ॥
असूत पूर्णे समये सुतं सा समग्रसामुद्रकलक्षणार्च्यम् ।
स्वतेजसा तर्जिततिग्मरश्मि निरस्तनि शेषबल बलेन ॥ १० ॥
यदायुध वज्रमदर्शि देव्या स्वप्नेऽत्र गर्भस्थितिमादधाने ।
वज्रायुधस्तज्जनकेन नाम्नाऽभ्यधायि पुत्र स्वगुणैः पवित्र. ॥ ११ ॥
धात्रीभिरुत्सङ्गमवापितोऽसौ दिने दिनेऽवर्द्धत बालशाल: ।
छायां प्रकुर्वन्नपि संश्रितानां रसैरनेकैः परिपोष्यमाण. ॥ १२ ॥
पद्मा इवोरुव्यवसायभाजं सौभाग्यसम्पन्नमिव स्त्रियोऽपि ।

महाकवि सत्प्रतिभा इवाशु विद्यास्तमाशिश्रियुरादरेण ॥ १३ ॥
नितम्बिनीलोचनपक्षिजालप्रबन्धसम्पादनपाशरूपम् ।
केलीनिकेतं विषमायुधस्य क्रमात्स तारुण्यभर बभाज ॥ १४ ॥
लक्ष्मीवतीं नाम नरेन्द्रकन्यां विवाहितोऽसौ परमोत्सवेन ।
हर्षात्पितृभ्यामथ कामसेवां विधातुमुद्योगमधत्त वीर' ॥ १५ ॥
अनन्तवीर्यस्य तदैव जीव परिच्युत सोऽच्युतदेवलोकात् ।
व्यभूषयद्भूषणभूषिताङ्गलक्ष्मीवतीकुक्षिमुपेत्य पुण्यै. ॥ १६ ॥
सम्पूर्यमाणाखिलदोहदा सा सुत प्रसूते स्म रवि स्वधाम्ना ।
पित्रा सहस्रायुध इत्यभिख्या तस्यैव चक्रे महतोत्सवेन ॥ १७ ॥
प्रज्ञातरण्या निरवद्यविद्याऽकूपारपार स विगाहते स्म ।
सीमन्तितं मोहनबद्धकक्ष वयो द्वितीयं स समाससाद ॥ १८ ॥
द्वेधाऽप्युदूहे कनकश्रिय स क्ष्मापालकन्यां अनकाङ्क्षयैव ।
क्रमेण कान्ते विषयप्रसक्ते साऽसूत सूनु शतवल्यभिख्यम् ॥ १९ ॥
परेद्यवि पुष्कलपुत्रपौत्रप्रपौत्रमुख्यै सहित कुमारै' ।
क्षेमङ्कर' ससदमध्यशेत क्षपाकरो द्यामिव तारकौघै ॥ २० ॥
देवैस्तदेशानदिव: प्रभूतैर्विचारसार वच इत्यवादि ।
नामोपवज्रायुधमेव सर्वे श्राद्धाश्च सम्यक्त्वविशुद्धिशुद्धा ॥ २१ ॥
श्रुत्वा तदेतत्किल चित्रचूलो मिथ्यादृशां मूर्द्धमणि. सुपर्वा ।
दुर्वासनावासितचित्तवृत्तिस्तदैव तां संसदमाससाद ॥ २२ ॥
स तत्र सभ्यैर्नृपते समक्ष निरूप्यमाणासु विचित्रवाक्षु ।
चार्वाकरूप प्रतिपद्य सद्य. प्रोवाच वाचालनियन्त्रणोत्क ॥ २३ ॥
नैवाऽस्ति धर्म स च नाप्यधर्मस्तदाश्रयो नास्ति तथैव चात्मा ।
गमी तत: क' परलोकमङ्ग ! तद्वामुक क' प्रतिपद्यतां वा ? ॥ २४ ॥
अभ्येतु को वा परलोकसत्त्वं प्रामाणिकोऽप्यत्र विना प्रमाणम् ।
बलीयसी हि स्फुटचक्षुराद्यप्रवृत्तिरेषा तदभावमाह ॥ २५ ॥
तस्याप्यभावात्किमय वृथाऽऽत्मा तपोविधानै' परिखेद्यतेऽत्र ।
तत्साधनं नो सुखदु खमुख्यभावैर्विधातुं सुधियाऽपि शक्यम् ॥ २६ ॥
अभिन्नखानिप्रभवत्वसाम्ये निवेश्यते मूर्धसु रत्नमेकम् ।
पर क्रमे तत्र न पुण्यपापसम्बन्धजन्य सुखदु खसत्त्वम् ॥ २७ ॥

इतीरयित्वा विरते च तस्मिन् वज्रायुधोऽप्यास्तिकमौलिरत्नम् ।
जगाद किं स्वानुभवेऽपि जाग्रत्यहो ! विरुद्ध भवतोच्यतेऽद ॥ २८ ॥
दत्त्वोपयोगं विशदावधेस्त्व विद्धि स्वयं प्राग्भवधर्मजन्यम् ।
फल स्वकस्याऽस्खलिता विचित्रा यद्दिव्यसम्पत्तिरहार्यरूपा ॥ २९ ॥
बभूविथ प्राच्यभवे पुमांस्त्वं देवोऽधुना दिव्यमहर्द्धिधाम ।
आत्मा न चेदस्ति कथं तदेतत्सिद्धि समाक्रामति निर्निमित्तम्?॥ ३० ॥
नराऽमरप्राच्यभवोपलब्ध्या स्फुरत्स्वसवित्तिकृतानुभूत्या ।
प्रत्यक्ष एवाऽस्ति परोऽपि लोकस्तवाऽपि किं, मन्यस एतकं न?॥ ३१ ॥
इत्येष वज्रायुधशुद्धवाचा विबोधिताऽऽत्मा विबुधोऽभ्यधत्त ।
निष्कारणोपाक्रियया‌ऽनुरक्तस्त्वं साधु साध्वत्र महाशयोऽसि ॥ ३२ ॥
समर्थमिथ्यात्वपिशाचकेन विडम्बितोऽबद्धमवोचमीदृक् ।
सद्धर्ममन्त्राक्षरवाचकेन सज्जीकृतोऽहं भवतैव नूनम् ॥ ३३ ॥
प्रसीद विश्राणय सांप्रतं तत्सम्यक्त्वमौदार्य्यनिधान ! मे त्वम् ।
इतीरित सोऽपि तथा चकार किमर्थवैमुख्यमहो ! सतां स्यात्?॥ ३४ ॥
क्षेमङ्करक्ष्मापुरुहूतवंशमुक्तामणे ! मुक्तसमस्तदोष ! ।
अतः परं तेऽस्मि निदेशवर्ती दूरस्थितोऽप्येष सदा सदान !॥ ३५ ॥
सम्यक्त्वदातुर्भवत कथञ्चिन्नैवानृणः स्यामुपकारसार ! ।
सुवर्णरत्नादि तथाऽपि किञ्चिद्याचस्व मत्त' स्वहिताऽप्रमत्त !॥ ३६ ॥
श्रुत्वेति देवोक्तिमवक् कुमारस्त्वदर्थये संप्रति देववर्य्य ! ।
सम्यक्त्वरत्ने सुकृतोपलब्धे कुर्य्याः प्रयत्नं सुमतेऽत्र सम्यक् ॥ ३७ ॥

॥ त्रिभिर्विशेषकम् ॥

देवो न्यगादीत् किमिवार्थितं ते स्वार्थो ममैवैष महानुभाव ! ।
किञ्चित्तदानृण्यकृते परं मे नाथापरं नाथ ! सुवृत्तपान्थ ! ॥ ३८ ॥
इत्यर्थनायां विमुखे कुमारेऽप्यस्मिन्नलङ्कारसमुच्चयं सः ।
दिव्यं प्रदाय त्रिदिवं जगाम तद्वर्णनातत्परवाग्विलासः ॥ ३९ ॥
ईशानकल्पप्रभुरप्यमुष्मादेतत्प्रशंसां विहितां निशम्य ।
अनागतं तीर्थकरं स्वचित्ते सभाव्य तुष्टाव सुतुष्टचित्त. ॥ ४० ॥
प्रहेलिकाभिः पदशालिनीभिः प्रश्नोत्तरैश्चाऽपि बुधैर्मतार्थैः ।

विलासिनीभि' सह संश्रिताभि. वज्रायुध. कालमवाहयत् सः ॥ ४१ ॥
प्रोल्लासयन् कामिमनांसि कामं मानं निरस्यन्नपि मानिनीनाम् ।
उन्मादयन् भृङ्गकुलानि पुष्पैरन्येद्युरागात् स ऋतुर्वसन्त. ॥ ४२ ॥
बन्धूकबन्धूनि विकस्वराणि भवन्ति चैतानि न किंशुकानि ?
वनस्थली मूर्धनि किन्तु धत्ते सिन्दूरपूर मधुकान्तदत्तम् ॥ ४३ ॥
कर्णाऽमृतध्वानविधानहेतोर्न कालिमाऽङ्के यदि कोकिलस्य ।
स्याद् दृष्टिदोषेण तदा जनानां विपत्तिरेतस्य न सशयोऽत्र ॥ ४४ ॥
विहाय मान दयितै सहाशु प्रेमाणमादद्ध्वमय समेतः ।
प्राणान् मधुर्वोऽपरथा निहन्ता कान्ताहित कोकिल इत्यवादीत् ॥ ४५ ॥
न मानमत्याक्षुरनेकशोऽपि दूतीभिरुक्ता अपि सामपूर्वम् ।
प्रकुप्य या , ता मदनोपतप्ता मधो प्रियान् स्वान् स्वयमेव भेजु ॥ ४६ ॥
इतीदृशेऽस्मिन्नृतुराजराज्ये प्रवर्तमाने कुतुकाऽसमाने ।
सुदर्शना रूपसुदर्शनाऽसौ पणाङ्गनानङ्गशरासयष्टि. ॥ ४७ ॥
पाणौ दधाना पटली सुमानामुपेत्य वज्रायुधमा' [2] कुमारम् ।
सुमायुधश्रीजयिन श्रियेति कृताञ्जलिर्विज्ञपयाम्बभूव ॥ ४८ ॥
समागतेऽस्मिन्नपि पुष्पकाले प्रफुल्लपुष्पावलिशालमाने ।
लक्ष्मीवती ते महिषी कुमार ! प्रियं मया विज्ञपयत्यदस्त्वाम् ॥ ४९ ॥
प्रभो ! वन शूरनिपातसंज्ञ पौष्पै रजोभि. स्खलदङ्गभृङ्गम् ।
द्रष्टु भवद्भि सममेव गत्वा चेत पथे कौतुकमद्य नोऽस्ति ॥ ५० ॥
अस्त्वेवमित्यभ्युपगत्य तस्या वाचं कुमार प्रतिपत्तिसार ।
उद्यानमानन्दपरिष्कृतस्तद्ययौ परीवारयुतस्तदैव ॥ ५१ ॥
लक्ष्मीवतीमुख्यमनोज्ञदेवीशतानि सप्ताऽपि तदाऽन्वयुस्तम् ।
आकल्परत्नाभरणप्रशस्यान्याखण्डलस्त्रैणविडम्बकानि ॥ ५२ ॥
माकन्दमञ्जर्युपभोगहृष्ट पुंस्कोकिलः कूजति यत्र तारम् ।
वज्रायुधस्य क्षितिपालसूनोरभ्यागमस्वागतपृच्छयेव ॥ ५३ ॥
पुष्पाणि यस्मिन्मकरन्दशीत श्च्योतन्ति वातापहतानि शीतम् ।
श्रमोपनोदाय नृपात्मजस्य समागतस्येव दिशन्ति पाद्यम् ॥ ५४ ॥

---

१ मन्मथधनुर्लता । २ आः हर्षे ।

॥ त्रिभिर्विशेषकम् ॥

श्रान्त स पुष्पावचयं प्रकुर्वन् दोला परिक्रीडितकेन चाऽपि ।
सहाऽबलाभिर्जलकेलिहेतोर्वापीमचालीदचलप्रतिष्ठ ॥ ५५ ॥
विनिर्मिमाणा कमलोपभोग सरस्वतीब्रह्मपदाधिवासा ।
वलक्षपक्षद्वयचारुरूपा खेलन्ति यस्यां खलु राजहंसा ॥ ५६ ॥
वज्रायुधस्त्रैणमुखेन्दुभासा संकोचमापु कमलानि यस्याम् ।
विरोधिवर्गेऽभ्युदयं प्रपन्ने क वा विकाशः कमलाकराणाम् ? ॥ ५७ ॥
समीरसम्पातसमुत्थलोलकल्लोलदम्भात् सलिलानि यस्या ।
वज्रायुधस्याऽऽपतत कुमारस्याऽभ्युत्थिति चक्रुरिव प्रमोदात् ॥ ५८ ॥
समर्प्य वस्त्राभरणानि दास्याः संवीय धौतांशुकमेकमेव ।
रते सपत्नीभिरिव स्वभासा तस्यां स पत्नीभिरमा विवेश ॥ ५९ ॥

॥ चतुर्भि कलापकम् ॥

प्रस्पर्धमानं मम लोचनाभ्या दूरादभूदेतदिति प्रकोपात् ।
उपेत्य काचित् परिगृह्य तत्र स्वपाणिपद्मेन बिभेद पद्मम् ॥ ६० ॥
हरिप्रियाऽस्मिन् वसतीति सत्या प्रसिद्धिरास्ते वितथाऽथवा सा ।
इति स्वयं काचन तत्र पद्म विलोकयामास समन्ततोऽपि ॥ ६१ ॥
श्वासान्मदीयादधिकं किमस्य स्यात्सौरभं न श्विदिति स्वतोऽपि ।
प्रतीतिमाधातुमजिघ्रदेका तत्राऽऽयताक्षी प्रवितत्य पद्मम् ॥ ६२ ॥
कस्तूरिकाकुङ्कुममिश्रतोयै सम्पूर्य सम्पूर्य सुवर्णशृङ्गा. ।
वज्रायुधस्ता असिचत् सुमेषो सन्तापसम्भारमिव व्युदस्यन् ॥ ६३ ॥
इद विशालं यदि वा मदीये नेत्रे विशाले इति तत्र काश्चित् ।
निर्णेतुमादाय सरोजपत्र ममौ समाभ्यां स्वविलोचनाभ्याम्[1] ॥ ६४ ॥
सुवर्णशृङ्गीजलसंप्रयोगै सेक्तुं प्रवृत्ता प्रियमेव काचित् ।
पुनर्निवृत्तेति विचिन्त्य तत्र जडैर्न सङ्ग. कृतिनोऽस्य कार्यः ॥ ६५ ॥
स्नानं विनिर्माय विनिर्गतास्ता वापीसमीपे विबभुर्निविष्टाः ।
वासोभिरार्द्रैरपि निर्जरेन्द्रवामा इव व्योमनदीजलार्द्रा. ॥ ६६ ॥
इत्यम्बुखेलां रचयंश्चिराय वज्रायुध स्थैर्यमधत्त धीमान् ।

१ सश्रीकाभ्याम् ।

ललाटदृक्तीव्रललाटदृष्टिक्रोधाग्निभीत्येव दशार्द्धबाण ॥ ६७ ॥
प्रागूजन्मदुर्हृद् दमितारिजीवो भव भ्रमित्वा निजकर्मशिष्ट्या ।
अजायत स्वर्गिभवे स विद्युद्दंष्ट्राभिधो दिव्यमहर्द्धिधाम ॥ ६८ ॥
तत्र स्थितं तं रममाणमेष प्रेक्ष्याभवत् क्रोधविलोहिताक्ष ।
चिक्षेप वापीजलसञ्चरिष्णौ तस्मिन् कुमारे स तदैव शैलम् ॥ ६९ ॥
पादौ तदीयावपि नागपाशैर्बबन्ध पाशीव स देवपाश ।
भवान्तरस्थ स्फुरति प्रकोपे किं किं विधत्ते नहि शक्तिचुञ्चु. ?॥७०॥
सचूर्णयामास पतन्तमद्रिं स मुष्टिना मोदकवत् कुमार ।
आशीविषास्तानपि वैरिराज्ञीवेणीरिव स्वैष रयाच्छिनत्ति ॥ ७१ ॥
तत सदार: स च दीर्घिकाया विनिर्जगामाक्षतविग्रहोऽयम् ।
विस्फूर्त्तिमाक्रामति पुण्यपुण्ये शरीरभाजां हि न विघ्नभाव ॥ ७२ ॥
तदा विदेहेषु जिनान् विनम्य नन्दीश्वरद्वीपजिनान् निनंसु ।
व्रजन् बिडौजा निबिडौजस तं विलोकयामास लसत्कलत्रम् ॥ ७३ ॥
भवास्तु चक्री भविता भवेऽत्रेत पञ्चमे पञ्चम एव चक्री ।
भावी पुनर्भारत एव वर्षे त्व षोडश सात्त्विक ' धर्मचक्री ॥ ७४ ॥
इतीरयित्वा प्रणिपत्य भक्त्या सपूज्य देवद्रुमपुष्पजातै ।
नन्दीश्वरद्वीपमियाय वज्री वज्रायुधस्त्वात्मनिकेतनं स ॥ ७५ ॥
( युग्मम् )
क्षेमङ्करक्षोणिपति' स काले लोकान्तिकामर्त्यविबोधित. सन् ।
दीक्षां जिघृक्षुर्निजकेऽपि राज्ये न्यधत्त वज्रायुधमेव पुत्रम् ॥ ७६ ॥
दानं स सांवत्सरिकं प्रदाय चारित्रमादत्त विदीर्णराग: ।
अशङ्कमानश्च परीषहेभ्यश्चिरं धरित्रीं विजहार देव' ॥ ७७ ॥
समागत. क्षीणविघातिकर्मा भूय स तत्रैव जगत्त्रयेश. ।
अनन्तविज्ञानमवाप, चक्रे शक्रैरवक्रै' परमोत्सवश्च ॥ ७८ ॥
जगद्गुरुर्वप्रिणि सन्निविष्टे वज्रायुधे चापि पुरो निविष्टे ।
परोपकाराय दिदेश धर्मं समग्रभाषानुगया गिरा स ॥ ७९ ॥
दशप्रकारे यतिभि प्रयत्यं प्रमादमुत्सृज्य सदैव धर्मे ।
शर्मैकहेतौ पुनरेव तत्र द्वयातिरिक्ते गृहमेधिभिश्च ॥ ८० ॥
धर्मं दयामूलमुशन्ति सन्त ऋते दयां नैव यतोऽस्ति धर्म ।
धर्मार्थिना तेन दया विधेया स्वर्मोक्षसौख्याद्भुतरत्नखानि ॥ ८१ ॥
अपास्यलौकायतिकं तमेकं धर्मं निरस्यन्ति न केचनापि ।

विचार्थ्य कार्यं प्रतिपद्वता तत् स चापि सत्त्वं प्रतिपद्यते य· ॥८२॥
कथञ्चिदत्राप्यविचार्य कार्यं कृतं किमादीनवकृद् न भव्या ! ?।
किञ्चामृताम्रक्षितिनायकादेरिवानुतापं जनयत्यवश्यम् ॥ ८३ ॥
अथ प्रभु विज्ञपयाम्बभूवुर्वज्रायुधाद्या प्रणिपत्य सर्वे ।
जिनेश्वरामी अमृताम्रभूपादयस्त्वयोदाहरणीकृता. के ? ॥ ८४ ॥
स्वामी तत प्राह समस्ति जम्बूद्वीपेऽत्र वर्षे भरते त्वपाच्ये ।
श्रिया विशाला नगरी विशाला शालेन तुङ्गेन विशालमाना ॥ ८५ ॥
तत्रावनीशो जितशत्रुनाम्ना धाम्ना निराशीकृतशत्रुवर्ग. ।
दिवस्पतिर्जाग्रति यत्र जिष्णौ व्यर्थं दधे जिष्णुरिति स्वनाम ॥ ८६ ॥
देवी तदीया कनकश्यभिख्या बभूव सौन्दर्यगुणैकभूमि ।;
तद्रूपसम्पद्विजितैव लीना रम्भासु रम्भा निजनाम चक्रे ॥ ८७ ॥
विश्वम्भरास्वाम्यपरेद्युरुच्चैर्वितत्य वैभातिककृत्यजातम् ।
पूर्वाचलं विस्फुरितप्रताप: सिंहासनं सूर इवाधितष्ठौ ॥ ८८ ॥
दौवारिकोऽभ्येत्य तदैव भूपं व्यजिज्ञपद् द्वारि जनाधिनाथ ! ।
चतुर्मिता राजसुता: समेतास्ते कि प्रवेश्या यदि वा निवर्त्या ?॥८९॥
प्रवेशयाऽऽश्वित्यवनीभुजोक्ते प्रावीविशत्तानथ वेत्रपाणि ।
नम्रान् विनीतान् सविधासनेषु न्यवीविशच्चाधिपशासनेन ॥ ९० ॥
पप्रच्छ तान् भूमिपति प्रसन्नो भद्रा. ! कुतो यूयमुपागता. स्थ ?।
कैर्नामभिर्वा प्रथिता जगत्यां कार्यं च कि शंसत तत्समस्तम् ?॥९१॥
तेषु न्यगादीद् वचनं कनीयान् भाद्राम्बुदध्वानजये समर्थम् ।
पुरं नरेन्द्रोत्तरादिक्पथेऽस्ति यत्काञ्चनं प्राकृतिलकोत्तरं च ॥ ९२ ॥
तत्पत्तनं पालयति स्म राजा श्रीशत्रुमर्दी प्रवराभिधान ।
प्रत्यर्थिनो यस्य निशम्य नाम निलीय कुञ्जेषु दिनानि निन्यु ॥९३॥
तद्देव्यभूद्रूपवती यथार्थाभिधा विधातु प्रथमेव सृष्टि· ।
तत्कुक्षिशुक्तिप्रभवा इमेऽपि विभान्ति मुक्ताफलवत् सुभास: ॥ ९४ ॥
मुख्य. सतां वल्लभदेवराजस्ततो द्वितीय खलु वत्सराज: ।
तृतीयको दुर्लभराजनामा मां कीर्तिराजं चरमं निबोध ॥ ९५ ॥
बाल्ये कलाभ्यासमकार्ष्म सर्वे परस्परं प्रीतिसमृद्धिभाज: ।
उद्यानदेशेषु विहारकेलीरनन्तलीलाकलिताश्च लक्ष्म्या ॥ ९६ ॥
मूर्ता उपाया इव साममुख्या वयं महाराज ! महीभुजां स्म:।
दानादिधर्मा इव पुण्यभाजां मुदे न केषां मनसां भवाम: ? ॥ ९७ ॥

वृद्धत्वमासन्नचरं विचिन्त्य ज्येष्ठं तनूजं विनिवेश्य राज्ये ।
राजा तपस्यां स्ववशां विधाय स्वर्लोकलक्ष्मीं कलयाञ्चकार ॥ ९८ ॥
दायादगृध्रैश्छलपक्षपातैर्दुराशयैराहितकेलिकामैः ।
राज्यामिषं तस्य गृहीतमाराद् मायाविनः किं न हि कुर्युरुग्राः ?॥९९॥
सोऽयं विनिर्गत्य ततः पुरात् त्वां सिषेविषुर्देव ! समागतोऽस्ति ।
त्रिभिः समेतोऽवरजैस्त्रिनेत्रो नेत्रैरिवोपेक्षितकामचारैः ॥ १०० ॥
ईदृक् तदीयं वचनं निशम्य प्रहृष्टचेता नृपतिः प्रसन्नः ।
अतिष्ठिपत् तांश्चतुरोऽपि पार्श्वे यथोचितां वृत्तिमसौ विधाय ॥ १०१ ॥
क्रमेण कालेऽपि कियत्यतीते नियोजयामास नृपोऽपि चैतान् ।
निजाङ्गरक्षाकरणे विशुद्धान् विशुद्धशीला हि भवन्ति मान्याः ॥१०२॥
भुजैरिव श्रीपतिरोजसाऽऽढ्यैर्वक्त्रैः स्वयम्भूरिव वेदमूलैः ।
नृपः प्रजापालनबद्धकक्षो रेजे चतुर्भिः सविधस्थितैस्तैः ॥ १०३ ॥
प्रोद्दामतिग्मांशुकरोऽपरेद्युर्निदाघकालः सहसापपात ।
न यत्र जाड्यं विदुषीव किञ्चित्प्रवर्तते ध्वस्तकलाविलासम् ॥१०४॥
यस्मिन्नृपाणामधितापभाजां दासीकराः क्लान्तिमवाप्नुवन्ति ।
इतस्ततः शीतलशीकरौघप्रवर्षकृच्चामरचालनेन ॥ १०५ ॥
कूपादपः कर्मकरैरुदञ्च्य यत्रातिशीता परिपूरितासु ।
धनेश्वराः कृत्रिमदीर्घिकासु क्रीडन्ति पल्येऽपि समं कलत्रैः ॥ १०६ ॥
विलोक्य मां पुष्पवतीं दिनेशः प्रवृद्धवीर्यो भवतीति मल्ली ।
इयं निजं यत्र विकाशदम्भात्सौभाग्यमेव प्रथयत्यवश्यम् ॥ १०७ ॥
प्रवर्द्धमानः स दिनाधिनाथः प्रवर्धयामास दिनानि यत्र ।
किं स्वामिना तेन विधेयमत्र यः सेवकान् पोषयते न चापि ? ॥१०८॥
चारित्रभाजो यतिनो विहाय स कोऽपि यस्मिन्न बभूव मर्त्यः ।
यस्तालवृन्तं न दधाति पाणौ यस्तेन नो वीजयति स्वमङ्गम् ॥१०९॥
इतीदृशे ग्रीष्मऋतौ प्रवृत्ते श्रीदेवराजो नृपतिं प्रणम्य ।
व्यजिज्ञपच्चेति जनाधिनाथ ! त्वच्छासनाद् ग्राममहं व्रजामि ॥११०॥
विज्ञप्तिमाकर्ण्य नृपः स विज्ञस्तस्येति तं प्राह निजे पदे त्वम् ।
निवेश्य कञ्चिन्निपुणं व्रजेति श्रुत्वा च तं व्यज्ञपयत्स भूपम् ॥ १११ ॥
सायं समेष्यामि महीमहेन्द्र ! विमुच्य कार्याणि परः शतानि ।
इति प्रतिज्ञाय गतोऽभिरामं ग्रामं स कामस्पृहणीयमूर्तिः ॥ ११२ ॥
मध्याह्नकालेऽत्र निवर्तमाने निर्वृत्तकार्यः स्वपुरं प्रति द्राक् ।

विष्वक् समीरालिपुर प्रचार प्रचक्रमे वर्षितुमम्बुवाह ॥ ११३ ॥
धूलीजलक्लेदनशङ्कया स न्यग्रोधवृक्षं निकट श्रितश्च ।
तस्योपरिष्टादिदमुच्यमानं शुश्राव सुश्रव्यगुणावदात ॥ ११४ ॥
शृण्वन्तु कौतूहलमेव सर्वेऽप्यग्रानघ पुष्पकरण्डिनीश * ।
विभावरीप्राक्प्रहरे विभावान् विपत्स्यते कृष्णभुजङ्गदष्ट ॥ ११५ ॥
दध्यौ तदाकर्ण्य स कोऽयमेव वटोपरिष्टात् कटुक प्रवक्ति ?।
विज्ञातमेतत्स्वगिरा गरीयान पिशाचकान् स्वान् न्यगदात्पिशाच ॥११६॥
स्वस्वामिनोऽनिष्टमिदं निशम्य रयादयासीत् स्वपुरं दयालु ।
जज्ञे तदा भाविमहापदोऽस्य क्षोणीश्वरस्याप्यरतिर्नितान्तम् ॥ ११७ ॥
विसृज्य पार्श्वानुचरान् समग्रान् नृप प्रदोषेऽपि समं महिष्या ।
शिश्ये निदद्रौ च महीपतीनां वार्ताक्षमानां सुलभा हि निद्रा ॥११८॥
मा स्वामिनं मे भुजगो निहन्यात् सत्त्कावधाने मयि सेवकेऽपि ।
पाणौ कृपाणं विनिवेश्य तीक्ष्णामिति स्वय दीप्रमनु स्थितोऽयम् ॥११९॥
प्रेङ्खास्थपल्यङ्कदृढानुलग्ने प्रलम्बमान कटके निरीक्ष्य ।
सरीसृपं मङ्क्षु विकृष्य धृत्वा तुण्ड्यां द्विधाऽऽधात्तरवारिणाऽयम् ॥१२०॥
पिधाय खण्डद्वितयं कचित्तत्तदस्रबिन्दून् पातितान् महिष्या ।
हृदि स्वहस्तेन तदाऽपनिन्ये विषोग्रसङ्क्रान्तिभियाऽयमाशु ॥१२१॥
तदा विबुद्धेन नृपेण देव्या वक्ष स्पृशन्नेव निरैक्ष्यतैष ।
प्रकोपभावारुणलोचनेन चित्ते व्यचिन्तीति सचेतनेन ॥ १२२ ॥
मत्प्रेयसीसक्तमनस्कमेतं निहन्मि सम्प्रत्यपि शक्तरोष ।
भृशं स्वशक्त्या बलवानयं वा तस्मादुपायेन विनाश्य एव ॥ १२३ ॥
इति स्वयं चिन्तयतो नृपस्य यामो रजन्या प्रथमो जगाम ।
श्रीदेवराजानुज एव सोऽथ प्रजेश्वरप्राहरिकोबभूव ॥ १२४ ॥
अत्र स्थित प्राहरिकोऽस्ति को वेत्युक्ते नृपेणाभिदधे स वत्स ?।
स्वामिन्नहं सम्प्रति जागरूकोऽस्मीतीरिते तेन नृपोऽप्युवाच ॥१२५॥
आदेशमेकं भवते दिशामि विधास्यसे वत्स ! तमेव चेत् त्वम् ।
किं स्वामिवाचां करणे विचार क्रियेत भृत्यैरिति सोऽप्यवादीत् ?॥१२६॥
तत क्षितीशोऽपि तमादिदेश श्रीवत्सराज ! श्रितराजपाद ! ।
हत्वाग्रजं तस्य शिरो ममाग्रे समानयेश्छिन्नविचारभार ॥ १२७ ॥
तदैव गोत्राधिपतेर्नियोगं स्वीकृत्य कृत्याय समुत्थित स ।

* उज्जयिनीपति ।

पदानि गत्वा कतिचित् कथञ्चिद् विचारयामास विचारचारुः ॥१२८॥
पीयूषमाक्रामति चेद् विषत्वं जलं यदि स्याज्ज्वलनस्वरूपम् ।
श्रीदेवराजस्य ममाग्रजस्य तत् संभवेद् दूषणमेव किञ्चित् ॥ १२९ ॥
तदागसा केनचनापि शङ्केऽलीकेन तस्मै कुपितो महीश ।
केनाप्युपायेन ततो विलम्ब्य नृपस्य सम्बोधमहं विधास्ये ॥ १३० ॥
इति स्वचित्ते परिभाव्य भव्य. स्थित्वा मुहूर्तं वलितस्तत' स' ।
इति स्वयं भूमिपति सधैर्य्यः कृताञ्जलिर्विज्ञपयाम्बभूव ॥ १३१ ॥
अद्यापि जागर्ति स देवराजस्तच्छक्यते देव ! न हन्तुमेष. ।
क्षणेन चैकेन निहन्तुमेतं यास्यामि निद्राभरमन्थराक्षम् ॥ १३२ ॥
तल्लीनकोपप्रशमाय वत्स. सद्वत्सलस्तं नृपमेवमाह ।
इयं त्रियामाऽपि सहस्रयामा विनोदहीनस्य विभोस्त्रियामा ॥१३३॥
आख्यानकं किञ्चन तन्ममाग्रे स्वामी प्रवक्तु यततामिदानीम् ।
यद्वा समाकर्णयतु स्वकर्णौ निर्दिश्य मत्त. प्रभुरेव विज्ञ ॥ १३४ ॥
आदिष्टमात्र प्रभुणाऽथ सोऽपि कथामुपाक्रंस्त विवक्तुमित्थम् ।
वदावदा ये विनियोजिता स्युस्ते किं नियुक्ता' स्वयमेव नैव ?॥१३५॥
श्रीपाटलीपुत्रपुरे समस्तवर्णाश्रये चित्रविधानधुर्ये' ।
बभूव पृथ्वीपतिरङ्ग ! पृथ्वीराजो विराजद्विपुलप्रताप. ॥ १३६ ॥
देवी तदीया समभूत् सुतारा सम्पूर्णतारापतिबिम्बवक्त्रा ।
कलङ्कभृत्तापकरावितीमौ या चन्द्रसूर्यौ न कदाऽप्यपश्यत् ॥१३७॥
मान्यस्तयोस्तत्र पवित्रवृत्तश्री रत्नसार' समभूद् महेभ्यः ।
धर्मो यमाश्रित्य सदाऽपि तस्थौ विशालमालानमिव द्विपेन्द्र' ॥१३८॥
भार्या सुरी तस्य सुरीव कान्त्याऽभवल्लसच्छीलविभूषणा सा ।
स्वर्भानुसंस्पर्धनकर्मणैव यत्केशपाशोऽधृत कृष्णभावम् ॥ १३९ ॥
तयोस्तनूजो धनदत्तनामा कामावतारोऽजनि रूपऋद्ध्या ।
बाल्य समारभ्य यथैव धीभि' श्रितस्तथाऽय स कलाभिराभि. ॥१४०॥
शृङ्गाररोचिष्णुरगारतोऽसौ शृङ्गाटके यानपरेद्युरुक्तम् ।
द्वयोः कयोश्चिन्मिथ एव पुंसोरेतत् समाकर्णयति स्म धीर' ॥ १४१ ॥
कोऽप्यग्रणीरेष गुणोत्तमानां पुण्याधिकानां च ललामभूत. ।
भुक्त्वा प्रदायैव वनीपकानां धनं निजं य. सफलीकरोति ॥ १४२ ॥

तत पर प्राह न चास्य मित्र ! श्लाघे वदान्यत्वमहं कथञ्चित् ।
यो बीजिवित्तेन तनोति दान भोगाश्च नो चित्तहृदेव मे स ॥१४३॥
तदुक्तमीदृक् स निशम्य सम्यग् व्यचिन्तयद् युक्तमवाच्यनेन ।
कि तैर्विनीतैर्गुणिभि समर्थै सुतैर्न येषां स्वभुजार्जिता श्री ?॥१४४॥
ध्यायन्निति प्राप निकेतन स व्यजिज्ञपत् स्वं पितरं विनीत ।
नरोत्तमा स्युर्विषयोपपत्त्या ते चोपलभ्या विषयोपपत्त्या ॥ १४५ ॥
रूपेऽनुरूपे प्रबले बलेऽपि बुद्धौ प्रवृद्धाधिकचित्तशुद्धौ ।
कदाऽपि तात ! प्रतिपद्यते न श्रिया विना ना पुरुषोत्तमत्वम् ॥१४६॥
निदेशमासाद्य तवैव तात ! देशान्तरं यामि रमार्जनाय ।
इति स्वपुत्रस्य मनोभिलाषं श्रुत्वा महेभ्य. स सुधीर्बभाषे ॥ १४७ ॥
मनोरथ व्यञ्जयता स्वकीयं मच्चित्तमायासितमा. ! किमर्थम् ? ।
भाग्येन ते वत्स ! गृहे मदीये प्रवर्धते श्रीरधिकाधिकं च ॥ १४८ ॥
यदृच्छया तां विनियोजयस्व स्ववाञ्छितार्थेषु वधूमिवोढाम् ।
सद्मस्थितोऽपि व्यवसायजातं कुर्वन् ममानन्दय पुत्र ! चित्तम् ॥१४९॥
इति स्ववाचा प्रतिषेधितोऽपि पित्रा सनिर्बन्धमुवाच पुत्र ।
अप्यूर्जिता तात ! तवार्जिता मे लक्ष्मीरियं नो भगिनीव भोग्या ॥१५०॥
इत्याग्रहग्राहनिपीतचित्तं स तातमापृच्छ्य गृहीतपण्य ।
शुभे मुहूर्त्ते शकुनेषु सत्सु देशान्तरं प्रत्यचलद् धनाय ॥ १५१ ॥
सोऽजन्यसौजन्यविभावनेन संवाहयन् सार्थममा चलन्तम् ।
विस्मारयन् वेश्मसुखं वनेऽपि प्रयाणकै. श्रीपुरमाप कैश्चित् ॥ १५२ ॥
तस्योपकण्ठे पटमण्डपान् स प्रदाय कीलप्रतिबद्धरश्मीन् ।
अवासयत् सार्थिकसम्मतेन सार्थं परिश्रान्तवृषाश्वसार्थम् ॥ १५३ ॥
तदैव कश्चित् पुरुषोऽतिवेलं प्रकम्पमानावयवो भयेन ।
निश्वासधाराविनिरुद्धकण्ठस्तं सार्थवाहं शरणं प्रपेदे ॥ १५४ ॥
निघ्नन्तु निघ्नन्त्विति भाषमाणा पाणौ दधाना निशितान् कृपाणान् ।
अन्वागमंस्तं कतिचित् पुमांसो धावन्त एवास्खलितांह्रिवेगम् ॥१५५॥
स सार्थवाहोऽपि बभाण चैतान् शरण्यरूपः शरणोत्सुकानाम् ।
किं वोऽपराद्धं सरुषामनेन वधं यदर्हत्ययमुग्रवीर्याः !? ॥ १५६ ॥
तेऽप्यूचिरे सत्तम ! सार्थवाह ! प्रेष्यो नृपस्यैष नृपस्य तस्य ।

विभूषणं किञ्चन चोरयित्वा व्यधादयं देवनदेवनं च ॥ १५७ ॥
दीव्यन्तमेतं समवाप्य बद्ध्वा समर्पयामोऽवनिनायकाय ।
ग्त सकोप. स तदैव वध्यं समादिशद् दिष्टनय प्रजानाम् ॥ १५८ ॥
विभूषणप्राप्तिमिलेश ! यावत् सुरक्षगुप्तावयमेव रक्ष्यः ।
विज्ञप्त एवं सचिवेन भूपस्तथा तदाऽऽधत्त विधेयगृह्य. ॥१५९॥
ग्षोऽद्य यामे चरमे रजन्या आरक्षमर्त्य विनिहत्य शक्त्या ।
कारागृहादाशु विनिर्जगाम सपौरुष. कि न करोति यद्वा ?॥ १६० ॥
वलोपयुक्ताननुगच्छतोऽस्मान् विबुध्य बुद्ध्या झटिति प्रविश्य ।
निलीय तिष्ठन् नलिनीवनान्त' कियन्तमप्येष निनाय कालम् ॥१६१॥
निर्गत्य तस्मादधुना महेच्छ ! स्वच्छं भवन्तं शरणं प्रपन्नः ।
श्रुत्वेति तद्वृत्तमवृत्तपूर्व तान् सार्थवाह पुनरेवमूचे ॥ १६२ ॥
ईदृग्विधाकृत्यविधानतोऽसौ वधस्य संबन्धमुपैति नूनम् ।
निवेद्यता किञ्चन भूषण तद् नृपेण लब्धं यदि वा न चापि ?॥१६३॥
संप्राप्तमेवेति निवेदिते तैर्भूयो बभाषे धनदत्त एतान् ।
प्रतीक्षतां तर्हि मनाक् प्रतीक्ष्यं यावद् नृपं विज्ञपयामि विज्ञम् ॥१६४॥
सोपायन सोऽपि तदैव गत्वा विज्ञाप्य भूपालमतिप्रसन्नम् ।
अमोचयत्तं शरणप्रपन्नं परोपकारे हि सतां प्रवृत्ति. ॥ १६५ ॥
एत्योपकार्यामथ भोजयित्वा वासांसि दत्त्वा प्रवराणि तस्मै ।
अदत्त लोकद्वयसाधनार्हां शिक्षामिमां शिक्षितसाधुवृत्तः ॥ १६६ ॥
बन्धादिदु खाप्तिनिदानभूतं कदापि चौर्यं भवता न कार्यम् ।
इहाप्यमुत्रापि सुखाभिलाषस्तवास्ति चेच्चेतनया समेत ! ॥ १६७ ॥
इतीष्टशिक्षामृतपानतृप्त. परां गतो निर्वृतिमाह तं स ।
त्वदुक्तमेतद् मयकाभ्युपेतं मत्प्राणविश्राणनपूर्णपुण्य ! ॥ १६८ ॥
त्वत्तोऽनृण स्यां न कदाचनापि जीवाधिकं वस्तु न यज्जगत्याम् ।
तथापि भूताद्यभिचारचारुं मन्त्रं ममादत्स्व कृतप्रतीतिम् ॥ १६९ ॥
मा प्रार्थनास्यास्तु मुधेति मन्त्रं तस्मादुपादत्त स सार्थवाह ।
यत्प्रार्थनाभङ्गविधानतो वा स्यात् प्राणभङ्ग सुकरो बुधानाम् ॥१७०॥
स्थित्वैष कञ्चित् समयं सुखेन तत पुरात् प्रस्थित इभ्यपुत्र ।
महाटवी शालविशालमालां कादम्बरी नाम समाससाद ॥ १७१ ॥

तरङ्गिणीतीरकृताधिवास शुचाऽऽकुलं व्याधमवेक्ष्य चैकम् ।
नेत्राम्बुसंक्लिन्नमुखं सचिन्तं जजल्प चैवं धनदत्तसाधु ॥ १७२ ॥
व्याधिर्विधत्ते तव कोऽपि बाधा किं वाऽऽधिरुच्छ्रायमुपैति किं ते ? ।
निमित्तमन्यद् यदि वाऽऽपि किञ्चिच्छोकाकुलस्त्व यदवेक्ष्यसेऽत्र ? १७३
इत्यङ्ग ! पृष्ट स जगाद सर्व निशम्यता श्रेष्ठिगरिष्ठ ! तथ्यम् ।
इत. सरित्सान्निधिदुर्गशैलपार्श्वेऽस्ति पल्ल्यद्रिकुडङ्गिकाख्या ॥१७४॥
प्रचण्डदोर्दण्डनिपीडितारि श्रीचण्डसिह पतिरस्ति तस्याम् ।
तद्गेहिनी सिहवती नृसिहकान्ताप्रतिच्छन्दधरेव कान्त्या ॥ १७५ ॥
परेद्यविर्भूतविभूततीव्रदोषेण पीडामुपलम्भिता सा ।
तज्जीविताशा गलिता कथञ्चित् तेनैव किञ्चित् परिदेवनं मे ॥१७६॥
इत्युग्रतद् खमसौ निशम्य तेनैव साकं शवरेश्वरस्य ।
पार्श्वेऽपि गत्वा प्रथम श्रुतेन मन्त्रेण तद्दोषमपाचकार ॥ १७७ ॥
इत्थं सुधादीधितिवत् कलावान् परोपकारं रचयन् निरीह ।
अवाप गम्भीरपुरं सरस्वद्गम्भीरचेता धनिसार्थयुक्त ॥ १७८ ॥
मनीषितं लाभमनाप्य तत्राप्यय प्रयासं बहु मन्यमान ।
यामे रजन्याश्चरमे निदध्याविति प्रमीलापगमादतन्द्र ॥ १७९ ॥
विदेशमाक्रान्तवतोऽपि तादृग् ममापि लाभो न बभूव येन ।
तेनापि रत्नाकरनन्दिनीयं प्राप्या न रत्नाकरमन्तरेण ॥ १८० ॥
इति स्थिरं चिन्तयतोऽस्य साधोर्विभावरी पर्यवसानमाप ।
अयं पुनस्तत्क्षणमेव वेलाकूलं वितत्यैव विभातकृत्यम् ॥ १८१ ॥
अभ्यागतानामपि दैशिकानां तृष्णामपाकर्तुमलं न यानि ।
तेषां न गौरत्वमितीव कालान्यम्भांसि धत्ते विरसं रसन् य ॥१८२॥
य. प्रीणयामास सुरानशेषान् प्रदाय पीयूषमतन्द्रित. सन् ।
स्फुरत्प्रभामण्डलभास्वराणि रत्नानि मर्त्यानपि सर्वतोऽपि ॥ १८३ ॥
समीरसंजाततरङ्गजालैरुत्सर्पिभिर्व्योम विगाहमानै ।
स्ववल्लभां व्योमतरङ्गिणी य प्रेम्णा परिष्वक्तुमना इवाभात् ॥१८४॥
रत्नाकरं तं समवेक्ष्य सोऽपि प्रहृष्टचेता विकसन्मुखश्री ।
अभ्यर्चयामास सुचारुपूजासारप्रकारैरुचितैरुदार ॥ १८५ ॥
॥ चतुर्भिः कलापकम् ॥

आपूर्य देश्यैरभिवाञ्छितार्थै. क्रयाणकै॑ सोऽप्यथ यानपात्रम् ।
आरुह्य निर्यामकमर्थवद्भै. सन्तोष्य च प्रास्थित तीरमन्यत् ॥ १८६ ॥
अन्येद्युरम्भोनिधिमध्यभागमधिश्रिते तत्र स यानपात्रे ।
सांयात्रिक कीरमवैक्षतैक रसालसालस्य फल दधानम् ॥ १८७ ॥
श्रमेण भारेण तथा विखिन्न पोतान्तिके नैष पपात यावत् ।
निर्यामकस्तस्य निदेशतस्तं तावत् सुधीरानयति स्म यानम् ॥ १८८ ॥
तत॑ समीराम्बुभिषेचनेन कृपालुना तेन कृत स सुस्थ. ।
क्षणेन कीरोऽपि फलं विमुच्य मनुष्यवाचा तमिदं जगाद ॥ १८९ ॥
परोपकारप्रवणस्य मह्यं प्राणप्रदातु. करुणापरस्य ।
तन्वन्नपि प्रत्युपकारमीषद् महाशय ! स्यामनृण कथं ते ? ॥ १९० ॥
मत्प्राणविश्राणनकर्मणा मे न रक्षितौ किं पितरौ त्वयाऽपि ? ।
तौ यातयामावपयातनेत्रौ यदल्पसारौ च मदेकपुत्रौ ॥ १९१ ॥
ते पुण्यवन्त पुरुषावतंसा नित्यं परेषामुपकुर्वते ये ।
परोपकाराक्षममत्र धिग् मां तिर्यक्स्वभावेन विदूषितं च ॥ १९२ ॥
रसालसालस्य फल तदेतदादीयतां भद्र ! तथाऽप्यतुल्यम् ।
स्वजातिसामान्यगुणेन यस्माल्लोके पर स्यादुपकार एव ॥ १९३ ॥
स विस्मितस्तस्य गिरं निशम्य प्रोचे शुकैकेन फलेन किं मे ? ।
आस्वादय स्वादुतमं त्वमेतत् क्रूरादिक किञ्चन च स्वरुच्या ॥१९४॥
आम्रस्य तस्याथ शुक॑ प्रभावमस्मै जगौ विन्ध्यमहीधरेऽस्ति ।
महाटवी केशरिणां कुलानि यस्यामवात्सुर्भयवर्जितानि ॥ १९५ ॥
तत्रातितुङ्गद्रुकुलायभाजौ चिरं मम स्त पितरौ सुखेन ।
तयोरभूवं सुत एककोऽहं मद्भक्तिवल्लीद्रुमयोरजस्रम् ॥ १९६ ॥
एकत्र कुत्रापि वनेऽन्यदाऽहं रसालशाखाविनिविष्ट एव ।
इति ब्रुवाणं[1] स्वविनेयमग्र्यं संशुश्रुवानेकमुनि शमस्थम् ॥ १९७ ॥
अम्भोधिमध्यस्थितविन्ध्यभूभृत्पादे महानाम्रमहीरुहोऽस्ति ।
सदाफल: तस्य फलैरसाम्यैरास्वादितैर्व्याधिपरिक्षय स्यात् ॥ १९८ ॥
इत्यद्भुतां तस्य निशम्य साधोस्तथ्यां च पथ्यां च गिरं तदेमाम् ।
अन्धत्वदोषापगमाय पित्रोरेकं तदीयं फलमाददेऽहम् ॥ १९९ ॥

[1] ब्रुवो द्विकर्मकत्वम् ।

समाव्रजन् वर्त्मनि निर्विलम्बं फलातिभारेण पतन् पयोधौ ।
सौम्य ! त्वया न्यायवतेव रायमाकृष्य पार्श्वे समवापितोऽस्मि॥२००॥
ज्वरादिरोगापमृतिप्रणाशस्फुटप्रभावं फलमेतदेव ।
लात्वा धृतिं मे कुरु मानसस्य नैतावता व्येति तवोपकारः ॥२०१॥
एवं निगद्याप्रतिशृण्वतेऽपि फलं प्रदाय प्रययौ शुकोऽस्मै ।
पोतः पुनः कैश्चिदवाप घस्रैः कञ्चित् तटं पूगतमालमालम् ॥२०२॥
आस्वादितेनापमृतिच्छिदाऽपि स्वादीयसाऽनेन फलेन किं मे ? ।
विश्वोपकारप्रवणाशयस्य शयस्य कस्य प्रददे तदेतत् ? ॥२०३॥
आ ! ज्ञातमाखण्डलधामधामविश्वम्भरामण्डलपालकस्य ।
भूमीशितुः कस्यचन प्रदाय परोपकर्तृनखिलान् जयामि ॥२०४॥
एवं विचिन्त्यैव स तस्य वेलाकूलाधिपस्योपनिनाय तच्च ।
दिक्चक्रविद्योतकरत्नपूर्णस्थाले निवेश्य प्रमदं दधानः ॥२०५॥
माहात्म्यमस्यैव फलस्य तादृक् तदाननादेव निशम्य भूपः ।
समग्रमेतस्य मुमोच शुल्कं शरन्निशानायकशुक्लकीर्त्तिः ॥२०६॥
धनानि सन्तोषनिबन्धनानि तत्रार्जयित्वा सुबहूनि चैष ।
तेनैव गम्भीरपुरान्तगेन पथा चचाल स्वपुरं प्रतीभ्य ॥२०७॥
कादम्बरीनाममहाटवीभूभागाधिवासानधितष्ठुषोऽस्य ।
पुलिन्दधाटी निपपात रात्रावतर्किता भीमरवा कुतोऽपि ॥२०८॥
हताहतेत्युद्धतभीमघोषा भटास्तदीया धृतमण्डलाग्राः ।
संनह्य संनह्य पुलिन्दवीरैर्महौजसो योद्धुमुपाक्रमन्त ॥२०९॥
युद्धेऽसमानेऽप्यथ जायमाने तद्द्वारभट्टो विहितोर्ध्वबाहुः ।
जय वदन्नस्य बभाण चैवं जयन् घनं तारतरस्वरेण ॥२१०॥
अव्याहतः सिद्धनदीप्रवाह इवोपकारप्रकरोऽत्र यस्य ।
असंविदानस्य परात्मभेदं जयत्ययं श्रीधनदत्त एव ॥२११॥
इदं समाकर्ण्य किरातराजः स चण्डसिंहः स्वभटानुवाच ।
भो भो भटाः ! युद्धमपास्य तावद् गिरं मदीयां शृणुतावधानात् ॥२१२॥
अयं स चेत् सार्थपतिर्ममैवोपकारकारी धनदत्तसाधुः ।
तदाहमेव प्रथमं कृतघ्नो भवादृशैरप्यनवेक्ष्यवक्त्रः ॥२१३॥
ततो विनिश्चित्य स तद्भटेभ्यस्तमेव गत्वा प्रणिपत्य भक्त्या ।

सखा तवास्मीत्युपरुध्य सोऽपि पल्ली निजामानयति स्म मानात्॥२१४॥
अस्मै स मुक्ताफलचित्रकायत्वक्चामरेभायतदन्तराशीन् ।
प्राणप्रियां प्राणयता त्वयेमामुज्जीवितोऽस्मीति वदन्नदत्त ॥२१५॥
पल्लीशमापृच्छ्य स रत्नसारि सार्थेन सार्थेन दिनै कियद्भि ।
अनुस्मरस्तस्य कृतज्ञभावं प्रत्याययौ स्वं नगरं नगोच्च. ॥२१६॥
कृतार्थयन्नर्थिजनानशेषान् स्वोपार्जितेनैष धनोच्चयेन ।
गर्वं त्यजन् पूर्वजशीलितस्य गृहस्थधर्मस्य ललौ फलानि ॥२१७ ॥
उपासकाना समुपास्य धर्मं समा. सुबुद्धि कियती सुभाग्य ।
प्रव्रज्य पार्श्वे सुगुरोरकामात् क्रमादकार्षीत् परमार्थसिद्धिम् ॥२१८॥
इतश्च भूपोऽप्यमृताम्रकम्रफलं तदीशो धनदत्तदत्तम् ।
अवीवपन् सर्वजनोपकृत्यै स्वोद्यानभूमीषु वनावनेभ्य ॥ २१९ ॥
अन्तर्बहिश्चापि वृतैर्निविष्टे सम निविष्टरथ यामिकौघै. ।
सरक्षितश्चूततरुर्जनाना मनोरथै सार्धमवर्धतायम् ॥ २२० ॥
वर्षेषु गच्छत्सु कियत्स्वपीमे तपागमे यामिकपूरुषास्ते ।
फलोदयं तस्य निवेद्य राज्ञेऽस्याढौकयन्नेव फलं मनोज्ञम् ॥ २२१ ॥
श्रुत्वा नृप सेवधिलाभवत् तच्चकार तेभ्य परितुष्टिदानम् ।
तुष्ट पुनस्तत्फलमीक्षमाणो विचारयामास हृदेति धीर ॥ २२२ ॥
स्वदेवगुर्वोरिदमप्रदाय न युज्यते स्वादयितुं ममापि ।
चित्ते विचिन्त्येति फलं तदाशु पुरोधसेऽदाद् गुरुभक्तिसक्त ॥२२३॥
पुरोहितोऽप्याप्लवदेवपूजापूर्वाणि कार्याणि पुरा विधाय ।
आस्वादयामास फलं रसाढ्यं माधुर्यभङ्ग्यां विजितामृतं तत् ॥२२४॥
आस्वादमात्रेण स तस्य मूर्च्छन् शनै शनैर्मृत्युमवाप विप्र ।
तद् दु श्रवं भूमिपतिर्निशम्य सन्तापितश्चिन्तयति स्म चैवम् ॥ २२५ ॥
अद फलं केनचिदुग्ररोषाद् मद्विद्विषा प्रैषि विषाम्रजातम् ।
मात्सर्यभारेण मदीयराज्यप्रेक्षाऽक्षमेनाजिपराजितेन ॥२२६॥
पट्टेभपट्टाश्वकुमारदेवीपुरोहितै राडपमृत्युरेतै ।
विहन्यते चेति पुन श्रुतिर्या पुरोधसा तेन ऋतीकृता सा ॥ २२७ ॥
ध्यात्वेति राजा निदिदेश भृत्यांश्छेत्तुं तमाम्रं प्रसरत्प्रकोप ।
द्रुतं द्रुतं तेऽपि तदैव गत्वा कठोरधारैरलुनन् कुठारै ॥ २२८ ॥

छिन्नं तमाम्रं विनिशम्य लोका विषाम्रबुद्धया सुखमृत्युहेतो॰ ।
त्वग्दोषबाधिर्यरुजादिबाधाविबाधिता मङ्क्षु जना अधावन् ॥२२९॥
फलानि पूर्वेऽप्यपरे सुमानि पत्राणि केचित् परिगृह्य चादु ।
तदैव ते मन्मथमूर्तिरूपास्तत्तद्रुजाना विलयाद् बभूवु ॥२३०॥
संश्रुत्य चैतान् स्मरवत् सुरूपास्तान् यामिकान् व्याहरति स्म भूप ।
तरुस्थितं किं फलमाहृतं तत् किं वा धरित्र्यां पतित भवद्भि ? ॥२३१॥
व्यजिज्ञपंस्तेऽथ जनाधिनाथ! फल रजन्यां गलितं स्वतोऽपि ।
अस्माभिरासाद्य सुतुष्टचित्तै संप्रापितं ढौकनिकात्वमेव ॥ २३२ ॥
राजाऽथ निश्चित्य विपश्चिदीड्यो भुजङ्गमक्ष्वेडपरिप्लुतं तत् ।
विवेकवैकल्यभुजङ्गदष्टं स्व सविदन् बह्वनुतापमाप ॥२३३॥
दुरन्ततैवं कुपरीक्षितस्य कार्यस्य विद्वद्भिरवेक्षणीया ।
विचक्षणैस्तत्सुपरीक्ष्य कार्यं कार्यं विवेकप्रतिपत्तिभाग्भि ॥ २३४ ॥
कथा निगद्येति पुरो निषण्णं मनाग्विषण्णं हृदये तथोक्त्या ।
रात्रेर्द्वितीयप्रहरे व्यतीते धराधवस्तं व्यसृजद् गृहाय ॥ २३५ ॥
अथागतं वल्लभराजसंज्ञं प्रवाद्यमानैर्गतयामवाद्यै ।
विबुद्धमाचष्ट नृपो निदेश दिशामि ते चेत् कुरुषेऽविलम्बम् ॥ २३६ ॥
विज्ञस्ततो व्यज्ञपयत् स चायं विभो! न भृत्या प्रभुवागुपेक्षा ।
नृप पुन प्राह तदाशु गत्वा विचारवर्जं जहि देवराजम् ॥ २३७ ॥
प्रमाणमादेश इतीरयित्वा विलम्ब्य किञ्चिद् विनिवृत्त्य सोऽपि ।
निजाग्रज जाग्रतमेव राज्ञे निवेद्य चैतां स कथामवादीत् ॥ २३८ ॥
पुरोत्तमे राजपुरे पुरे राड् यथार्थनामा रिपुमर्दनोऽभूत् ।
औदार्यधैर्यप्रमुखा गुणौघा यमाश्रयन् वर्ण्याविवेकभाजम् ॥२३९॥
तद्वल्लभाऽजायत रत्नमाला सुरत्नमालाधृतभूषणा या ।
भोगान् ययाऽमाऽनुभवन् निनाय शच्येव शक्र समयं स राजा ॥२४०॥
आस्थानमास्थाय नृपे स्थितेऽस्मिन् विज्ञापितो वेत्रभृताऽन्यदाऽऽगात् ।
कश्चिद् वटुर्माल्यविभासिहस्त शस्त प्रसिद्धै स्वगुणैर्विचित्रै ॥२४१॥
जयेति वाचं प्रणिगद्य हृद्यां विप्रो यथास्थानमुपाविशत् स ।
तां संसदं क्षोणिपति क्रमेण विसर्जयामास ततो नयज्ञ॰ ॥२४२॥
स्नात्वा तदानीतसुमानि मान्य. क्षोणिभुजामेष करे विधाय ।